श्रीगणेशाय नमः ।

# ताण्ड्यमहाब्राह्मणं ।

## त्रयोदशोऽध्यायः ।

—०()०—

अथ प्रथमः खण्डः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ॥

इत्थं व्यूढद्वादशाहमध्यवर्त्तिनो दशरात्रस्यादितश्चतुर्णा-मह्नां स्तोमक्लृप्तिः प्रदर्शिता अथ पञ्चमस्याह्नः स्तोमक्लृप्तिं विधातुकामः तावद्बहिष्पवमानस्याद्यं स्तोतीयं तृचं दर्शयति ।

गोवित् पवस्व वसुविद्धिरण्यविदिति पञ्चम-स्याह्नः प्रतिपद्भवति ॥ १ ॥

प्रतिपद्यते प्रारभ्यते अनयेति प्रतिपत् यद्यप्यत्र प्रतिपदिति एकैव ऋक् प्रतीयते तथापि तृचसूक्तानामादिग्रहणेन विधि-रनादेश इति परिभाषितत्वात् एतदादिकस्तृच एव ग्राह्यः अयं तृचः पञ्चमस्याह्नः प्राकरणकस्य त्रिणवस्तोमस्य यदाद्यं बहिष्पवमानस्तोत्रं तस्य प्रारम्भे कार्य्य इत्यर्थः ॥ १ ॥

अस्मिन्नहनि अस्य तृचस्य सङ्गतिमाह।

गोविद्वा एतद्वसुविद्धिरण्यविद्यच्छक्वर्य्यः ॥२॥

स्तोम: अस्मिन्नहनि होतुः पृष्ठस्तोत्रशक्वर्य्यः स्तोत्रीया अत एतत् पञ्चममहः शाक्वरं शक्वर्य्य इति यत् एतद्गोविद्गेगवान् लम्भकं तथा हिरण्यवित् द्विविधं हिरण्यं रजतं सुवर्णञ्च तस्य लम्भकं तथा वसुवित् अनेकेषामपि वसूनां मणिमुक्तादीनां धनानां लम्भकं तस्मादेतैः पदैः शक्वर्य्य एव पशुशब्दसामान्या-दुच्यन्ते तास्च पञ्चमेऽहनि सङ्गता इति तद्वा गोवित् इत्यादि-लिङ्गवतस्तृचस्य तेनाह्ना सङ्गतिः ॥ २ ॥

ननु शक्वरीणाङ्कथं हिरण्यादिलम्भकत्वमिति तत्राह।

पशव: शक्वर्य्यः सर्व्वं पशुभिर्विन्दते ॥ ३ ॥

शक्वर्य्यः पशवः पशुरूपाः पशुत्वञ्चोपपादयिष्यामः पशुभि-स्चापेक्षितं सर्व्वं धनं विन्दते पुरुषो लभत इति प्रसिद्धं तस्मात् शक्वरीणां गवादिलम्भकत्वमुपपन्नं ॥ ३ ॥

अथास्मिन् तृचे लिङ्गान्तरं प्रदर्श्यानुगुण्यमाह।

त्वꣳ सुवीरो असि सोम विश्वविदित्येष वाव सुवीरो यस्य पशवस्तदेव तदभिवदति ॥ ४ ॥

त्वं सुवीर इति अस्मिन् तृचे सुवीरशब्दो दृश्यते यजमानस्य पशवः वसुभूता एष एव सुवीरः शोभनवीर्य्यवान् पञ्चमस्याह्नो-

ऽनुष्ठातुश्च पशवो भवन्ति शक्करीणां पश्वात्मकत्वात् यदेतदह:-सम्बन्धि पशुत्वं तदेव तत् सुवीरशब्दोपेतं मन्त्रवाक्यमभिवदति अभिलक्ष्य प्रतिपादयति ॥ ४ ॥

अथ लिङ्गान्तरं प्रदर्श्य सङ्गतिमाह ।

ता स्ते चरन्तु मधुमद्घृतम्पय इति मधुमद्ध घृतं पय: पशव: चरन्ति तदेव तदभिवदति ॥ ५ ॥

तथा तस्मिन् तृचे ता स्ते चरन्त्विति पाद: श्रूयते पशवश्च मधुमत् माधुर्य्यवत् घृतं चरणशीलं पय: चरन्ति स्रावयन्ति पशवश्च शक्कर्य्य इत्युक्तं ताश्च पञ्चमेऽहनि सङ्गता इति तन्मन्त्र-वाक्यं तदेव तदभिवदति ॥ ५ ॥

अथानुरूपाख्यं द्वितीयं तृचं विधत्ते ।

पवमानस्य विश्ववविदित्यनुरूपो भवति ॥ ६ ॥

अयमनुरूपाख्यो बहिष्पवमानस्य द्वितीयस्तृच इत्यर्थः ॥६॥

विश्ववविदित्यस्य पदस्य तात्पर्य्यं दर्शयन्नङ्गा सङ्गतिमाह ।

विश्वमेव तद्वित्तमभिवदति विश्वꣳ हि पशुभि-र्विन्दते ॥ ७ ॥

तद्विश्वविदिति पदं विश्वं सर्वमेव वित्तं भोगसाधनमभि-वदति विश्वञ्च तद्वित्तं वेदनीयं लम्भनीयमिति व्युत्पत्त्या शक्कर्य्यां-

लकैः पशुभिश्च विश्वं सर्वं वित्तं विन्दते लभते हि हेतौ हि यस्मादेवं तस्मादेव तत्कालेऽहनि अयं तृचः सङ्गत इत्यर्थः ॥ ७ ॥

अथ पादान्तरमनूद्यानुगुण्यं दर्शयति।

प्रते सर्गा असृक्षतेति सृष्टानीव ह्येतर्ह्यहानि ॥ ८

असृक्षतेति भूतकालसम्बन्ध्ययं लेट् सृष्टैर्भूतकालः सम्बद्धः प्रतीयते एतर्हि एतस्मिन् काले अहानि च सृष्टानीव हि अनुष्ठानेनोत्पादितान्येव खलु अतः पूर्वेषां चतुर्णामह्नां निष्पन्नत्वात् तस्मादस्मिन्नहनि भूतकालसम्बन्धिसृष्टिलिङ्गकतृचो योग्य इत्यर्थः ॥ ८ ॥

पूर्वेष्वहःस्विव अनुरूपद्वितीयतृचस्य संज्ञां ब्रुवन् तद्वेदनफलञ्च प्रतिपादयन् प्रथमद्वितीयौ तृचौ संयुज्य विशिष्टफलहेतुतामाह।

पूर्वस्तु चैव तद्रूपमपरेण रूपेणानुवदति यत्पूर्वस्य रूपमपरेण रूपेणानुवदति तदनुरूपस्यानुरूपत्वमनुरूप एनं पुत्रो जायते य एवं वेद स्तोत्रीयानुरूपौ तृचौ भवतः प्राणापानानामवरुध्यै ॥ ९ ॥

एतत् पूर्वमेव व्याख्यातं ॥ ९ ॥

अथ तस्यापि बहिष्पवमानस्य स्तोत्रीयानुरूपतृचद्वयादूर्ध्वं सप्तर्चद्वयं विधत्ते।

सप्तर्चौ भवतश्छन्दसां धृत्यै ॥ १० ॥

एकं सप्तर्चं प्रथमं सूक्तं प्रसोमासो अधन्विषुरिति द्वितीयं सप्तर्चं सूक्तं प्रकविरिति एतौ सप्तर्चौ कार्य्यौ तत् छन्दसां गायत्र्यादीनां सप्तसंख्यानां धृत्यै धारणाय भवति ॥ १०

अथ सप्तर्चद्वयादूर्द्ध्वं चतुर्ऋचं विधत्ते ।

चतुर्ऋचोभवति प्रतिष्ठायै ॥ ११ ॥

चतस्र ऋचो यस्मिन् असौ चतुर्ऋचः पदं वयं न इत्यादीनां चतसृणामृचां सङ्घो भवतीत्यर्थः तच्च चतुर्ऋचस्य करणं प्रतिष्ठायै ॥ ११ ॥

अथ चतुर्ऋचादूर्द्ध्वं यास्ते धानामधुश्चुत इति तृचसूक्तं विधत्ते ।

तृच उत्तमो भवति येनैव प्राणेन प्रयन्ति तमभ्युद्यन्ति त्रिणव एव स्तोमो भवति प्रतिष्ठायै पुष्ट्यै त्रिष्टुप्वा एष पुष्टः ॥ १२ ॥

तोण्यृचानवकानि यस्मिन् स त्रिणवः स एव स्तोमोऽस्य वहिष्पवमानस्य स्तोत्रस्य भवति प्रतिष्ठायै प्रतिष्ठार्थं त्रयाणां नवकानां पादत्रयसाम्यात् पादत्रययुक्तस्य फलकादेर्लोके प्रतिष्ठानदर्शनात् त्रिणवस्य प्रतिष्ठाहेतुत्वं तथा पुष्ट्यै पुष्टिरभिवृद्धिः तत्साम्यिस्त्वायं त्रिणवस्तोमकृत एतत् त्रिवृद्धै सनवकात्मक-

त्रिवृत्स्तोम एव खलु पुष्टः त्रिरभ्यासेनाभिवृद्धः एष त्रिणव-स्तोमाख्यो भवति अतः त्रिणवस्य पुष्ट्यात्मकत्वात् पुष्टिहेतुत्व-मिति ॥ १२ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोदशाध्यायस्य

प्रथमः खण्डः।

---

अथ द्वितीयः खण्डः।

अथ प्रथमस्याज्यस्तोत्रस्य स्तोत्रीयं तृचं दर्शयति।

तव श्रियो वर्ष्यस्येव विद्युत इत्याग्नेयमाज्यं भव-ति ॥ १ ॥

तव श्रिय इति तृचः आग्नेयमग्निदैवत्यमाज्यं आज्यस्तोत्रं भवति ॥ १ ॥

तस्य तृचस्य पञ्चमेनाह्ना सङ्गतिमाह।

श्रीर्वै पशवः श्रीः शक्वर्य्यस्तदेव तदभिवदति ॥२॥

श्रीर्वै सम्पद्रूपा एव पशवः लोके हि पशुमान् श्रीमानिति व्यपदिश्यते अतः शक्वर्य्योऽपि श्रीः श्रीरूपाः तास्तु पञ्चमेनाह्ना सम्बद्धा अतः श्रिय इति श्रीशब्देन युक्तं मन्त्रवाक्यस्य पञ्चमे-नाह्ना सम्बद्धं शक्वर्य्यदिति तत् यदेवाभिवदति ॥ २ ॥

अथ लिङ्गान्तरमनूद्यानुगुण्यमाह।

अग्नेस्त्रिवृदित्त उषसामिवेतय इतीतानीव ह्येत-ह्र्यहानीत्याते यतन्ते रथ्यो यथा पृथगित्येव ह्येतर्ह्य-हानि यतन्ते ॥ ३ ॥

आतेयतन्त इति अस्मिन् पदे दृश्यते यतीप्रयत्न इति धातुः एतर्ह्येतस्मिन् काले अहानि प्रथमद्वितीयादीन्यनुष्ठितान्यहा-नि एव मा इव आयतनं इति फलमभिलक्ष्य प्रयतन्त इव प्रयत-मानानीव भवन्ति यस्मादुपसृष्टयतिधातुयुक्तस्तृचोऽस्मिन्नहनि विनियोगानुगुण इत्यर्थः ॥ ३ ॥

अथ द्वितीयस्याज्यस्य स्तोत्रीयं तृचं दर्शयति।

पुरूरुणाचिद्ध्यस्त्यवो नूनं वां वरुणेति मैत्राव-रुणं यद्वै यज्ञस्य दुरिष्टं तद्वरुणो गृह्णाति तदेव तद-वयजति ॥ ४ ॥

पुरूरुणेति तृचः मैत्रावरुणं मित्रावरुणदेवताकं द्वितीय-माज्यस्तोत्रं भवति एवं वरुणस्य देवस्य प्रकाशनद्वारा तदेव यत् यज्ञसम्बन्धि दुरिष्टन्तदवयजति निरस्यति ॥ ४ ॥

अथ तृतीयमाज्यस्तोत्रं दर्शयति।

उत्तिष्ठन्नोजसा सहेत्यैन्द्रं ॥ ५ ॥

उत्तिष्ठन्निति तृचस्यैन्द्रं इन्द्रदेवत्यं तृतीयमाज्यस्तोत्रं भवति ॥ ५ ॥

अथैतस्य उत्तिष्ठन्नित्यादिपदत्रयस्य तात्पर्य्यं दर्शयन् सङ्गतिमाह।

**पञ्च वा ऋतव उत्थानस्य रूपमोजसा सहेत्योजसैव वीर्य्येण सहोत्तिष्ठन्ति ॥ ६ ॥**

अस्मिन् पादे उत्तिष्ठन्निति पदेन उत्थानं उद्गत्यावस्थानं प्रतीयते तस्य चोत्थानस्य च सन्ध्याद्याः पञ्चर्त्तवः रूपं ऋतुविशेषे हि सर्व्वमोषधिवनस्पत्यादिकं उद्गच्छत्युत्तिष्ठति अत उत्थानं वसन्ताद्यृतुपञ्चकं तस्मादस्याहःपञ्चमत्वेन पञ्चसंख्यायोगात् तत्प्रतिपादकेनोत्तिष्ठन्निति पदेन युक्तस्तृचोऽस्मिन्नहनि सङ्गतः अपि च ओजसा सहेत्यपि स च दृश्यते ततश्च ओजसैव बलात्मनैव वीर्य्येण सहोत्तिष्ठन्ति उत्थिताः सर्व्वेभ्योऽधिकाभवन्ति ॥ ६ ॥

अथ चतुर्थमाज्यस्तोत्रं दर्शयति।

**इन्द्राग्नी युवामिम इति राथन्तरमैन्द्राग्नं ॥ ७ ॥**

इन्द्राग्नीयुवामिम इति तृचोराथन्तरं रथन्तरसाम्नः सम्बन्धि ऐन्द्राग्नं इन्द्राग्निदेवताकं चतुर्थमाज्यस्तोत्रं भवति कथमस्य रथन्तरसम्बन्ध उच्यते इन्द्राग्नी आगतं सुतमिति राथन्तरेऽहनि चतुर्थमाज्यं तत्र चेन्द्राग्नी इति सम्बोधनेनाभिमुखीकृत्य आगमनं सोमपानञ्च तयोः प्रार्थ्यते अस्मिन् तृचेऽपि तादृश एवार्थः इति अर्थसामान्यात् अस्यापि राथन्तरत्वं ॥ ७ ॥

नन्वेतत् शाक्वरपृष्ठ्यं पञ्चममहः न रथन्तरपृष्ठ्यं कुतोऽस्मिन्नहनि राथन्तरस्यैन्द्राग्नस्य सङ्गतिरिति तत्राह ।

**रथन्तरमेतत्परोक्षं यच्छक्वर्यो राथन्तरमेव तद्रूपन्निर्ह्वयति स्तोमः ॥ ८ ॥**

यच्छक्वर्य्यः शाक्वरं साम एतत्परोक्षं परोक्षेण रूपान्तरेण वर्त्तमानं रथन्तरं रथन्तरादुत्पन्नत्वात् तदुत्पत्तिश्चैतरेयके समाम्नाता बृहच्च वा इदमग्रे रथन्तरमिति प्रक्रम्य वैराजवैरूपयोः सृष्टिमुक्त्वा ते द्वे भूत्वा बृहच्च वैराजञ्च रथन्तरञ्च वैरूपञ्चाप्यमन्येतां तद्रथन्तरं गर्भमधत्त तच्छाक्वरमसृजतेति तस्माद्रथन्तरमेव रथन्तरसम्बन्ध्येव तद्रूपं निर्ह्वयति प्रकाशयति स्तोमश्च तेषु चतुर्ष्वाज्येषु पूर्वोक्त एव त्रिणवः कार्य्यः बहिष्पवमानादीनां पञ्चानां प्रातःसवनिकानामेषां स्तोत्राणां दृष्टं च्छस्तोत्रीया एव विहिता प्राकृतमेव गायत्रसामस्तु गातव्यं अन्यस्यानुपदेशादिति बोद्धव्यम् ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोदशाध्यायस्य

द्वितीयः खण्डः ।

---

अथ तृतीयः खण्डः ।

अथ माध्यन्दिनस्य पवमानस्य त्रयः स्तोत्रीयास्तृचाः तत्र प्रथमं दर्शयति ।

अग्नीसोमद्युमत्तम इति विष्णुमत्यो गायत्र्यो भवन्ति ॥ १ ॥

सोमा अर्षन्तु विष्णव इति दर्शनाच्छत्रिन्यायेन अग्नी सोमेत्याद्यास्तिस्रोऽपि विष्णुमत्यं गायतत्त्वोभयं स्तोत्यो गायत्रीछन्दस्का एता माध्यन्दिनस्य पवमानस्याद्या भवन्ति ॥ १ ॥

विष्णुमत्यं गायतत्त्वोभयं स्तौति ।

ब्रह्म वै गायत्री यज्ञो विष्णुर्ब्रह्मण्येव तद्यज्ञं प्रतिष्ठापयति ॥ २ ॥

ब्रह्म ब्राह्मणजातिरेव गायत्री प्रजापतेर्मुखात्सहोत्पत्तेः यज्ञश्च विष्णुर्व्यापनशीलत्वाद्विष्णुशब्दाभिधेयस्तत्तथा सति गायत्रीस्तोत्रीयाः कुर्वन् ब्रह्मणि ब्राह्मणजातावेव यज्ञं प्रतिष्ठापयति ॥ २ ॥

अथ तृचान्तरं तस्य पवमानस्य दर्शयति ।

सोम उष्वाणस्सोतृभिरिति शिमानां रूपᳪ स्वेनैवैतास्तद्रूपेण समर्द्धयति ॥ ३ ॥

सोम उष्वाण इति तृचः स्तोत्रीयः माध्यन्दिनपवमानस्य तस्मिंश्च आनूपे गोमान् गोभिरक्षा इति गावः प्रतीयन्ते तच्च शिमानां शक्करीणामस्मिन्नहनि दृष्टभूतानां रूपं तासां पश्वा-

त्मकत्वात् पशवः शक्वर्य्य इति ह्याम्नातं तत्तस्मात्त्वेन स्वकीयेनैव रूपेण एताः स्विमाः शक्वरीः समर्द्धयति समृद्धाः करोति ॥ ३ ॥

अथ तृचान्तरं विधत्ते।

**यत्सोमचित्रमुक्थ्यमिति गायत्र्यः सत्यस्त्रिष्टुभो-रूपेण तस्मात् त्रिष्टुभां लोके क्रियन्ते ॥ ४ ॥**

यत्सोमचित्रमिति माध्यन्दिनपवमानस्यान्त्यस्तृचो भवति तत्रत्या ऋचो गायत्र्यक्षरसंख्यया गायत्रीछन्दस्काः सत्यो भवन्त्यस्त्रैष्टुभेनैव रूपेण इषणशब्दयोगात् त्रिष्टुभो भवन्ति यस्मादेवं तस्मात्त्रैष्टुभां लोके स्थाने क्रियन्ते स्तोत्रीयात्वेन विधीयन्ते प्रकृतौ हि माध्यन्दिनपवमानस्यान्त्यस्य त्रिष्टुप्स्थानत्वं ॥ ४ ॥

अथ अर्षा सोम द्युमत्तम इति विहिते प्रथमे तृचे पूर्ववद्गायत्रं साम विधाय तद्वितिकर्त्तव्यताप्रतिपादकं ब्राह्मणमतिदिशति।

**गायत्रं भवति यदेव गायत्रस्य ब्राह्मणं ॥ ५ ॥**

गतमेतत् ॥ ५ ॥

अथास्मिन् तृचे सामान्तरं विधत्ते।

**यशवं भवति पशवो वै यशवं पशूनामवरुध्यै ॥ ६ ॥**

यशाख्यं साम गायत्र्यानन्तरं अस्मिन्नेव तृचे गातव्यं तत्र

यद्वं पशवो वै पशव एतत्साधनत्वात् तस्मादूर्ध्वगानं पशूना-
मवरुध्या अवरोधनाय प्राप्त्यै भवति ॥ ६ ॥

अथास्य साम्नो गाने सान्तत्यं विधत्ते ।

## सन्ततं गायति यज्ञस्य सन्तत्यै ॥ ७ ॥

सन्ततमविच्छिन्नं गायति यज्ञस्य सन्तानार्थं सामान्तरेषु
हि प्रत्यृचं प्रस्तावादिभक्तिपञ्चकस्य सम्पूर्णस्य साम्नो गानात्
विच्छेदो भवति अत्र तु प्रथमायामेव प्रस्तावभक्तिं कृत्वा उत्त-
रयोः प्रस्तावभक्तिमकृत्वा गानात् साम्नः सान्तत्यं भवति उत्त-
रयोः प्रस्तावभक्तिलोपार्थमत्र योनिभूते साम्नि तृचे यद्वस्य गानं
इतरथा सामान्तरवदेकस्यामेकगानं स्यात् एतच्च सूत्रकृता
सन्तनिचोद्यमानमेकैकस्यां सर्व्वमित्यादिना प्रपञ्चितं सन्ततं
गायतीति च भक्तिलोपदर्शनादिति च वदता सूत्रकृता यद्व-
सन्तनिनोरुत्तरयोः प्रस्तावभक्तिलोप एवाभिप्रेत इति अयमे-
वार्थो गम्यते ॥ ७ ॥

अथास्य साम्नः सम्बन्धिनीडाविभक्तिमनूद्यास्या सङ्गतिमाह ।

## अध्यर्द्धेडं तथाह्येतस्याहोरूपं ॥ ८ ॥

इट् इडेत्येवं रूपा अध्यर्द्धेडा यस्मिन् तदध्यर्द्धेडं एतत्
यद्वं तथा हि तादृशमेव खल्वेतस्य पञ्चमस्याह्नो रूपं अध्यर्द्धेडं
पञ्चमस्येति द्वो इडाविभक्तिरनुक्रान्ता ॥ ८ ॥

अथास्मिन्नेव तृचे पुनरावृत्ते सामान्तरं विधत्ते।

शाकलं भवति॥ ९॥

शाकलाख्यं अर्षा सोमेत्यस्मिन्नेवावृत्ते तृचे गेयं॥ ९॥

तदेतत्प्रतिष्ठाहेतुरिति स्तौति।

एतेन वै शकलः पञ्चमेऽहनि प्रत्यतिष्ठत्प्रतिति-ष्ठति शाकलेन तुष्टुवानः॥ १०॥

एतेन खलु एतेन साम्ना पुरा शकलऋषिः द्वादशरात्रिके पञ्चमेऽहनि प्रत्यतिष्ठत् अनेन साम्ना स्तुत्वा पुत्रपश्वादिभिः प्रतिष्ठितोऽभवत् तस्मादिदानीन्तनोऽपि शाकलेन स्तुवन् प्रतिष्ठां लभते॥ १०॥

अथास्मिंस्तृचे पुनरावृत्ते पुनः सामान्तरं विधत्ते।

वार्शं भवति॥ ११॥

वृशेन दृष्टं साम वार्शं अर्षा सोमेत्यस्मिन्नेव तृचे स्तोतव्यं॥ ११

अथोक्तऋषिसम्बन्धं तदाख्यायिकया प्रदर्शयन् सर्वकाम-प्राप्तिसाधनतयैतत् स्तौति।

वृशो वैजानस्त्र्यरुणस्य त्रैधातवस्यैक्ष्वाकस्य पुरो-हित आसीत्स ऐक्ष्वाकोऽधावयत् ब्राह्मणकुमारं

## रथेन व्यच्छिनत्स पुरोहितमब्रवीत्तव मा पुरोधायामिदमीदृगुपागादिति तमेतेन साम्ना समैरयत्तद्वाव स तर्ह्यकामयत कामसनि साम वार्शं काममेवैतेनावरुन्धे ॥ १२ ॥

विजानस्य पुत्रो वृशो नाम कश्चिदृषिः स ऐक्ष्वाकस्य इक्ष्वाकुकुलजस्य त्रैधात्वस्य त्रिधातुः पुत्रस्य त्र्यरुणस्य एतन्नाम्नो राज्ञः पुरोहितः पुरोधा आसीत् स च ऐक्ष्वाको राजा रथवाहनाख्यानधावयत् शीघ्रं गमयत् पथो मध्ये व्यवस्थितं कञ्चिद्ब्राह्मणकुमारं ब्राह्मणपुत्रं रथेन रथावयवेन चक्रेण व्यच्छिनत् विच्छिन्नावयवमकरोत् स कुमारः पुरोहितं वृशमब्रवीत् तव पुरोधायां पौरोहित्ये वर्त्तमाने मां इदानीं ईदृक् एवं रूपं हिंसनं उपागात् प्राप्नोदिति एवमुक्तवन्तं एतेन वार्शेन साम्ना समैरयत् सङ्गतावयवमकरोत् तद्वाव तत् खलु तर्हि तस्मिन् काले स ऋषिरकामयत यस्मादेवं तस्माद्वार्शं साम कामसनि कामप्रदं अतोऽनेन स्तुवन् एतेन साम्ना अभिलषितं सर्वमेव काममेति कामयितव्यं फलं अवरुन्धे लभते ॥ १२ ॥

अस्मिन् साम्नि अध्यर्द्धोपाख्याने इडानादेश इति सूत्रकारेण अध्यर्द्धेडा आदिश्यत इत्युक्तं तस्मात् षिद्वत् अस्मिन्दृष्टि अनुरूपं दर्शयति ।

## अध्यर्द्धेडं तथाह्येतस्याह्नोरूपं ॥ १३ ॥

उपाख्याने आदिष्ट इट् इडेति एवं ब्रूयात् अध्वर्य्या इडा यस्य तत्तथोक्तं तथा खल्वेतस्य पञ्चमस्याह्नो रूपं प्रागुक्तं ॥१३॥

अथान्यस्मिन् तृचे सामान्तरं विधत्ते।

मानवं भवति ॥ १४ ॥

मनुना दृष्टं साम मानवन्तत् सोम उष्वाणः सोतृभिरिति विवक्षिते तृचे गातव्यं ॥ १४ ॥

अथैतत् स्तौति।

एतेन वै मनुः प्रजातिं भूमानमगच्छत्प्रजायते बहुर्भवति मानवेन तुष्टुवानः ॥ १५ ॥

एतेन खलु साम्ना पुरा मनुः प्रजातिं प्रजोत्पत्तिभूमानं अतिशयेन बहुत्वञ्चागच्छत् तस्मादद्यतनोऽपि मानवेनानेन साम्ना स्तुवन् प्रजायते पुत्रपौत्रैरुत्पद्यते ततो बहुपुत्रादिभि-रनेकविधस्य भवति ॥ १५ ॥

अथास्मिन्नेव तृचे पुनरावृत्ते सामान्तरं विधत्ते।

आनूपं भवति ॥ १६ ॥

आनूपेन दृष्टं सामानूपं तत्सोम उष्वाण इति तृचे गेयं भवति ॥ १६ ॥

अथैतत्पशुबाहुल्यमिति स्तौति।

एतेन वै वध्र्यश्व आनूपः पशूनां भूमानमाश्नुत पशूनां भूमानमश्नुत आनूपेन तुष्टुवानः ॥ १७ ॥

आनूपो अनूपस्य पुत्रः वध्र्यश्वाख्य ऋषिरेतेन साम्ना पुरा पशूनां भूमानं बहुलत्वं आश्नुत प्राप्नोत् अतोऽद्यतनोऽप्यानूपेन स्तुवन् पशूनां बहुलत्वं प्राप्नोति ॥ १७ ॥

अथास्मिंस्तृचे सामान्तरं विधत्ते।

वाम्रं भवति ॥ १८ ॥

वम्रेण दृष्टं साम वाम्रं तत् सोम भव्याय इत्यस्मिंस्तृचे आवृत्ते गेयं ॥ १८ ॥

अथ संज्ञयैवैतत्साम प्रशस्तं तेन चाह एव प्रशंसा क्वता भवतीत्याह।

सामार्षेयेण प्रशस्तं यं वै गां यमश्वं यं पुरुषं प्रशꣳसन्ति वाम इति तं प्रशꣳसन्त्यह्नैवैतेन प्रशꣳसन्ति ॥ १९ ॥

एतत्साम आर्षेयेण ऋषिसम्बन्धेन प्रशस्तं श्रेष्ठं लोके यं गां यमश्वं यं पुरुषं प्रशंसन्ति स्तुवन्ति लौकिकाः तं वाम इति श्रैष्ठ्यवाचकेन वामशब्देन प्रशंसन्ति तस्मादिदं साम रेफविकृत-वामशब्दाभिधेयत्वात् प्रशस्तं अनेन साम्ना अह्नैव द्वाशरात्रिकं पश्चममिदमहरेव प्रशंसन्ति ॥ १९ ॥

आम्नाने त्वष्ट्रीषामसाम्नि पूर्वदर्शादिष्टामध्यर्द्धेडां सिद्धवदनूद्य अह्ना साम्यं दर्शयति ।

अध्यर्द्धेडं तथा ह्येतस्याह्नो रूपं ॥ २० ॥

गतमेतत् ॥ २० ॥

अथास्मिन्नेव तृचे गेयं सामान्तरं दर्शयति ।

त्रिणिधनमाग्नेयं भवति प्रतिष्ठायै ॥ २१ ॥

तीणि निधनानि यस्य तत्त्रिणिधनमाग्नेयं अग्निसम्बन्धि एतत् संज्ञं साम सोम उष्वाण इति तृचे गेयं तच्च निधनत्रय-वत्त्वेन त्रित्वसंख्यायोगात् प्रतिष्ठायै प्रतिष्ठानाय साम्येनावस्था-नाय भवति लोकेऽपि त्रिपदा: फलकादय: प्रतिष्ठिता दृश्यन्ते तानि त्रीणि निधनानि यस्य साम्नो योन्यां प्रसोम देव वीतय इत्यस्यां प्रदर्शयति षा २ १ उवा २ ३ षा २ ३ ४ सा नह्वा २ १ उवा २ ३ चुग्र २ ३ ४ ताम् ॥ २१ ॥

यथोक्तमग्निसम्बन्धं प्रदर्शयन् तेजोब्रह्मवर्चसप्रापकत्वेनै-तत्साम प्रशंसति ।

अग्नि: सृष्टो नोदुदीप्यत तं प्रजापतिरेतेन सा-म्नोपाधमत् स उदुदीप्यत दीप्तिश्च वा एतत्साम ब्रह्म-वर्चसञ्च दीप्तिम्नैवैतेन ब्रह्मवर्चसञ्चावरुन्धे ॥ २२ ॥

अग्निः प्रजापतेर्म्मुखात् सृष्ट उत्पन्नः नोद्दीप्यत ऊर्द्धं नाज्वलत् तमग्निं प्रजापतिः स्रष्टा एतेन साम्ना साधनेन उपाधमत् वायुना प्राज्वलत् ध्मा शब्दाग्निसंयोगयोरिति धातुः सोऽग्निरुद्दीप्यत ऊर्द्धंदीप्तोऽभूत् तस्मादेतत्साम दीप्तिसाधनत्वाद्दीप्यात्मकं तथा ब्रह्मवर्च्चसञ्च अतएतेन दीप्तिब्रह्मवर्च्चसोभयरूपेण साम्ना यजमानः दीप्तिं शरीरतेजश्चैव ब्रह्मवर्च्चसं श्रुताध्ययनादिजन्यब्राह्मतेजश्चावरुन्धे प्राप्नोति ॥ २२ ॥

अथ यत् सोमश्चित्तमिति विहिते तृचे गातव्यं साम दर्शयति।

शैशवं भवति ॥ २३ ॥

शिशुना दृष्टं साम शैशवं तद्यत् सोम चित्तमिति तृचे गातव्यं ॥ २३ ॥

अथैतत्साम यज्ञहेतुरिति विवक्षुस्तदर्थमाख्यायिकामाह ।

शिशुर्वा आङ्गिरसो मन्त्रकृतां मन्त्रकृदासीत् स पितॄन् पुत्रका इत्यामन्त्रयत तं पितरोऽब्रुवन्नधर्म्मं करोषि यो नः पितॄन् सतः पुत्रका इत्यामन्त्रयस इति सोऽब्रवीदहं वाव पितास्मि यो मन्त्रकृदस्मीति ते देवेष्वपृच्छन्त ते देवा अब्रुवन्नेष वाव पिता यो

मन्त्रकृदिति तद्वै स उदजयदुज्जयति शैशवेन तुष्टुवानः ॥ २४ ॥

शिशुर्नामाङ्गिरसः अङ्गिरोगोत्र ऋषिः मन्त्रकृतां मन्त्रस्य कर्तॄणां तथा महात्मनान्तर्हितानाम्मन्त्राणां द्रष्टॄणाम्मध्ये मन्त्रकृत् मन्त्रस्य कर्त्ता अतिशयेन मन्त्रस्य द्रष्टासीत् स च विद्यातिशयेन हृष्टः सन् पितॄन् स्वकीयान् इत्यामन्त्रयत पुत्रा एव पुत्रका इत आगच्छतेति आमन्त्रणमाह्वानं कृतवान् एवमामन्त्रणानन्तरं शिशुं पितरोऽब्रुवन् कथमिति हे शिशो त्वमधर्म्ममत्यर्थं करोषि यत् त्वं पितॄन् तव पितृभूतान् सतो भवतः नोऽस्मान् पुत्रका इति वैपरीत्येनामन्त्रयस इति एवं तैरुक्तः सन् स पुनरब्रवीत् अहं वाव अहमेव युष्माकं पितास्मि भवामि योऽहं मन्त्रकृन्मन्त्रकर्त्ता द्रष्टास्मीति अतः सोऽहमेव पितास्मीति एवं परस्परं विवदमानाः ते देवेष्वपृच्छन्त विवादनिर्णेतृषु देवेषु सत्सु प्रश्नं कृतवन्तः अस्माकम्मध्ये कोवा पिता के पुत्रा इत्येवं पृच्छ्यमानास्ते देवाः युष्माकम्मध्ये यो मन्त्रकृत् एष एव पिता अन्ये पुत्रा इति तत्ततोऽनन्तरं स आङ्गिरसः शिशुरुदजयत् उत्कर्षेण जितवान् तस्मादद्यतनोऽपि शैशवेन साम्ना स्तुवन् उज्जयति उत्कृष्टञ्जयति ॥ २४ ॥

अथाधारभूतानामृचां छन्दःसंख्याद्वारेण प्रशंसति।

गायत्रीषु स्तुवन्ति प्रतिष्ठायै ब्रह्मवर्च्चसाय येनैव प्राणेन प्रयन्ति तमभ्युद्यन्ति ॥ २५ ॥

गायत्रीषु त्रिपदासु यत् सोमश्चित्रमित्याद्यासु त्रैष्टुभेन स्तुवन्ति तत्प्रतिष्ठायै प्रतिष्ठानाय ब्रह्मवर्चसाय च भवति गायत्र्याः त्रिपात्त्वेन प्रतिष्ठितत्वात् तेजोरूपतया ब्रह्मवर्चसहेतुत्वाच्च अस्य पवमानस्तोत्रस्य आद्यस्तृचो गायत्रत्वात् प्रायसंस्तुतः त्रिष्टद्वै प्राणा इति हि ब्राह्मणं तथा येनैव प्राणेन प्रयन्ति पवमानस्तोत्रं प्रारभन्ते तमेव प्राणमभिलक्ष्य उद्यन्ति तत् स्तोत्रं परिसमापयन्ति ॥ २५ ॥

अथैतावाद्यन्तौ तृचौ गायत्र्यौ कथं माध्यन्दिनसवने सङ्गच्छेते त्रैष्टुभं माध्यन्दिनं सवनमित्याशङ्कायामाह ।

उपवत्योगायत्र्यो भवन्ति तद्धु त्रैष्टुभाद्रूपान्नयन्ति स्तोमः ॥ २६ ॥

एताश्चत्वः हैगता गायत्र्यो उपवत्यो विष्णुग्रन्थयुक्ता भवन्ति विष्णुश्चेन्द्रस्यानुजः त्रिष्टुभा सह जातत्वादिन्द्रस्त्रैष्टुभः अतस्त्रिष्टुप्सम्बन्धिनो रूपान्नयन्ति नापगच्छन्ति त्रैष्टुभेन रूपेण योगात् त्रिष्टुभ एवेमा भवन्तीत्यर्थः एवन्नवसु सामसूक्तप्रकारेण प्रत्येकं तृचे क्रियमाणेषु यस्त्रिणवः स्तोमो निष्पद्यते स एव माध्यन्दिनपवमानस्य स्तोमः कार्य्यः ॥ २६ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोदशाध्यायस्य
तृतीयः खण्डः ।

---

अथ चतुर्थः खण्डः ।

अथ होतुः स्तोत्रनिर्वर्त्तकं शाक्करसाम विधित्सुस्तस्य संज्ञाचतुष्टयं प्रदर्श्य निर्व्वक्ति ।

इन्द्रः प्रजापतिमुपाधावद्वृत्रꣳहनानीति तस्मा-एतच्छन्दोभ्य इन्द्रियं वीर्य्यं निर्माय प्रायच्छदेतेन शक्नुहीति तच्छक्करीणाꣳ शक्करीत्वꣳ सीमानमभि-नत्तत्सिमामसिमाभवरोत्तन्महा महान् दोष आसीत् तन्महानाम्नः ॥ १ ॥

वृत्रमावरकमसुरं हनानि हन्यामीति वदन् इन्द्रः पुरा प्रजापतिमुपाधावत् उपागमत् तस्मा इन्द्राय प्रजापतिः एत-च्छक्वर्य्यात्मकमिन्द्रियं बलं वीर्य्यं वृत्रहननक्षमं सामर्थ्यं छन्दोभ्यः गायत्र्यादिभ्यः सकाशात् निर्माय सारत्वेनादाय प्रायच्छत् दत्त-वान् एतेन वीर्य्येण वृत्रं हन्तुं शक्नुहि शक्तो भवेति वदन् यस्मा-च्छक्नुहीति प्रजापतिरवोचत् तस्माच्छक्वरीणां शक्करीत्वं शक्नु-त्वात्मकत्वात् शक्वर्य्य इति नाम सम्पन्नं आधाराधेययोरभेद-विवक्षया शक्करीशब्देन बहुवचनान्तेन शक्करीषु गातव्यं सामै-वोच्यते आधारबहुत्वाद्बहुवचनं एवं प्रजापतिना दत्ते वीर्य्ये सति तेन सीमानं वृत्रासुरस्य शिरसो मध्यदेशमभिनत् इन्द्रो विदारितवान् तत्तस्मात्सीम्नोभेदकत्वात् सिमा इति शक्कर्य्य

उच्यन्ते ततः सीम्नो भेदनानन्तरं मङ्क्षेरत्यनुकरणशब्दोऽयं एवं रूपं शब्दमकरोत् तत्तस्मादेतासां मङ्क्षरा इति नाम सम्पन्नं ततो महान् घोषः शब्दआसीत् तन्महानाम्न्य इति संज्ञा आसां जाता एतच्च संज्ञाचतुष्टयं आर्षेयेण प्रदर्शितं ऐन्द्र्यो महानाम्न्यः प्रजापतेर्वा विष्णोर्वा विश्वामित्रस्य वासिमा वा मङ्क्षरा वा शक्वर्योवेति एवम्भूतं शाक्वरं साम होतुः पृष्ठतया कार्य्यमिति विधिरुन्नेतव्यः ॥ १ ॥

अथैतस्याधारभूताः शक्वरीः पादसंख्यया स्तौति ।

दिशः पञ्चपदा दाधारर्त्तून् षट्पदा छन्दांसि सप्तपदा पुरुषं द्विपदा ॥ २ ॥

इदमत्रावगन्तव्यं महानाम्नीनाम्नां तिसृणां शक्वरीणामृचां प्रत्येकं त्रयोदशपदा अभिधीयन्ते अतः प्रत्यृचमादितो द्वौ द्वौ पादौ मिलित्वा एकैकाद्विपदा शक्वर्यां वहिर्भूता ततस्त्रयः पादाः विदा शचीनामित्याद्याः सप्ताक्षराः शाक्वराः ततः स्वर्णाग्नुरिति व्यूहेन पञ्चाक्षरः पादः धातुसंज्ञकः ततः प्रचेतन प्रचेतयेति पादो वत्ससंज्ञकः एतावपि पादौ शक्वर्यां बहिर्भूतौ स्तोमवत् प्रयोज्यौ अथेन्द्रद्युम्नायन इति ऊधःसंज्ञकः पादः शाक्वरः तत एवाहिशक्र इति पञ्चाक्षरः पादः पुरुषसंज्ञको ऽशाक्वरः रायेवाजाय वज्रिव इत्याद्यास्त्रयः पादाः शक्वराः अथायाहि पिब मत्स्वेत्यध्यास्यनामैकः पादः एवं प्रथमायाम-

यौतास्त्रयोदशपादाः तत्र शक्वर्य्यां अवयवभूताः सप्त अन्ये त्व-शाक्वराः स्तोमवच्छक्वरीशेषतया प्रयोज्या इति प्रथमा शक्वरी सप्तपदा जाता एवमुत्तरयोरपि शाक्वराशाक्वरविभागो ज्ञातव्यः तदुक्तं सूत्रकारेण महानाम्नीः प्रकृत्य तासां प्रथमद्वितीये पादे द्विपदास्त्रीणि शक्वराणि धातुर्व्वत्स ऊधस्तच्छाक्वरं पुरुष-स्त्रीणि शाक्वराण्यन्त्यास्वेति पदान्युत्तमानुद्दुभ्यऽस्वेति तिसृणां शक्वरीणामादित एकैका द्विपदा ततस्त्रयः शाक्वराः पादा-स्ततो धातुर्व्वत्स ऊधश्चेत्येतत् संज्ञकास्त्रयःपादास्त्रय ऊधः संज्ञः पादः शाक्वरस्ततः पुरुषसंज्ञक एकः पादोऽशाक्वरस्तत-स्त्रयः पादाः शाक्वराः ततोऽभ्यास्याश्चैकपदा उत्तमायान्तु शूरो यो गोषु गच्छति सखासु शेवो अद्वयुरिति द्वावभ्यासाविति सूत्रार्थः अत्र निदानकारः अथैतासु महानाम्नीषु विप्रति-पादयन्तीदं शाक्वरमिदमशाक्वरमित्यशाक्वरी प्रथमा द्विपदा शक्वराणि त्रीणि पदानि धातुरशाक्वरः पञ्चाक्षरः स एष कुतः कृतो भवति वत्सोऽशाक्वरोऽष्टाक्षरः ऊधः शाक्वरम-ष्टाक्षरं पुरुषोऽशाक्वरः पञ्चाक्षरः शाक्वराण्येव त्रीणि पराणि पदानि अभ्यास अशाक्वरोऽष्टाक्षर इति नन्वेवमेतास्तिस्रोऽपि शक्वर्य्यः सप्तपदा जाताः कथं पञ्चपदा षट्पदेति व्यवहारः उच्यते प्रातिलोम्येनेयं श्रुतिः द्वितीयासम्बन्धी सनः सर्षंद्-तिद्विष इत्यभ्यासात् पूर्व्वमाम्नातोऽन्त्यः पादः उत्तमायां शक्वर्य्यां द्विपदाया ऊर्द्धं द्विरभ्यस्यते अतस्तत्पादद्वयं पुनःपुनराम्नातं भवेदिति मत्वा अवशिष्टशाक्वरपादपञ्चकाभिप्रायेण सा तृतीया

शक्वरी पञ्चपदा भवति तथा प्रथमायाः शक्वर्याः अभ्यासात् पूर्व्वभावी मण्ण्हिष्ठ वज्रिन् ऋञ्जस इति योऽयमन्त्यः पादः स एव द्वितीयाया शक्वर्य्यां द्विपदाया ऊर्द्ध्वं पुनराम्नायत इति तद-तिरिक्तपदषट्काभिप्रायेण द्वितीया शक्वरी षट्पदा भवति तदुक्तं निदाने प्रतिलोमं वदन्ति पदतञ्चित्रेोद्धो भविष्यतीति सप्त-पदा प्रथमा शक्वरी षट् पदा द्वितीया यद्धि प्रथमायामुत्तमं पदं तत् द्वितीयायाः प्रथमं प्रगाथसाधुपृष्ठमिति पञ्चपदोत्तमा यत् द्वितीयाया उत्तमं तृतीयायाः प्रथमञ्च द्वितीयञ्चेति प्रच-रार्थस्तु येयं पञ्चपदा तृतीया शक्वरी सा प्राच्याद्याः अध्यान्ताः पञ्चदिशोदाधार धारयति या षट्पदा शक्वरी द्वितीया सा वसन्तादीन् षडृतून् धारयति सप्तपदा प्रथमा शक्वरी गायत्र्या-दीनि सप्त छन्दांसि धारयति तिसृष्वपि शक्वरीषु या प्रथमा द्विपदा सा पादद्वययुक्तं पुरुषं धारयतीति ॥ २ ॥

अथैताः शक्वरीः प्रकारान्तरेण स्तौति ।

**द्योपश्याः षण्संस्तुता भवन्ति तस्माद् द्योपश्याः प-शवः ॥ ३ ॥**

अस्य स्तोत्रस्य त्रिणवस्तोमकत्वात् सप्तविंशतिः स्तोत्रीयाः एवाह्येवेत्यादीनि पुरीषपदानि पञ्च एवं द्वात्रिंशत्सम्पद्यन्ते तदिदमुच्यते द्योपश्याः संस्तुता भवन्तीति, संस्तुताः सहस्तुताः विराट्सम्पत्तेरूर्द्ध्वं द्वे उपर्श्वे अतिरिक्ते यासां ता द्व्योपश्याः

भवन्ति यस्माद्गोरूपाणां शक्करीणामेवं रूपता तस्मात् पशवो गवाद्या वृषोपशा द्विशृङ्गा आसन् ॥ ३ ॥

अथ प्रकारान्तरेण स्तौति ।

इडे अभितोऽथकारं तस्माच्छृङ्गे तीक्ष्णीयसी स्तूपात् ॥ ४ ॥

प्रथमायां स्तोत्रीयायामिन्द्रद्युम्नायन इष इति पादं त्रिरावर्त्य प्रथमोत्तमयोरुपरि इडा शब्दोऽभिहितो गीयते मध्यमेऽथकारः एवमुत्तरयोरपि इन्द्रो विदेतमुस्तुहि पूर्त्तीः शविष्ठ शस्यत इति पदयोरुक्तदेतत् सूयते अथकारमथा इति शब्दमभितः पार्श्वयोरिडे इडाशब्दो भवतः तत्र चाथशब्दो ह्रस्वान्तः इडाशब्दो दीर्घान्तो यस्मादेवं तस्मात् स्तूपात् स्तूपः शृङ्गयोर्मध्यः संहितो देशः तस्मात् सकाशात् शृङ्गे तीक्ष्णीयसी अतिशयेन तीक्ष्णा द्राघीयसी सूक्ष्माग्रे भवतः ॥ ४ ॥

द्विपदाद्योऽक्षराः प्रागनुक्रान्ताः तासां गानं विधत्ते ।

उपक्षुद्रा गायति तस्मादुपक्षुद्राः पशवः ॥ ५ ॥

उप शक्करीणां समीपे वर्त्तमाना क्षुद्राः अक्षरा अल्पपरिमाणास्तदङ्गभूता ऋच उपक्षुद्रास्ता गायति गायेत् यस्मादेवं रूपाणां शक्करीणामेवं रूपता तस्मात्पशवो गवाद्या अप्युपक्षुद्राः समीपवर्त्तिलघुदेहवत्सादियुताः ॥ ५ ॥

अथैतद्गाने गुणं विधत्ते ।

असंश्लिष्टा गायति तस्मादसंश्लिष्टाः पशवः ॥ ६ ॥

शक्करीरशक्करीश्च असंश्लिष्टा विच्छिन्ना गायति गायेत् यस्मात् गवादिरूपाः वक्ष्यमाणशक्कर्य्यश्चासंश्लिष्टाः तस्मात् पशवोऽप्यसंश्लिष्टाः स्वभावतः स्वेच्छाचारिणः ॥ ६ ॥

अथ शाक्करामाक्करपादव्यतिषङ्गेण यच्छक्करीणान्नानात्वन्तत् स्तौति ।

नानारूपा गायति तस्मान्नानारूपाः पशवः ॥७॥

स्पष्टोऽर्थः ॥ ७ ॥

अथ शक्करीणाङ्गानसमये उदपोपञ्जनयङ्गिर्गातव्यमिति विधातुमभिप्रेत्याह ।

आपो वै क्षीररसा आसंस्ते देवाः पापवसीयसादबिभयुर्यदप उपनिधाय स्तुवते पापवसीयसो विधृत्यै ॥ ८ ॥

आपश्च खलु पुरा क्षीररसाः क्षीरस्य पयसो रस इव रसो माधुर्य्यं यासां तथाविधा आसन् तथा सति स्वभाववैपरीत्यदर्शनात् पूर्व्वोक्ता देवाः पापवसीयसात् पापं निकृष्टं वसीयः श्रेष्ठमुभयोः सांकर्य्यादबिभयुः भीता अभवन् एवञ्च अवक्राभिः

संहिता अप उपनिधाय समीपे स्थापयित्वा शक्करीभिः स्तुवत इति यत्तत्पापवसीयसः पापस्य निकृष्टस्य वसीयस उत्कृष्टस्य च विधृत्यै विधारणाय असाङ्कर्य्येण स्थापनाय भवति उक्तं सूत्रकृता अपः सावका उपनिधाय महानाम्नीभिः स्तुवीरन्योयः सामाङ्गं ब्रूयात् स उदघोषञ्जनयेदिति ॥ ८ ॥

एतद्वेदनं प्रशंसति।

विधृतिः पापवसीयसो भवति यएवं वेद ॥ ९ ॥

स्पष्टोऽर्थः ॥ ९ ॥

अथास्य साम्नः काम्यानि निधनानि प्रदर्श्य स्तौति।

गायत्रमयनं भवति ब्रह्मवर्चसकामस्य स्वर्णिधनममुनामुष्मिंल्लोक उपतिष्ठते त्रैष्टुभमयनं भवत्योजस्कामस्याथकारणिधनमाज्येनामुष्मिंल्लोक उपतिष्ठते जागतमयनं भवति पशुकामस्येडानिधनं पयसामुष्मिंल्लोक उपतिष्ठते ॥ १० ॥

गायत्रं गायत्र्याः सम्बन्धि अयनं गमनं अनुष्ठानं भवति कस्य ब्रह्मवर्चसं कामयमानस्य यजमानस्य किं तद्गायत्र्याः सम्बन्ध्ययनं स्वरिति निधनस्य करणं एवं कुर्व्वन् स्वर्गलोके अमुना मार्च्चिकेन उपतिष्ठते तिष्ठतेः सङ्गतिकरण आत्मने पदं

सङ्गच्छत इत्यर्थः तथा ओजस्कामस्य बलकामस्य यजमानस्य त्रिष्टुभं त्रिष्टुप्सम्बन्ध्ययनं भवति किं तद्‌धकारणिधनं अर्थेति निधनस्य करणं त्रैष्टुभमयनमेव उक्तवान् अमुष्मिन् लोके आज्येनोपतिष्ठते गच्छते तथा पशुकामस्य यजमानस्य जागतं जगत्याः सम्बन्ध्ययनं भवति किं तज्जागतमयनमिडानिधनमिडेति शब्दस्य निधनत्वेन करणं इडायाः पशुरूपत्वादमुष्मिन् लोके पयसा उपतिष्ठते इडानिधनं पयसा यजमानः क्षीरेण सङ्गच्छते ॥ १० ॥

अथैतासां प्रस्तावोद्गानयोः क्षिप्रत्वं विधातुमाह।

अञ्जसाय्यौमाल्यः शक्करीः प्रारौत्सीदिति होवाचालम्मम्पारिजानतꣳ रजनः कौणेयो यद्येताः प्रतिष्ठापꣳ शक्ष्यतीत्येतद्वा एतासामञ्जः एतत्प्रतिष्ठिता य आभिः क्षिप्रं प्रस्तुत्य क्षिप्रमुद्गायति ॥ ११ ॥

माल्य इति गोत्रनिर्द्देशः एवम्भूतो आय्यौं नाम ऋषिः अञ्जसा आजोवेन शीघ्रं शक्करीः प्रारौत्सीत् प्रकर्षेणावृतवान् इति निर्द्देशात् खलु कौणेयः कुणेः पुत्रो रजनः पारिजानतं परिजानतोऽपत्यं अलम्मं एतत्संज्ञमृषिं प्रत्युवाच उक्तवान् तस्याप्रियाय उच्यते एताः शक्करीः प्रतिष्ठापं प्रतिष्ठापयितुं यदि शक्ष्यति शक्तो भविष्यति तर्ह्येव कर्त्तव्यमिति प्ररोद्धुरभिप्रायः एतत् एषः एतासां शक्करीणां कर्म्मणि षष्ठी एताः शक्करीरञ्जयति

गमयति स्पष्टीकरोति वा अव्यक्तिरपगतिषु तथा प्रतिष्ठिता अनपायास्त्र करोति एष इत्युक्तं कोऽसावेष इति तदुच्यते य आभिः शक्करीभिः क्षिप्रं शीघ्रं प्रस्तुत्य प्रस्तावभागं उच्चार्य्य क्षिप्रं शीघ्रमुद्गायति उद्गानं करोति प्रस्तुत्येति पूर्व्वकालतामात्रे क्त्वाप्रत्ययः ॥ ११ ॥

एवाह्येवेत्यादीनि पञ्चपुरीषपदानि तेषां गानं विधत्ते ।

शक्करीभिः स्तुत्वा पुरीषेण स्तुवते ॥ १२ ॥

शक्करीभिः शाक्करेण साम्ना स्तुत्वाऽनन्तरं पुरीषेण सामान्याभिप्रायमेकवचनं पुरीषैः पुरीषपदैः स्तुवते स्तुवीरन् ॥ १२ ॥

तदेतत्प्रशंसति ।

पशवो वै शक्वर्यो गोष्ठः पुरीषं गोष्ठमेव तत् पशुभ्यः पर्य्यस्यन्ति तस्मैवैनान् प्रवर्त्तयन्त्यविस्र(ं)साय ॥ १३ ॥

या एताः शक्वर्य्यस्ताः पशवो वै गोरूपा एव तद्वाचकैरिति शब्दैर्बह्वभिः उपेतत्वात्तद्वा वत्ससंज्ञकेन ऊधःसंज्ञकेन च पादद्वयेन योगात् शक्वर्य्यः पशवः ऊधसा वत्सेन च युक्ताः खलु पशवो लोक उपलभ्यन्ते यदेतत्पुरीषं पुरीषपदं एतद्गोष्ठः गवामवस्थानप्रदेशः तत्तथा सति गोष्ठमेव तत्पशुभ्यः पर्य्यस्यन्ति

परितः चिपन्ति निर्मिमते तमेव गोष्ठदेशं प्रत्येनान् पशून् प्रवर्त्तयन्ति अविस्रंसाय विस्रंसनाभावाय अविनाशायेत्यर्थः ॥१३॥

मैत्रावरुणपृष्ठं प्राकृतमेवेत्यभिप्रेत्य ब्रह्मणः पृष्ठस्य स्तोत्रीयं तृचं दर्शयति ।

इन्द्रो मदाय वावृध इत्यवर्द्धन्त ह्येतर्हि ॥ १४ ॥

इन्द्रो मदाय वावृध इति तृतीयस्य पृष्ठस्तोत्रीयो भवति तत्र वावृध इति भूतकालवाचिलिङ्गो वृधिधातुः श्रूयते एतर्ह्येतस्मिन् काले पञ्चमस्याह्नोऽनुष्ठानसमये अवर्द्धन्त हि यजमानाः समृद्धा अभवन् अतो भूतकालविषयवृद्धिप्रतिपादकशब्दोपेतस्तृचः सङ्गत इत्यर्थः ॥ १४ ॥

अथ तस्मिन् तृचे गेयं साम विधत्ते ।

तासु वार्हद्गिरं ॥ १५ ॥

बृहद्गिरेरिदं वार्हद्गिरं एतदाख्यं साम तासु इन्द्रो मदायेत्याद्यासु भवति ॥ १५ ॥

अथ विकल्पितं स्तोत्रीयसामान्तरं विशिष्टं विदधाति ।

स्वादोरित्था विषूवत इति विषुवान् वै पञ्चमहस्तासु रायोवाजीयं ॥ १६ ॥

स्वादोरित्थेत्येतौ तृचौ ब्रह्मसामस्तोत्रियः कार्य्यः

यदेतद्दशरात्रस्य पञ्चममहः एष विषुवान् यथा गवामयनस्य पञ्चसूतयोः षण्मासयोर्मध्ये वर्त्तमानमहः पक्षद्वयस्पर्शनात् विषुवानित्युच्यते तथेदं पञ्चममहरपि द्वादशाहस्य क्रतोः पूर्व्व-भागस्य षट्कस्यावसाने वर्त्तमानत्वेन मध्यवर्त्तित्वात् विषुवा-नित्याख्यायते तस्माद्विषुवच्छब्दयुक्तस्तृचः सम्बन्धार्हं इत्यर्थः तासु विषुवच्छब्दयुक्तासु स्वादोरित्येत्यादिषु रायोवाजीयं रायोवाजो नाम कश्चित्तत्सम्बन्धिसाम गातव्यं ॥ १६ ॥

अथ कामनाभेदे ब्रह्मसामतया विधित्सुराह ।

इन्द्रो यतीन् सालावृकेयेभ्यः प्रायच्छत्तेषां त्रय उदशिष्यन्त पृथुरश्मिर्बृहद्गिरीरायोवाजस्तेऽब्रुवन् कोन इमान् पुत्रान् भरिष्यतीत्यहमितीन्द्रोऽब्रवी-त्तानधिनिधाय परिचार्य्यं चरन् वर्द्धयंस्तान् वर्द्ध-यित्वाब्रवीत् कुमारका वरान् वृणीध्वमिति, क्षत्र-मह्यमित्यब्रवीत् पृथुरश्मिस्तस्मा एतेन पार्थरश्मेन क्षत्रं प्रायच्छत् क्षत्रकाम एतेन स्तुवीत क्षत्रस्यैवास्य प्रकाशो भवति, ब्रह्मवर्चसम्मह्यमित्यब्रवीद् बृहद्गि-रिस्तस्मा एतेन बार्हद्गिरेण ब्रह्मवर्चसं प्रायच्छद् ब्रह्मवर्चसकाम एतेन स्तुवीत ब्रह्मवर्चसी भवति, पशून् मह्यमित्यब्रवीद्रायोवाजस्तस्मा एतेन रायो-

वाजीयेन पशून् प्रायच्छत् पशुकाम एतेन स्तुवीत पशुमान् भवति ॥ १७ ॥

पुरा खल्विन्द्रो यतीन् एतन्नामकान् यज्ञविरोधिजनान् सालावृकेयेभ्यः सालावृक्याः पुत्रेभ्यः क्रोष्टुभ्यः प्रायच्छत् भक्षणार्थं दत्तवान् तेषां यतीनाम्मध्ये त्रय उदशिष्यन्त अवशिष्यन्त अवशिष्टाः सालावृकैरभक्षिता आसन् के तु ते पृथुरश्मिर्बृहद् गिरी रायोवाज इति अवशिष्टा एवमब्रुवन् कः नोऽस्मानिमान् पुत्रात्मना स्वीकृतान् कृत्वा भरिष्यति पोषयिष्यतीति एवमुक्ते अहं वः युष्माकं पोषकोऽस्मीतीन्द्रोऽब्रवीत् अथ तान् पृथुरश्म्यादीनधिनिधाय रथे आरोप्य वर्द्धयन् पोषयन् पर्य्यचरन् परिचर्य्यां कृतवान् एवं वर्द्धयित्वा पुनरब्रवीत् हे कुमारकाः मम पुत्रभूताः वरान् वृणीध्वं याचध्वमिति तत्र पृथुरश्मिः मह्यं क्षत्रं बलमस्त्वित्यब्रवीत् अवृणीत ततस्तस्मै पृथुरश्मये एतेन पार्थुरश्मेन साम्ना क्षत्रं बलं प्रायच्छदिन्द्रो दत्तवान् तस्माद्यतनोऽपि क्षत्रकाम एतेन पार्थुरश्मेन ब्रह्मसाम्ना स्तुवीत अथ तद्वेदनफलं अस्य वेदितुः क्षत्रस्य क्षत्रजातेरिव प्रकाशः कीर्त्तिर्भवति प्रतिष्ठितश्च भवति य एवं ब्राह्मणार्थं जानाति, अथ बृहद्गिरिः ब्रह्मवर्चसं ब्राह्मं तेजो मह्यमस्त्विति अब्रवीत् अयाचत ततस्तस्मै बृहद्गिरये एतेन बार्हद्गिरेण साम्ना ब्रह्मवर्चसं प्रायच्छदिन्द्रः प्रादात् तस्माद् ब्रह्मवर्चसकामः ब्रह्मवर्चसं कामयमानो यजमान एतेन बार्हद्गिरेण स्तुवीत स ब्रह्मवर्चसी

भवति, अथ रायोराजः मह्यं पशून् देहीत्यब्रवीत् ततस्तस्मै रायोवाजीय एतेन रायोवाजीयेन साम्ना पशून् प्रायच्छत् दत्तवान् तस्मात् पशुकामो यजमान एतेन रायोवाजीयेन स्तुवीत स पशुमान् बहुपशुको भवति ॥ १७ ॥

अथैतत्साम कर्त्तृविशेषे व्यवस्थापयति ।

पार्थुरश्मꣳ राजन्याय ब्रह्मसाम कुर्य्यात् बार्ह-द्गिरं ब्राह्मणाय रायोवाजीयं वैश्याय स्वेनैवैनाꣳ स्वरूपेण समर्द्धयति स्तोमः ॥ १८ ॥

राजन्याय क्षत्रियाय पार्थुरश्मं ब्रह्मसाम कुर्य्यात् एवमुत्तरत्रापि योजना क्षत्रियस्य हि स्वकीयं रूपं क्षत्रं ब्राह्मणस्य ब्रह्मवर्चसं वैश्यस्य पशवः पाशुपाल्यं एतानि त्रीणि सामानि एतत्त्रितयसाधनानीत्युक्तं तत्तथा च स्वेन स्वकीयेन नियतेनैव रूपेण एतान् समर्द्धयति समृद्धान् करोति अच्छावाकपृष्ठस्तोत्रमपि प्राकृतमेवेत्यवगन्तव्यं एतेषु च त्रिष्वपि पृष्ठस्तोत्रेषु पूर्व्वोक्तस्त्रिणव एव स्तोमः कार्य्यः ॥ १८ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोदशाध्यायस्य

चतुर्थः खण्डः ।

---

अथ पञ्चमः खण्डः ।

अथार्भवपवमानस्याद्यं तृचं दर्शयति ।

असाव्यꣳशुर्म्मदायेति गायत्री भवति मदवद्वै रसवत्तृतीयसवनम्मदमेव तद्रसं दधाति ॥ १ ॥

असाव्यंशुरिति गायत्री गायत्रपवमानस्याद्यस्तृचो भवति शिष्टं सिद्धं ॥ १ ॥

अथ तृचान्तरं विधत्ते ॥

अभिद्युम्नं बृहद्यश इत्यभीति रथन्तरस्य रूपं बृहदिति बृहत उभयोः सह रूपमुपैत्युभौ हि वर्णा-वेतदहः ॥ २ ॥

अभिद्युम्नमिति द्वितीयस्तृचः कार्य्यः अभित्वा शूरनोनुम इति रथन्तरयोनावभिशब्ददर्शनात् अभीतिशब्दो रथन्तरस्य साम्नो रूपं बृहदिति शब्दो बृहत्साम्नोवाचकत्वात्तस्य बृहतो रूपं तथा चोभयोर्बृहद्रथन्तरयोरूपमभिद्युम्नं बृहदिति सहो-पैति सहितमुपगच्छति एतत्पञ्चममहः उभौ हि वर्णावुभय-वर्णात्मकमेव बार्हताच्चतुर्थादह्न आनन्तर्य्यात् शाक्करस्य रथन्तर-प्रभवतया रथन्तरसम्बन्धाच्च ॥ २ ॥

अथान्यं तृचं विधत्ते ।

प्राणाग्निम्रुर्मंहीनामिति सिमानाᳬं रूपम्मह्यो हि सिमाः स्वेनैवैनास्तद्रूपेण समर्द्धयति ॥ ३ ॥

प्राणाग्निम्रुरिति तृतीयस्तृचस्तत्र सिमानां शक्करीणां रूपं कृतः मह्यो महत्यो हि सिमाः शक्कर्य्यस्तत्तथा च प्राणाग्निम्रु-र्मंहीनामिति शक्कर्य्यभिधायकेन महीशब्देन योगात् स्वेन स्वकी-येनैव रूपेण एताः सिमाः समर्द्धयति समृद्धाः करोति ॥ ३ ॥

अथ तृचान्तरं विधत्ते ।

पवस्व वाजसातय इति वैष्णव्योऽनुष्टुभो भवन्ति ॥४

वैष्णव्या विष्णुशब्दयुक्ता अनुष्टुप्छन्दस्काः पवस्वेत्याद्या-स्तिस्रः स्तोतीया भवन्ति इन्द्राय सोम विष्णव इति विष्णुशब्द-योगादिमा वैष्णव्यः ॥ ४ ॥

तदेतत्प्रशंसति ।

यज्ञो वै विष्णुर्यदत्र नापि क्रियते तद्विष्णुना यज्ञेनापिकरोति ॥ ५ ॥

अत्र विष्णुशब्देन व्यापको यज्ञ एवाभिप्रेतः तथा चास्मि-न्नहनि यच्चापि क्रियते अपि गतं प्राप्तं न क्रियते नानुष्ठीयते तद्यज्ञेन यज्ञात्मना विष्णुना अपिकरोति संपूर्णं करोति ॥ ५ ॥

अथ तृचान्तरं विधत्ते ।

इन्दुर्वाजी पवते गोन्योघा इति सिमानाᳬ रूपᳬ स्वेनैवैनाᳬ स्वरूपेण समर्द्धयति ॥ ६ ॥

गतमेतत् ॥ ६ ॥

ननु प्रस्तावार्थवस्यान्यस्तृचोऽभिप्रियाणीत्याद्यो जागतः तत्कथं तत्स्थाने त्रैष्टुभस्तृचः सङ्गच्छत इति तत्राह।

त्रिष्टुभः सत्यो जगत्यो रूपेण तस्माज्जगतीनां लोके क्रियन्ते ॥ ७ ॥

त्रिष्टुभः सत्योऽप्येता जागतरूपेण गोशब्देन योगात् जगत्यो भवन्ति तस्मादेव जगतीनां स्थाने क्रियन्ते गोन्योघा इति गोशब्दो दृश्यते तस्य जागतरूपत्वं प्रागाम्नातं ॥ ७ ॥

अथासाव्यंशुरिति प्रथमविहिते तृचे पूर्ववद्गायत्रं साम विधाय तत्स्तावकमिमे वै लोका गायत्रमित्यादिकं तत् ब्राह्मणमाम्नातिदिशति।

गायत्रं भवति यदेव गायत्रस्य ब्राह्मणं ॥ ८ ॥

स्पष्टोऽर्थः ॥ ८ ॥

अथास्मिन्नेवाहृत्ते तृचे सामान्तरं विधत्ते।

सन्तनि भवति पञ्चमस्याह्नः सन्तत्यै ॥ ९ ॥

असाव्यंशुरिति सन्तनिसंज्ञकं साम कार्यं तस्य पञ्चम-

स्याद्भः सन्तत्यै अहरन्तरेण सन्तानाय सम्बन्धायाविच्छेदाय भवति कथमस्य सन्तानहेतुतेति चेत् उच्यते सर्व्वाणि हि सामानि योनिग्रन्थे एकैकस्यामेवर्च्चि उत्पन्नानि दृहन्तु तत्राप्यैषस्य धारयेति तृचे गीयते तद्वदत्रासाव्यंशुरिति तृचे गातव्यमिति विधीयते तत्र किं तिसृषु ऋचु योनिभूतासु दृश्यमानं साम असाव्यंशुरिति अस्मिन् तृचे किमेकैकस्यां गातव्यं किं वा अत्रापि तृचे कृत्वा उत्तरार्थं तृच इव अन्यत आहर्त्तव्यं तथा च एकैकस्मिंस्तृचे एकस्य साम्नः समापनात् त्रयस्तृचास्त्रिवृतः स्तोत्रीया भवन्तीति न त्रिणवस्तोमविरोधः आहोस्वित् सामान्तरवत् योनिग्रन्थे कस्यामेव गीतं साम पुनरुत्तरयोः प्रस्तावभक्तिलोपेन तदेव गीयते असाव्यंशुरिति तृचे तद्वदेव प्रथमायां गीत्वा उत्तरयोरपि प्रस्तावविभक्तिलोपेन तदेवोद्गातव्यमिति संशये सन्तनिचोद्यमानमेकैकस्यां सर्व्वमित्यादिकं पचद्वयं पूर्व्वपचयित्वा अन्तिमं पचं सिद्धान्तितवान् तिसृष्वाचार्य्याः स्मृतेर्यथान्यानि सामानीति तथाचैकस्यां सामसमाम्नावपि प्रथमकृतं प्रस्तावमेवोत्तरार्थमभ्युपेत्य उत्तरयोः पृथक् प्रस्तावाभावात् ओङ्कारेण पृथग्गृह्णीयादानाच्च तस्य साम्नः सन्तनीत्यन्वर्थसंज्ञेयं अत एवास्याह्नः सन्तानहेतुत्वं तदप्युक्तं सन्तानाद्ध सन्तनीति ॥८॥

अथ प्रकारान्तरेण सन्तानहेतुतया स्तौति।

वाग्वा एषा प्रतता यद्द्वादशाहस्तस्या एष विषुवान्यत् पञ्चमसहस्तामेवैतेन सन्तनोति ॥ १० ॥

यत् यो द्वादशाहः द्वादशानामह्नां समूहः क्रतुः एषा प्रतता प्रकर्षेण विस्तारिता वाग्वै वागेव अतस्तस्यां वाच एष विषुवान् एतद्विषुवसंज्ञकमहर्य्यत् पञ्चसमहः अहःषट्कद्वयात्मिकान्तामेव वाचं एतेन सन्तनिसाम्ना सन्तनोति ॥ १० ॥

अथाभियुक्तमिति विहिते तृचे गेयं साम दर्शयति।

च्यावनं भवति ॥ ११ ॥

च्यावनाख्यं साम अस्मिंस्तृचे गातव्यमित्यर्थः ॥ ११ ॥

तदेतत् स्तौति।

प्रजातिर्वै च्यावनं प्रजायते बहुर्भवति च्यावनेन तुष्टुवानः ॥ १२ ॥

प्रजातिः प्रजननहेतुः खलु च्यावनं साम तस्माच्च्यावनेन तुष्टुवानः स्तुतवान् प्रजायते पुत्रपौत्रादिरूपेणोत्पद्यते अस्य पौत्रादय उत्पद्यन्त इत्यर्थः ततो बहुरनेकरूपश्च भवति ॥१२॥

अथास्य च्यावनसंज्ञां निर्ब्रुवन् वृष्टिफलहेतुतामाह।

एभ्यो वै लोकेभ्यो वृष्टिरपाक्रामत्तां प्रजापतिश्च्यावनेनाच्यावयद्यदच्यावयत्तच्च्यावनस्य च्यावनत्वञ्च्यावयति वृष्टिञ्च्यावनेन तुष्टुवानः ॥ १३ ॥

एभ्यस्त्रिभ्यो लोकेभ्यः पुरा वृष्टिरपाक्रामत् तामपक्रान्तां

वृष्टिं प्रजापतिश्च्यावनेन साम्ना अच्यावयत् अचारयत् सर्व्वतः प्रावर्षत् यद्यस्मादनेन साम्ना साधनेनाच्यावयत् तत्तस्माच्च्याव-नस्य साम्नश्च्यावनत्वमिति नाम सम्पन्नं यस्मादेवं तस्मादद्यत-नोऽपि च्यावनेन तुष्टुवानः स्तुवन् पुरुषः वृष्टिं च्यावयति चार-यति ॥ १३ ॥

अथ प्राणाभिश्च्युरिति तृचे गेयं साम दर्शयति।

क्रोशं भवति ॥ १४ ॥

क्रोशाख्यं साम तस्मिंस्तृचे गेयमित्यर्थः ॥ १४ ॥

अस्य च संज्ञां अर्थान्निर्ब्रुवन् पशुप्राप्तिसाधनतामाह।

एतेन वा इन्द्र इन्द्रक्रोशे विश्वामित्रजमदग्नी इमागाव इत्यक्रोशत् पशूनामवरुध्यै क्रोशं क्रियते ॥१५

एतेन खलु साम्ना साधनेन पुरा इन्द्र इन्द्रक्रोशे एतत् संज्ञे स्थाने हे विश्वामित्रजमदग्नी इमा गावो वर्त्तन्त इत्य-क्रोशत् उच्चैर्घोषं कृतवान् तस्मादस्य साम्नः क्रोशनसाधन-त्वात् क्रोशमिति नाम सम्पन्नमिति भावः तस्मादिदानीमपि पशूनां गवादीनामवरुध्यै अवरोधनाय प्राप्तये क्रोशं साम क्रियते प्रयुज्यते ॥ १५ ॥

अथ पवस्व वाजसातय इति तृचे विहिते गेयं साम दर्श-यन् तद्ब्राह्मणमर्थातिदिशति।

गौरीवितं भवति यदेव गौरीवितस्य ब्राह्मणं ॥१६

गतमेतत् ॥ १६ ॥

अथास्मिन्नेव तृचे पुनरावृत्ते सामान्तरं विधत्ते ।

ऋषभः शाक्वरो भवति ॥ १७ ॥

ऋषभः शाक्वर इति साम्नः संज्ञा एतत् संज्ञं साम अस्मि-न्नेव तृचे गातव्यं ॥ १७ ॥

तदेतत् स्तौति ।

पशवो वै शाक्वर्यः पशुष्वेव तन्मिथुनमप्यर्ज्जति प्रजात्यै न ह वा अनृषभाः पशवः प्रजायन्ते ॥१८॥

अस्मिन् पञ्चमेऽहनि विनियुक्ताः शक्वर्य्यस्तावत्यः पशवो वै गोरूपा एव ऋषभश्चात्र विधीयते तत्तथा च एकस्मिन्नहनि शक्वरीणामृषभः संयोजनात् पशुष्वेव मिथुनं स्त्रीपुंसरूपं युगल-मप्यर्ज्जति अवस्थापयति प्रजात्यै प्रजननाय ऋजु गतिस्थानोपा-र्ज्जनेष्विति धातुः न खलु अनृषभ ऋषभेण वियुक्ताः पशवः प्रजायन्ते वत्सान्जनयन्ति तस्मात् पशुसंस्तुतानां शक्वरीणां समीपे ऋषभो विनियोगयोग्य इत्यर्थः ॥ १८ ॥

तदस्मिन्नेव तृचे आवृत्ते सामान्तरं विधत्ते ।

पार्थंभवति ॥ १९ ॥

पृथिना दृष्टं साम पार्थं तदस्मिन्नेव तृचे गातव्यं ॥ १९ ॥

अथैतत् ग्राम्यारण्यपशुसङ्घप्राप्तिसाधनमिति स्तौति।

एतेन वै पृथी वन्य उभयेषां पशूनामाधिपत्यमा-श्नुतोभयेषां पशूनामाधिपत्यमश्नुते पार्थेन तुष्टु-वानः ॥ २० ॥

एतेन पार्थेन साम्ना खलु पुरा वैन्यो वेनस्य पुत्रः पृथीनाम राजर्षिः उभयेषां ग्राम्यारण्यानां पशूनामाधिपत्यमधिपतित्वं स्वामित्वमाश्नुत प्राप्नोत् अतो अद्यतनोऽपि पार्थेन तुष्टुवानः स्तुतवान् उभयेषाम्पशूनां स्वामित्वं प्राप्नोति ॥ २० ॥

अथास्मिन्नेव तृचे आहृत्ते सामान्तरं विधत्ते।

अष्टेडः पदस्तोभो भवति ॥ २१ ॥

अष्टाविडा यस्मिन् ऋचि पादे स्तोभेयस्मिन् स तथोक्तः एत-स्त्वाष्टेडः पदस्तोभः साम्नः संज्ञा धर्त्ता दिव इत्यस्यां योनौ चत्वारि सामानि गीयन्ते तत्र प्रथममष्टेडापदस्तोभसंज्ञं तत्प-वस्व वाज इत्यस्मिन् तृचे ऊहितव्यं ॥ २१ ॥

अथास्य साम्नो गाने किञ्चिद्गुणं विधित्सुराह।

इन्द्रो वृत्राय वज्रमुदयच्छत्तं षोडशभिर्भोगैः पर्य-

भुजत्स एतं पदस्तोभमपश्यत्तेनापावेष्टयदपवेष्टय-न्निव गायेत् पाप्मनोऽपहत्यै ॥ २२ ॥

इन्द्रो वृत्रमसुरं हन्तुं वज्रं कुलिशं उद्यच्छदुदग्रहीत् तं वृत्रासुरः षोडशभिः षोडशसंख्याकैर्भोगैः सर्व्वशरीरैः पर्य्य-भुजत् पर्य्यग्रसत् आवेष्टितवान् स तथाविध इन्द्रः एतं पदस्तोभं एतत्संज्ञं सामापश्यत् तेन पदस्तोभेन स्वदृष्टेनापावेष्टयत् अपगतवेष्टनमकरोत् आवेष्टकान् सर्व्वभोगानपसारितवानित्यर्थः तस्मादिदानीन्तनोऽपि स्तोता अपवेष्टयन्निवापगतं वेष्टनस्याप-गमनं कुर्व्वन्निव गायेत् किमर्थं पाप्मनः पापस्यापहत्यै अपहननाय विनाशार्थं ॥ २२ ॥

एतदेव विव्रियते ।

पाप्मा वाव स तमगृह्णात्तं पदस्तोभेनापाहताप-पाप्मानꣳ हते पदस्तोभेन तुष्टुवानः ॥ २३ ॥

तमिन्द्रं स वृत्रः पाप्मा वाव पापमेव भूत्वा अगृह्णात्तं पाप्मानं पदस्तोभेनापाहत व्यनीनशदनाशयत एवमतः कारणात्पदस्तो-भेन तुष्टुवानः स्तुतवान् पाप्मानं पापमपहते विनाशयति ॥२३॥

अथास्य पदस्तोभसंज्ञां निर्व्वक्ति ।

पदोत्तममपश्यत्तत्पदस्तोभस्य पदस्तोभत्वं ॥२४

पदः पदात् ऋचः प्रतिपादं उत्तमं प्रतिशयेनाचरितारं

स्तोभमपश्यत् अदर्शत् तत्तस्मात्पदस्तोभस्य साम्नः पदस्तोभत्वं पदस्तोभ इति नाम सम्पन्नं ॥ २४ ॥

अथास्य प्रतिष्ठाहेतुतामाह ।

**द्वादशनिधनो भवति प्रतिष्ठायै ॥ २५ ॥**

स च पदस्तोभो द्वादशनिधनः द्वादशानि निधनानीति यस्य तादृशो भवति प्रतिष्ठायै प्रतिष्ठानाय द्वादशमासात्मकः संवत्सरो हि प्रतिष्ठाहेतुः तत्सामान्यात् द्वादशनिधनोऽपि पदस्तोभः प्रतिष्ठाहेतुरित्यर्थः तानि च द्वादशनिधनानि सूत्रकृतैवोक्तानि निधनानि पदानि पदस्तोभेषु तथेडा इति अयमर्थः पदस्तोभा नाम भर्त्ता दिव इत्यस्यां गीयमानानि चत्वारि सामानि अष्टेडषडिडचतुरिडद्विरिडानीति अत्र चाष्टेडः पदस्तोभो विहितः तस्य यानि चत्वारि पदानि यास्त्वाष्टाविडा तानि मिलित्वा द्वादशनिधनानि भवन्ति ॥ २५ ॥

अथान्तिमे तृचे गेयं साम विधत्ते ।

**दाशस्पत्यं भवति ॥ २६ ॥**

दाशस्पत्याख्यं साम इन्दुर्वाजी पवत इति तृचे गेयं ॥२६॥

वाश्ववदहःप्रशंसा कामः तत्साम संज्ञाद्वारेण स्तौति ।

**यां वै गां प्रशंसन्ति दाशस्पत्येति तां प्रशंसन्त्यह्रैवैतेन प्रशंसन्ति ॥ २७ ॥**

लोके हि यां गां प्रशंसन्ति स्तुवन्ति तां दाशस्त्येति प्रशंसन्ति दाशृदान इति धातुः दाशो दानस्य पतिः दाशस्पतिः भावपरो निर्देशः दाशस्पतौ साधुर्दाशस्पत्यो वज्रस्य चौरस्य प्रदातुमीश्वरः गां स्तुवन्ति अतो दाशस्पत्यसंज्ञा प्रशंसाहेतुः एतेन दाशस्पत्यसंज्ञेन साम्ना अन्हरेवेदमनुष्ठीयमानं प्रशंसन्ति ॥ २७ ॥

अथैतत्पवमानस्तोत्रमुपसंहरति ।

निधनान्ताः पवमाना भवन्त्यह्नो धृत्यै स्तोमः॥२८

सर्व्वत्र तावच्चत्वार एव सामान्ताः स्वरो निधनमिडावागिति ऋचामन्त्यमक्षरं स्वरयित्वा समापितं हाइकारश्च द्वयमपि स्वर इति कृत्वा व्यपदिश्यते स्वरवागिडाभ्योऽन्ये सामान्तरं कृत्वैव निधनमित्युच्यते अस्मिंश्च दाशस्पत्ये स्वरवागिडाभ्योविलक्षणमेव पदावसानं दृश्यते तथा पूर्व्वयोरपि पवमानयोस्तस्मादेते त्रयः पवमानाः निधनान्ताः निधनसंज्ञः सामान्तो येषां तथाविधा भवन्ति तच्च निधनान्तत्वमस्यानुष्ठीयमानस्य पञ्चमस्याह्नो धृत्यै धारणाय कल्पते एवन्नवसु सामसु तृचेषु क्रियमाणेषु सप्तविंशतिस्तोत्रीयात्मकस्त्रिणवस्तोमो निष्पद्यते स एव स्तोमोऽस्यार्भवस्य भवति ॥ २८ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोदशाध्यायस्य

पञ्चमः खण्डः ।

---

अथ षष्ठः खण्डः ।

अथोक्थानां प्रथमस्य स्तोत्रीयं तृचं दर्शयति ।

आ ते अग्न इधीमहीति ॥ १ ॥

स्पष्टोऽर्थः ॥ १ ॥

तदेतत् स्तौति ।

अपच्छिदिव वा एतद्यज्ञकाण्डं यदुक्थानि यदेति सस्तोमत्वायैव ॥ २ ॥

गतमेतत् ॥ २ ॥

द्वितीयस्योक्थस्य स्तोत्रीयं तृचं विधाय स्तौति ।

इन्द्राय साम गायतेति पूर्णाः ककुभस्तेनानशनायुको भवति ॥ ३ ॥

इन्द्राय साम गायतेति पूर्णाः अक्षरसंख्यया सम्पूर्णाः अन्यूनाः ककुभः ककुप्छन्दस्काः त्रिस्रः स्तोत्रीया ब्रह्मसाम्नो भवन्ति तेन पूर्णस्य ककुभस्य तृचस्य करणेन यजमानोऽपि पूर्णस्तृप्तः सन् अनशनायुकः अशनाया अशनेच्छा क्षुत्पीडा तद्रहितो भवति ॥ ३ ॥

प्रकारान्तरेण स्तौति ।

पुरुषो वै ककुप् पुरुषमेव तन्मध्यतः प्रीणाति ॥४

यदिदं ककुप्छन्दस्तत्पुरुषो वै पुरुषात्मक एव तत्तथा सति मध्यतः उक्थानाम्मध्ये पुरुषमेव यजमानस्यात्मानमेव देह-मध्येऽवस्थितं प्रीणाति तर्पयति ॥ ४ ॥

अथ तृतीयस्योक्थस्तोत्रीयं दर्शयति।

असावि सोम इन्द्रत इति शिमानाꣳ रूपꣳ रूपेणैवैनाꣳस्तद्रूपेण समर्द्धयति ॥ ५ ॥

असावि सोम इन्द्रत इत्यच्छावाकस्योक्थस्य स्तोत्रीयस्तृचो भवति सोमः असावि अभिषुतः रसावस्थामापन्नोऽभूदित्यर्थः प्रतीयते शक्कर्थ्यः शिमा इत्युच्यन्ते पशवो वै शक्कर्य्य इति श्रुतेः तासाङ्गोरूपत्वात् गवाञ्च क्षीरादिसम्बन्धः सिद्ध एवेति असावि सोम इति रसप्रतिपादकशब्दः शिमानां शक्करीणां रूपं गतमन्यत् ॥ ५ ॥

अथ प्रथमतृचे गेयं साम दर्शयति।

सञ्जयम्भवति ॥ ६ ॥

सञ्जयाख्यं साम आते अग्नइधीमहीत्यस्मिंस्तृचे गातव्यं ॥६ अथास्य संज्ञां आख्यायिकया निर्ब्रुवन् पशुसाधनतामाह ॥

देवाश्च वा असुराश्च समदधत यतरे नः सञ्जयाꣳ

स्तेषान्नः पशवोऽसानिति ते देवा असुरान् सञ्जयेन समजयन् यत्समजयꣳस्तस्मात्सञ्जयम्पशूनामवरुध्यै सञ्जयं क्रियते ॥ ७ ॥

पुरा खलु देवाश्चासुराश्च पशुविषयं स्पर्द्धमानाः समदधत सन्धानं समयमकुर्व्वन् नोऽस्माकमध्ये यतरे सञ्जयात् सम्यग् जयेयुः नोऽस्माकमध्ये तेषामेव पशवो गवाद्या आसन् सन्तु भवन्त्विति एवं सन्धानं कृत्वा ते युध्यमाना देवाः सञ्जयेनानेन साम्ना असुरान् समजयन् अभ्यभवन् यद्यस्मादनेन साम्ना समजयन् तस्मात् सञ्जयमिति तस्य साम्नो नाम सम्पन्नं अतोऽद्यतनोऽपि यजमानस्य पशूनामवरुध्यै अवरोधनार्थं सञ्जयं साम क्रियते ॥ ७ ॥

अथ द्वितीयोक्थस्य साम विधत्ते।

सौमित्रं भवति ॥ ८ ॥

सुमित्रेण दृष्टं साम सौमित्रं तदिन्द्राय साम गायतेति तृचे गेयं ॥ ८ ॥

अथैतत् सर्वप्राप्तिसाधनमिति विवक्षुराह।

दीर्घजिह्वी वा इदꣳ रक्षो यज्ञहा यज्ञानवलिह-त्यचरत्तामिन्द्रः कयाचन मायया हन्तुन्नाशꣳसताथ ह सुमित्रः कुत्सः कल्याण आस तमब्रवीदिमामच्छा-

ब्रूष्वेति तामच्छा ब्रूत सैनमब्रवीन्नाहैवतन्नु युष्मव प्रियमिव तु मे हृदयस्येति तामक्षपयत्ताꣳ सꣳस्कृतेऽहतां तद्दाव तौ तत्र्यांकामयेतां कामसनि साम सौभितं काममेवैतेनावरुन्धे ॥ ९ ॥

दीर्घजिह्वी दीर्घा जिह्वा यस्याः सा दीर्घजिह्वी दीर्घजिह्वी च छन्दसीति निपातनादीकारः इदमीदृशी रक्षः राक्षसी यज्ञहा यज्ञस्य हन्त्री यज्ञान् यज्ञियान् यज्ञार्थांश्चरुपुरोडाशसोमादीन् अवलिहती दीर्घया जिह्वया अवलेहनं कुर्वती आस्वादयन्ती भक्षयन्ती अचरत् अवर्त्तयत् तां दीर्घजीह्वीं राक्षसीं इन्द्रः कयापि मायया हन्तुं हिंसितुं नाशंसत नाशक्नोत् अथैतस्मिन् समये सुमित्रः शोभनेन मैत्रीभावेन युक्तः कल्याणः प्रशस्तः कुत्साख्यऋषिरास आविरभूत् स इन्द्रस्तमृषिमब्रवीत् इमां राक्षसीं अच्छा मदभिमुखं यथा भवति तथा ब्रूहीति अतस्तां राक्षसीं अच्छा ब्रूष्वेति स ऋषिः यथा सा अभिमुखी भवति तथाब्रवीत् एतत्साम गीयते सा राक्षसी अभिमुखी सती एनमृषिमब्रवीत् अहेति कर्षे मम हृदयस्य मियमिव तु प्रियमेवाभूदिति एवमभोक्ततां तां राक्षसीं अक्षपयत् इन्द्राय न्यवेदयत् ततस्तां राक्षसीं संस्कृते प्रोक्षणादिसंस्कारेणाविभूते यज्ञवाटे अहतां कुत्सइन्द्रश्चोभौ मिलित्वा अहिंसिष्टां तदेव राक्षसाहननं तर्हि तस्मिन् काले तावाकामयेतां कामयित्वा च हतवन्तौ तस्मात् सौमित्रं सुमित्रेण दृष्टं साम कामसनि काम-

ऽदं सर्व्वकामप्राप्तिसाधनं तस्मात्तेन सर्वमेव कामं यजमानो-ऽवरुन्धे ॥ ९ ॥

अथ प्रकारान्तरेणैतत् स्तौति।

**सुमित्रः सन् क्रूरमकरित्येनं वागभ्यवदत्तथ्ठ्शु-गार्छत्सतपोऽतप्यत स एतत्सौमित्रमपश्यत्तेन शुचम-पाहतापशुचथ्ठ् हते सौमित्रेण तुष्टुवानः ॥ १० ॥**

अस्य रक्षोवधानन्तरं हे कुत्स सुमित्रः सर्वेषां भूतानां शोभनमित्रः सन् क्रूरं कर्म अकः अकार्षीरिति एनमृषिं अशरी-री वागभ्यवदत् अभितोऽब्रवीत् स ऋषिस्तपोऽतप्यत तेन च तपसा एतत्सौमित्रं सामापश्यत् तेन च पुष्टेन सौमित्रेण शुचं शोकं अशरीरवाग्जन्यमपाहत व्यनाशयत् तस्माद्यतनोऽपि सौमि-त्रेण तुष्टुवानः स्तुतवान् शुचं शोकं अपाहत अपहन्ति नाश-यति ॥ १० ॥

अथ तृतीयोक्थस्य साम विधत्ते।

**महावैश्वामित्रं भवति ॥ ११ ॥**

एतत्संज्ञं साम असावि सोम इन्द्रत इति तृचे गेयं ॥ ११॥

अथैतत्संज्ञानिर्वचनेन स्तौति।

**पाप्मानथ्ठ् हत्वा यदमहीयन्त तत् महावैश्वामि-त्रस्य महावैश्वामित्रत्वं ॥ १२ ॥**

देवाः पुरा अनेन साम्ना पाप्मानं पापं हत्वाऽमह्यीयन्त यस्मात्कारणादमह्यीयन्त पूज्या आसन् तत्तस्मान्महावैष्टम्भमितस्यास्य साम्नो महावैष्टम्भितत्वं महावैष्टम्भितमिति नाम सम्पन्नं ॥ १२ ॥

अथास्य साम्नः स्तोभमुपादाय स्तौति ।

हायाऽइहयाउहाउहेति पशूनेवैतेन न्यौहन्त ॥ १३ ॥

अस्मिन् स्तोभे उहा उहेति दृश्यते एतेन स्तोभेन पशूनेव न्यौहन्त नितरां प्राप्नुवन् यद्वा समगृह्णीतवन्तः अस्य साम्नोऽवसाने होइडेति त्रिः प्रयुज्यते ॥ १३ ॥

तदनूद्य स्तौति ।

त्रीडं भवति त्रिरात्रस्य धृत्यै ॥ १४ ॥

तिस्र इडा यस्य तत्त्रीडमेतत् साम भवति तच्च द्वितीयस्य त्रिरात्रस्य धृत्यै धारणाय भवति ॥ १४ ॥

अथ पूर्व्वस्मादिडाद्वयात् उत्तमाया इडाया गुणविशेषं विदधानः सन्तानहेतुतामाह ।

द्रवन्तीमिडामुत्तमामुपयन्ति षष्ठस्याह्नः सन्तत्यै ॥ १५ ॥

हो द्रुडेति द्रवन्तीं द्राघीयसीमुत्तमामन्त्यां तृतीयामिडा-

सुपयन्ति उपगच्छन्ति सा च दीर्घीभूता षष्ठस्याह्नः करिष्यमाणस्य सन्तत्यै सन्तानाय सम्बन्धाय भवति ॥ १५ ॥

अथैतेषूक्थेषु पूर्ववत् स्तोमक्लृप्तिं दर्शयित्वा स्तौति।

त्रिणव एव स्तोमो भवति प्रतिष्ठायै पृष्ठ्यै लिहा एष पृष्टः ॥ १६ ॥

व्याख्यातमेतत् ॥ १६ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोदशाध्यायस्य

षष्ठः खण्डः।

---

अथ सप्तमः खण्डः।

एवं द्वादशरात्रिकस्य पञ्चमस्याह्नः स्तोमक्लृप्तिमुक्त्वा अथ षष्ठेऽहनि बहिष्पवमानस्य प्रथमं स्तोत्रीयाख्यं तृचं दर्शयति।

ज्योतिर्यज्ञस्य पवते मधुप्रियमिति षष्ठस्याह्नः प्रतिपद्भवति ॥ १ ॥

त्रयस्त्रिंशत्स्तोमकं द्वादशरात्रिकं षष्ठमहरतः परमध्यायपरिसमाप्तेः प्रतिपाद्यते तस्य षष्ठस्याह्नो ज्योतिर्यज्ञेति प्रतिपद्यते अनयैवेति प्रतिपदिति प्रथमा ऋगुच्यते तृचसूक्ताना-

मादिग्रहणेन विधिरनादेश इति परिभाषया एतदादिकस्तृच एव ग्राह्यः सोऽयं बहिष्पवमानस्याद्यस्तृचो भवति ॥ १ ॥

अत्र ज्योतिःशब्देन सूचितमर्थं प्रदर्श्य स्तौति।

ज्योतिर्वै गायत्री छन्दसां ज्योती रेवती साम्नां ज्योतिस्त्रयस्त्रिंशः स्तोमानां ज्योतिरेव तत्सम्यक् सन्दधात्यपि ह पुत्रस्य पुत्रो ज्योतिष्मान् भवति ॥२॥

छन्दसाम्मध्ये गायत्री ज्योतिर्वै तेजोरूपत्वाग्निना सह प्रकाशयति प्रजापतिमुखादुत्पत्तेः तथा साम्नाम्मध्ये रेवती रैवतं साम ज्योतिस्तेजोरूपं रयिर्द्धनं तद्वदस्य प्रकाशोऽस्तीति प्रसिद्धं अतोरयिमच्छब्दपर्य्यायेण रैवच्छब्देनाभिधेयं साम प्रकाशात्मकं स्तोमानां त्रिवृदादीनां मध्ये त्रयस्त्रिंशस्तोमो ज्योतीरूपः तस्य त्रयस्त्रिंशद्देवतात्मकत्वात् तथा सति ज्योतिर्य्यज्ञस्येति ज्योतिःशब्दप्रयोगादस्मिन्नहनि ज्योतिरेव उक्तं त्रितयात्मकं सम्यक् सङ्गतं यथा भवति तथा सन्दधाति संयुनक्ति अस्य यजमानस्य यःपुत्रस्तस्य पुत्रो ज्योतिष्मान् तेजस्वी भवति किमु वक्तव्यमस्य यजमानस्य ज्योतिष्मत्त्वं भवतीति ॥ २ ॥

अथात्रान्त्यं पदान्तरमनूद्य स्तौति।

मधुप्रियमिति पशवो वै रेवत्यो मधुप्रियं तदेव तदभिवदति ॥ ३ ॥

रेवत्यो रेवत्यात्मकं साम पशवो वै पश्वात्मकमेव तदेव मधु-प्रियं रसातिशयनेच्छाविषयं मधु मधुरस्य चीरादिरसस्य प्रदा-नेनैव पशूनाम्मधुरत्वं तत्प्रतिपदं पशुद्वारा रेवत्यात्मकं तदेव मधु अभिवदति अभिब्रवीति शब्दसामान्येनेयं स्तुतिः ॥ ३ ॥

अथ पदान्तरमनूद्य स्तौति ।

## सदिन्तमो मत्सरइन्द्रियोरस इतीन्द्रियं वै वीर्य्यꣳ रसः पशवस्तदेव तदभिवदति ॥ ४ ॥

इन्द्रियात्मकं वीर्य्यं रसः पशवः वीर्य्यरसात्मकाः पशवः इत्यर्थः इत्वं हतवत इन्द्रस्य वीर्य्यं भूमौ परापतत् तच्चौषधिरूपेण परिणीतमभूत् ओषधीनाञ्च पशुभिरात्मनि धारणात् रसात्म-कस्य चीरादेः प्रदानाच्च पशूनां वीर्य्यरसात्मकत्वं गतम-न्यत् ॥ ४ ॥

अथानुरूपाख्यं बहिष्पवमानस्य द्वितीयं तृचं विधत्ते ।

## असृक्षत प्रवाजिन इत्यनुरूपो भवति ॥ ५ ॥

स्पष्टोऽर्थः ॥ ५ ॥

तत्रासृक्षतेति पदसूचितेनार्थेनाङ्गा सङ्गतिमाह ।

## सृष्टानीव ह्येतर्ह्यहानि ॥ ६ ॥

एतर्हि एतस्मिन् काले अहान्येतदन्तानि सृष्टानीव उत्पा-

दितान्येव तस्माद्भूतकालविहिततद्धिरस्त्रमसृजतेति सृजि-
धातुः सृष्टेर्हि सङ्गत इत्यर्थः ॥ ६ ॥

अथ पूर्ववदस्य तृचस्य अनुरूपसंज्ञां निब्रुवन् तद्वेदनफलं
दर्शयन् स्तोत्रीयानुरूपौ तृचौ संहत्य स्तौति ।

पूर्व्वमु चैव तद्रूपमपरेण रूपेणानुवदति यत्पूर्व्वं
रूपमपरेण रूपेणानुवदति तदनुरूपस्यानुरूपत्वम-
नुरूपएनं पुत्रो जायते य एवं वेद स्तोत्रीयानुरूपौ
तृचौ भवतः प्राणापानानामवरुध्यै ॥ ७ ॥

सिद्धमेतत् ॥ ७ ॥

अथ दशर्चद्वयं विधत्ते ।

दशर्चौ भवतो दशाक्षरा विराड् वैराजमन्नम-
न्नाद्यस्यावरुध्यै ॥ ८ ॥

पवस्व देव वीरति सना च सोम जेषि च एतौ दशर्चौ स्तो-
त्रीयानुरूपतृचद्वयानन्तरं कार्य्यौ विराट्छन्दो दशाक्षरमेतच्च
दशविधेन्द्रियतर्पकत्वेन दशसंख्यायोगाद्विराजं विराट्सम्बन्धि
तस्माद्दशसंख्याद्वारा एतौ दशर्चौ अन्नाद्यस्य अन्नयोग्यस्या-
न्नस्यावरुध्यै अवरोधनाय भवतः ॥ ८ ॥

अथानयोरुत्तरस्य दशर्चस्य किञ्चिद्गुणं विधत्ते ।

उत्तरो दग्धर्चौ भवति सोदर्कं इन्द्रियस्य वीर्य्यस्य रसस्यानतिचाराय ॥ ९ ॥

सना च सोमेत्युत्तरो द्वितीयो दग्धर्चः सोदर्कः अथानोवस्य सत्सूधीति प्रत्यृचं समान अवसानो भवति किमर्थमिन्द्रियस्य वीर्य्यस्य इन्द्रियात्मकस्य सामर्थ्यस्य रसस्य चीरादेश्च अनतिचाराय अतिचारः अतिशयेन चरणमपगमनं तन्न संहित्याय एकस्य पादस्य प्रत्यृचमावेष्टनात् तेन सन्तिष्ठन्नन्यत् पादद्वयं दृढं भवतीत्यर्थः ॥ ९ ॥

तस्यैव पादस्य कुतः पुनरावृत्तिरित्यतआह ।

यत्र वै देवा इन्द्रियं वीर्य्यꣳ रसमपश्यꣳस्तदनुन्यतुदन् ॥ १० ॥

यत्र वै यस्मात् खलु मन्त्रभागे देवाः पुरा इन्द्रियात्मकं वीर्य्यं रसञ्चापश्यन् तत्तदनुन्यतुदन् प्रत्यृचमभ्यस्यन् यद्वा यत्र खलु स्थाने देवाः पुराऽनुष्ठानसमये इन्द्रियं वीर्य्यं रसमजानन् तद्वीर्य्यं तत्रानुन्यतुदन् आनुपूर्व्व्येण स्थापयन् तस्माद्विधितो रसः क्षामयते अन्तात् अवणविधानस्थानीयेन च सर्व्वासामृपर्य्यैव तथा ऋचां तत्समानेन पादेन पिहितत्वात् अनतिचारो भवतीत्यर्थः ॥ १० ॥

अथ चतस्रः स्तोतीया विधत्ते ।

चतुर्ऋचो भवति प्रतिष्ठायै ॥ ११ ॥

चतुर्ऋचः चतस्र ऋचो यस्मिन् समुदाये सोऽयन्तरन्नमन्दी-त्यादिकश्चतुर्ऋचो भवति स च प्रतिष्ठायै यज्ञस्य यजमानस्य प्रतिष्ठानाय भवति चतुष्पादा हि गवादयो लोके प्रतिष्ठिता दृश्यन्ते ॥ ११ ॥

अथैतत् स्तौति।

ध्वस्रे वै पुरुषन्ती तरन्तपुरुमीढाभ्यां वैददश्वि-भ्याᳬ सहस्राण्यदित्सतां तावैच्छेतां कथन्नाविदमात्त-मप्रतिगृहीतᳬ स्यादिति तौ प्रत्यैतां ध्वस्रयोः पुरु-षन्त्योरा सहस्राणि दद्महे तरत्समन्दीधावतीति ततो वै तत्तयोरात्तमप्रतिगृहीतमभवत् ॥ १२ ॥

ध्वस्रे प्रभूणां स्वधयित्र्यौ पुरुषन्ती एतत्संज्ञे लिङ्गव्यत्ययः एतत्संज्ञौ राजानौ वैददश्विभ्यां विददश्वगोत्राभ्यां तरन्त-पुरुमीढाभ्यां ऋषिभ्यां सहस्राणि सहस्रसंख्यकानि अदित्सतां दातुमैच्छतां ततस्तावृषी ऐच्छेतान्च ईक्षणं पर्य्यालोचनमकुरुतां नावावयोरिदं धनमात्तं स्वीकृतं कथं केन प्रकारेण अप्रतिग्रहीतं स्यात् प्रतिग्रहदोषवियुक्तं भवेदिति ततस्तौ प्रत्यैतां अजानीतां ध्वस्रयोः पुरुषन्त्योरेति मन्त्रमपश्यतामित्यर्थः ततोऽनन्तरं मन्त्र-प्रभावात्तं स्वीकृतं तयोस्तद्धनं अप्रतिगृहीतं प्रतिग्रहदोषविमु-क्तमभवत् ॥ १२ ॥

अथैतद्वेदनं प्रशंसति ।

आत्तमस्याप्रतिगृहीतं भवति य एवं वेद ॥ १३ ॥

स्पष्टोऽर्थः ॥ १३ ॥

अथ प्रकारान्तरेण मन्त्रचतुष्टयं स्तौति ।

विनाराशꣳसो भवत्युभयस्यान्नाद्यस्यावरुध्यै मानुषस्य च दैवस्य च ॥ १४ ॥

अन्त्ययोः पुरुषन्त्योरेति नरयोः शस्यमानत्वात् अयं चतुर्ऋचो विनाराशंसो नाराशंसविशिष्टो भवति अत उभयस्य द्विविधस्य मानुषस्य मनुष्यसम्बन्धिनश्च देवसम्बन्धिनश्च अन्नाद्यस्यावरुध्यै अवरोधनाय भवति ॥ १४ ॥

अथ वहिष्पवमानस्यान्त्यं तृचं विधत्ते ।

तृच उत्तमो भवति येनैव प्राणेन प्रयन्ति तमभ्युद्यन्ति ॥ १५ ॥

गतार्थमेतत् ॥ १५ ॥

एवं स्तोत्रीयासु विहितासु स्तौति ।

त्रयस्त्रिंश एव स्तोमो भवति प्रतिष्ठायै देवतासु वा एष प्रतिष्ठितः ॥ १६ ॥

अस्य बहिष्पवमानस्य त्रयस्त्रिंश एव स्तोमो भवति स च यजमानस्य प्रतिष्ठायै प्रतिष्ठानाय भवति कुतः त्रयस्त्रिंशत्-संख्यासु देवतासु खल्वेक एव त्रयस्त्रिंशत्प्रतिष्ठितः स्वयं प्रतिष्ठि-तवान् प्रतिष्ठाहेतुरित्यर्थः ॥ १६ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोदशाध्यायस्य

सप्तमः खण्डः।

---

अथ अष्टमः खण्डः।

अथास्मिन् षष्ठेऽहनि प्रथममाज्यस्तोत्रं दर्शयति।

इमꣳ स्तोममर्हते जातवेदस इत्याग्नेयमाज्यं भवति सोदर्कमिन्द्रियस्य वीर्य्यस्य रसस्यानतिचाराय यत्र वै देवा इन्द्रियं वीर्य्यꣳ रसमपश्यꣳस्तदनुव्यतु-दन् ॥ १ ॥

इमं स्तोममिति त्टच आग्नेयमग्निदैवत्यं प्रथममाज्यस्तोत्रं भवति तत्र सोदर्कं समानोदर्कं अग्नेः सख्ये मारिषामावयन्तव इत्यनेन पादेन प्रत्यृचं समाप्यमानं भवति शिष्टं सिद्धं ॥ १ ॥

अथ द्वितीयमाज्यस्तोत्रं दर्शयति।

प्रतिवाꣳ सूर उदित इति सूरवन् मैत्रावरुणं ॥२

प्रतिवां सूर इति त्टचः सूरवत् सूरशब्दयुक्तं मैत्रावरुणं मित्रावरुणदेवताकं द्वितीयमाज्यस्तोत्रं भवति ॥ २ ॥

तदेतत् स्तौति ।

अन्तो वै सूरोऽन्त एतत् षष्ठमहामन्त एव तदन्तेन स्तुवते प्रतिष्ठायै ॥ ३ ॥

सूरः सूर्य्योऽन्तो वै अवसानभूतः एतत् षष्ठमहश्च अह्नामन्तः अन्तेन षष्ठस्य समापनात् तत्तथा सति अन्तेन अन्तभूतसूर्य्यस्य वाचकपदयुक्तेन तृचेनान्त एव स्तुवते स्तुवन्त्युद्गातारः प्रतिष्ठायै प्रतिष्ठानार्थमुभयोः सारूप्यादतः प्रतिष्ठाहेतुरित्यर्थः ॥ ३ ॥

अथ तृतीयमाज्यस्तोत्रं दर्शयति ।

भिन्धि विश्वा अपद्विष इत्यैन्द्रꣳ सोदर्कमिन्द्रियस्य वीर्य्यस्य रसस्यानतिच्चाराय यत्र वै देवा इन्द्रियं वीर्य्यꣳ रसमपश्यꣳस्तदन्वतुदन् ॥ ४ ॥

भिन्धि विश्वा इति तृचमैन्द्रं इन्द्रदेवत्यं तृतीयमाज्यस्तोत्रं तच्च सोदर्कं समानोदर्कं समानावसानं वसुष्वहं तदाभरेति गतमन्यत् ॥ ४ ॥

अथ चतुर्थमाज्यस्तोत्रं दर्शयति ।

यज्ञस्य हि स्थ ऋत्विजेत्यैन्द्राग्नꣳ सोदर्कमिन्द्रियस्य वीर्य्यस्य रसस्यानतिच्चाराय यत्र वै देवा इन्द्रियं वीर्य्यꣳ रसमपश्यꣳस्तदन्वतुदन् स्तोमः ॥५॥

यन्नस्य हिस्य इति तृचः ऐन्द्राग्नं इन्द्राग्निदेवताकं चतुर्थमाज्यस्तोत्रं तच्च इन्द्राग्नी तस्य बोधतमिति पादेन सोदर्कं समानोदर्कं गतमन्यत् पूर्व्वोक्त एव त्रयस्त्रिंशस्तोमः चतुर्ष्वाज्यस्तोत्रेषु कार्य्यः ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोदशाध्यायस्य अष्टमः खण्डः ।

---

अथ नवमः खण्डः ।

अथास्मिन्नहनि माध्यन्दिनस्य पवमानस्य प्रथमतृचं विधत्ते ।

इन्द्रायेन्दो मरुत्वत इति मरुत्वत्यो गायत्र्यो भवन्ति ॥ १ ॥

मरुत्वत्यो मरुच्छब्दयुक्ता इन्द्रायेन्दो मरुत्वत इत्याद्यास्तिस्रः गायत्रच्छन्दस्काः स्तोत्रीया माध्यन्दिनपवमानस्य भवन्ति ॥ १ ॥

अथासां माध्यन्दिनसवने सङ्गतिमाह ।

मरुत्वद्धि माध्यन्दिनꣳ सवनं ॥ २ ॥

मरुत्वत् मरुद्भिर्युक्तं हि माध्यन्दिनं सवनं मरुत्वतीयग्रहाणां मरुत्वतीयस्य च शस्त्रस्य सद्भावात् अतो मरुत्वत्यस्तत्र सङ्गता इत्यर्थः ॥ २ ॥

अथान्यं तृचं विधत्ते ।

सृज्यमानः सुहस्त्येति सिमानां रूपं ॥ ३ ॥

सृज्यमानःसुहस्त्येति तृचस्तत्र सिमानां शक्करीणां रूपं तत्र हि गोभिरञ्जानो अर्षसीति श्रुतं गावश्च शक्कर्य्य इति गोशब्दयुक्तस्तृचः शक्करीणां रूपमित्युच्यते ॥ ३ ॥

ननु शक्करीसम्बद्धस्तृचो रैवतपृष्ठके षष्ठेऽहनि कथं सङ्गच्छत इति तत्राह ।

समानं वै सिमानाञ्च रूपं रेवतीनाञ्च सिमाभ्यो ह्यधिरेवत्यः प्रजायन्ते ॥ ४ ॥

सिमानां शक्करीणां शाक्करसाम्न उत्पत्तेरनन्तरमेव रेवत्यः प्रजायन्ते सृष्टिसमये रैवतं सामोत्पद्यते तथा च प्रागाम्नातं स शक्करीरसृजत तद्रूपां घोषोऽन्वसृज्यत रेवतीरसृजत तद्गवां घोषोन्वसृज्यतेति अत सर्व्वत्र शक्कर्य्य इति चेत् साधारणत्वच-वाचिना आधेयं सामोच्यते उभयोरत्र व्यवहिततेति द्रष्टव्यं तस्मान्नैरन्तर्य्येण जातत्वात् शाक्कररैवतयोः समानरूपत्वमेवेति कृत्वा शाक्करसम्बद्धोऽपि तृचोऽस्मिन् षष्ठेऽहनि सङ्गत इत्यर्थः ॥४॥

अथ तृचान्तरं विधत्ते ।

एतमुत्यन्दशक्षिप इत्यादित्या आदित्या वा इमाः प्रजास्तासामेव मध्यतः प्रतितिष्ठति ॥ ५ ॥

एतमुत्यन्दशक्षिप इत्याद्यास्तिस्र अदित्याः सम्बन्धिन्यः स्तोत्रीया भवन्ति समादित्येऽभिरख्यतेति तत्राम्नातं इमाः दृश्यमानाः सर्वाः प्रजाः देवमनुष्याद्याः आदित्या वै अदितेः पुत्रा इति तासां प्रजानामेव मध्यतो मध्ये आदित्यवतीभिः स्तोत्रीयाभिः प्रतितिष्ठति यजमानः प्रतिष्ठितो भवति ॥ ५ ॥

ननु प्रकृतो माध्यन्दिनपवमानान्तस्तृचस्त्रैष्टुभः प्रतुद्रवेति कथं तत्स्थाने गायत्रस्य तृचस्य सङ्गतिरिति तत्राह।

गायत्र्यः सत्यस्त्रिष्टुभो रूपेण तस्मात्त्रिष्टुभां लोके क्रियन्ते ॥ ६ ॥

त्रिष्टुप्सम्बन्धेन्द्रशब्दयोगेनात्रैष्टुभत्वात् त्रिष्टुभां स्थाने क्रियन्ते ॥ ६ ॥

अथेन्द्रायेन्दो मरुत्वत इति प्रथमे तृचे गायत्रं साम विधाय पूर्ववत् स्तावकं ब्राह्मणञ्चातिदिशति।

गायत्रं भवति यदेव गायत्रस्य ब्राह्मणं ॥ ७ ॥

सिद्धमेतत् ॥ ७ ॥

अथास्मिन्नेव तृच आवृत्ते सामान्तरं विधत्ते।

इषोवृधीयं भवति ॥ ८ ॥

इषोवृधीयन्नाम सामावृत्तेऽस्मिन्नेव तृचे गेयं भवति इषो

इष इत्यस्य साम्नोऽवसाने दर्शनात् इषोऽधीयत्वमस्येति द्रष्टव्यं ॥ ८ ॥

तदेतत् स्तौति ।

पशवो वा इषोऽधीयं पशूनामवरुध्या इषे वै पञ्चममहर्वृधे षष्ठमवर्द्धन्त ह्येतर्हि यजमानमेवैतेन वर्द्धयन्ति ॥ ९ ॥

इषोऽधीयाख्यं साम पशवो वै पशवएव इषा इष इत्यनेन अन्नेन वर्द्धयितृत्वात् पशवश्च क्षीरादिना वर्द्धयन्तीति तच्छब्दः तस्मात् पशूनां इधे वर्द्धनायैवैतत् क्रियते अपि च इषे वै अन्नार्थमेव पञ्चमं प्राकरमहरनुष्ठितं वृधे वर्द्धनाय षष्ठमहरनुष्ठीयते एतर्हि एतस्मिन् काले षष्ठस्याह्नोऽनुष्ठानकाले हि यस्माद्देवा अवर्द्धयन्त समृद्धा अभवन् यस्माद्वर्द्धनाय षष्ठस्याह्नोऽनुष्ठानं अतस्तत्सूचकेनेषोऽधीयेनैतेन साम्ना यजमानमेव वर्द्धयति ॥ ९ ॥

अथास्मिन्नेव तृचे पुनरावृत्ते सामान्तरं विधत्ते ।

क्रौञ्चम्भवति ॥ १० ॥

क्रुञ्चा नामाङ्गिरस ऋषिः तेन दृष्टं साम क्रौञ्चं तदिन्द्रायेन्द्रो मरुत्वत इति तृचे गातव्यं ॥ १० ॥

तदेतत् स्तौति ।

क्रुञ्चोऽह्नामिति पाठे क्रुञ्चश्चास्य षष्ठमहरविन्ददेष्यमिव वै षष्ठमहरहरेवैतेन विन्दन्ति ॥ ११ ॥

क्रुञ्चाख्यऋषिः एष्यं एषणीयमहः अनेन साम्ना अविन्दत् लभत इदं षष्ठमहश्च एष्यमिव वै एषणीयमिव खलु तस्मादेतेन क्रौञ्चेन इदं षष्ठमहरेव विन्दन्ति लभन्ते ॥ ११ ॥

अथास्मिन्नेव तृचे सामान्तरं विधत्ते ।

वाजदावर्य्यो भवन्ति ॥ १२ ॥

रेवतीर्न इत्यस्यां योनौ वेदसामाख्ये ग्रन्थे गीयमानं साम वक्ष्यो वाजदावर्य्यो रेवत्यः रेवतीरिति योनौ दृष्टं बहुवचनं साम्युच्चार्य्य इति रेवत्य इति निर्देशः तद्रैवतं साम इन्द्रायेन्दो इत्यस्मिंस्तृचे गेयं तच्च प्रतिष्ठित्यै प्रतिष्ठानाय यजमानस्य भवति रेवतीशब्दस्य रयिमत् वाचकत्वात् रयिमतश्च पुरुषस्य प्रतिष्ठादर्शनात् रेवतीनां प्रतिष्ठाहेतुत्वं ॥ १२ ॥

अथैतत् स्तौति ।

अन्नं वै वाजोऽन्नाद्यस्यावरुध्यै यदाहि वा अन्नमथ गौरथाश्वोऽथ पुरुषो वाजी ॥ १३ ॥

वाजस्य दात्री वाजदावरीति संज्ञाया उत्पत्तिः वाजश्चान्नं वै अन्नमेव तस्माद्वाजदावर्य्याख्यं साम अन्नाद्यस्य प्राप्त्यै भवति अपिच यदा खलु यजमानस्य बहुलमन्नं भवति अथानन्तरं

गौः गावश्च भवन्ति अथानन्तरं रथाश्च भवन्ति अथानन्तरम् अश्वाश्च भवन्ति अथानन्तरं पुरुषो वाजी वेजनवान् वेगवांश्च भवति अन्नहेतुका एते यजमानस्य भवन्तीति ॥ १३ ॥

अथास्मिंस्तृचे सामान्तरं विधत्ते।

रेवत्यो भवन्ति प्रतिष्ठायै ॥ १४ ॥

रेवतीर्न इत्यस्यां योन्यां छन्दःसामाख्ये ग्रन्थे गीयमानसामबाधपुरःसरं पवमानस्तोत्र एतद्गातव्यमिति ॥ १४ ॥

अथास्य निधनसंख्यामनूद्य स्तौति।

षण्णिधना षड्रात्रस्य धृत्यै ॥ १५ ॥

तीर्नां इहा सधमादा २ हा २ ऊ वा २३ ई २४ डा इत्यादीनि षण्णिधनानि यासां रेवतीनां षण्णिधनाः तथाविधा भवेयुः किमर्थं षड्रात्रस्य एतद्देतस्यानुष्ठितस्य पृष्ठस्य षडहस्य धृत्यै धारणाय भवति ॥ १५ ॥

ननु रैवतं साम वैरूपवैराजादिवत् पृष्ठस्तोत्र एव गातव्यं एतद्धि षष्ठस्याह्नः रैवतपृष्ठकं किमिति पवमाने विधीयमान इत्याशङ्क्य विपक्षे बाजदावर्य्य इति तदृग्बहुवचनं वाजदावर्य्याख्यं सामैन्द्रायेन्द्विवित्यस्मिंस्तृचे गातव्यमित्युपपादयति।

आपो वै रैवत्यस्ता यत् पृष्ठं कुर्युरपशुर्यजमानः स्यात् पशूनस्य निर्हन्युर्यच वा आपो वीव वर्त्तन्ते

तदोषधयो जायन्तेऽथ यत्रावतिष्ठन्ते निर्म्मृतुकास्तत्र भवन्ति तस्मात् पवमाने कुर्व्वन्ति पराचा हि पवमानेन स्तुवते ॥ १६ ॥

या इमा रेवत्यस्ता आपो वै अप्रूपा एव रयिभिर्धनैर्म्मणिमुक्तादिभिस्तासां युक्तत्वात्ता रेवत्यः तद्रैवतं साम यदि पृष्ठं पृष्ठस्तोत्रं कुर्य्युरुद्गातारस्तर्हि यजमानः अपशुः पशुरहितः स्यात् यदि तान् प्रयुञ्ज्येरन् अपामभावात् अस्य यजमानस्य पशून्निर्दहेयुः नाशयेयुः नन्वेवं रेवतीनां प्रयोगे दोषदर्शनात् कथं तत्रानुष्ठानमिति तद्दर्शयति यत्र वा आप इति यत्र खलु देशे आपो वीव वर्त्तन्त इव विरलमेव वर्त्तमाना भवन्ति तत्रौषधयो जायन्ते अथ यत्र तु देशेऽवतिष्ठन्ते नित्यं वर्त्तन्ते तत्रौषधयो निर्ऋतुकानिर्गमनशीला भवन्ति तत्र नोत्पद्यत इत्यर्थः एवं सति अप्संस्तुतारेवत्यः पृष्ठस्तोत्रे यदि क्रियेरन् तदा त्रयस्त्रिंशस्तोमसम्पत्तये अवश्यमभ्यसेरन् तथा चापां भूयिष्ठत्वादोषध्यनुत्पत्तौ यजमानस्यापशुत्वं स्यात् तस्मात्पवमाने माध्यन्दिने रेवतीः कुर्व्वन्ति तत्र चोक्तापां वृद्धिर्न भवतीत्याह पराचा हीति हि यस्मात् पराचा अनावृत्तेन पवमानस्तोत्रेण स्तुवते तस्मात् रेवतीनामभ्यासाभावात् अप्संस्तुतानां तासामभावाद् बाहुल्याभावाच्च उक्तदोषद्वयाभावः ॥ १६ ॥

अथ विहितं सामचतुष्कं संहृत्य स्तौति।

मेथी वा इषोद्दधीयꣳ रज्जुः क्रौञ्चं वत्सोवाजदावर्य्यौ रैवत्यो मातरो यदेतान्येवꣳ सामानि क्रियन्त एवमेव प्रत्तां दुग्धे ॥ १७ ॥

इषोद्दधीयाख्यं साम मेथी वै गवां बन्धनाय निखातस्थानं मेथी तत्स्थानीयं क्रौञ्चं क्रौञ्चाख्यं साम रज्जुः गौर्बध्यते यया रज्ज्वा तत्स्थानीयं वत्सोवत्सस्थानीयो वाजदावर्य्यः वाजदावर्य्याख्यं साम रैवत्यो रैवतं साम मातरः मातृस्थानीयं एतानि सामान्येवं ईदृग्रूपाणि भवन्तीति तेन एवमेव प्रत्तां प्रकर्षेण दत्तां गां दुग्धं यजमानः कामान् दोग्धि ॥ १७ ॥

अथ सामान्तरं विधत्ते।

औद्दलोरन्ध्रे भवतः ॥ १८ ॥

उद्दलोरन्ध्रेण दृष्टे सामनी औद्दलोरन्ध्रे एते भ्रज्यमानः सुहस्त्येति तृचमाहृत्य तस्मिन् पर्य्यायेण गेय इत्यर्थः ॥ १८ ॥

अथैतदृषिसम्बन्धप्रदर्शनपुरःसरं स्वर्गसाधनत्वेन स्तौति।

उद्दलोरन्ध्रो वा एताभ्याङ्काव्योऽञ्जसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्यानुख्यात्यै स्वर्गात् लोकान्न च्यवते तुष्टुवानः ॥ १९ ॥

काव्यः कविर्भृगुस्तज्जोतज उद्दलोरन्ध्रो नामऋषिः एताभ्यां

सामभ्यां साधनेन अञ्जसा अनायासेन स्वर्गं लोकमपश्यत् अत-एते सामनी स्वर्गस्य लोकस्यानुख्यात्यै अनुख्यानाय सन्दर्शनाय भवतः किञ्च आभ्यां तुष्टुवानः स्तुतवान् स्वर्गलोकान्न च्युतो भवति चिरं तत्रैवावतिष्ठते ॥ १९ ॥

अथास्मिन्नेव तृचे आवृत्ते सामान्तरं विधत्ते।

वाजजिद्भवति सर्वस्याप्त्यै सर्वस्य जित्यै सर्वं वा एते वाजं जयन्ति ये षष्ठमहरागच्छन्ति ॥ २० ॥

वाजमन्नं जयत्यनेनेति वाजजित्तन्नाम सज्यसान इति तृचे गेयं तच्च सर्वस्य निरवशेषस्य वाजस्य अन्नस्य प्राप्त्यै भवति तथा सर्व्वस्य जेतव्यस्य च जित्यै जयाय च भवति ये यजमानाद्दशरात्रस्य षष्ठमहरागच्छन्ति प्राप्नुवन्ति एते सर्व्वमेव वाजञ्जयन्ति ॥ २० ॥

एतदेव विवृणोति।

अन्नं वै वाजोऽन्नाद्यस्यावरुध्यै ॥ २१ ॥

स्पष्टोऽर्थः ॥ २१ ॥

अथास्मिन्नेव तृचे सामान्तरं विधत्ते।

वरुणसाम भवति ॥ २२ ॥

वरुणस्य साम एतदाख्यं साम सज्यमानः सुरुत्यैतस्मिन्नेव तृचे गातव्यं ॥ २२ ॥

अथैतत्प्रशंसति ।

एतेन वै वरुणो राज्यमाधिपत्यमगच्छद्राज्य-माधिपत्यं गच्छति वरुणसाम्ना तुष्टुवानः ॥ २३ ॥

एतेन साम्ना साधनेन पुरा वरुणो देवः राज्यं राजत्वं आधिपत्यं अधिपतित्वं स्वामित्वञ्चागच्छत् प्राप्नोत् तस्मादद्य-तनोऽपि वरुणसाम्ना तुष्टुवानः स्तुतवान् राज्यमाधिपत्यं गच्छ-ति प्राप्नोति ॥ २३ ॥

अथ सामान्तरं विधत्ते ।

अङ्गिरसां गोष्ठो भवति ॥ २४ ॥

अङ्गिरासां गोष्ठाख्यं साम वक्ष्यमानः सुहस्त्येत्याद्ट्चेऽस्मिन् एव तृचे गेयं ॥ २४ ॥

अथैतत्प्रशंसति ।

पशवो वै रेवत्यो गोष्ठमेव तत्पशुभ्यः पर्य्यस्यन्ति तमेवैनान् प्रवर्त्तयन्त्यविस्रꣳसाय ॥ २५ ॥

याः पुर्व्वंप्रयुक्तारेवत्यः ताः पशवो वै पशव एव अतस्तासां गोष्ठाख्यं स्थानमपेक्षते तथा चाङ्गिरसां गोष्ठो भवतीति यत् तत्तेन पशुभ्यः पशूनामर्थं गोष्ठं गावो यत्र तिष्ठन्ति तादृशं स्थानमेव पर्य्यस्यन्ति परितः समीपे हि यन्ति स्थापयन्ति यद्गो-ष्ठमेव एतान् पशून् प्रवर्त्तयन्ति अविस्रंसाय अविनाशाय ॥२५॥

अथ एतमुत्यन्दशश्चिप इति तृचे गातव्यं साम दर्शयति।

इहवद्वामदेव्यं भवति ॥ २६ ॥

इहवत् इहशब्दयुक्तं वामदेव्यं वामदेवेन ऋषिणा दृष्टमेतदाख्यं साम एतमुत्यन्दशश्चिप इत्यन्तिमे तृचे गेयं ॥ २६ ॥

अथैतदन्नप्राप्तिसाधनत्वेन स्तौति।

एतेन वै वामदेवोऽन्नस्य पुरोधामगच्छदन्नं वै ब्रह्मणः पुरोधान्नाद्यस्यावरुध्यै ॥ २७ ॥

एतेन वै वामदेवोऽन्नस्य पुरोधामगच्छदन्नं वै प्राप्तये भवति ॥ २७ ॥

अथैतच्छन्दोद्वारा स्तौति।

गायत्रीषु स्तुवन्ति प्रतिष्ठायै ब्रह्मवर्च्चसाय येनैव प्राणेन प्रयन्ति तमभ्युद्यन्ति ॥ २८ ॥

सिद्धमेतत् ॥ २८ ॥

ननु त्रैष्टुभं माध्यन्दिनं सवनं सर्व्वप्रकृतौ ज्योतिष्टोमे कथं तत्र गायत्रः सञ्चच्छत इति तत्राह।

इन्द्रवत्यो गायत्र्यो भवन्ति तदु त्रैष्टुभाद्रूपान्नयन्ति स्तोमः ॥ २९ ॥

इन्द्रायेन्दो मरुत्वत इत्याद्या गायत्र्यः यस्मात्तस्मादिन्द्रदेवत्य इन्द्रशब्दयुक्ता भवन्ति तद्योगस्य प्रकृतौ माध्यन्दिनसवने दर्शनात् त्रैष्टुभं रूपं तदु तस्मादेव मरुच्छब्दयोगात् एता गायत्र्यः त्रैष्टुभात् त्रिष्टुभः सम्बन्धिनो रूपान्न यन्ति नोपगच्छन्ति एवं गायत्र्यादिषु इहवद्वामदेव्यान्तेषु एकादशसु सामसु त्रिचेषु क्रियमाणेषु निष्पद्यमानस्त्रयस्त्रिंशस्तोमोऽस्य पवमानस्तोत्रस्य कार्य्यइत्यर्थः ॥ २८ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोदशाध्यायस्य

नवमः खण्डः ।

---

अथ दशमः खण्डः ।

अथ पृष्ठस्तोत्रेषु स्तोत्रीयाणामृचां छन्दोविशेषं विधित्सुराह ।

यातयामान्यन्यानि छन्दाꣳस्ययातयामा गायत्री तस्माद्गायत्रीषु स्तुवन्ति ॥ १ ॥

अन्यानि त्रिष्टुबादीनि छन्दांसि यातयामानि द्वितीयादिष्वहःसु विनियुक्तत्वात् गतसाराणि यद्यपि गायत्री प्रथमेऽहनि विनियुक्ता तथाप्ययातयामा यातयामत्वदोषरहिता प्रजापतिमुखात् अग्निना सहोत्पन्नत्वेन तस्या उत्कर्षादिति तस्मात्

षष्ठेऽहन्यस्मिन् गायत्रीषु ऋग्भिः सामभिः स्तुवन्ति रेवतीर्नः सध-माद इत्याद्यासु गायत्रीषु षष्ठस्तोत्राणि कार्य्याणीत्यर्थः ॥ १ ॥

अथ ब्रह्मपृष्ठस्य स्तोत्रीया ऋचो विदधानः किञ्चिद्विशेषं विधत्ते।

**सुरूपकृत्नुमूतय इत्यभ्यारम्भेण षट्पदाः षष्ठ-स्याह्नोरूपं तेन षष्ठमहरारभन्ते सन्तत्यै ॥ २ ॥**

सुरूपकृत्नुमूतय इत्याद्यास्तिस्रो गायत्र्यः ब्रह्मसाम्नः स्तो-त्रीयाः तास्वाभ्यारम्भेण प्रत्यृचं षट्पदाः अयमर्थः गानसमये आसां प्रथमपादस्त्रिरभ्यस्यते तृतीयपादस्यान्त्यश्चतुरक्षरस्त्रि-रभ्यस्यते एवमभित आद्यन्तयोरारम्भे पुनःपुनरादाने सति प्रत्येकमेताः षट्पदा भवन्ति प्रथमपादस्य त्रिरावृत्तत्वात् त्रयः पादा द्वितीयश्चैकः उत्तमश्चैकः पुनस्तदेतस्य चतुरक्षरस्य द्वयोर-भ्यासयोरेकः पाद इति पादषट्कसम्पत्तिः अतः षट्संख्या-योगात् एताः षष्ठस्याह्नोरूपं तेन कारणेन षट्पदाभिः षष्ठ-महरारभन्ते स्वीकुर्व्वन्ति किमर्थं सन्तत्यै पूर्व्वोत्तराभ्यामहर्भ्यां सन्तानार्थं ॥ २ ॥

अथाच्छावाकपृष्ठस्तोत्रीया ऋचो दर्शयति।

**उभे यदिन्द्ररोदसी इति षट्पदाः षष्ठस्याह्नोरूपं तेन षष्ठमहरारभन्ते सन्तत्यै ॥ ३ ॥**

उभे यदिन्द्र रोदसी इत्याद्याः षट् पदा यासां तथाविधा ऋच अच्छावाकसाम्नः स्तोत्रीया भवन्ति शिष्टं पूर्ववद्व्याख्येयं ॥ ३ ॥

अथाद्यं पृष्ठस्तोत्रीयं साम विधत्ते ।

रेवतीषु वारवन्तीयं पृष्ठं भवति ॥ ४ ॥

पृष्ठस्तोत्रत्वेन कार्य्यमित्यर्थः पशवो वै रेवत्यइति हि प्रागाम्नातं ॥ ४ ॥

पशवश्चाप्विकारा इत्यभिप्रायेणाह ।

अपां वा एष रसोयद्रेवत्यो रेवतीनाᳪ रसोयद्वारवन्तीयᳪ सरसा एव तद्रेवतीः प्रयुङ्क्ते यद्वारवन्तीयेन पृष्ठेन स्तुवते ॥ ५ ॥

रेवत्यः रेवच्छब्दयुक्ताः स्तोत्रीया इति यदेष अपामेव रसः सारः तथा वारवन्तीयाख्यं सामेति यत् एष रेवतीनां रसः एवं सति तासु रेवतीषु वारवन्तीयस्य करणात् ता रेवतीः सरसाः रससहिता एव प्रयुङ्क्ते करोति यद्यस्माद्वारवन्तीयेन साम्ना निर्वर्त्त्य तेन पृष्ठेन पृष्ठस्तोत्रेण स्तुवते स्तुवन्त्युद्गातारः तत्तस्मादित्यर्थः ॥ ५ ॥

अथैतद्धनप्राप्तिहेतुत्वेन स्तौति ।

रेवद्वा एतद्दैवत्यं यद्वारवन्तीयमास्य रेवान् रैवत्यो जायते ॥ ६ ॥

रेवत् ऋद्धिमत् रयेर्म्मतौ बहुलमिति सम्प्रसारणं पूर्व्वत्वं रयिमत् धनयुक्तमेवैतद्रेवतीनां सम्बन्धि साम यद्वारवन्तीयाख्यं साम एतद्रेवतीषु कुर्व्वतो यजमानस्य रेवान् रयिवान् धनवान् रैवत्यः रेवत्यः पशवस्तेषां स्वामी एवं गुणविशिष्टः पुत्रः आजायते आभिमुख्येनोत्पद्यते ॥ ६ ॥

अथैतद्वेदनमपि धनप्राप्तिहेतुरित्याह ।

रेवान् भवति य एवं वेद ॥ ७ ॥

गतमेतत् ॥ ७ ॥

अथैतस्य वारवन्तीयस्य गानसमये किञ्चिद्विधित्सुस्तदर्थमाख्यायिकामाह ।

केशिने वा एतद्दाल्भ्याय सामाविरभवत्तदेनमत्रवोद्गातारो मा गायन्ति मा मयोद्गासिषुरिति कथं त आगा भगव इत्यब्रवोद्गागेयमेवास्माग्रागायन्निव गायेत्प्रतिष्ठायै तदलम्भ्म्पारिजानतं पश्चादच्छ्ं शयानमेतामागां गायन्तमजानात्तमब्रवोत् पुरस्तादधा इति तमब्रुवन् को न्वयं कस्मा अलमित्यलन्नु वै मह्यमिति तदलम्प्रस्यालम्भत्वं ॥ ८ ॥

दार्भ्याय दल्भपुत्राय केशिने एतत्संज्ञाय ऋषये पुरा खल्वेतत् वारवन्तीयं साम आविरभवत् बुद्धौ प्रकाशमानमासीत् तच्चाविर्भूतं साम केशिनमृषिमब्रवीत् अवोचत् कथमिति तदुच्यते हे ऋषे मा मां अगातारो गानुमकुशलाः गायन्ति प्रयुञ्जते ते गानशक्तिरहिताः पुरुषाः मया साम्ना साधनेन मोद्गासिषुः उद्गानं न कुर्य्युरिति एवं साम्नोक्ते सति ऋषिरब्रवीदुक्तवान् हे भगवन् ऐश्वर्य्यादियुक्त मन्त्रात्मन् ते त्वदीया आगा आख्यानं कथं केन प्रकारेण कर्त्तव्यमिति पुनः सामाब्रवीत् अहमागेयं आङीषदर्थे ईषत् अप्रयत्नेन गातव्यमेवास्मि भवामि वाक्यावसानद्योतक इति शब्दोऽत्राप्यनुषञ्जनीयः यस्मादेवं साम्नोक्तं तस्मात् आगायन् आगानं कुर्व्वन्ति यथा लोकेऽल्पेनैव प्रयत्नेन निष्पन्नेन स्निग्धेन स्वरेण लौकिका गानं कुर्व्वन्ति एवमेव गायेदुद्गाता एवं गाने सति तत्साम प्रतिष्ठायै यजमानस्य प्रतिष्ठानाय सम्पद्यते कुत एतदित्यतआह तदलम्मम्पारिजानतमिति परिजानतः पुत्रं अलम्मं एतत्संज्ञं पश्चादक्षं रथाक्षस्य पश्चात् प्रत्यग्भागे शयानं निषण्णं एतामागां एतं पूर्व्वोक्तमागानं गायन्तं उच्चारयन्तं तत्सामाजानात् अज्ञासीत् ज्ञात्वा च तमलम्मङ्गायन्तमब्रवीत् पुरस्ताद्रथाक्षस्य पुरोभागे अधः आत्मानं धारयेति एवं साम्नोक्तेन पार्श्वस्था ऋषयोऽब्रुवन् कोनु कोऽन्वयं पुरुषः कस्मै वा प्रयोजनाय अलं समर्थ इति एवं पार्श्वस्थैरृषिभिरुक्ते सामैवाब्रवीत् अलन्नु समर्थएव खल्वेष मह्यमिति मां सम्यक्गातुं कुशल इत्यर्थः यस्मादेवं साम्नोक्तमलं

मत्त्वमिति तत्तस्मात् अस्य ऋषेः अलम्मत्वं अलम्म इति नाम सम्पन्नं यस्मादयमृषिरस्य साम्न आगानेन स्वैष्ठेन पुरतो धारितोऽभूत् तस्मादेतदीयमागानं प्रतिष्ठाहेतुरित्यर्थः ॥ ८ ॥

अथ स्तोभविशेषमनूद्य प्रतिष्ठाहेतुतामाह।

## इहेहेति गायेत्प्रतिष्ठायै ॥ ६ ॥

इहाहायि इति स्तोभं पुनःपुनः प्रक्षिप्य गायेत् इहशब्देन इह लोकस्य प्रत्यभिज्ञानात् अस्मिन् लोके प्रतिष्ठायै प्रतिष्ठानाय यजमानस्यैतद्गानं भवति ॥ ६ ॥

अथ मैत्रावरुणपृष्ठस्तोत्रं प्राकृतमेवेत्यभिप्रेत्य तदनन्तरस्य ब्रह्मपृष्ठस्य विहिते सुरूपकृत्नुमूतय इति तृचे गातव्यं साम दर्शयति।

## ऋषभो रैवतो भवति ॥ १० ॥

रैवत इति रेवतीनां सम्बन्धी ऋषभः एतस्य पदद्वयाभिधेयं साम सुरूपकृत्नुमूतय इत्यस्यारम्भेण षट्पदासु स्तोत्रीयासु गातव्यं ॥ १० ॥

अथैतत्प्रजातिहेतुत्वेन स्तौति।

## पशवो वै रैवत्यः पशुष्वेव तन्मिथुनमप्यर्जति प्रजात्यै न ह वा अनृषभाः पशवः प्रजायन्ते ॥ ११ ॥

रैवत्यो रैवतं सामेति यत्तत् पशवो वै पशुरूपा एव

अवशिष्टं ऋषभः शक्करो भवतीत्यस्य वाक्यशेषवद्व्याख्येयं ॥ ११ ॥

अथाच्छावाकस्तोत्रं साम दर्शयति ।

श्येनो भवति ॥ १२ ॥

श्येनवत् चिप्रकारित्वात् सामापि श्येनः एतत्संज्ञं साम उभे यदिन्द्रेति त्वचे गातव्यं ॥ १२ ॥

अथैतस्य दृष्टान्तपुरःसरं चिप्रकारितामाह ।

श्येनो ह वै पूर्वप्रेतानि वयाꣳस्याप्नोति पूर्व्वप्रेतानिव वै पूर्वाण्यहानि तेषामाप्त्यै श्येनः क्रियते ॥ १३ ॥

श्येनाख्यः खलु पक्षी पूर्व्वप्रेतानि पूर्व्वमेवोत्पतितानि वयांसि पक्षजातानि स्वयं पश्चादुत्पतनविशेषं प्राप्नोति लुप्तोपममेतत् यथैवं लौकिकः श्येनः एवमेव तेषामह्नां प्राप्त्यै चिप्रप्राप्तये श्येनः श्येनाख्यं साम क्रियते कानि पुनस्तानि प्राप्यानि पूर्व्वाणि अस्मात् षष्ठादह्नः पूर्व्वानुष्ठितान्यहानि पञ्चसंख्यानि पूर्व्वप्रेतानीव वै पूर्व्वोत्पतितपक्षजातसदृशानि खलु तेषामह्नामित्यर्थः ॥ १२ ॥

एवं पूर्व्वानुष्ठितानां पञ्चानामह्नां प्राप्त्यर्थमेतदिति स्तुत्वानुष्ठीयमानस्य षष्ठस्याह्नोऽपि पारप्राप्तिः अनेनैव भवतीत्याह ।

श्येनो वा एतदह्नः सम्पारयितुमर्हति स हि वयसामाशिष्ठस्तस्यानपहननाय सम्पारणायैतत् क्रियतेऽन्तो हि षष्ठस्याह्नः सप्तमस्य ॥ १४ ॥

श्येनो वै श्येन एव एतत् षष्ठमहः सम्पारयितुं पारयितुं पारमवसानं पारयितुमर्हति शक्नोति स खलु वयसां पक्षिणां मध्ये आशिष्ठः व्याप्ततमः तस्य षष्ठस्याह्नः अनपहननाय सम्पारणाय सम्यक् पारप्रापणाय च एतत्साम क्रियते षष्ठञ्च सप्तमञ्च यदिह सन्नद्वये एततद्वयं अन्तोहि अवसानभूतं हि षष्ठेनाह्ना षडहस्य समाप्तत्वात् उभयोरह्नोरन्तत्वं तस्मात् षष्ठस्याह्नः पारप्राप्तिरपेक्षितेति भावः ॥ १४ ॥

अथैतेषु पृष्ठस्तोत्रेषु ब्रह्मवादिनां चोद्यमुद्भावयति।

**ब्रह्मवादिनो वदन्ति यद् बृहदायतनानि पृष्ठान्यथैते द्वे गायत्र्यौ द्वे जगत्यौ क्व तर्हि बृहत्यो भवन्तीति ॥ १५ ॥**

ब्रह्मवादिनस्तावद्वेदार्थाभिज्ञा ऋषयः पुरा वदन्ति एषु पृष्ठस्तोत्रेषु चोदयन्ति किमिति यत् यस्मात् पृष्ठानि पृष्ठस्तोत्राणि बृहदायतनानि बृहतीछन्द आयतनं स्थानं येषां तानि तथोक्तानि सर्व्वप्रकृतौ हि ज्योतिष्टोमे बृहतीष्वेव स्तोत्रीयासु पृष्ठस्तोत्राणि क्रियन्ते तस्मात्तत् बृहतौ षष्ठेऽहनि तथैव भवितव्यं अथ चात्र एते द्वे गायत्र्यौ द्वे जगत्यौ अत्र हि प्रथमयोः रेवतीर्नः कयानश्चित्र इति द्वे गायत्र्यौ त्रचौ ततस्तृतीये पृष्ठस्तोत्रे सुरूपकृत्नुमूतय इत्याद्यभ्यारम्भेण षट्पदाः तिस्रः स्तोत्रीयाः चतुर्थस्य पृष्ठस्तोत्रस्य च तएव षट्पदाः उभे यदिन्द्रे-

त्याद्यास्तिस्रः अत एतयोः पृष्ठस्तोत्रयोर्याः स्तोत्रीयास्ता अष्टा-क्षरैः षड्भिः पादैरुपेतत्वात् अक्षरसंख्यया अष्टाचत्वारिंश-दक्षरा जगत्यो भवन्ति तस्मादादित आरभ्य द्वयोः पृष्ठस्तोत्रयोः प्रथमे द्वे गायत्र्यौ उत्तरयोः प्रथमे द्वे जगत्यौ क्व तर्हि कस्मिन् खलु पृष्ठस्तोत्रे बृहत्यः स्तोत्रीया भवन्ति ॥ १५ ॥

अस्य ब्रह्मवादिभिः कृतस्य चोद्यस्योत्तरं दर्शयति।

ये द्वे जगत्योः पदे ते गायत्र्या उपसम्पद्येते तत् सर्वा बृहत्यो भवन्त्यायतने पृष्ठानि यातयत्यायतनवान् भवति ॥ १६ ॥

उपरितनपृष्ठद्वयवर्त्तिन्योर्ज्जगत्योर्ये द्वे पदे यौ द्वौ पादौ बृहत्या अतिरिच्येते अष्टाचत्वारिंशदक्षरा हि जगती भवति अपराण्यपरेण द्वयं चतुर्षु पृष्ठेषु आद्यानामृचां बृहतीत्वसम्पाद-नमुक्तं एवमुत्तमानामपि बृहतीत्वसम्पत्तिर्द्रष्टव्या तदेतदाह तत्सर्वा बृहत्यो भवन्तीति तत्तथाच वक्तत्वात्स च शिष्टैर्ज्जागतैः पादैः गायत्रीणां योजनात् सर्वतोऽपि पृष्ठचतुष्टयगता स्तोत्री-या बृहत्यो भवन्ति तथाच आयतने स्वकीय एव प्राकृते स्थाने पृष्ठानि पृष्ठस्तोत्राणि यातयति विस्तारयति आयतनवान् स्था-नवान् यजमानो भवति ॥ १६ ॥

यद्येवं, सम्पन्नास्वेव बृहतीषु गानं स्यादित्यत आह।

षट्पदासु स्तुवन्ति षड्भ्राजस्य धृत्यै ॥ १७ ॥

षट्पदाखेवर्च्चु स्तुवन्ति न सम्प्रहितासु बृहतीषु किमर्थं षड्रात्रस्य धृत्यै धारणाय ॥ १७ ॥

अथ प्रसङ्गादस्मिन्नहनि याज्यायोः पादयोः संख्यां विधाय स्तौति ।

**सप्तपदया यजति सप्तसंस्थाह्नः सन्तत्यै स्तोमः ॥१८॥**

सप्तपदया सप्तभिः पादैरुपेतया ऋचा षष्ठेऽहनि होत्रादयो यजन्ति ताश्च सप्तपदाः आश्वलायनेन सूत्रकृता षष्ठस्य प्रातःसवन इति षड्वै वृषन्निन्द्रवृषपाणास इन्दवः सुपुमायतमद्रिभिरित्यादिना दर्शिताः अत्र सप्तपदयोरित्येकवचनं जात्यभिप्रायात् तत्पदया यजनं सप्तसंस्थागामिनोऽह्नः सन्तत्यै सन्तानाय अनेन षष्ठेनाह्ना संश्लेषाय भवति सप्तसंख्यया तस्य वृत्तौ विपरिवर्त्तनत्वात् एषु च पृष्ठस्तोत्रेषु पूर्व्वोक्तस्त्रयस्त्रिंशपरः स्तोमः कार्य्यः ॥ १८ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोदशाध्यायस्य
दशमः खण्डः ।

---

अथ एकादशः खण्डः ।

अथार्भवपवमानस्य आद्यास्तिस्रः स्तोत्रीया दर्शयति ।

**परिस्वानो गिरिष्ठा इति तिस्रो गायत्र्यो भवन्ति सर्व्वस्य पर्य्याप्त्यै ॥ १ ॥**

परिशब्दयोगादेताः सर्वस्य कृत्स्नस्य पर्य्याप्त्यै सम्पूर्णतायै भवति परीत्यनेनोपसर्गेण पर्य्याप्तेः सूचितत्वात् शिष्टं स्पष्टं ॥१॥

अथान्यं तृचं दर्शयति ।

वसुन्वेयो वसूनामिति पशवो वै वसु पशूनामवरुद्ध्यै ॥ २ ॥

वसुशब्देन धनसामान्यवाचिना धनविशेषस्योपस्थानात् पशवएव वसुशब्दाभिधेयाः तस्मा चायं तृचः पशुप्राप्त्यै भवति ॥२

अथान्यं तृचं विधत्ते ।

तं वस्सखायो मदायेति वालखिल्याः ॥ ३ ॥

वालखिल्यानामृषीणां सम्बन्धिन्यो वालखिल्याः तं वस्स-खाय इत्याद्याः स्तोत्रीया भवन्ति ॥ २ ॥

अथ सप्तमेऽहनि विधास्यमानं सखाय आनिषीदतेति तृचमिमञ्च चतुर्थं संयुज्यानुवदति ।

वालखिल्यावेतौ तृचौ षष्ठे चाहनि सप्तमे च ॥४॥

षष्ठसप्तमयोरह्नोस्तं वः सखाय आनिषीदतेति यावेतौ तृचौ वालखिल्यौ वालखिल्यसम्बन्धिनौ ॥ ४ ॥

किमतस्तदाह ।

यदेतौ बालखिल्यौ तृचौ भवतोऽह्नोरेव व्यतिषङ्गायाव्यवस्रंसाय सन्तत्यै ॥ ५ ॥

एतौ बालखिल्यौ तृचौ क्रमेण षष्ठसप्तमयोरह्नोर्भवतः प्रयुज्येते इति चेत् तदह्नोः षष्ठसप्तमयोर्व्यतिषङ्गाय व्यतिषञ्जनं संसर्ज्जनं तदर्थं भवति एतदेव विशदयति अव्यवस्रंसायेति व्यवस्रंसो विश्लिष्य संभवनं विच्छेदनं तदभावाय फलितमर्थमाह सन्तत्या इति ॥ ५ ॥

अथापरं तृचं दर्शयति ।

सोमाः पवन्त इन्दव इत्यनुष्टुभो निभसदो भवन्ति प्रतिष्ठायै ॥ ६ ॥

सोमाः पवन्त इत्याद्यास्तिस्रोऽनुष्टुभः स्तोत्रीयाः तासामनुष्टुभानां पादचतुष्टयोपेतत्वात् प्रतिष्ठायै यजमानस्य प्रतिष्ठानाय भवन्ति ॥ ६ ॥

अथान्यं तृचन्दर्शयति ।

अयापवापवस्वैना वसूनीति त्रिष्टुभस्सत्यो जगत्यो रूपेण तस्माज्जगतीनां लोके क्रियन्ते ॥ ७ ॥

अयापवापवस्वेत्याद्यास्तिस्रः स्तोत्रीयाः तास्त्रिष्टुभस्त्रिष्टुप्छन्दस्काः सत्योऽपि जागतो रूपेण योगाज्जगत्यो भवन्ति किं तद्रूपमिति चोच्यते वसूनीत्यनेन पदेन धनमुच्यते तच्च वैश्य-

सम्बन्धिजगत्या सहोत्पन्नेऽपि पारम्पर्य्येण वस्तूनीत्येतज्जागतं रूपं यस्मादेवं जगत्यस्तस्माज्जगतीनां स्थाने क्रियन्ते प्रकृतावा-र्भवस्यान्त्यमृचोऽभिप्रियाणीति जागतस्तस्मादार्भवान्त्यस्य जग-तीस्थानत्वं ॥ ७ ॥

अथ प्रथमे तृचे पूर्व्ववद्गायत्रं साम विधाय तद्दितिकर्त्तव्यता-प्रतिपादकं इमे वै लोका गायत्रमित्यादिकं प्रागाम्नातं ब्राह्म-णमतिदिशति ।

गायत्रम्भवति यदेव गायत्रस्य ब्राह्मणं ॥ ८ ॥

परिस्रानो गिरिष्ठा इति विहिते तृचे गायत्रं साम प्रथम-तो गातव्यं भवति सिद्धमन्यत् ॥ ८ ॥

अथैतमेव तृचं त्रिरावृत्य तत्र त्रीणि सामानि गातव्या-नीति विधत्ते ।

वैदन्वतानि भवन्ति ॥ ९ ॥

चत्वारि हि वैदन्वतानि सामानि परिस्रान इत्यस्यां यो-न्यां गीयन्ते तत्र तृतीयवर्ज्जितानि त्रीण्यस्मिन्नेव तृचानि गेयानि ॥ ९ ॥

अथैतेषां वैदन्वतत्वमन्वं दर्शयन् विशिष्टफलसाधनतामाह ।

विदन्वान्वै भार्गव इन्द्रस्य प्रत्यहण्ँस्तण्ँसुगायत्

**सतपोऽतप्यत स एतानि वैदन्वतान्यपश्यत्तैः शुचमपाहतापशुचꣳहते वैदन्वतैस्तुष्टुवानः ॥ १० ॥**

भार्गवे भृगुगोत्रे विदन्वान्नामऋषिः इन्द्रस्य सहोत्पन्नान् प्रत्यहन् प्रतिकूलान् शत्रून् हतवान् अनन्तरन्तमपि शुक्शोकः आर्छत् प्राप्नोत्सच शोकार्त्तः ऋषिः तपस्तप्तवान् स च तपोबलात् एतानि वैदन्वतानि त्रीणि सामानि अपश्यत् दृष्टवान् दृष्ट्वा च तैः सामभिः शुचं शोकमपाहत अपागमयत् यस्मादेवं तस्माद्वैदन्वतैरेव सामभिस्तुष्टुवानः स्तुतवान् शुचं शोकमपहत अपगमयति विनाशयतीत्यर्थः ॥ १० ॥

अथ समुन्वेयो वसूनामिति विहिते तृचे गेयं साम दर्शयति ।

**भरद्वाजस्य लोम भवति पशवो वै लोम पशूनामवरुध्यै ॥ ११ ॥**

भरद्वाजस्य लोमाख्यं सामैव दीर्घं दीर्घशब्दाख्यमिति च आहुरन्ये ब्रह्मवादिनः कथयन्ति ॥ ११ ॥

**तदु दीर्घमित्याहुरायुर्वै दीर्घमायुषोऽवरुध्यै ॥१२**

तथाच दैर्घ्यं दीर्घविशिष्टं तस्मात्सामान्याद्दीर्घाख्यं साम आयुषः शतवर्षलक्षणस्य प्राप्तै भवति पशुधनाख्यस्य प्राप्तै भवति ॥ १२ ॥

अथान्यस्मिन्विहिते तृचे सामान्तरं विधत्ते ।

**कार्णश्रवसं भवति ऋखन्ति तुष्टुवानं ॥ १३ ॥**

कर्णश्रवसा दृष्टं कार्णश्रवसं एतदाख्यं साम तं वः सखाय इति तृचे गातव्यं अनेन च तुष्टुवानं स्तुवन्तं ऋखन्ति लौकिका बहु मन्यन्ते ऋद्धवान् भवतीत्यर्थः ॥ १३ ॥

अथैतदृषिसम्बन्धं दर्शयन् पशुसाधनत्वेन स्तौति ।

**कर्णश्रवा वा एतदाङ्गिरसः पशुकामः सामापश्यत्तेन सहस्रं पशूनसृजत यदेतत्साम भवति पशूनां पुष्ट्यै ॥ १४ ॥**

स्पष्टोऽर्थः ॥ १४ ॥

अथ सोमाः पवन्तइन्दव इति तृचे अन्यत्साम विधाय तदीयं ब्राह्मणश्चातिदिशति ।

**गौरीवितं भवति यदेव गौरीवितस्य ब्राह्मणं ॥१५॥**

सिद्धमेतत् ॥ १५ ॥

अथास्मिन्नेव तृचे आदृत्ते सामान्तरं विधत्ते ।

**मधुश्चुन्निधनं भवति ॥ १६ ॥**

मधुश्चुत इति निधनं यस्य तत्तथोक्तं एतदाख्यं साम सोमाः पवन्त इत्यस्मिंस्तृचे गातव्यं ॥ १६ ॥

अथैतत् स्तौति।

परमस्यान्नाद्यस्यावरुध्यै परमं वा एतदन्नाद्यं यन्मधु ॥ १७ ॥

यन्मधु माक्षिकं एतत्परमसुत्कृष्टं अन्नाद्यं अदनीयमन्नं तस्मादेतन्मधुश्चुन्निधनं परमस्यान्नाद्यस्य प्राप्त्यै भवति श्चुतिरक्षरणे मधुश्चोतयतिच्यावयति चारयतीति मधुश्चुदिति तत्संज्ञानिर्व्वचनात्तस्य मधुप्राप्तिहेतुता ॥ १७ ॥

इदं मन्ध्यश्चौजसेति योनौ यत् घृतश्चुन्निधनाख्यं साम तत् गीयते स्तुत्यर्थं तद्वेदस्य संयुज्य प्रशंसति।

प्रजापतेर्वा एतौ स्तनौ यद्घृतश्चुन्निधनञ्च मधुश्चुन्निधनञ्च यज्ञो वै प्रजापतिस्तमेताभ्यां दुग्धे यङ्कामङ्कामयते तन्दुग्धे ॥ १८ ॥

प्रजापतेः सर्व्वकारणभूतस्य विधातुरेतौ स्तनौ यद्घृतश्चुन्निधनाख्यम्मधुश्चुन्निधनाख्यञ्च सामनी स च प्रजापतिः यज्ञो वै यज्ञएव तं यज्ञात्मकं प्रजापतिमेवैताभ्यां स्तनाभ्यां घृतश्चुत् मधुश्चुत् रूपाभ्यां दुग्धे. एतदेव विव्रियते यङ्काममिति यजमानो यं यङ्कामयते आशंसते तं तं सर्व्वमेताभ्यां दुग्धे दोग्धि॥१८॥

अथास्मिंस्तृचे सामद्वयं विधत्ते।

क्रौञ्चे भवतः ॥ १९ ॥

कुत्साख्येन ऋषिणा दृष्टे सामनी कौत्से एते सोमाः पवन्त इन्दव इत्यस्मिन्नेव तृचे द्विरावृत्ते क्रमेण गायेत् ॥ १९ ॥

अथैते स्तौति ।

कुत्सेऽध्यमहरविन्दद्वैष्यमिव वै षष्ठमहरहरेवैताभ्यां विन्दन्ति ॥ २० ॥

इन्द्रायेन्दो मरुत्वत इति खण्डे व्याख्यातमेतत् ॥ २० ॥

अथापघ्नापघ्नस्वेत्यन्तिमे तृचेऽन्यत्साम विधत्ते ।

श्रौष्टं भवति ॥ २१ ॥

श्रुष्टाख्येन ऋषिणा दृष्टं साम श्रौष्टं तत्सम्बद्धं ॥ २१ ॥

अथैतस्य स्तुतिः ।

श्रुष्टिर्वा एतेनाङ्गिरसोऽञ्जसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्यानुख्यात्यै स्वर्गात् लोकान्न च्यवते तुष्टुवानः ॥ २२ ॥

एतदपि सिद्धं ॥ २२ ॥

अथास्य निधनं विधत्ते ।

अग्नेर्वा एतद्वैश्वानरस्य साम दीदिहीति निधनमुपयन्ति दीदायेव ह्यग्निर्वैश्वानरः ॥ २३ ॥

वैश्वानरस्य विश्वानरहितस्याग्नेः खलु तस्मात् तस्मा-द्धोहिहीत्येतत्पदं निधनमुपयन्त्युपगच्छन्ति उद्गातारः हीडा-येव दीप्तवद्वैश्वानरोऽग्निः ॥ २३ ॥

अथैतत्पवमानस्तोत्रमुपसंहरति ।

**निधनान्ताः पवमाना भवन्त्यह्नो धृत्यै स्तोमः ॥२४**

पवमानाः पवमानस्तोत्राणि बहिष्पवमानादीनि निधना-न्तानि निधनावसानानि भवन्ति किमर्थं अह्नो धृत्यै धारणाय स्थैर्य्यार्थं एवं गायत्र्यादिस्त्रौष्टान्तेष्वेकादशसु सामसु प्रत्येकं तृचे गीयमानेषु त्रयस्त्रिंशः स्तोमो निष्पद्यते स एवार्भवस्य पवमानस्य स्तोम इत्यर्थः ॥ २४ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोदशाध्यायस्य

एकादशः खण्डः ।

---

अथ द्वादशः खण्डः ।

अथ प्राकृतमेवाग्निष्टोमसामेत्यभिप्रेत्य ततः परेषूक्थ-स्तोत्रेषु द्विपदाः स्तोत्रीयाः कार्य्या इति विधित्सुस्तदर्थं किञ्चि-द्ब्रह्मवादिनां विचारमुपक्षिपति ।

**ब्रह्मवादिनो वदन्ति प्रायणतो द्विपदाः कार्य्या ३ उदयनता ३ इति ॥ १ ॥**

ब्रह्मवादिनो वेदार्थचिन्तका वदन्ति मीमांसन्ते किं षड-हस्य प्रायणतः प्रारम्भसमये द्विपदा ऋचः स्तोतीया किं वा उदयनतः समाप्तिवेलायामिति उभयत्र विचार्य्यमाणानामिति श्रुतिर्द्रष्टव्या ॥ १ ॥

एवं विचार्य्य निर्णीतं पक्षमाह ।

**उदयनतएव कार्य्याः पुरुषो वै द्विपदाः प्रति-ष्ठायै ॥ २ ॥**

उदयनतएव कार्य्याः कुत एतत् येयं द्विपदा सा पुरुषो वै द्विपदाः तस्मात्स्यात् पुरुषात्मकाएव पुरुषसंस्तुतानान्तस्मिन् द्विपदानामन्ततः करणं पादद्वयवतो यजमानस्य प्रतिष्ठानाय कल्पते ॥ २ ॥

अथ प्रकारान्तरेण स्तौति ।

**वाचा वै सर्वं यज्ञस्तायते तस्मात्सर्वां वाचं पुरुषो वदति सर्वा ह्यस्मिन् संस्तुता प्रतितिष्ठति ॥ ३ ॥**

वाचा ऋतशास्त्रात्मिकया खलु सर्वं यज्ञं अग्निष्टोमादि विश्वसृजामयनान्तं सकलयज्ञजातं तत्र ते यजमानाः विस्ता-रयन्ति यस्मात्तत्रे सर्वा वाक् साधनभूता तस्मात्सर्वां लौकिकी-ञ्च वैदिकीञ्च वाचं पुरुषो वदति प्रयुङ्क्ते हि यस्मादस्मिन् पुरुषे सर्वा वाक् संस्तुता सह स्तुता प्रतितिष्ठति प्रतिष्ठिता भवति

तस्मात् सर्व्वां पुरुषो वदति तादृशः पुरुषो द्विपदाभिः षडक्षरा-वसानगताभिः प्रतिष्ठितो भवतीति द्विपदास्तुतिर्द्रष्टव्या ॥ ३ ॥

अथ मैत्रावरुणोक्थस्य साम दर्शयति ।

गूर्द्दो भवति ॥ ४ ॥

अग्ने त्वन्नो अन्तम इत्यत्र द्विपदात्चे गूर्द्दं साम गातव्यं भवति ॥ ४ ॥

अथास्य साम्न आख्यायिकाप्रदर्शनपुरःसरं सर्व्वकामसाधनतामाह ।

गौपायनानां वै सत्रमासीनानां किरातकुल्या-वसुरमाये अन्तःपरिध्यसून् प्राकिरतान्तेऽग्नेत्वन्नो अन्तमइत्यग्निमुपासीदंस्तेनासूनस्पृण्वंस्तद्वा-व ते तर्ह्यकामयन्त कामसनि साम गूर्द्दः काममेवैते-नावरुन्धे ॥ ५ ॥

गौपायनानां गौपगोत्राणां सत्रमासीनानां सत्रासनं कुर्व्वतामेषां असून् प्राणान् किरातकुल्यौ किराता म्लेच्छाः तत्तुल्यरूपे असुरमाये असुरसम्बन्धिन्यौ माये अन्तःपरिधि आहवनीयस्य परिधीनाम्मध्यदेशे प्राकिरतां प्रकर्षेण विक्षि-पतां कविक्षेप इति धातुः ततस्ते गौपायनाः अग्ने त्वन्नो अन्तम इति त्चेनाग्निमुपासीदन्नुपागच्छन् अस्तुवन्नित्यर्थः

तेनोपसदनेन अग्नेः प्रसादात् पुनरात्मीयान् असून् स्पृण्वन् बलयन् मायापरिच्छिन्नान् पुनरादाय प्रबलान् कुर्व्वन्नित्यर्थः ते गौपायनाः तस्मिन् समये एतदेवैतत्त्वकामयन्त तस्माद्वरं कामसनि कामप्रदं गतमन्यत् ॥ ५ ॥

अथ ब्रह्मण उक्थस्तोतस्य साम दर्शयति ।

गोतमस्य भद्रं भवति ॥ ६ ॥

गोतमस्य भद्राख्यं साम इमानुकं भुवनासीषधे मेत्यस्मिन् द्विपदे तृचे गातव्यं ॥ ६ ॥

भद्रशब्दवाच्यत्वादाशीःप्रापकमेतत्सामेति स्तौति ।

आशिषमेवास्मा एतेनाशास्ते साम हि सत्याशीः ॥ ७ ॥

असौ यजमानाय शिवं शिष्टं ॥ ७ ॥

अथैतन् महत्त्वप्रापकमिति स्तौति ।

एतेन वै गोतमो जेमानं महिमानमगच्छत् तस्माद्ये च पराञ्चो गोतमाद्ये चार्वाञ्चस्त उभये गोतम ऋषयो ब्रुवते ॥ ८ ॥

एतेन खलु भद्रेण साम्ना पुरा गोतमः ऋषिः जेमानमतिशयेन जेतृत्वं महिमानं महत्त्वञ्चागच्छत् तस्मादेव कारणात्

गोतमादेव ऋषेः ये पराञ्चः पूर्वकालीना ज्येष्ठाः ये च अर्वाञ्चः अर्वाचीनाः पश्चाज्जाताः कनिष्ठाः उभये उभयविधास्ते गोतम ऋषयः गोतमाख्या ऋषय इति ब्रूवते उच्यन्ते गोतमशब्देनैव उच्यन्ते व्यवह्रियन्त इत्यर्थः तस्मादनेन साम्ना स्तुवन् जेमानं महिमानं गच्छतीति ॥ ८ ॥

अथाच्छावाकोक्थस्य साम दर्शयति।

उद्वंशपुत्रो भवति ॥ ९ ॥

उद्वंशपुत्राख्यं साम प्रव इन्द्राय वृत्रहन्तमायेति तृचे गातव्यं ॥ ९ ॥

गायन्ति त्वा गायत्रिण इत्यस्यां योन्यां गीयमानं साम्नो द्वंशीयन्तद्धर्म्मप्राप्त्यर्थं ताद्रूप्यं तदुद्वंशपुत्रस्यातिदिशति।

यद्वा उद्वंशीयन्तदुद्वंशपुत्रः ॥ १० ॥

योनिदृष्टेनोद्वंपशब्देन सम्बन्धादुद्वंशीयं यदेवोद्वंशीयाख्यं साम तदेवोद्वंशपुत्रः तद्धर्म्मभाग्भवतीत्यर्थः ॥ १० ॥

कोऽसौतद्धर्म्म इत्यत आह।

अद्वैडामतिस्वरति ॥ ११ ॥

उवित्यद्वैडा अतिसारस्य उद्वंशीये दृश्यते तावत्रापि भवतः तथैव ह्यधीमहि उग्रणा २ तो२५ हाइ इति उवित्यद्वै-

डापि तत्स्थाने इडास्थानादेश इति परिभाषासूत्रेण इट् इति प्रयोगकाले प्रयोक्तव्यं अद्वैडोपाध्ययनन्तु ब्रह्मयज्ञाद्यर्थं अयमर्थः अद्वैडां कृत्वा तत ऊर्द्धं अतिस्वारमतिमन्द्रं करोति ॥११॥

तदेतत् स्तौति ।

तस्मादूधर्ग्धारा अति क्षरन्तीडायामन्ततः पशुषु प्रतितिष्ठति ॥ १२ ॥

यस्मादद्वैडामतीत्य स्वरति तस्माद्गवां दुग्धप्रदेशमतीत्य पयसो धाराः क्षरन्ति स्रवन्ति अन्ततः षडहावसाने इडायां प्रतितिष्ठन् पशुष्वेव प्रतितिष्ठति तद्रात्मकत्वादिडायाः ॥ १२ ॥

यदेतदतिस्वरणं तत् सप्तमस्याह्नः संसारहेतुरिति स्तौति ।

क्लृप्त उपरिष्टादृक् साम च विमुच्येते अभ्युत्स्वरेण सप्तममहः स्वरति सन्तत्यै ॥ १३ ॥

क्लृप्ते कल्पिते ऋक्सामभ्यां त्रिवृदादिस्तोमैश्च सम्पूर्णानुष्ठिते षडहे सति उपरिष्टात्तदूर्द्धं ऋक् साम च विमुच्येते यथा ग्रामप्राप्तेरूर्द्धं शकटवाहिनौ बलीवर्दौ विमुच्येते तद्वत् ऋक्सामयोः श्रमापनोदार्थं विमोकः कार्य्यः तथा च षडहस्य क्लृप्तिसमाप्तत्वात् सप्तमस्य चाह्नोऽनारम्भात् द्व्यरालो विच्छिन्नः स्यात् तस्मादेतत् क्रियमाणेनातिस्वारेण द्राघीयसा सप्तममहरभिस्वरति अभिलक्ष्य स्वारं करोति सन्तत्यै उक्तविच्छेदपरिहारेण षष्ठसप्तमयोरह्नोः सन्तानार्थं ॥ १३ ॥

षडहसमाप्तेरूर्द्ध्वं लौकिकं वैदिकञ्च बहुभाषणन्न किञ्चित्कार्य्यमिति विधत्ते ।

**ऊढ़पीव वा एतर्हि वाग्यदा षडहः सन्तिष्ठते न बहु वदेन्नान्यं पृच्छेन्नान्यस्मै प्रब्रूयात् ॥ १४ ॥**

एतर्हि एतस्मिन् काले वाग्देवता ऊढ़पीव वै ऊढ़वतीव खलु यथा सति दूरं भारवहनं कृत्वा पुरुषः श्रान्तो भवति एवमेव षडहे बह्वी ऋचो बहूनि सामानि प्रयुञ्जानानां वागपि श्रान्ता भवति यदासौ षडहसञ्ज्ञां षण्णां समाहारः षडहः सन्तिष्ठते यस्मिन् काले समाप्यते तस्मान्न बहु वदेत् वाग्देवतायाः श्रमपनोदसिद्ध्यर्थं बहुभाषणन्न कुर्य्यात् अन्यञ्च पुरुषन्न पृच्छेत् अन्यस्मै पुरुषान्तराय च न ब्रूयात् प्रवचनं न कुर्य्यात् ॥ १४ ॥

अथैतस्मिन् समये ऋत्विजां बहुभोजनं विधत्ते ।

**मधु वाशयेद्घृतं वा यथोक्षणो वहं प्रत्यनक्ति तथा तत् ॥ १५ ॥**

षडहसमाप्तेरनन्तरं ऋत्विजो मधु वा प्राशयेत् घृतं वा अन्ययोरन्यतरेणोपसिक्तमन्नमृत्विजो भोजयेदित्यर्थः तथा च सूत्रं षष्ठेऽहनि संस्थिते बहुवादिनः स्युर्न चाधीयीरन्नोत्तरस्याह्नः उपाकरणात् सर्पिर्मधुभ्यामृत्विजोभोजयेदन्यतरेण वेति ऊढ़षो ऊढवतो बलीवर्दादेः वहं वहप्रदेशं स्कन्धभागं

प्रत्यनक्ति तैलादिभिः स्नेहयति तथा तत् मध्वदनं वा ऋत्वि-जां भवति यथा वहस्य प्रत्यञ्जनेन बलीवर्दादिः पुनर्वहनसमर्थो भवति एवं श्रान्तवाचो ऋत्विजो मधुष्टतप्राशनेन स्फुरद्वाचः क्रियन्त इत्यर्थः ॥ १५ ॥

अथैतेषु त्रिषूक्थस्तोत्रेषु स्तोमं विधत्ते।

त्रयस्त्रिंश एव स्तोमो भवति प्रतिष्ठायै देव-तासु वा एष प्रतिष्ठितः ॥ १६ ॥

यथा वहस्य प्रत्यञ्जनेन बलीवर्दादिः पुनर्वहनसमर्थो भवति तथा परिश्रान्तो वाचो ऋत्विजः सिद्धमेतत् ॥ १६ ॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीर-बुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माध-वीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे त्रयोदशाध्यायस्य द्वादशः खण्डः।

त्रयोदशाध्यायः समाप्तिमगमत्।

---

# चतुर्थोऽध्यायः ।

---

अथ प्रथमः खण्डः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ॥

इत्थं द्वितीयपञ्चिकायास्त्रिभिरध्यायैर्गवामयनादिभूतस्य पृष्ठ्यषडहस्य स्तोमक्लृप्तिरुक्ता अथ छन्दोमानां प्रथमद्वितीययोः स्तोमक्लृप्तिश्चतुर्थेऽध्याये विधीयते । तत्र प्रथमस्य छन्दोमस्य बहिष्पवमानस्तोत्रे स्तोमक्लृप्तिं विधातुमाह ।

आप्यन्ते वा एतत् स्तोमाश्छन्दाꣳसि यत् षडह आप्यते ॥ १ ॥

यद्यदा षडहः षण्णामह्नां समाहारः राजाहःसखिभ्यष्टच् समासान्तः न संख्यादेः समाहार इत्यह्नादेशप्रतिषेधः यस्मिन् पृष्ठ्यः षडहः समाप्यते एतत् एतस्मिन् काले त्रिवृत्पञ्चदशाद्याः स्तोमा गायत्र्यादीनि च छन्दांसि आप्यन्ते वै परिसमाप्यन्ते खलु त्रिवृदादिस्तोमानां गायत्र्यादिछन्दसाञ्च क्रमेण षट्स्वहःसु विनियुक्तत्वात् ॥ १ ॥

नन्वेवं केन च स्तोमेन केन च छन्दसा छन्दोमाः कल्पयितव्या इत्यत आह ।

## आप्ते षडहे छन्दाꣳसि स्तोमान् कृत्वा प्रयन्ति ॥२

षडहे आप्ते परिसमाप्ते स्तोमछन्दसोरपि परिसमाप्तत्वात् पुनरन्यानि छन्दांसि चतुर्विंशादीन् स्तोमांश्च कृत्वा निर्माय प्रयन्ति छन्दोमान् प्रारभन्ते ॥ २ ॥

अथ तत्र प्रथमे छन्दोमे बहिष्पवमानस्य स्तोत्रीयाख्यं प्रथमं तृचं विधत्ते ।

## प्रकाव्यमुशनेव ब्रुवाण इति गायत्र्या रूपेण प्रयन्ति ॥ ३ ॥

प्रकाव्यमुशने इति तृचो बहिष्पवमानस्य स्तोत्रीयाख्यः तृच एति प्रेत्याद्युमदित्यनुक्रान्तत्वात् प्रशब्दो गायत्र्यारूपं सा हि छन्दसां प्रथमा प्रशब्दः प्राथम्यवाचीति युक्तं तस्य गायत्रीरूपत्वं तथा गायत्र्याः सम्बन्धिना रूपेण प्रकाव्यमिति प्रशब्देन प्रयन्ति सप्तममहः प्रारभन्ते ॥ ३ ॥

ननु छन्दोऽन्तरस्य रूपं परित्यज्य गायत्रीरूपस्वीकारे किं कारणमित्यत आह ।

## इयं वै गायत्र्यस्यामेव प्रतिष्ठाय प्रयन्ति ॥ ४ ॥

इयं सर्वप्राणिनां पुरोवर्त्तिनी पृथिव्येव गायत्रीस्वरूपा उभयोः प्राथम्यसादृश्यात्तच्छन्दाश्च एवं गायत्रं रूपं प्रयुञ्जानाः

अस्यामेव पृथिव्यां प्रतिष्ठाय प्रथमतः प्रतिष्ठा भूत्वा प्रयन्ति अहः प्रारभन्ते ॥ ४ ॥

नन्वेवं मुख्येव गायत्री कस्मान्न प्रयुज्यत इत्यत आह ।

त्रिष्टुप् प्रतिपद्भवति ॥ ५ ॥

त्रिष्टुप् छन्दस्कैवास्य सप्तमस्याह्नः प्रतिपद्भवति सर्वप्राणिनां पुरोवर्त्तिनां पृथिव्येव गायत्रीस्वरूपा प्रतिपद्यते प्रारभ्यत इत्यपि प्रतिपत् सा च पूर्व्वोक्ता प्रकाव्यमुशने वब्रुवाण इत्येषा यद्यपि प्रतिपदिति एकवचनेन एका स्तोत्रीया विधित्सितेति प्रतीयते तथापि तृचसूक्तानामादिग्रहणेन विधिरनादेश इति परिभाषायास्तदादिकस्तृचएवात्र ग्राह्याः ननु गायत्रं प्रातःसवनं त्रैष्टुभम्माध्यन्दिनं सवनं जागतं तृतीयसवनमिति प्रकृतौ ज्योतिष्टोमे दृश्यते तत्कथं प्रातःसवने त्रिष्टुब्विधानन्नैष दोषः द्वादशाहो हि द्विविधः समूढो व्यूढश्चेति तत्र समूढे यथा प्रकृतौ तथैव सवनानि भवन्ति व्यूढे तु छन्दसां व्यूहनस्योक्तत्वात् तृतीयस्य त्रिरात्रस्य प्रातःसवनानि सर्व्वाणि त्रैष्टुभानि जागतानि माध्यन्दिनसवनानि गायत्राणि तृतीयसवनानीति व्युच्छेदनत्वात् त्रिष्टुभः प्रातःसवने सङ्गतिरधिगन्तव्या ॥ ५ ॥

तदेतत्प्रशंसति ।

ओजोवीर्य्यं त्रिष्टुबोजस्येव वीर्य्ये पराक्रम्य प्रयन्ति ॥ ६ ॥

ओजोबलं तदात्मकं वीर्य्यञ्च त्रिष्टुप् प्रजापतेरङ्गाद्बलवतो बाहुलक्षणाच्च वीर्य्यवतेन्द्रेण सहोत्पत्तेः तथाप्योजोरूप एव वीर्य्ये स्थित्वा पराक्रम्य जेतव्यं जित्वा प्रयन्ति प्रगच्छन्ति ॥ ६ ॥

अथ प्रकारान्तरेणेमं तृचं स्तौति ।

## स्तोत्रीयस्तृचो भवति प्राणापानानामवरुध्यै ॥७॥

प्रक्रान्त्यमुशने वब्रुवाण इत्ययं त्रैष्टुभस्तृचः स्तोत्रीयाख्यः प्रथमस्तृचो भवति बहिष्पवमाने प्रथमस्य तृचस्य स्तोत्रीय इति संज्ञा गतमन्यत् ॥ ७ ॥

ननु त्रिष्टुप्छन्दसो द्वितीयेऽहनि प्रयोगेण गतसारत्वात् कथं छन्दोमेषु विनियोग इति तत्राह ।

## हरिवत्यो भवन्ति छन्दोमानामयातयामतायै ॥८

हरिवत्यो हरिशब्दयुक्ताः स्तोत्रीया भवन्ति छन्दोमानां गायत्रीत्रिष्टुब्जगतीभिश्छन्दोभिर्मीयमानानां चतुर्विंशादीनां स्तोमानामयातयामतायै अगतसारत्वाय पत्रीणां संकृणुते तिग्म-शृङ्गोदिवाहरिर्ददृशे नक्तमृज्जइत्यस्मिन् तृचे श्रवणात्प्राणाभ्य-न्तरायेनासां हरिशब्दवत्त्वं ॥ ८ ॥

अथ स्तुत्यर्थं विहितेनानेन तृचेन सहिताः अन्या एकविं-शतिः स्तोत्रीयाः विधत्ते ।

द्वादशर्चौ भवतः ॥ ९ ॥

द्वादशानामृचां समाहारो द्वादशर्चः ऋक्पूरब्धूः पथामानक्षे इति अकारः समासान्तः प्रस्तावाद्यो रथा इवेति नवर्चः अस्यग्रमिन्दवः पर्येति नवर्चः आतेदक्षमिति त्वचः एवमेकविंशतिसंख्या ऋचः पूर्वं विहिताभिस्तिसृभिः सह द्वादशर्चौ बहिष्पवमानस्य भवतः ॥ ९ ॥

अथैतत् स्तौति ।

द्वादश मासाः संवत्सरः संवत्सरमेव तत्पूर्वस्मै षडहाय प्रत्युद्यच्छति सवीवधतायै ॥ १० ॥

द्वादशमासात्मकः संवत्सरः पृष्ठ्यषडहश्च संवत्सरः षड्वा ऋतवः षट्पृष्ठानीति श्रुतेः तत्तथा सति द्वादशमासात्मकं संवत्सरमेव पूर्वस्मै षड़हाय प्रत्युद्यच्छति प्रतिनिधित्वेनोद्गमयति किमर्थं सवीवधतायै वीवधो भारः समानो वीवधः तस्य भावः सवीवधता तदर्थं ॥ १० ॥

एवं द्वादशर्चद्वयगतद्वादशसंख्योपजीवनेन स्तौति ।

चतुर्विंᳫशतिर्भवन्ति चतुर्विंᳫशतिरर्द्धमासाः संवत्सरः संवत्सरमेव तत्पूर्वस्मै षडहाय प्रत्युद्यच्छति सवीवधतायै ॥ ११ ॥

एवं द्वादशर्च्चयो: सतोश्चतुर्विंशति: चतुर्विंशतिसंख्याका: स्तोत्रीया ऋचो भवन्ति चतुर्विंशकार्द्धमासात्मक: संवत्सरस्तथा सति स्तोत्रीयाचतुर्विंशकेन चतुर्विंशत्यर्द्धमासात्मकं संत्वसरमेव पूर्वस्मै प्रागनुष्ठिताय षड़हाय प्रतिरूपत्वेनोद्यच्छत्युद्गमयति आतोलनवेलायास्तुभयोर्गैरवसाम्यार्थं: ॥ ११ ।

अथास्मिन्नहनि चतुर्विंशं स्तोमं विधातुमुक्तिप्रत्युक्तिभ्यां कञ्चिद्दृष्टान्तमाह ।

हत ऐन्द्रोत इति होवाचाभिप्रतारी काचसेनिर्ये महावृक्षस्याग्रं गच्छन्ति क्व ते ततो भवन्ति प्र राजन् पक्षिण: पतन्त्यपपक्षा: पद्यन्ते ॥ १२ ॥

ऐन्द्रोत: इन्द्रेण ऊतो रक्षित: इन्द्रोत: तस्यापत्यम् ऐन्द्रोत: सच हताख्य: पदद्वयमप्येतत् सम्बुद्ध्यन्तं संज्ञा पूर्वको विधिरनित्य इति एङ् ह्रस्वात् सम्बुद्धेरिति सम्बुद्धिलोपविधेरनित्यत्वात् सुलोपाभाव: हे ऐन्द्रोत हताख्य ऋषे इति सम्बोध्य काचसेनि: कचसेनस्य पुत्र: अभिप्रतारी नाम राजर्षि: इत्युवाच एवं खलु प्रोक्तवान् कथमिति तदुच्यते ये प्राणिन: महावृक्षस्य महत: शाखास्कन्धादिभिरुन्नतस्य वृक्षस्य अग्रमूर्द्धं गच्छन्ति प्राप्नुवन्ति ते ततोऽग्रादूर्द्ध्वं क्व कुत्र स्थाने भवन्तीति एवमुक्तो हतं प्रत्यवोचत् हे राजन् पृथिवीपते त्वदुक्तात् महावृक्षाग्रात् पक्षिण: पक्षं युक्ता एतत्प्रपतन्ति पक्षाभ्यामुत्पतन्ति अपक्षा: पक्षरहिताश्चेद्-

वपद्यन्त इति शब्दोत्रासञ्जनीयः अधःपततीति अयमर्थः षष्ठेऽहनि प्रयुक्तस्त्रयस्त्रिंशः स्तोमः सहाहच्याग्रस्थानीयः त्रिवृदादिस्तोमानां संख्याधिक्यविश्रान्तभूमित्वात् तं प्रयुक्तवन्तो यजमानाः पक्षिणः ॥ १२ ॥

के पक्षरहिताः कौ च तेषां पक्षौ इति तत्सर्वमाह ।

योवै विद्वाꣳसस्ते पक्षिणो येऽविद्वाꣳसस्तेऽपक्षास्त्रिवृत्पञ्चदशावेव स्तोमौ पक्षौ कृत्वा स्वर्गं लोकं प्रयन्ति ॥ १३ ॥

ये खलु विद्वांसो वेदार्थाभिज्ञाः ते पक्षिणः पक्षवन्तः ये अविद्वांसोऽनभिज्ञाः ते अपक्षाः पक्षरहिताः तस्माद्विद्वांसस्त्रिवृत्पञ्चदशौ स्तोमावेव पक्षौ कृत्वा स्वर्गं लोकं प्रयन्ति इति त्रिवृत्पञ्चदशाभ्यां संहृताभ्यां स्तोमाभ्यां एतत्सप्तमसहः परिसमाप्य तत्साध्यं फलं प्राप्नुवन्तीत्यर्थः ॥ १३ ॥

एवं पारोक्ष्येण चतुर्विंशं स्तोमं विधायाथ प्रत्यक्षं विधत्ते ।

चतुर्विꣳश एव स्तोमो भवति प्रतिष्ठायै तेजसे ब्रह्मवर्चसाय ॥ १४ ॥

त्रिवृत्पञ्चदशौ स्तोमौ विदुषां पक्षभूतौ मिलित्वा चतुर्विंशतिः स्तोत्रीया भवन्ति तस्मात्सप्तमेऽहनि चतुर्विंशः स्तोमो

भवति स चतुर्विंशत्यर्द्धमासात्मकसंवत्सरसंस्तुतत्वात्प्रतिष्ठादिहेतु-र्भवति संवत्सरो हि प्रतिष्ठाहेतुः ॥ १४ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्दशाध्यायस्य

प्रथमः खण्डः ।

---

अथ द्वितीयः खण्डः ।

अथास्मिन् सप्तमेऽहनि प्रथममाज्यस्तोत्रं दर्शयति ।

मूर्द्धानन्दिवो अरतिं पृथिव्या इत्याग्नेयमाज्यं भवति ॥ १ ॥

अस्मिंस्तृचे गीयमानमग्निदैवत्यं प्रथममाज्यस्तोत्रं भवती-त्यर्थः ॥ १ ॥

अथास्य तृचस्यास्मिन्नहनि सङ्गतिमाह ।

मूर्द्धा वा एष दिवो यस्तृतीयस्त्रिरात्रः ॥ २ ॥

द्वौ त्रिरात्रौ गतौ तदपेक्षया यत् योऽयं तृतीयस्त्रिरात्रः एषहि द्युस्थानीयस्य दिवो दशरात्रस्य मूर्द्धा शिरः तस्मान् मूर्द्धानं दिव इति तृचस्तृतीये त्रिरात्रे सङ्गत इत्यर्थः ॥ २ ॥

अथ पादान्तरमनूद्य स्तौति ।

वैश्वानर ऋत आजातमग्निमिति वैश्वानर इति वा अग्नेः प्रियं धाम प्रियेणैवैनं तद्धाम्ना परोक्षमुपशिक्षति ॥ ३ ॥

वैश्वानर ऋत आजातमग्निमिति पादोऽस्मिंस्तृचे दृश्यते वैश्वानर इति विश्वनरहितं सर्वजनानामनुग्राहकं परं धाम शरीरन्तेजोमयं उच्यते तत्तेन वैश्वानरपदप्रतिपाद्येन प्रियेणैव धाम्ना तेजसा एतमग्निं परोक्षं परोक्षेण उपशिक्षति प्रीणयति शिक्षतिर्जननकर्म्मा तेन च तज्जन्यं प्रीणनं लक्ष्यते ॥ ३ ॥

अथ द्वितीयमाज्यस्तोत्रं विधत्ते ।

प्रवो मित्राय गायतेति द्यावापृथिवीयम्मैत्राव-रुणं द्यावापृथिवी वै मित्रावरुणयोः प्रियं धाम प्रियेणैवैनौ तद्धाम्ना परोक्षमुपशिक्षति ॥ ४ ॥

प्रवोमित्रायेति द्यावापृथिवीयं द्यावापृथिवीसम्बद्धं मैत्रा-वरुणं मित्रावरुणदेवताकं द्वितीयमाज्यस्तोत्रं भवति तानः शक्तं पार्थिवस्याहोरायोर्दिव्यस्येति द्यावापृथिवीसम्बन्धादस्य तृचस्य द्यावापृथिवीयत्वं ॥ ४ ॥

अथ तृतीयमाज्यमिन्द्रदेवताकं स्तौति ।

इन्द्रायाहि चित्रभानवित्याभंवमैन्द्रमभवो वा

इन्द्रस्य प्रियं धाम प्रियेणैवैनं तद्धाम्ना परोक्षमुपगच्छति ॥ ५ ॥

ऋभु चित् राज इति त्रयः सुधन्वनः पुत्राः ऋभुशब्दवाच्याः त एवेन्द्रस्य प्रियं धाम स्थानं शरीरं तेजो वा ते हीन्द्रस्य हरः निर्म्माय प्राक्षुः इन्द्रो हरीयुयुज्यं अश्विना रथमिति हि मन्त्रवर्णः यद्वा इन्द्रः सूर्य्यः ऋभवो रश्मयः तेषां सूर्य्यप्रियधामत्वं स्पष्टं शिष्टं पूर्ववद्योज्यं ॥ ५ ॥

अथ चतुर्थमाज्यस्तोत्रं विधत्ते।

तमीडिष्वयो अर्चिषेत्यनिरुक्तमैन्द्राग्नं देवतानामनभिधर्षायोत्तमाद्दे निराह देवतानामप्रणाशाय स्तोमः ॥ ६ ॥

तमीडिष्वेति तृचः अनिरुक्तं निरुक्तं निष्कृत्य स्वरूपग्राहकयोक्तं देवतापदं यस्मिन्नास्ति तादृशमैन्द्राग्नमिन्द्राग्निदेवताकं चतुर्थमाज्यस्तोत्रं भवति किमर्थमस्यानिरुक्तत्वमिति देवतानामनभिधर्षायं तत्तन्नाम्नाप्यवह्रियमाणा देवता अभिष्टा अभिपीडिताः स्युः यथा विद्यादिभिः श्रेष्ठाः पुरुषाः औपचारिकन्नाम परित्यज्य स्वस्वेन नाम्ना व्यवह्रियमाणाः कुप्यन्ति तद्वद्देवताश्रेष्ठाः तस्मात् अभिधर्षो माभूदित्येवमर्थं अस्य स्तोत्रस्यानिरुक्तत्वं यद्येवं देवताया अप्रतिपादितत्वात् अनिरुक्तप्रजापतिरिति श्रुतेः प्राजापत्यमेवैतत् स्तोत्रं स्यात् नैन्द्राग्नमित्यत आह उत्त-

माद्वैंद्रति निराहेति ऐन्द्रमग्निस्थ वोढव इति उत्तमे अनेनार्द्धर्चेन निराह देवतां निष्कृत्य ब्रवीति देवतानामप्रमाणाय अप्रामाणा-भावाय देवताविशेषसद्भावद्योतनार्थं: एतेष्वपि चतुर्ष्वाज्यस्तोत्रेषु पूर्व्वोक्तश्चतुर्विंशएव स्तोम: कार्य्य: एतेषु प्रात:सवननिष्ठेषु पञ्चसु स्तोत्रेषु स्तोत्रीयामात्रस्यान्यत्र विधानात् साम प्राकृतमेवेति द्रष्टव्यं ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्दशाध्यायस्य

द्वितीय: खण्ड: ।

---

अथ तृतीय: खण्ड: ।

अथास्मिन् सप्तमेऽहनि माध्यन्दिनपवमानस्य प्रथमं तृचं दर्शयति ।

**इषा पवस्व धारयेति गायत्री भवत्यह्नो धृत्यै ॥१॥**

इषा पवस्वेति गायत्री माध्यन्दिनपवमानस्य प्रतिपद्भवति प्रथमस्तृचो गायत्री भवतीत्यर्थ: सोऽयं सप्तमस्याह्नो धृत्यै धारणाय भवति धारयेति धारणवाचि धृञ् धातुशब्दनिष्पन्न-त्वात् ॥ १ ॥

अथास्मिन्नहनि तृचस्य सङ्गतिमाह ।

**इषवत्यस्त्रिष्टुभोरूपेण त्रैष्टुभं ह्येतदहः ॥२॥**

इषवत्योरिषशब्दयुक्ता इषापवस्वेत्याद्यास्तिस्रोगायत्र्यो रूपेण

दृषगब्दरूपेण त्रैष्टुभेण रूपेण योगात्त्रिष्टुभो भवन्ति एतत् सप्तममहरिति त्रैष्टुभं हि त्रिषु प्रायणत्वात् तस्मादस्मिन्नहनि दृषखत्वोगायत्नलक्षणाया त्रिष्टुप्त्वात् सङ्गता इत्यर्थः ॥ २ ॥

अथान्यं तृचं दर्शयति ।

पुनानः सोमधारयेति धृत्यै ॥ ३ ॥

पूर्ववदस्यापि तृचस्य धृतिहेतुता योज्या ॥ ३ ॥

तृचान्तरं विधत्ते ।

प्रो अयासीदिन्दुरिन्द्रस्य निष्कृतमिति प्रवत्यो भवन्ति प्रणिनीपेण्यमिव ह्येतदहः ॥ ४ ॥

प्रो अयासीदित्याद्या प्रवत्यः प्रशब्दयुक्ताख्रिस्रः स्तोत्रीया भवन्ति यत् सप्तममहः प्रणिनीपेण्यं प्रणेतव्यत्वेनेष्टमिव हि षड-हस्य समाप्तत्वात् सप्तममहः पुनः प्रारिप्सितमित्यर्थः तस्मात्प्रणयनार्थसूचकेन प्रशब्देन योगात् सप्तमे प्रणेतुमिष्टेऽह्नि विनि-योज्या इत्यर्थः ॥ ४ ।

ननु माध्यन्दिनपवमानस्यान्त्यस्तृचस्त्रिष्टुभः प्रकृतौ तत्स्थाने कथमयं जागतस्तृचः संगच्छत इत्यत आह ।

जगत्यः सत्यस्त्रिष्टुभो रूपेण तस्मात्त्रिष्टुभां लोके क्रियन्ते ॥ ५ ॥

प्रो अयासीदित्याद्याएताः समा जगत्यः सत्योऽपि त्रैष्टुभेन

रूपेण योगात् त्रैष्टुभः तच्च रूपमिन्द्रशब्दः त्रिष्टुभा सहेन्द्रोत्पत्तेः गतमन्यत् ॥ ५ ॥

अथ वृषा पवस्वेति विहिते प्रथमे तृचे गायत्रं साम विधाय पूर्ववत्तद्ब्राह्मणञ्चातिदिशति ।

गायत्रं भवति यदेव गायत्रस्य ब्राह्मणं ॥ ६ ॥

सिद्धमेतत् ॥ ६ ॥

अथास्मिन्नेव तृचे आवृत्ते सामान्तरं विधत्ते ।

सन्तनि भवति सप्तमस्याह्नः सन्तत्यै ॥ ७ ॥

वेदसामाख्ये ग्रन्थे सर्वाण्यपि सामानि एकैकस्यां गीयन्ते इदन्तु साम तृचे व्यासज्य गीयते अथ तिसृषु स्तोत्रीयासु सन्तानदर्शनात् सन्तनीति संज्ञा एतद्वृषापवस्वेत्यस्मिन्नेव तृचे गातव्यं तत्रास्य सप्तमस्याह्नः षष्ठेनाह्ना सह सन्तत्यै सन्तानाय संश्लेषाय भवति ॥ ७ ॥

अथ विच्छित्तिपूर्वकत्वात् सान्तत्यस्य षष्ठसप्तमयोरह्नोस्तदुभयं सदृष्टान्तं दर्शयति ।

यथा वै व्योकसौ विप्रद्रवत एवमेते षष्ठञ्चाहः सप्तमञ्च विप्रद्रवतस्तौ यथा समानीय संयुञ्ज्यादेवमेवैते एतेन साम्ना संयुनक्ति ॥ ८ ॥

यथा खलु व्योकसौ विभिन्ननिलयौ पक्षिणौ विप्रद्रवतः विश्लिष्टं पततः एवमेते षष्ठमहः सप्तममहश्च विप्रद्रवतौ विमुक्तौ भवतः षष्ठेन षडहस्य समाप्तत्वात् तौ व्योकसौ पक्षिणौ समानीय एकत्र आनीय संयुञ्ज्यात् संयुक्तौ कुर्य्यात् एवमेवैते षष्ठसप्तमे अहनी एतेन सन्तनिसाम्ना संयुनक्ति सन्तनोति ॥ ८ ॥

अथास्मिन्नेव तृचे सामान्तरं विधत्ते।

सौपर्णं भवति स्वर्गस्य लोकस्य समष्ट्यै ॥ ९ ॥

सौपर्णाख्यं साम त्वया पवस्वेत्यस्मिन्नेव तृचे कार्य्यं सुपर्णो हि पक्षी उत्पतनेन स्वर्गं प्रापयितुं शक्तस्तत्सम्बद्धं सौपर्णं साम स्वर्गलोकस्य प्राप्तै समर्थं ॥ ९ ॥

अथ प्रकारान्तरेण प्रशंसति।

यज्ञो वै देवेभ्योऽपाक्रामत्स सुपर्णरूपं कृत्वाचरत्तं देवा एतैः सामभिरारभन्त यज्ञइव वा एष यच्छन्दोमा यज्ञस्यैवैष आरम्भः ॥ १० ॥

यज्ञः खलु पुरा देवेभ्यः सकाशात् केनचिदपराधेनापाक्रामदपागच्छत् अपक्रम्य च सः यज्ञः सुपर्णरूपं सुष्ठुतनः श्येनस्तद्रूपमात्मानं कृत्वा अचरत् अन्तरिक्षे अपवर्त्तत तं सुपर्णरूपयज्ञं देवाः एतैः सौपर्णैः सामभिरारभन्त अग्टह्णन् तस्मादेतत् साम यज्ञारम्भसाधनं यत् एते त्रयश्छन्दोमाः एष यज्ञः इव वै

यज्ञविलक्षणा एव अतो यज्ञस्यैव एष आरम्भो ग्रहणं भवति यत् सौपर्णं भवतीति एवं वा यज्ञभूतेषु छन्दोमेषु यज्ञग्रहण-साधनस्य सौपर्णस्य करणात् तेषां यज्ञत्वं सिद्ध्यतीत्यर्थः ॥१०॥

अथास्मिन्नेव तृच आवृत्ते सामान्तरं विधत्ते ।

रौहितकूलीयं भवत्याजिजित्यायै ॥ ११ ॥

रौहितकूलीयाख्यं सामापि तृषा भवस्येत्यस्मिन्नेव तृचे गातव्यं तच्च आजिजित्यायै आजिः सङ्केतितप्राप्तव्यावधिः तस्य जयाय भवति ॥ ११ ॥

कुत एतदित्यत आह ।

एतेन वै विश्वामित्रो रोहिताभ्याꣳ रोहितकूल आजिमजयत् ॥ १२ ॥

एतेन खलु साम्ना साधनेन पुरा विश्वामित्र ऋषिः रोहि-ताभ्यामश्वाभ्यां रोहितकूले एतत् संज्ञे स्थाने आजिमजयत् जितवान् तस्मादेतदाजिजयसाधनमित्यर्थः ॥ १२ ॥

एतदेव विव्रियते !

विश्वामित्रो भरतानां मनस्यत्यायात्सौदन्तिभि-र्नाम जनतयाꣳश्वं प्राश्यतेमाम्मां यूयं वस्तिकाञ्जया-श्वेमानि मह्यं यूयं पूरयाय यदीमाविदꣳरोहितावश्व-

## चितं कूलमुद्वहात इति स एते सामनी अपश्यत्ताभ्यां युक्त्वा प्रासेधत्स उदजयत्॥ १३ ॥

विश्वामित्रः पुरा भरतानां भरतवंशजातानां मनःसत्या मनसा युक्तया प्रजया आयात् भरतानां देशं शकटारूढोऽगच्छदित्यर्थः अत्र च भरतदेशे सौदन्तिभिः सुदन्तवंशजैः एतत्-संज्ञैः जनतया जनसमूहेन अंशं विभजनाय धनं प्रास्यत प्राक्षिप्य आजिं सन्धाय तेन प्राप्तव्यमेतदिति स्थापितमभूत् योऽस्माकं मध्ये ज्येष्ठोऽस्ति तस्येदमस्त्विति तत्र विश्वामित्रो दैवसङ्गतएवमब्रवीत् हे सुदन्ताया यदि यूयं ज्येष्ठाय तर्हि अस्मिन् संख्यां वस्त्रिकां वस्तिसंज्ञां वसुसम्बन्धं धनसमूहं प्रति मां यूयं जयाय देहि यदि तु मदीयाविमौ रोहितावश्वौ अश्माचितं अश्मभिः पाषाणैरासमन्ताच्चितं सन्तमग्रमिदं नद्याः कूलं उद्वहात ऊर्द्ध्वंशकटं उत्तारयिता तर्हि मह्यं अतदर्थमेव इमानि धनानि पूरयाय पूरणायेति एवं कृतप्रतिज्ञः स विश्वामित्रः एते रोहितकूलीये सामनी अपश्यत्ताभ्यां सामभ्यां अश्वौ शकटे युक्त्वा प्रासेधत् प्रकर्षेण कूलोद्वहनं साधितवान् ततः स उदजयत् उत्कृष्टजयं प्राप्नोत् तस्मादेतद्रोहितकूलसम्बन्धात् रोहितकूलीयमित्याख्यायते॥ १३ ॥

अस्त्वेवमस्याजिजयहेतुता द्वादशाहे कथं सङ्गच्छत इत्यत आह।

आजिर्व्वा एष प्रततो यद्द्वादशाहस्तस्यैते उ-
ज्जित्यै ॥ १४ ॥

प्रततः प्रकर्षेण विस्तारितः द्वादशाह इति यत् एष आ-
जिर्वै आजिरेव अतस्तस्य द्वादशाहस्याजेरुज्जित्यै उज्जयाय
भवति ॥ १४ ॥

अथ द्वितीयतृचे सामान्तरं विधत्ते।

कण्वरथन्तरं भवति ॥ १५ ॥

पुनानः सोमधारयेति विहितेऽस्मिन् तृचे कण्वरथन्तराख्यं
साम गातव्यं ॥ १५ ॥

अथैतत् स्तौति।

तेजो वा एतद्रथन्तरस्य यत्कण्वरथन्तरꣳ सरस-
मेव तद्रथन्तरं प्रयुङ्क्ते यत्कण्वरथन्तरेण सप्तमे-
ऽहनि स्तुवते ॥ १६ ॥

यत् कण्वरथन्तराख्यं साम एतद्रथन्तरस्य अभि त्वा शूरेत्य-
स्यां गीयमानस्य तेजो वै तेज एव सारभूतमेतद्यावद्द्वादशाहस्य
सप्तमेऽहनि उद्गातारः कण्वरथन्तरेण स्तुवत इति यत्तेन
सरसं रससहितं सारवदेव रथन्तरं प्रयुङ्क्ते ॥ १६ ॥

अथैतत्प्रकारान्तरेण स्तौति।

जामि द्वादशाहस्यासीति ह स्माहोग्रदेवो राजनिर्बार्हतꣳ षष्ठमहर्बार्हतꣳ सप्तमं यत्कण्वरथन्तरं भवति तेनाजामि ॥ १७ ॥

राजनिः रजनस्य पुत्रः उग्रदेवाख्यः ऋषिः षष्ठसप्तमयोरुभयोरपि नैरन्तर्य्येण बार्हतत्वात् जामित्वदोषोऽस्तीत्याह पुरोक्तवान् षष्ठमहर्बार्हतं बृहतः सम्बन्धि एव साम्नो बृहतः सकाशाज्जामित्वात् सप्तममहश्च बार्हतं बृहतः सम्बन्धि तथाच जामितादोषः तत्रायं परिहारः सप्तमेऽहनि कण्वरथन्तरं भवतीति यत् तेन कण्वरथन्तरेण अजामि जामितादोषो न भवति रथन्तरस्य कृतत्वात् ॥ १७ ॥

अथास्मिंस्तृचे सामान्तरं विधत्ते ।

गौङ्गवम्भवति ॥ १८ ॥

गौङ्गवाख्यं साम पुनानः सोम इत्यस्मिन्नेव आहत्ते तृचे गेयं ॥ १८ ॥

अथैतदस्मिन्नहनि प्राप्तिहेतुत्वेन स्तौति ।

अग्निरकामयतान्नादः स्यामिति स तपोऽतप्यत स एतद्गौङ्गवमपश्यत्तेनान्नादोऽभवद्यदन्नं वित्वा गर्द्दद्यदगङ्गूयत्तद्गौङ्गवस्य गौङ्गवत्वमन्नाद्यस्यावरुध्यै गौङ्गवं क्रियते ॥ १९ ॥

अन्नादो अन्नस्यात्ता भवेयमिति अग्निरकामयत कामितवान् कामयित्वा च स तपस्तप्तवान् स तपोमाहात्म्येन एतद्गौङ्गवाख्यं सामापश्यत् तेन च साम्ना अन्नस्यात्ताभवत् तदन्नं वित्वा लब्ध्वा यदगर्द्दत् शब्दमकरोत् गर्द्द शब्दे इति धातुः एतदेव व्याचष्टे यदगङ्गूयदिति गङ्ग अव्यक्ते शब्दे अगङ्गूयत् अव्यक्तं शब्दमकरोत् तत्तस्माद्गौङ्गवस्य साम्नो गौङ्गवत्वं गौङ्गवमिति नाम सम्पन्नं तस्मादद्यतनोऽपि अन्नाद्यस्यावरोधाय सप्तमेऽहनि गौङ्गवं क्रियते प्रयुज्यते ॥ १९ ॥

अथ प्रकारान्तरेण तत् स्तौति ।

यत्साम देवताः प्रशꣳसति तेन यजमानाः सत्याशिषः सत्याशिषोऽसामेति वै सत्रमासते सत्याशिष एव भवन्ति ॥ २० ॥

साम्नां मध्ये यत् साम देवताः प्रशंसति प्रशंसां करोति तेन साम्ना यजमानाः सत्याशिषः सत्यफला भवन्ति गौङ्गवाख्यं साम देवतायाः अग्नेः अन्नादत्वलक्षणां प्रशस्त्यं करोति यजमानस्य सत्याशिषः सत्यफलाः असानेत्यभिप्रायेण खलु सत्रमासते सत्रासनं कुर्व्वते ते देवताः प्रशंसकेनैतेन साम्ना सत्याशिष एव भवन्ति ॥ २० ॥

अथ सामान्तरं विधत्ते ।

आयास्यम्भवति तिरश्चीननिधनं प्रतिष्ठायै ॥२१॥

आयास्यं अयास्येन दृष्टं साम पुनानः सोमेत्यस्मिन्नेव तृच आवृत्ते गातव्यं तच्च तिरश्चीननिधनं तैरश्चीनं तिर्य्यग्वर्त्तमानं निधनं यस्य तादृशं भवति यजमानस्य प्रतिष्ठानार्थं ॥ २१ ॥

अथैतद्विभ्रष्टमव्द्रोपनिवर्हणहेतुतया स्तौति ।

अयास्यो वा आङ्गिरस आदित्यानां दीक्षिता-नामन्नमाश्नात् स व्यभ्रꣳशत स एतान्यायास्यान्य-पश्यत्तैरात्मानꣳ समश्रीणाद्विभ्रष्टमिव वै सप्तमम्ह-र्य्यदेतत्साम भवत्यहरेव तेन सꣳश्रीणाति ॥ २२ ॥

आङ्गिरसो अङ्गिरोगोत्र अयास्य ऋषिः पुरा दीक्षितानां आरब्धयज्ञानां आदित्यानां अन्नमाश्नात्* तैः सामभिरा-त्मानं वीर्य्यैः समश्रीणात् समगमयत् एतत् सप्तममहश्च विभ्रष्ट-मिव वै स्रष्टवीर्य्यमिव खलु पृष्ठ्यषडहस्य समाप्तत्वात् आगा-मिनोऽहरन्तरस्य चानिष्पत्तेरेकाकित्वात् एतदायास्यं साम सप्त-मेऽहनि भवतीति यत् एतेन साम्ना तदहरेव संश्रीणातीति वीर्य्येण संयोजयति ॥ २२ ॥

अथ त्रिमे तृचे सामान्तरं विधत्ते ।

---

* अत्र पतितमनुमीयते ।

प्रवद्भार्गवं भवति ॥ २३ ॥

प्रवत् प्रशब्दयुक्तं भार्गवं भृगुदृष्टं तदाख्यं साम। प्रत्वा न् आगा-मिनोऽहरन्तरस्य प्रो अयासीदिति विहितेऽस्मिंस्तृचे गातव्यं ॥२३

अथैतत् स्तौति ।

प्रवता वै देवाः स्वर्गं लोकं प्रायन्नुद्वतोदायन् ॥२४

प्रवता प्रशब्दवता साम्ना खलु पुरा देवाः स्वर्गं लोकं प्रायन् प्रागच्छन् गन्तुं प्रक्रान्ता उद्वता उद्वच्छब्दवता साम्ना उदायन् ऊर्द्ध्वं गच्छन् तस्मादेतत् साम स्वर्गप्राप्तिसाधनमित्यर्थः ॥ २४ ॥

अथैतत्पवमानस्तोत्रमुपसंहरति ।

निधनान्ताः पवमाना भवन्त्यह्नो धृत्यै स्तोमः ॥२५

सर्व्वत्र हि पवमानाः पवमानस्तोत्राणि निधनान्तानि भवन्ति निधनमन्ते येषां ते निधनान्ताः अत्र च मा २ नोपथा ३ ऊवा २३४५ इति प्रवद्भार्गवस्यावसाने निधनमधीयते तस्मादह्नो धृत्यै धारणाय भवति एवं गायत्रादिप्रवद्भार्गवान्तेष्वष्टसु सामसु तृचेषु गीयमानेषु निष्पद्यमानश्चतुर्विंशस्तोमोऽस्य पवमानस्तोत्रस्य कार्य्य इत्यर्थः ॥ २५ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्दशाध्यायस्य तृतीयः खण्डः ।

---

अथ चतुर्थः खण्डः ।

अथ पृष्ठस्तोत्रेषु प्रथमद्वितीये प्रकृते एवेति मन्वानस्तृतीयस्य पृष्ठस्तोत्रस्य तृतीयं तृचं दर्शयति ।

**वयं घत्वा सुतावन्त इति सतो बृहत्यो वर्षीयश्छन्द आक्रमतेऽनपभ्रंशाय ॥ १ ॥**

वयंघत्वाद्यास्तिस्रः सतो बृहत्यो ब्रह्मसाम्नः स्तोत्रीया भवन्ति आसाञ्च सतो बृहतीत्वं पूर्वमुक्तं प्रकृतौ हि बार्हतः प्रगाथो ब्रह्मसाम्नः आधारः बृहती च षट्त्रिंशदक्षरा सतोबृहत्याख्यं छन्दः वर्षीयो वृद्धतरं चत्वारिंशदक्षरत्वात् अनुष्टुप्छन्द आक्रमते प्रारभते अनपभ्रंशाय अपभ्रंशाभावाय अधःपतनाभावाय ॥ १ ॥

अथ चतुर्थस्य पृष्ठस्तोत्रस्य स्तोत्रीयं तृचं दर्शयति ।

**न किष्टङ्कर्मणानशदिति बृहत्यः सत्योऽभ्यारम्भेण जगत्यः ॥ २ ॥**

न किष्टं कर्मणेत्याद्यास्तिस्रोऽच्छावाकसाम्नः स्तोत्रीया भवेयुः ताश्च स्वभावतो बृहत्यः सत्यो भवन्त्यभ्यारम्भेण गानसमये सङ्गृह्यमानस्य मन्त्रभागस्य पुनरपि गानार्थमुपादानमभ्यारम्भः तेन जगत्यो भवन्ति अस्मिंस्तृचे वैखानससाम्नि गीयमाने

सदाद्वधाम् तमश्ववसाम् सुमोजसा इति चतुरक्षरास्त्रयोऽर्द्धपादाः पुनरारभ्यन्ते एतानि द्वादशाक्षराणि सम्पद्यन्ते बृहती षट्त्रिंशदक्षरेति मिलित्वा अष्टाचत्वारिंशदक्षरा प्रथमा जगती भवति एवमुत्तरे अपि ॥ २ ॥

एवमभ्यारम्भेण जगतीसम्पादने कोलाभ इत्यत आह।

**अपभ्रंश इव वा एष यज्ज्यायसः स्तोमात्कनीयांसं स्तोममुपयन्ति यदेता अभ्यारम्भेण जगत्यो भवन्त्यह्न एव प्रत्युत्तम्भाय ॥ ३ ॥**

ज्यायसो बृहतरात् त्रयस्त्रिंशात् स्तोमात् कनीयांसं अल्पीयांसं न्यूनसंख्यं चतुर्विंशं स्तोममुपयन्ति यत् एषा अपभ्रंशइव वै अधःपतनमिव खलु तस्मात् सप्तमेऽहनि या देवताः पूर्व्वोक्ताः न किष्टं कर्मणानशदित्याद्यास्ता अभ्यारम्भेण जगत्यो भवन्ति तदस्य सप्तमस्याह्न एव प्रत्युत्तम्भाय प्रत्युत्तम्भनाय अधःपततोधृत्यै धारणाय भवति अधिकाक्षरछन्दसः कारणात् स्तोमप्रयुक्तन्यूनता परिहृता भवतीत्यर्थः ॥ ३ ॥

अथास्मिन्नहनि ब्रह्मणः पृष्ठस्तोत्रनिवर्त्तकं साम दर्शयति।

**अभिनिधनं कारवम्भवति ॥ ४ ॥**

अभीति निधनं यस्य तादृशं कण्वदृष्टं साम वयं घत्वेति तृचे गातव्यं ॥ ४ ॥

तदेतद्भ्रातृव्यहननहेतुरिति स्तौति।

अभिनिधनेन वा इन्द्रो वृत्राय वज्रं प्राहरत्तम-स्तृणुत स्तृणुते भ्रातृव्यमभिनिधनेन तुष्टुवानः ॥ ५ ॥

अभिनिधनेनानेन साम्ना पुरा इन्द्रो वृत्रं हन्तुं वज्रं प्राहरत् प्राक्षिप्तवान् प्राहृत्य च तं वृत्रमस्तृणुत अवधीत् स्तृञ हिंसायामिति धातुः शिष्टं स्पष्टं ॥ ५ ॥

अथाच्छावाकस्तोत्रनिवर्त्तकं साम दर्शयति।

वैखानसं भवति ॥ ६ ॥

वैखानसाख्यं साम नकिष्टं कर्मणा नशदिति तृचे गातव्यं ॥ ६ ॥

अथैतत् सर्वकामप्राप्तिसाधनमिति विवक्षुराख्यायिकामाह।

वैखानसा वा ऋषय इन्द्रस्य प्रिया आसᳪस्तान्-रहस्युर्देवमलिम्लुङ्मुनिमरणेऽमारयत्ते देवा अब्रुवन् क्वर्षयोऽभूवन्निति तान् प्रैषमैच्छंस्तान्नाविन्दत्स इमा-न् लोकानेकधारेणापुनात्तान्मुनिमरणेऽविन्दत्तानेतेन साम्ना समैरयत्तद्वाव स तर्ह्यकामयत कामसनि साम वैखानसं काममेवैतेनावरुन्धे स्तोमः ॥ ७ ॥

वैखानसा विखनसः पुत्राः ऋषयः इन्द्रस्य प्रिया आसन् इष्टतमा अभवन् तानृषीन् रहस्युर्नाम देवमलिम्लुङ् देवान् मालिन्यं मोचयति प्रापयतीति देवमलिम एवं विधोऽसुरः मुनिमरणे मुनयो म्रियन्तेऽस्मिन्निति मुनिमरणं स्थानविशेषः अधिकरणे ल्युट् तस्मिन् स्थाने अमारयत् अवधीत् एवं हतेषु वैखानसेषु तमिन्द्रं देवा अब्रुवन् ते च प्रिया ऋषयः क्व कुत्राभूवन्निति स इन्द्रस्तानृषीन् प्रैषमैपछत् अन्विष्टवानित्यर्थः सच गवेषयमाणस्तान् क्वचिदपि नाविन्दन्नालभत स इमान् पृथिव्यादीन् सर्व्वानेकधारेण एकोद्योगेनापुनाद्‌शोधयत् एवं सर्वान् लोकान् शोधयित्वा तानृषीन् मुनिमरणे स्थानेऽविन्दत् हतानलभत अपश्यदित्यर्थः स इन्द्र एतेन साम्ना तान् समैरयत् पुनः प्राणैस्तान् समयोजयत् यस्मादेवं वैखानसानां सम्बन्धः तस्माद्वैखानसमिति साम्नः संज्ञा जाता तत् खलु समीरणं तस्मिन् काले सोऽकामयत यस्मादेवं कामितार्थमसाधयत् तस्माद्वैखानसं साम कामसनि कामप्रदं तस्मात्सर्व्वमेव काम्यमानं फलं तेन साम्ना लभते एतेष्वपि चतुर्षु पृष्ठस्तोत्रेषु पूर्व्वोक्तएव चतुर्व्विंशस्तोमः कार्य्यः ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे चतर्दशाध्यायस्य

चतुर्थः खण्डः।

---

अथ पञ्चमः खण्डः ।

अथार्भवपवमानस्य प्रथमं प्रतिपत्तृचं दर्शयति ।

**यस्ते मदो वरेण्य इति गायत्री भवति मद्वद्वै रसवत् तृतीयसवनं मदमेव तद्रसं दधाति ॥ १ ॥**

यस्ते मदो वरेण्य इति गायत्री आर्भवपवमानस्य प्रतिपद्भवति गायत्र्यः प्रथमस्तृचो भवतीत्यर्थः शिष्टं पूर्व्ववद्व्याख्येयं ॥ १ ॥

अथ तृचान्तरं विधत्ते ।

**एषस्यधारयासुत इति ककुभः सत्योऽभ्यारम्भेण त्रिष्टुभः ॥ २ ॥**

एषस्यधारयेति तिस्रः स्तोत्रीयाः कार्य्याः ताः ककुभः अभ्यस्ताक्षरौ अष्टाक्षरौ द्वौ पादौ मध्ये द्वादशाक्षरः ताः ककुभ ईदृश्यः सत्यो भवन्ति: गीतिसमयेऽभ्यारम्भेण त्रिष्टुभो भवन्ति प्रथमपादस्य द्वितीयपादे अव्यावारेभिः पवते मदिन्तमः इत्यादेः अष्टाक्षरस्य तु पुनरारभ्यमाणत्वात् एवमभ्यस्यमानौ द्वावष्टाक्षरौ मिलित्वा षोडशाक्षराणि सम्पद्यन्ते अध्ययनतस्तु अष्टाविंशत्यक्षरेति मिलित्वा चतुश्चत्वारिंशदक्षरा एकैका त्रिष्टुब् भवति ॥२॥

एतत्त्रिष्टुप्सम्पादनं पूर्व्ववदङ्गभक्तभ्वनार्थमित्याह ।

**अपच्छिन्नमिव वा एष यत् ज्यायसः स्तोमात्कनी-**

यांश्च स्तोममुपयन्ति यदेता अन्त्यारम्भेषा त्रिष्टुभो भवन्त्यह्न एव प्रत्युत्तम्भाय ॥ ३ ॥

व्याख्यातमेतत् पूर्व्वस्मिन् खण्डे ॥ ३ ॥

अथ तृचान्तरं विधत्ते ।

सखाय आनिषीदतेति वालखिल्या वालखिल्यावेतौ तृचौ षष्ठे चाहनि सप्तमे च यदेतौ वालखिल्यौ तृचौ भवतोऽह्नोरेव व्यतिषङ्गायाव्यवस्रंसाय सन्तत्यै ॥ ४ ॥

सखाय आनिषीदतेत्याद्यास्तिस्रो वालखिल्याः वालखिल्यसम्बन्धिन्यः ऋचो भवन्ति शिष्टं परिस्थानो गरिष्ठा इति परिषत्यो गायत्र्यो भवन्तीति खण्डे व्याख्यातं ॥ ४ ॥

अथान्यं तृचं विधत्ते ।

पुरोजिती वो अन्धस इति विराडन्नं विराडन्नाद्यस्यावरुध्यै ॥ ५ ॥

पुरोजिती वो अन्धसइत्याद्यास्तिस्रः स्तोत्रीया भवन्ति तासु प्रथमानुष्टुबुत्तरे गायत्र्यौ संहृत्य गणनायां दशपादा भवन्ति सा एका विराट् दशाक्षरा विराडिति श्रुतेः तासामक्षरपरिगणनायामशीत्यक्षराणि सम्पद्यन्ते सा अन्या विराट् आम्नातं हि

पुरा पद्यया विराडक्षर्य्यीन्यास्मात् लोकात्पद्यया विराजान्नाद्य-मवरुन्ध इत्येत देवाभिप्रेत्य पुरोजितो वो अन्धस इति सिद्धवद्-व्यवहारः गतमन्यत् ॥ ५ ॥

अथ तृचान्तरं दर्शयति ।

प्रवाज्य क्षारित्यक्षरपङ्क्तिः स्तोमानां प्रभूतिः ॥६

प्रवाज्यक्षारित्यादिकोऽक्षरपङ्क्तिछन्दस्कस्तृचो भवति अष्टा-क्षरैर्हि पञ्चभिः पादैः पङ्क्तिः इयन्तु अक्षरसंख्यया चत्वारिंश-दक्षरा पङ्क्तिः सा च स्तोमानां त्रिवृदादीनां प्रभूतिः प्रभवः उत्प-त्तिस्थानमित्यर्थः त्रिवृदाद्यष्टाचत्वारिंशान्तेषु स्तोमेषु नवाद्य-ष्टाचत्वारिंशदन्ता या सङ्ख्या सा सर्व्वाक्षरपङ्क्तावन्तर्भूतेति प्रभू-तित्वं ॥ ६ ॥

गायत्र्यादीनां छन्दसां षडहे विनियुक्तत्वात् तैः साध्यानां छन्दोमानां यद्गतसारत्वमाशङ्क्यते तदृथनेनाक्षरपङ्क्तिछन्दसा समाधीयत इत्यत आह ।

अथो एतद्ध्वैतर्हि छन्दो यातयाम यदक्षर-पङ्क्तिस्तेन छन्दोमा अयातयामानः क्रियन्ते ॥ ७ ॥

अथो अपि एतर्हीतस्मिन् सप्तमस्याह्नः प्रयोगकाले एतदेव खलु छन्दः अयातयाम अगतसारं यदक्षरपङ्क्त्याख्यं छन्दः

पूर्वेष्वहःसु अविनियुक्तत्वात् तेनायातयामाक्षरपङ्क्तिछन्दसा छन्दोमाः अयातयामानः यातयामत्वदोषरहिताः सारयुक्ताः क्रियन्ते ॥ ७ ॥

एतदेव प्रश्नप्रत्युक्तिभ्यां विवृणोति ।

ब्रह्मवादिनो वदन्ति यत् षडहे स्तोमाश्छन्दाᳪ-स्याप्यन्ते किं छन्दसश्छन्दोमा इत्येतच्छन्दसो यदेता अक्षरपङ्क्तय इति ब्रूयात् ॥ ८ ॥

ब्रह्मवादिनो वेदार्थमीमांसका आहुः षडहे समाप्यमाने त्रिवृदादयः स्तोमाः गायत्र्यादीनि छन्दांसि समाप्यन्ते यद्येवं तावत् छन्दोमाश्छन्दोमाख्यानि त्रीण्यहानि किं छन्दसः केन छन्दसा निष्पाद्या इति एवं ब्रह्मवादिभिः पृष्टे तस्योत्तरं ब्रूयात् यदेता अक्षरपङ्क्तयः अक्षरपङ्क्तिछन्दस्काः प्रवाज्यचारित्याद्याः एतच्छन्दस एतदक्षरपङ्क्तिछन्दोयेषां तथाविधा छन्दोमा इति अक्षरपङ्क्तिरेव पूर्वेष्वहःसु विनियुक्तत्वात् छन्दोमानां सारत्वा-पादकमसाधारणं छन्द इत्यर्थः ॥ ८ ॥

अथ तृचस्यान्तरं विधत्ते ।

ये सोमासः परावतीति परावतमिव वा एतर्हि यज्ञोगतस्तमेवैतेनान्विच्छन्ति ॥ ९ ॥

ये सोमासः परावतीति स्तौति परावतमिव वै एतर्हि यज्ञो

गतः प्रायणीयातिरात्रमारभ्य एतदन्तानां सप्तानामह्नां गतत्वात् यथाध्वगस्य पुरुषस्यातीतदिवसे अध्ये मार्गेऽवस्थिता महीरुहाद्यादूरस्था भवन्ति एवमेव सप्तममहरनुतिष्ठतो यजमानस्यातीतानि पूर्व्वाण्यहानि विप्रकृष्टानि भवन्तीत्यर्थः तमेव दूरगतं यज्ञं एतेन दूरवाचिवच्छब्दयुक्तेन तृचेनान्विच्छन्ति गवेषयन्ति ॥ ८ ॥

ननु प्रकृतावार्षेवस्यान्यस्तृचो जागतः कथं तत्र ये सोमास इत्याद्या गायत्र्यः सत्यः जागतं गच्छन्ति इत्याशङ्क्य लक्षणया जगतीत्वात् सङ्गतिरित्याह ।

गायत्र्यः सत्यो जगत्यो रूपेण तस्माज्जगतीनां लोके क्रियन्ते ॥ १० ॥

गतमेतत् ॥ १० ॥

अथ यस्ते मदो वरेण्य इति विहिते तृचे पूर्ववद्गायत्रं साम विधाय तद्दितिकर्त्तव्यताविधायकं ब्राह्मणस्यातिदिशति ।

गायत्रं भवति यदेव गायत्रस्य ब्राह्मणं ॥ ११ ॥

सिद्धमेतत् ॥ ११ ॥

अथास्मिन्नेव तृचे सामान्तरं विधत्ते ।

दद्मणिधनं भवति ॥ १२ ॥

दृत्वायेति दृत्वशब्दो निधनं यस्य तद्दृत्वणिधनं एतदपि साम यस्तेमदइत्येतस्मिंस्तृचे आवृत्ते गातव्यं अथ सूत्रकारेण कल्पकारोक्तसामद्वयमुदाहृत्य स्तोमातिरेकपरिहाराय व्यवस्था दर्शिता सप्तमेऽग्नेरर्कोऽध्यर्द्धेडस्य सोमसाम सौत्वस्य पूर्वयोस्सौत्वसोमसामनी गायत्रस्योत्तरयोरग्नेरर्कस्त्रिष्टुप्विति वेति अयमर्थः यदेतद्दृत्वणिधनाख्यं तस्यैव सौत्वमिति नाम तत्र गायत्रतृचे गीत्वा अग्नेरर्काख्यं अध्यर्द्धेडस्य सोमसाम सौत्वं वेति त्रीणि सामानि यस्तेमद इत्याद्यासु तिसृषु एकर्चानि क्रमेण गातव्यानि अथवा गायत्रमेकस्यां गीत्वा तदुत्तरयोर्सौत्वसोमसामनी गातव्ये अग्नेरर्काख्यं तिसृषु गातव्यमिति अत्र ब्राह्मणे अग्नेरर्कसोमसाम्नोरविधानात् विहितयोरेव गायत्रसौत्वयोस्तृचे गानादेव स्तोमसम्पत्तेः सूत्रकारवचनस्य शाखान्तरीयप्रतीतेर्विकल्पएवमुक्तः ननु उक्तप्रकारेणासमुच्चयः तथा निरालम्बकमता* भगवता पतञ्जलिनोक्तं सप्तमेऽहन्यर्कः क्रताक्रतो भवत्यब्राह्मणविहितत्वादिति ॥ १२ ॥

अथैतद्ब्रह्महेतुत्वेन स्तौति ।

**प्रजापतिः प्रजा असृजत ता अस्मात् सृष्टा अपक्रामन्ताद्वाक्छ्दयꣳस्ताखेतेन साम्ना दृत्वायेत्योजोवीर्य्यमदधाद्यदेतत् साम भवत्योज एव वीर्य्यमात्मन्धत्ते ॥ १३ ॥**

---

* असमीचीनः पाठः ।

पुरा प्रजापतिः सर्व्वाः प्रजाः सृष्टवान् ताः सृष्टाः प्रजाः अस्मात्प्रजापतेः सकाशात् अबला बलरहिताः अवस्थातुमशक्ताः सत्यः अच्छदयन् देशान्तरमाद्रवन् अपागच्छन्नित्यर्थः अथ तासु प्रजासु सौच्चेण साम्ना दृचायेति निधनेन बलवाचिना ओजोबलात्मकं वीर्य्यमदधादस्थापयत् तस्मादेतत्साम भवतीति यत् तेन ओजोरूपं वीर्य्यमेवात्मन् आत्मनि तस्मिन् धत्ते धारयति ॥ १३ ॥

अथ तृचान्तरे सामान्तरं विधत्ते।

शार्करं भवति ॥ १४ ॥

शर्करेण दृष्टं साम शार्करं तत् एषस्य.रयासुत इति विहिते तृचे गातव्यं ॥ १४ ॥

अथैतदाख्यायिकया सर्वकामप्राप्तिहेतुरित्यत आह।

इन्द्रꣳ सर्व्वाणि भूतान्यस्तुवन् स शर्करꣳ शिशुमारर्षिमुपेत्याब्रवीत् स्तुहि मेति सोऽपःप्रस्कन्दन्नब्रवीदेतावतोऽहं त्वाꣳ स्तुयामिति तस्मादपां वेगमवेजयत सद्देन इवामन्यत स एतत्सामापश्यत्तेनापोन समाप्नुत तद्वाव सतर्ह्यकामयत कामसनि साम शार्करं काममेवैतेनावरुन्धे ॥ १५ ॥

पुरा खल्विन्द्रं सर्व्वाणि भूतानि भूतजातानि देवर्षिमनुष्य-गन्धर्व्वादीन्यस्तुवन् विविधैः स्तोत्रैरप्रीणयन् स इन्द्रः शर्कराख्यं शिशुमारर्षिं शिशुमारो जलचरः तद्रूपिणमृषिमुपेत्योपगत्य स इन्द्रोऽब्रवीत् मां स्तुहीति स शर्करः अपोजलं प्रस्नान्दन् प्रक्षिपन्नब्रवीत् उक्तवान् प्रस्नान्नास्वप्सु यावन्तो बिन्दवो निष्प-द्यन्ते एतावता एतावत्पर्य्यन्तं अहं त्वां स्तवानीति यस्मादेव-मुक्तवान् तस्मात्तमृषिं अपां वेगसवेजयत् स ऋषि अपां वेगं दृष्ट्वा ततोऽहीनैव मदीया स्तुतिरित्यमन्यत ततस्तत्त्याख्यार्थं प्रय-तमानः स ऋषिरेतत्सामापश्यत् तेन साम्ना स्तुवन्नपः अपां वेगन्न समाश्नुत प्राप्नोत् एतदीया स्तुतिः प्रकीर्य्यमाणा अपोऽप्य-त्यक्रमीदित्यर्थः गतमन्यत् ॥ १५ ॥

अथ तृचान्तरे सामान्तरं विधत्ते।

**प्लवो भवति ॥ १६ ॥**

सखाय आनिषीदतेति वालखिल्यतृचे प्लवाख्यं साम कार्य्यं ॥ १६ ॥

अथैतं द्वादशाहं समुद्रात्मना रूपयन् तस्य पारप्राप्तिसाधन-मेतदिति स्तौति।

**समुद्रं वा एते प्रस्नान्तीत्याहुर्य्ये द्वादशाहमुप-यन्तीति यो वा अप्लवः समुद्रं प्रस्नाति न स तत उदेति यत् प्लवो भवति स्वर्गस्य लोकस्य समष्ट्यै ॥ १७ ॥**

ये यजमानाः द्वादशाहमुपयन्ति उपगच्छन्ति एते समुद्र-मुदधिं प्रस्नान्ति अवगाहन्ते इत्याहुः ब्रह्मवादिनः एवञ्च यः खलु अप्लवः प्लवरहितः अनौकः समुद्रं प्रस्नाति प्रविशति स ततः समुद्रात् नोदेति नोद्गच्छति तत्रैव निमज्जतीत्यर्थः तथा चास्मिन् द्वादशाहाख्ये समुद्रे अवगाहतामपि केनचित् प्लवेन भवितव्यं तस्मादस्मिन् सप्तमेऽहनि प्लवाख्यं साम भवतीति यत् तत् स्वर्गस्य लोकस्य समष्ट्यै प्राप्त्यै भवति द्वादशाहाख्यस्य समु-द्रस्य तरणाय भवतीत्यर्थः ॥ १७ ॥

अथास्य निधनमनूद्य स्तौति।

अतिविश्वानि दुरिता तरेमेति यदेवैषां दुष्टुतं दुःशस्तं तदेतेन तरन्ति * ॥ १८ ॥

अनेन निधनेन दुरितातितरणं प्रतिपाद्यते तथा च एषा-मुद्गातॄणां सम्बन्धि यदेव दुष्टुतं दुःशस्तं अयथास्तवनमयथाशंसनञ्च तदेतेन निधनेनातितरन्ति अतिक्रामन्ति ॥ १८ ॥

अथैतन्निधनसंख्याद्वारा स्तौति।

एकादशाक्षरणिधनो भवत्येकादशाक्षरा त्रिष्टुबो-जोवीर्य्यं त्रिष्टुबोजस्येव वीर्य्ये प्रतितिष्ठति ॥ १६ ॥

अतिविश्वानीत्याद्यानि एकादशाक्षराणि निधनानि यस्य

* अयं मन्त्रो मूलपुस्तकद्वयेऽपि नास्ति।

तादृशः सन्नो भवति छन्दसाम्मध्ये त्रिष्टुप् छन्दः एकादशाक्षरा सा च त्रिष्टुबोजो वीर्य्यरूपा एवं परम्परया संख्याद्वारा ओजस्येव ओजो बलं तद्रूप एव वीर्य्ये यजमानः प्रतिष्ठितो भवति ॥ १९ ॥

अथ तृचान्तरं सामान्तरं विधाय तद्ब्राह्मणञ्चातिदिशति।

गौरीवितं भवति यदेव गौरीवितस्य ब्राह्मणं ॥२०

पुरोजिती वो अन्धस इति तृचे गौरीविताख्यं साम गातव्यं अस्य गौरीवितस्य यद्ब्राह्मणं प्रागाम्नातं गौरीवितिर्वा एतच्छाक्त्यो ब्रह्मणोऽतिरिक्तमपश्यदिति तदत्रापि द्रष्टव्यं ॥ २० ॥

अथास्मिन्नेव तृचे सामान्तरं विधत्ते ।

कार्त्तयशं भवति ॥ २१ ॥

कृतयशेन दृष्टं साम कार्त्तयशं एतदाख्यं साम पुरोजिती इत्यस्मिन् तृचे गातव्यं अस्मिन् साम्नि अर्द्धर्चावसानेषु उपाध्ययनार्थं क्रियते ॥ २१ ॥

तस्य स्थाने अन्यं निधनं विधत्ते ।

ह्वीति निधनमुपयन्ति पाप्मनोऽपहत्यै ॥ २२॥

उपास्थाने ह्वी इति निधनमुपयन्त्युपगच्छन्ति तत्र पाप्मनः पापस्यापहत्यै पापहननाय विनाशनाय भवति ह्वी इत्यस्य हन्ति धातुनिष्पन्नत्वात् ॥ २२ ॥

अथ स्तोतुः फलमाह ।

अपपाप्मानꣳ हते कार्त्तयशेन तुष्टुवानः ॥ २३॥

स्पष्टोऽर्थः ॥ २३ ॥

अथान्यस्मिंस्तृचे सामान्तरं विधत्ते ।

सौहविषं भवति ॥ २४ ॥

सुहविषा दृष्टं साम सौहविषं तत् प्रवाज्यवारित्यस्मिन् तृचे गातव्यं ॥ २४ ॥

तदेतत् स्तौति ।

सुहविर्वा एतेनाङ्गिरसोऽञ्जसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्यानुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः ॥ २५ ॥

सुहविर्नामाङ्गिरसः अङ्गिरोगोत्रऋषिः एतेन साम्ना साधनेनाञ्जसा अनायासेन स्वर्गं लोकमजानीत शिष्टं स्पष्टं ॥ २५ ॥

अथैतदाधारभूतानामृचां छन्दोद्वारेण तुष्टपुराह ।

ब्रह्मवादिनो वदन्ति यत् षडहे स्तोमाश्छन्दाꣳसि आप्यन्ते किं छन्दसश्छन्दोमा इति पुरुषश्छन्दस इति ब्रूयात्पुरुषो वै पाङ्क्तः पुरुषो द्विपदा छन्दोमानामयातयामतायै ॥ २६ ॥

ब्रह्मवादिनो वेदार्थचिन्तकाः वदन्ति चोदयन्ति यद्यस्मात् षड़हे पृष्ठाख्ये समाप्यमाने त्वचि त्रिवृदादयस्तोमा यस्तेमद इति गायत्र्यादीनि छन्दांसि च समाप्यन्ते तस्माद्विनिक्तस्यान्यछन्दसोऽभावाद्विनियुक्तानाञ्च गतसारत्वाञ्च छन्दोमाः किं छन्दसः केन छन्दसा निष्पाद्या इति एवं ब्रह्मवादिभिश्चोदिते पुरुषच्छन्दसञ्छन्दोमा इत्यभिज्ञ उत्तरं ब्रूयात् किं तत् पुरुषछन्दस इति तदुच्यते तत् मांसत्वाव्वस्थिमज्जारेत इति पञ्चभिर्धातुभिरुपेतत्वात् पुरुषः पाङ्क्तः पङ्क्तिसम्बद्धः साहि पञ्चभिः पादैरुपेतत्वात् पञ्चसंख्यावती तस्मात् पङ्क्तिस्तावदेकं पुरुषछन्दस्तथा द्विपदापि पुरुषात्मकः पादद्वयसामान्यात् एवं विधस्य पुरुषछन्दसः पूर्व्वमेव नियुक्तः पुरुषच्छन्द इति तदुच्यते तत् मांसत्वाव्वस्थिमज्जारेत इति पञ्चभिर्धातुभिरुपेतत्वात् तेन सारवत्त्वात् तच्छन्दस्के प्रवर्त्तिन्निति त्वचे गीयमानं साम छन्दोमानां त्रयाणामयातयामतायै अगतसारतायै भवति ॥ २६ ॥

अथ त्वचान्तरे अन्यत् साम विधत्ते ।

जराबोधीयं भवत्यन्नाद्यस्यावरुध्यै ॥ २७ ॥

जराबोधीयं जराशब्दयुक्तायां योन्यामुत्पन्नं साम जराबोधीयं तत् ये सोमासः परावतीत्यार्भवस्यान्तिमे त्वचे गातव्यं तत्रान्नाद्यस्यादनीयस्यान्नस्य अवरुध्यै अवरोधनाय लाभाय भवति ॥ २७ ॥

एतदेव व्याचष्टे ।

अन्नं वै जराबोधीयं मुखं गायत्री मुख एव तदन्नाद्यं धत्तेऽन्नमत्ति ॥ २८ ॥

यदेतज्जराबोधीयं साम तदन्नं वै जीर्य्यमाणावस्थायां अनेन हि बोधयत्यादीयते येषां गायत्री ये सोमासः परावतीत्याद्या तत् मुखं प्रजापतेर्मुखाद्धि सा पूर्व्वं इष्यते तथा च गायत्रां जराबोधीयस्य गानात् मुखे आस्य एव तत् अन्नाद्यं धारयति यस्मादेवं तस्मादेतेन साम्ना स्तुवन्नन्नमत्ति लब्धान्नः सन् भोक्तृत्वं लभत इत्यर्थः ॥ २८ ॥

एतद्वेदनफलमाह ।

अन्नादो भवति य एवं वेद ॥ २९ ॥

स्पष्टोऽर्थः ॥ २९ ॥

अथैतद्गायत्रीषु स्तवनमनूद्य प्रकारान्तरेण स्तौति ।

गायत्रीषु स्तुवन्ति प्रतिष्ठायै ब्रह्मवर्च्चसाय येनैव प्राणेन प्रयन्ति तमभ्युद्यन्ति ॥ ३० ॥

सिद्धमेतत् ॥ ३० ॥

जराबोधीयस्यावसाने औ इडेत्याम्नायते तमनूद्य स्तुवन् स्तोत्रमुपसंहरति ।

इडान्ताः पावमाना भवन्ति पशवो वा इडाः पश-

वश्छन्दोमाः पशुष्वेव तत्पशून्दधाति स्तोमः ॥ ३१ ॥

पवमानार्भवावसाने जराबोधीयेन प्रयन्ति सिद्धमेतत् जराबोधीयगाने पवमानान्ताः पवमानाः स्तोत्राणि इडान्ताः इडावसानानि भवन्ति किं ततो भवति उच्यते पशवो वै इडारूपाः पशवः खलु छन्दोमाश्च पशवश्च तत्तथा सति पशुष्वेव पशून्दधाति अभिवृद्ध्यर्थं एवं गायत्रादिषु जराबोधीयान्तेष्वष्टसु सामसु तृचे गीयमानेषु चतुर्विंशतिः स्तोत्रीया भवन्ति तदात्मकश्चतुर्विंशः स्तोमोऽस्यार्भवपवमानस्य कार्य्य इत्यर्थः ॥ ३१ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्दशाध्यायस्य

पञ्चमः खण्डः।

---

अथ षष्ठः खण्डः।

अथ प्राकृतमेवाग्निष्टोममभिप्रेत्य उपरितनानामुक्थस्तोत्राणां प्रथमस्य स्तोत्रीयं तृचमाह।

आ ते वत्सो मनो यमदित्यपच्छिदिव वा एतद्यज्ञकाण्डं यदुक्थानि यदेति सन्तोमत्वायैव ॥ १ ॥

उक्थानि स्तोत्राणीति यत् एतत् यज्ञकाण्डं यज्ञभागः अपच्छिदिव वै अपछिन्नमिव भग्नमिव भवति तत्र प्रथमे उक्थ स्तोत्रे आ ते वत्स इति अयं स्तोत्रीयस्तृचो भवति इति आ इति

योऽयमुपसर्गः आभिमुख्यवाची आते वत्स इत्यादिकः सोऽयमुक्थानां सलोमत्वाय भवति पूर्वैः स्तोत्रैः सलोम्याय सन्तानाय भवतीत्यर्थः ॥ १ ॥

अथ द्वितीयस्योक्थस्य स्तोत्रीयं तृचं दर्शयति।

त्वन्न इन्द्राभरेति पूर्णाः ककुभः ॥ २ ॥

त्वन्न इन्द्रेत्याद्याः पूर्णाः अक्षरैकन्यूनाः ककुभः ककुप्छन्दस्काः ब्रह्मणउक्थस्य स्तोत्रीया भवन्ति अभितोऽष्टाक्षरौ पादौ मध्ये द्वादशाक्षर इति ककुभो लक्षणं ॥ १ ॥

अथैतासां पूर्णत्वं कनीयस्स्तोमस्य करणे अह्नो यत् अपभ्रंशनं तत्परिहारार्थमिति स्तौति।

अपभ्रᳪश इव वा एष यज्ज्यायसः स्तोमात्कनीयांसᳪ स्तोममुपयन्ति यदेताः पूर्णाः ककुभो भवन्त्यनपभ्रᳪशाय ॥ ३ ॥

सिद्धमेतत् ॥ २ ॥

अथ तृतीयस्योक्थस्य स्तोत्रीयं तृचं दर्शयति।

यदिन्द्र चित्रं मइह नास्ति त्वादातमद्रिवो राधस्तन्नोविदद्वस उभया हस्त्याभरेति राद्धिमेवैतेनावरुन्धे ॥ ४ ॥

यदिन्द्र चित्रेति तृचः अच्छावाकोक्थस्य स्तोत्रीयः इह नास्तीत्यादेरनुवादस्तुत्यर्थः तस्यायमर्थः हे इन्द्र चित्रं चायनीयं मे मम इहास्मिन्नेव स्थाने यद्धनन्नास्ति त्वादातन्त्वया दातव्यं हे अद्रिवो वज्रिन् हे विद्द्वसो लब्धधनेन्द्र तद्राधोधनं उभाभ्यां हस्ताभ्यां मह्यमाहरेति एवं राधसः प्राप्तेः प्रतिपाद्यत्वात् एतेन स्तुवन् रयिं सम्पद्विमेवावरुन्धे यजमानो लभते ॥ ४ ॥

अथ प्रथमोक्थस्य साम विधत्ते ।

**वात्सम्भवति ॥ ५ ॥**

वत्सेन दृष्टं साम वात्सं तदा तद्वात्सं इति तृचे गातव्यं ॥५॥

तथैतदाख्यायिकया सर्व्वकामप्राप्तिसाधनमिति स्तौति ।

**वत्सश्च वै मेधातिथिश्च काण्वावास्तां तं वत्सं मेधातिथिराक्रोशदब्राह्मणोऽसि शूद्रापुत्र इति सोऽब्रवीदृतेनाग्निं व्ययाव यतरो नौ ब्रह्मीयानिति वात्सेन वत्सो व्यैन्मैधातिथेन मेधातिथिस्तस्य न लोम च नौषत्तद्वाव स तर्ह्यकामयत कामसनि साम वात्सं काममेवैतेनावरुन्धे ॥ ६ ॥**

वत्सश्च मेधातिथिश्च इमावृषी काण्वौ कण्वगोत्रौ आस्तां पुरा किलाभवतान्तं वत्सं ऋषिं मेधातिथिराक्रोशत् अश्लीलवचः

वाचा पर्य्यवदत् हे वत्स त्वम् अब्राह्मणो ब्राह्मण्यरहितोऽसि शूद्रापुत्रः शूद्रायाः पुत्रोऽशूद्रपुत्रोऽपि शूद्रापुत्र इत्याक्रोश्यते षष्ठ्या आक्रोश इति विहितस्य लुकः पुत्रेऽन्यतरस्यामिति विकल्पनादभाव एवमाक्रुश्यमानः स वत्सोऽब्रवीत् ऋतेन सत्यभूतेन मन्त्रेणाग्निं व्ययाव आवां विशेषेण गच्छावः प्रविशावेत्यर्थः नावावयोर्मध्ये यतरो यो ब्रह्मीयान् ब्रह्मिष्ठ इति निर्णेतुं एवमुक्त्वा वत्सो वात्सेनानेन साम्ना व्यैत् व्यगच्छदग्निं प्राविशत् मैधातिथेन साम्ना मेधातिथिः तस्य वत्सस्य लोम च नौषत् अग्निर्नादहत् उषदाह इति धातुः तर्हि तस्मिन् समये तत् अदहनं स खलु ऋषिः अकामयत तस्माद्वात्सं साम कामसदं गतमन्यत् ॥ ६ ॥

अथ द्वितीयस्योकृयस्य साम विधत्ते ।

सौश्रवसं भवति ॥ ७ ॥

सुश्रवसः सम्बन्धि सौश्रवसं एतदाख्यं साम तन्न इन्द्राभरेति तृचे गातव्यं ॥ ७ ॥

इदमपि सर्वकामप्राप्तिसाधनमिति प्रशंसितुमाख्यायिकामाह ।

उपगुर्वै सौश्रवसः कुत्सस्यौरवस्य पुरोहित आसीत् स कुत्सः पर्य्यशपद्य इन्द्रं यजाता इति स इन्द्रः सुश्रवसमुपेत्याब्रवीद्यजस्व माश्मनायामिवा

इति तमयजत स इन्द्रः पुरोडाशहस्तः कुत्समुपेत्या-
ब्रवीदयजत मा क्व ते परिशप्तमभूदिति कस्त्वा यष्टेति
सुश्रवा इति स कुत्स औरव उपागाः सौश्रवसस्योद्गा-
यत औदुम्बर्यां शिरोऽच्छिनत्स सुश्रवा इन्द्रमब्रवो-
त्त्वत्तनाद्वै मेदमीदृगुपागादिति तमेतेन साम्ना समै-
रयत्तद्वाव सतत्स्व्कामयत कामसनि साम सौश्रवसं
काममेवैतेनावरुन्धे ॥ ८ ॥

सौश्रवसः सुश्रवसः पुत्र उपगुर्नाम ऋषिः औरवस्य उरु-
पुत्रस्य कुत्सस्य राजर्षेः पुरोहित आसीत् स च कुत्सः प्रद्वेषेण
पर्य्यशपत् यो यजमान इन्द्रं यजाता इति यजेत् अपरिपूर्णार्थत्वात्
तस्य शिरश्छिन्द्यादिति अध्याहारेण योज्यं एवं शापे कृते साम-
र्थ्यप्रकटनाय सः इन्द्रः पुरोडाशहस्तः सुश्रवसा दत्तं पुरोडाशं
हस्ते धारयन् कुत्समुपगम्याब्रवीत् मामयजत इष्टवान् तव क्व
परिशप्तः परिशापः कुत्स अभूदिति एवमिन्द्रेणाधिक्षिप्ते अत्र
पुनरब्रवीत् को यजमानः त्वामिष्टवानिति सुश्रवा इतीन्द्रोऽब्र-
वीत् स औरवः कुत्सः सौश्रवसस्य सुश्रवसः पुत्रस्य उपगोः
उद्गायतः सदस्युद्गानं कुर्वतः शिरः औदुम्बर्यां सदसि निपातया
औदुम्बर्य्याख्यया स्थूणया अच्छिनत् छिन्नशान् स सुश्रवा इन्द्रमब्र-
वीत् त्वत्तनात् यजमानात् खलु ईदृगेवविधमिदमप्राप्नोदिति तां
छिन्नं सौश्रवसं एतेन साम्ना समैरयत् सङ्गतावयवमकरोत ॥ ८ ॥

अथ तृतीयस्तोत्रियस्य साम विधत्ते ।

वौङ्कं भवति ॥ ९ ॥

वौङ्काख्यं साम यदिन्द्रचित्रेति तृचे गातव्यं ॥ ९ ॥

तदेतदाख्यायिकया पूर्ववत् स्तौति ।

च्यवनो वै दाधीचोऽश्विनोः प्रिय आसीत्सोऽजीर्य्यत्समेतेन साम्नाप्सु व्यैङ्कयतान्तं पुनर्य्युवानमकुरुतां तद्वाव तौ तर्ह्यकामयेतां कामसनि साम वौङ्कं काममेवैतेनावरुन्धे ॥ १० ॥

दाधीचो दधीचः पुत्रः च्यवनो नाम ऋषिः अश्विनोरश्विदेवतयोः प्रिय इष्टतमः स्तोतासीत् स च्यवनोऽजीर्य्यत् जीर्णावयवोऽभूत् तं जीर्णमेतेन वौङ्केन साम्ना अप्सूदकेषु व्यैङ्कयतां अश्विनौ व्यचलयतां अस्रजीतामित्यर्थः ततस्तं पुनर्युवानमकुरुतां यौवनावस्थाः प्रापयतां शिष्टं सिद्धं ॥ १० ॥

अथ पूर्ववदेषूक्थ्येषु स्तोत्रीयेषु स्तोमक्लृप्तिं विधत्ते।

चतुर्व्विंशश एव स्तोमो भवति तेजसे ब्रह्मवर्च्चसाय ॥ ११ ॥

चतुर्विंशतिभिः स्तोत्रीयाभिर्न्निष्पाद्यस्तोमश्चतुर्विंश एवोक्थानां स्तोमो भवति स चतुर्विंशतिसंख्याद्वारा गायत्रीसम्ब-

न्वात् गायत्र्याश्च अग्निना सहोत्पत्तेः तेजसे ब्रह्मवर्चसाय भवति तेजः शरीरकान्तिः ब्रह्मवर्चसं श्रुताध्ययनादिजन्यं ब्राह्मं तेजः ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्दशाध्यायस्य

षष्ठः खण्डः ।

---

अथ सप्तमः खण्डः ।

एवं द्वादशरात्रिकस्य सप्तमस्याह्नः स्तोमक्लृप्तिरुक्ता अथाष्टमस्याह्नः स्तोमक्लृप्तिरध्यायपरिसमाप्तेः प्रतिपाद्यते तत्र बहिष्पवमानस्य स्तोत्रीयाख्यं प्रथमं तृचं दर्शयति ।

**शिशुं जज्ञानꣳ हर्य्यतं मृजन्तीत्यष्टमस्याह्नः प्रतिपद्भवति ॥ १ ॥**

प्रतिपद्यते आरभ्यतेऽनयेति प्रतिपत् सा चाष्टमस्य चतुश्चत्वारिंशस्तोमकस्याह्नः शिशुं जज्ञानमित्येषा भवति इयमादिको बहिष्पवमाने प्रथमस्तृच इत्यर्थः तृचसूक्तानामादिग्रहणेन विधिरनादेश इति परिभाषितत्वात् ॥ १ ॥

अथास्य तृचस्याष्टमेऽहनि सान्वयं स्तौति ।

**शिशुरिव वा एष सप्तमेनाह्ना जायते तमष्टमेनाह्ना मृजन्ति ॥ २ ॥**

एष: स्तोम: शिशुरिव वै बाल: पुत्र इव सोऽयं एष: सप्तसे-नानुष्ठितेनाह्ना जायते उत्पद्यते तं जातं शिशुं अष्टसंख्यापूरणो-नानेन क्रियमाणेनाह्ना मृजन्ति हस्तै: संमृजन्ति जन्मनि हि शिशु: उल्वेन प्रावृतो मलाश्लिष्टो भवति स यथा उष्णोदकादिना प्रक्षाल्य संमृजते तद्वत् तस्मादष्टमेऽहनि शिशुञ्जज्ञानं हर्य्यतं मृजन्तीति शिशुजन्ममार्ज्जनलिङ्गवांस्तृच: संगत इत्यर्थ: ॥ २ ॥

अथास्य च स्तोत्रस्य स्तोत्रीयसंख्यामनूद्य स्तौति ।

स्तोत्रीयस्तृचो भवति प्राणापानानामवरुध्यै ॥ ३ ॥

गतमेतत् ॥ ३ ॥

त्रिवृदादीनां स्तोमानां गायत्र्यादिछन्दसां षडहे समाप्त-त्वात् विनियुक्तै: स्तोत्रैरेव छन्दोमानां त्रयाणामह्नां कल्पेन यातयामत्वं स्यादित्यत आह ।

हरिवत्यो भवन्ति छन्दोमानामयातयामतायै ॥ ४

हरिवत्यो हरिशब्दयुक्ता: शिशुञ्जज्ञानमित्याद्या: गतम-न्यत् ॥ ४ ॥

अथ स्तोत्रीयतृचानन्तरं क्रमेण नवर्चत्रितयं विधत्ते ।

नवर्चा भवन्ति ॥ ५ ॥

नवानामृचां समाहारो नवर्च: एते सोमा अभीत्येक:

सोमः पुनान इत्येकः सोमा असृग्रमिन्दव इत्यपरः एते द्वे नवर्चाः स्तोत्रीयाः क्रमेण भवन्ति ॥ ५ ॥

अतस्त्यां नवसंख्यां स्तौति।

**नव वै प्राणाः पशवश्छन्दोमाः पशुष्वेव तत्प्राणा-न्दधाति ॥ ६ ॥**

सप्त शीर्षण्याः प्राणाः द्वावर्वाञ्चौ एवं पुरुषे नवैव खलु प्राणा भवन्ति छन्दोभिर्गीयमानाः सप्तमादीनि त्रीण्यहानि पशवः एवं तत्तथा सति नवर्चानां करणेन पशुष्वेव नवसंख्यान् प्राणान् दधाति ॥ ६ ॥

अथ पञ्चर्चं विधाय स्तौति।

**पञ्चर्चो भवति पञ्चपदा पङ्क्तिः पाङ्क्तमन्न-मन्नाद्यस्यावरुध्यै ॥ ७ ॥**

उत्ते शुष्मास इत्याद्याः पञ्चर्चः पञ्चानामृचां समाहारो भवति अनया च पञ्चसंख्यया अन्नप्राप्तिमुपपादयति पञ्चपदा पङ्क्तिरित्यादिना ॥ ७ ॥

अस्मिन् पञ्चर्चे विद्यमानं किञ्चिल्लिङ्गं प्रदर्श्य अष्टमेनाह्ना सङ्गतिमाह।

**वाणवान् भवत्यन्तो वै वाणोऽन्त एतदष्टममहा-मन्त एव तदन्तेन स्तुवते प्रतिष्ठायै ॥ ८ ॥**

पूर्वोक्तः पञ्चर्चो वाणशब्दयुक्तो भवति वाणः शततन्त्रीको वीणाविशेषः सवान्तो वै वाद्यानां पर्य्यवसानभूमिरेव वाणस्य वादने वा परिमितिः तद्वाचकः शब्दो अस्मिन् पञ्चर्चे विधत्ते अह्नां पूर्वमुक्तमेतदष्टमसहरन्तस्तत्तथा सति अन्तएव अन्तेन स्तुवन् इति उद्गातारः अन्तसंस्तुतेऽहनि अन्तसंस्तुतवाणशब्द-युक्तस्य पञ्चर्चस्य करणं प्रतिष्ठायै यजमानस्य प्रतिष्ठानाय भवति अन्तत्वसाम्येन संश्लिष्टत्वात् ॥ ८ ॥

अथ तृचत्रयं विधत्ते ।

त्रयस्तृचा भवन्ति प्राणापानानां सन्तत्यै ॥ ९ ॥

तिसृणामृचां समाहारस्तृचः पञ्चर्चानन्तरं अयावीती परि अपन्नन् पवते अयापवस्व धारयेत्याद्यास्त्रयस्तृचा भवन्ति तथा च नवसंख्योपपत्तेः प्राणापानानामुपरि वर्त्तमानाश्च श्रोत्राद्याः प्राणा अधोवर्त्तमानौ गुह्योपस्थावपानौ संहतानामेषामन्नवानां प्राणापानानां सन्तत्यै सन्तानाय भवन्ति ॥ ९ ॥

अथास्य बहिष्पवमानस्तोत्रस्य स्तोमं विधाय स्तौति ।

चतुश्चत्वारिंशः एव स्तोमो भवत्योजस्येव तद्वीर्य्ये प्रतितिष्ठत्योजोवीर्य्यं त्रिष्टुप् ॥ १० ॥

प्रथमतः एकस्तृचः ततस्त्रयोनवर्चाः अथैकः पञ्चर्चः ततस्त्र-यस्तृचा इत्येवं क्रमेण प्रयुज्यमानाश्चतुश्चत्वारिंशतिः स्तोत्रीया

भवन्ति ततः संख्यात्मकश्चतुश्चत्वारिंशस्तोम एवास्य बहिष्पवमानस्य भवति तत्तेन स्तोमेन ओजोरूप एव वीर्य्ये प्रतितिष्ठति यजमानः प्रतिष्ठितो भवति कुत एतत् यस्मादोजोवीर्य्यात्मकं त्रिष्टुप्छन्दः तद्वीर्यं यतः प्रजापतेरङ्गादुत्पन्ना सा चतुश्चत्वारिंशदक्षरा भवति तत् संख्यया मीयमानश्चतुश्चत्वारिंशस्तोम ओजोवीर्यहेतुरित्यर्थः॥ १०॥

इति ताण्ड्यमहाब्राह्मणे चतुर्दशाध्यायस्य

सप्तमः खण्डः।

---

अथ अष्टमः खण्डः।

अथास्मिन्नष्टमेऽहनि प्रथममाज्यस्तोत्रं दर्शयति।

**अग्निं वो देवमग्निभिः सजोषा इत्याग्नेयमाज्यं भवति॥ १॥**

अग्निं वोदेवमिति तृचः आग्नेयमग्निदेवत्यं प्रथममाज्यस्तोत्रं भवति॥ १॥

अथैनं तृचं स्तौति।

**अग्निभिरित्येव पूर्व्वाण्यहानि समिद्धान्यष्टममहरभिसमिन्धे॥ २॥**

एतत् तृचगतेनाग्निभिरिति बहुवचनान्तेनाग्निशब्देन

पूर्वाण्यनुष्ठितानि सप्तसंख्यान्यहानि समिद्धानि सन्दीपितानि अथाग्निं नव इत्येकवचनान्तेन अग्निशब्देनाष्टममहरभिसमिन्धे पूर्वाण्युत्तराण्यभिलक्ष्य सम्यग्दीप्तं करोति ॥ २ ॥

अथ द्वितीयमाज्यस्तोत्रं दर्शयति ।

**मित्रं वयꣳ हवामह इति बार्हतं मैत्रावरुणं ॥ ३**

मित्रं वयमिति तृचे बार्हतं बृहत्साम्ना सम्बद्धं बृहत्पृष्ठके द्वितीयेऽहनि अस्य द्वितीयमाज्यस्तोत्रत्वेन विधानात् तत्सम्बन्धस्तदेतन्मैत्रावरुणं मित्रावरुणदेवताकं अष्टमेऽहनि द्वितीयमाज्यस्तोत्रं भवति ॥ ३ ॥

यद्येवं विनियुक्तविनियोगलक्षणो दोषः स्यादित्यत आह ।

**उग्रगाधमिव वाएतद्यच्छन्दोमास्तद्यथाद उग्रगाधे व्यतिषज्य गाहन्त एवमेवैतद्रूपे व्यतिषजति छन्दोमानामसंव्याथाय ॥ ४ ॥**

यत् छन्दोमा एतदुग्रगाधमिव वै यथा वेगयुक्तो नदीप्रवाहः उग्रगाधः उग्र उद्‌गूर्णस्तीक्ष्णो गाधः अवस्थानं यस्य स तथोक्तः दुरवगाह इत्यर्थः एवमेव छन्दोमत्रितयमपि उग्रगाधं दुरवगाहं तत् तथा सति अस्मात्कारणात् उग्रगाधे वेगवत्प्रवाहेण दुरवगाहे प्रदेशे यथा पुरुषाः परस्परं व्यतिषज्य हस्ताववलम्ब्य गाहन्ते वेगवत्प्रवाहमुत्तरन्ति एवमेवैतद्रूपे

अग्निं वो देवमिति वैकृतं मित्रं वयं हवामह इति प्राकृतं एते रूपे व्यतिषजति व्यतिषक्ते संश्लिष्टे करोति छन्दोमानामसंव्याथाय संव्याथः सञ्चलनं अन्यत्वानुष्ठानं तदभावाय मारम्भाश्च इत्यर्थः ॥ ४ ॥

अथ तृतीयमाज्यस्तोत्रं दर्शयति।

**तमिन्द्रं वाजयामसीत्यैन्द्रं ॥ ५ ॥**

तमिन्द्रं वाजयामसीति तृचः ऐन्द्रं इन्द्रदेवत्यं तृतीयमाज्यस्तोत्रं भवति ॥ ५ ॥

अथैतत् स्तौति।

**अष्टमेन वै देवा अहेन्द्रमवाजयन्नवमेन पाप्मानमघ्नन्नहरेवैतेन वाजयन्ति ॥ ६ ॥**

अष्टमेन अष्टसंख्यापूरकेण अनेन खल्वह्ना देवाः सुरेन्द्रमवाजयन् बलवन्तमकुर्व्वन् नवमेनाह्ना पाप्मानं पापरूपमसुरं अघ्नन् अहिंसिषुः एवञ्च तमिन्द्रं वाजयामसीति वाजयति धातुयुक्तेनैतेन तृचेन अहरेव वाजयन्ति कुर्व्वन्ति बलवन्तमुद्गातारः ॥ ६ ॥

अथ चतुर्थमाज्यस्तोत्रं दर्शयति।

**इन्द्रे अग्ना नमोबृहदिति बार्हतमैन्द्राग्नं ॥७॥**

इन्द्रे अग्ना इति बार्हतं बार्हते द्वितीयेऽहनि विनियुक्तत्वात् बृहता सम्बद्धं ऐन्द्राग्नमिन्द्राग्निदेवताकं चतुर्थमाज्यस्तोत्रञ्च भवति ॥ ७ ॥

अथापि पूर्ववद्विनियुक्तविनियोगदोषमाशङ्क्य समाधत्ते।

उग्रगाधमिव वाएतद्यच्छन्दोमास्तद्यथाद उग्रगाधे व्यतिषज्य गाहन्त एवमेवैतद्रूपे व्यतिषजति छन्दोमानामसंव्याथाय स्तोमः ॥ ८ ॥

अत तमिन्द्रं वाजयामसीति वैक्षतं रूपं अन्यत्सर्व्वं पूर्व्ववद्योज्यं एतेषु चतुर्ष्वाज्यस्तोत्रेषु पूर्व्वोक्तश्चतुश्चत्वारिंश एव स्तोमः कार्य्यः एवं प्रातःसवनिकेषु पञ्चसु स्तोत्रेषु स्तोत्रीया विहिताः तासु प्राकृतमेव गायत्रं साम गातव्यमिति द्रष्टव्यं ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्दशाध्यायस्य

अष्टमः खण्डः।

---

अथ नवमः खण्डः।

अथास्मिन्नष्टमेऽहनि माध्यन्दिनपवमानस्य स्तोमक्लृप्तिं विधित्सुस्तोत्रीयास्तृचं दर्शयति।

अध्वर्य्यो अद्रिभिः सुतमिति गायत्री भवत्यह्नो धृत्यै ॥ १ ॥

अद्रिभिरिति लिङ्गं गायत्री माध्यन्दिनपवमानस्य प्रतिपद्भवति गायत्रः प्रथमस्तृचो भवतीत्यर्थः स चाष्टमस्याह्नो धृत्यै धारणाय स्थैर्य्याय भवति अद्रिभिरिति लिङ्गात् अद्रयो हि लोके दृढ़हेतुतया प्रसिद्धाः ॥ १ ॥

नन्वयं त्रिरात्रः त्रिष्टुप्प्रायत्वात् त्रैष्टुभः तत्र कथं गायत्रस्य तृचस्य सङ्गतिरित्यत आह।

गायत्रः सन्नस्त्रिष्टुभो रूपेण त्रैष्टुभं ह्येतदहः ॥ २ ॥

इन्द्रशब्दो मरुच्छब्दश्चास्मिन्नेव तृचे दृश्येते तत् त्रैष्टुभं गतमन्यत् ॥ २ ॥

अथापरं तृचं विधत्ते।

अभिसोमास आयव इत्यभीति रथन्तरस्य रूपं बृहदिति बृहत उभयोः सह रूपमुपैत्युभौ हि वर्णावेतदहः ॥ ३ ॥

अभिसोमास आयव इत्ययं तृचः तत्र अभीत्यभिशब्दो रथन्तरस्य रूपं तद्योनावभिव्यश्नूर इति दृष्टत्वात् बृहदिति बृहच्छब्दः बृहत्साम्नो रूपं तद्वाचकत्वात् एवं च बृहद्रथन्तरयोरूपं सहोपैति एकधोपगच्छति कुतः हि यस्मात् एतदहरुभौ वर्णौ उभयवर्णात्मकं ॥ ३ ॥

अथान्यं तृचं विधत्ते।

**धर्त्ता दिवः पवते कृत्व्योरस इत्यश्रृत इव वा एष त्र्यहो यद्वर्त्तीति धृत्या एव ॥ ४ ॥**

धर्त्ता दिव इति तृचः कार्य्यः एष दशरात्रस्य त्रिरात्रस्तृतीयः अश्रृत इव वै अधारित इव शिथिल इव खलु तस्मिंस्त्रिरात्रे मध्यमेऽहनि यद्वर्त्तीति पदयुक्तस्तृचः क्रियते तत्तस्य त्रिरात्रस्य धृत्यै धारणाय दाढर्याय भवति ॥ ४ ॥

ननु प्रकृतौ माध्यन्दिनपवमानान्त्यस्तृचः त्रैष्टुभः तत्र कथमसौ जागतस्तृचः तस्य त्रिरात्रस्य धृत्यै धारणाय सङ्गत इति तत्राह।

**जगत्यः सत्यस्त्रिष्टुभो रूपेण तस्मात्त्रिष्टुभां लोके क्रियन्ते ॥ ५ ॥**

सिद्धमेतत् ॥ ५ ॥

अध्वर्य्यो अद्रिभिरिति तृचे पूर्ववद्गायत्रं साम विधाय तद्-ब्राह्मणञ्चातिदिशति।

**गायत्रं भवति यदेव गायत्रस्य ब्राह्मणं ॥ ६ ॥**

गतमेतत् ॥ ६ ॥

अथास्मिन्नेव तृचे सामान्तरं विधत्ते।

वैरूपं भवति ॥ ७ ॥

अध्वर्य्यो अद्रिभिरित्यस्यां योन्यामुत्पन्नं सामान्तरं ॥ ७ ॥

वैरूपं साम प्रशंसति ।

पशवो वै वैरूपं पशूनामवरुध्यै विरूपः संवत्सरो विरूपमन्नमन्नाद्यस्यावरुध्यै ॥ ८ ॥

यदेतद्वैरूपं साम तत्पशवो वै तस्मात्पशूनामवरोधाय एतत् साम भवति कथमस्य पशुरूपतेत्यत आह विरूपः संवत्सर इति वसन्ताद्यृतुभेदेन विरूपो विविधरूपो नानारूपः संवत्सरः तत् सम्बन्धाद्वैरूपं साम तदन्नाद्यस्य अत्तुं योग्यस्यान्नस्यावरोधाय भवति ॥ ८ ॥

अथैतस्मिंस्तृचे सामान्तरं विधत्ते ।

आशु भार्गवं भवति ॥ ९ ॥

भार्गवं भृगुणा दृष्टं आशु एतदाख्यं साम अध्वर्य्यो अद्रिभिरित्यस्मिन्नेव पुनरावृत्ते तृचे गातव्यं ॥ ९ ॥

अस्य साम्नो हेतुतां ब्रुवन् निर्वक्ति ।

अहर्वा एतदव्लीयत तद्देवा आशुनाभ्यधिन्वं स्तदाशोराशुत्वं ॥ १० ॥

एतदष्टममहः खलु पुरा अव्लीयत अशीर्य्यत तस्मादष्टमह-

देवाः आग्नुना अग्नुसंज्ञेनानेन साम्ना अभ्यधिन्वन् अहृढयन् व्याप्नुवन्नित्यर्थः तत्तस्मात् व्याप्तिसामर्थ्यात् आग्नोः एतत्संज्ञस्य साम्नः आग्नुत्वं आग्निविति नाम सम्पन्नं ॥ १० ॥

अथ सामान्तरं विधत्ते ।

मार्गीयवं भवति ॥ ११ ॥

मार्गीयवाख्यं साम अध्वर्यो अद्रिभिरिति तृचे पुनरावृत्ते गातव्यं ॥ ११ ॥

तदेतत्पशुहेतुत्वेन स्तौति ।

देवं वा एतं मृगयुरिति वदन्त्येतेन वै स उभयेषां पशूनामाधिपत्यमाश्नुतोभयेषां पशूनामाधिपत्यमश्नुते मार्गीयवेण तुष्टुवानः ॥ १२ ॥

एतं प्रसिद्धं देवं महादेवं मृगयुरिति वदन्ति कथयन्ति एतं कामिकान् मृगानात्मन इच्छतीति मृगयुः महादेवः एतेन खलु साम्ना पुरा उभयेषां उभयविधानां ग्राम्यारण्यानां पशूनामाधिपत्यमधिपतित्वं आश्नुत प्राप्नोत् तस्मादद्यतनोऽपि मार्गीयवेण तुष्टुवानः स्तुतवान् उभयेषां पशूनामाधिपत्यं प्राप्नोति ॥ १२ ॥

अथ सामान्तरं दर्शयति ।

सौमित्रं भवति ॥ १३ ॥

सौमित्राख्यं साम अग्निनेवाहत्ते अध्वर्यो अद्रिभिरिति त्वचे गातव्यं ॥ १३ ॥

अथास्य स्तावकं प्रागाम्नातं ब्राह्मणमतिदिशति।

यदेव सौमित्रस्य ब्राह्मणं ॥ १४ ॥

यत्पञ्चमेऽहनि सौमित्रस्य साम्नः स्तावकं ब्राह्मणमाम्नातं दीर्घजिह्वी वा इदं रक्षो यज्ञाहेत्यादि तदेव ब्राह्मणमपि सौमित्रस्याश्रयत्वेन द्रष्टव्यं ॥ १४ ॥

अथ सामान्तरं दर्शयति।

ऐढतं भवति ॥ १५ ॥

एतदपि साम आहत्ते अध्वर्यो अद्रिभिरित्येव त्वचे गेयं॥१५

तदेतत् स्वर्गसाधनत्वेन स्तौति।

दृढ़न्वा एतेन काव्योऽञ्जसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्यानुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः ॥ १६ ॥

काव्यः कवेः पुत्र दृढ़न् वै दृढन्नामऋषिः गतमन्यत् ॥ १६ ॥

अथ सामान्तरं विधाय तद्ब्राह्मणञ्चातिदिशति।

साकमश्वं भवति यदेव साकमश्वस्य ब्राह्मणं॥१७

साकमश्वाख्यं साम प्रकृत एव तृचे गातव्यं तस्य च साकमश्वस्य स्तावकं देवा वा अग्निष्टोममभिजित्येत्यादिना यद्ब्राह्मणमाम्नातं तदत्रानुसन्धेयं ॥ १७ ॥

अथैतत्प्रकारान्तरेण स्तौति।

तद्वु धुराᳪ सामेत्याहुः प्राणा वै धुरः प्राणानामवरुध्यै ॥ १८ ॥

तद्वु तत्साकमश्वाख्यं धुरां सामेत्याहुः कथयन्ति ब्रह्मवादिनः कास्ता धुर इति उच्यते प्राणा वै धुर एव ते हि म्रियमाणस्य देहान्निर्गच्छतः समीपस्थं परिजनं धूर्वन्ति हिंसन्तीति तस्मादेतत् धुरां साम प्राणानामवरुध्यै अवरोधनाय शरीरधारणाय भवति ॥ १८ ॥

अथ सामान्तरं दर्शयति।

विलम्बसौपर्णम् भवति ॥ १९ ॥

विलम्बसौपर्णाख्यमपि साम प्रकृते अध्वर्यो अद्रिभिरिति तृचे गेयं ॥ १९ ॥

अथास्य विलम्बसौपर्णसंज्ञां निब्रुवन् स्तौति।

आत्मा वा एष सौपर्णानां यदष्टमेऽहनि पञ्चावेतावभितो भवतो ये सप्तमनवमयोर्व्वा अन्त-

रात्मा पक्षौ लम्बते यदन्तरात्मा पक्षौ विलम्बते तस्मा-
द्विलम्बसौपर्णं ॥ २० ॥

सौपर्णानां साम्नां मध्ये एष आत्मा वै एतद्विलम्बसौपर्णं नाम मध्यदेहस्थानीयं यदष्टमेऽहनि विनियुज्यते ये ऐडसारात्ये सौपर्णे सप्तमनवमयोरन्होर्विनियुज्येते एतावभितः पार्श्वयो-र्वर्त्तमानौ पक्षौ भवतः वयसन्तु पक्षावन्तरा पक्षयोर्मध्ये आत्मा मध्यदेहे वीव लम्बते विशेषेण लम्बमानो भवति अन्तरा अन्त-रेण च वीव यद्यस्मात् पक्षौ पक्षभूतयोः सौपर्णयोर्मध्ये आत्मा आत्मभूतं इदं सौपर्णः विलम्बते तस्माद्विलम्बसौपर्णमिति साम्नो नाम सम्पन्नं ॥ २० ॥

किं तत इत्याह ।

स्वर्गस्य लोकस्य समष्ट्यै सौपर्णं क्रियते ॥ २१ ॥

स्पष्टोऽर्थः ॥ २१ ॥

अथ तृचान्तरे सामान्तरं विधत्ते ।

द्विहिङ्कारं वामदेव्यं भवत्यन्नाद्यस्यावरुध्यै ॥ २२

ऊम् आ ऊम् आ इति हिङ्कारद्वययुक्तं वामदेव्यं साम अभिसोमास आयव इति तृचे गातव्यं तच्चान्नाद्यस्यावरोधाय भवति ॥ २२ ॥

वामदेव्यस्य पश्वात्मनोऽसंस्तूयमानत्वाद्धिङ्कारद्वययुक्तस्याष्टमेऽहनि अष्टसंख्यापूरके कः सम्बन्ध इत्यत आह ।

द्वितीयꣳ ह्येतद्रूपं यच्छन्दोमाः ॥ २३ ॥

यत् एतत् द्वितीयं हि रूपं षडहः एकः समूहः तदपेक्षया छन्दोमत्रितयात्मकस्य समूहस्य द्विसंख्यापूरकत्वात् द्विहिङ्कारं सामास्मिन्नहनि सङ्गतमित्यर्थः ॥ २३ ॥

अथ तत्पशुसम्बृद्धिहेतुरिति स्तौति ।

पशवो वै वामदेव्यं पशवश्छन्दोमाः पशुष्वेव तत् पशून्दधाति ॥ २४ ॥

स्पष्टोऽर्थः ॥ २४ ॥

अथ सामान्तरं विधत्ते ।

गायत्रपार्श्वम्भवति ॥ २५ ॥

अभिसोमास आयव इत्यस्मिन्नेव तृचे गायत्रपार्श्वाख्यं साम गातव्यं ॥ २५ ॥

अथैतत् स्तौति ।

अह्वर्वा एतदव्लीयत तद्देवा गायत्रपार्श्वेन समतन्वꣳ स्तस्माद्गायत्रपार्श्वं ॥ २६ ॥

एतदष्टममहरव्लीयत अजीर्यत तदहर्देवा गायत्रपार्श्वेन

समतन्वन् समदधुः तस्मादन्तः सन्तानार्थं गायत्रपार्श्वं गातव्यमिति शेषः ॥ २६ ॥

एतदेव व्याचष्टे ।

त्रिरात्रो यद्व्यशीर्यत तमेतैः सामभिरभिषज्यन् गायत्रपार्श्वेनोपायच्छन् सन्तनिना समतन्वन संकृतिना समस्कुर्वन् प्रतिष्ठितौ पूर्वौ त्रिरात्रावप्रतिष्ठित एष यदेतान्येवꣳ सामानि क्रियन्त एतस्यैव प्रतिष्ठित्यै ॥ २७

अयं तृतीयस्त्रिरात्रो यद्यदा व्यशीर्यत विशीर्णः शिथिलावयवोऽभवत् तदा तत् त्रिरात्रं एतैर्वक्ष्यमाणैः सामभिर्देवा अभिषज्यन् दार्ढ्याय भैषज्यमकुर्वन् भिषजप्रकार उच्यते गायत्रपार्श्वेन साम्ना उपायच्छन् शिथिलावयवानां पुनः सन्तानार्थमुपादानमकुर्वन् अथ सन्तनिसाम्ना समतन्वन् समदधुः सङ्कृतिसाम्ना समस्कुर्वन् कृतसन्धाने तस्मिंस्त्रिरात्रे शोभातिशयाधारं संस्कारः पूर्णं कुर्वन् संपर्य्युपेभ्यः करोतौ भूषण इति कात् पूर्वेसुट् अडभ्यां सव्यवायेऽपीत्यडागमेन व्यवायेऽपि भवति अपि च पूर्वौ त्रिरात्रौ प्रतिष्ठितौ एष तृतीयस्त्रिरात्रः तस्यैव त्रिरात्रे प्रतिष्ठित यदेतानि गायत्रपार्श्वादीनि सामानि एवं क्रमेण क्रियन्ते तृतीये रात्रे प्रयुज्यन्ते तस्यैव त्रिरात्रस्य प्रतिष्ठानाय भवति सप्तमेऽहनि सन्तनिसाम नवमे सङ्कृति अष्टमेऽहनि तु गायत्रपार्श्वमित्येवमानुपूर्वी द्रष्टव्या ॥ २७ ॥

अथ सामान्तरं विधत्ते।

पौरुहन्मनं भवति॥ २८॥

पौरुहन्मनाख्यमपि साम अभिसोमास आयव इत्यस्मिन्नेव तृचे गातव्यं॥ २८॥

अथैतत् स्तौति।

पुरुहन्मा वा एतेन वैखानसोऽञ्जसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्यानुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः॥ २९॥

पुरुहन्मा वा एतेन वैखानसो विखनसगोत्रः पुरुहन्मा नाम ऋषिः गतमन्यत्॥ २९॥

अथैतस्मिन् सामगानविषये किञ्चिद्रूपं विधत्ते।

अभ्याघात्यं भवत्यभ्याघात्यसामानो हि छन्दोमाः॥३०

अभ्याघात्यमभ्याघातः अभ्याहननं अभ्यासः अस्मिन् साम्नि भवति अस्य हि योनौ भिराभ्रा १ ईगूरः२ तरुता ३ तरुता ३ ताहागार ३४ याँइ तहा ५ ग्रणाई इत्यभ्यासो दृष्टः तद्वदेव तृचे गीयमानेऽप्यभ्यासाः कार्या इत्यर्थः कुत एतत् हि यस्मात् छन्दोमा अभ्याघात्यं अभ्यस्यमानावयवं साम येषां ते तथोक्ताः तस्मादित्यर्थः॥ ३०॥

अथ सामान्तरं विधत्ते ।

द्वैगतं भवति ॥ २१ ॥

द्वैगतन्नाम साम अभिसोमास आयव इत्यस्मिन्नेव तृचे गातव्यं ॥ २१ ॥

अथैतत् द्विविधफलप्राप्तिहेतुरिति स्तौति ।

द्विगद्वा एतेन भार्गवो द्विः स्वर्गं लोकमगच्छ-दागत्य पुनरगच्छद्द्वयोः कामयोरवरुध्यै द्वैगतं क्रियते ॥ २२ ॥

द्विर्वारं गच्छतीति द्विगत् क्विप् चेति क्विपि गमः काविल्य-नुनासिकलोपो ह्रस्वस्य पिति कृतीति तुक् एतन् संज्ञो भार्गवो भृगुगोत्रऋषिः द्विर्द्विर्वारं एतेन साम्ना साधनेन स्वर्गं लोकं अगच्छत् गतवान् एतदेव विशदयति आगत्येत्यसकृत् स्वर्गं लोकं गत्वा पुनरिमं लोकमागत्य पुनः स्वर्गमगच्छत् तस्मात् द्वयोः कामयोरवरुध्यै द्विविधफलप्राप्त्यै द्वैगतं सामाष्टमेऽहनि क्रियते ॥ २२ ॥

अथ सामान्तरं विधत्ते ।

हारायणं भवति ॥ २३ ॥

हारायणनामापि साम अभिसोमास इत्यस्मिन्नेव तृचे गातव्य ॥ २३ ॥

अथैतत् स्तौति।

इन्द्रस्तेजस्कामो हरस्कामस्तपोऽतप्यत स एतद्धारायणमपश्यत्तेन तेजो हरोऽवारुन्ध तेजस्वी हरस्वी भवति हारायणेन तुष्टुवानः॥ ३४॥

तेजः शरीरकान्तिः हरः पराभिभवक्षमं सामर्थ्यं एतदुभयं कामयमान इन्द्रः पुरा तपस्तप्तवान् तदनन्तरमेतद्धारायणाख्यं सामापश्यत् अद्राक्षीत् तेन च साम्ना तेजोहरश्चावारुन्ध प्राप्नोत् तस्मादद्यतनोऽपि हारायणेन तुष्टुवानः स्तुवन् तेजस्वी हरस्वी च भवति॥ ३४॥

अथ सामान्तरं विधत्ते।

अच्छिद्रं भवति॥ ३५॥

अच्छिद्रन्नाम साम प्रकृतएव तृचे गातव्यं॥ ३५॥

अथैतस्याच्छिद्रसंज्ञान्वर्थैति स्तौति।

यद्वा एतस्याह्नश्छिद्रमासीत्तद्देवा अच्छिद्रेणाप्यौहꣳस्तदच्छिद्रस्याच्छिद्रत्वं॥ ३६॥

एतस्याष्टमस्याह्नो यदेवं छिद्रं सुषिरमासीत् तत् छिद्रमनेनाच्छिद्रेण साम्ना देवा अप्यौहन् अपिहितमकुर्वन् तत्तस्मात्कारणात् अच्छिद्रस्य साम्नः अच्छिद्रत्वं अच्छिद्रमिति नाम सम्पन्नं॥३६

अथ प्रहिन्नानद्धृतं बृहदिति अभ्यासायां गेयं साम दर्शयति।

**बार्हदुक्थं भवति ॥ ३७ ॥**

बार्हदुक्थाख्यं तस्यामभ्यासायां गातव्यमित्यर्थः ॥ ३७ ॥

अथैतत् स्तौति।

**बृहदुक्थो वा एतेन वाम्नेयोऽन्नस्य पुरोधाम-गच्छदन्नं वै ब्राह्मणः पुरोधान्नाद्यस्यावरुध्यै ॥ ३८ ॥**

वाम्नेयो वाम्नयाः पुत्र बृहदुक्थोनाम ऋषिः एतेन साम्ना अन्नस्य पुरोधामगच्छत् शिष्टं स्पष्टं ॥ ३८ ॥

अथान्तिमे तृचे गेयं साम विधत्ते।

**उद्वद्भार्गवं भवति ॥ ३९ ॥**

उद्वद्भार्गवाख्यं साम धर्त्तादिव इत्यस्मिन् तृचे गातव्यं ॥३९

तदेतत् पूर्वस्मिन्नहनि विहितेन प्रवद्भार्गवेण संहृत्य स्तौति।

**प्रवता वै देवाः स्वर्गं लोकं प्रायन्नुद्वतोदायन् ॥४०**

सिद्धमेतत् ॥ ४०।

तदेतत् पवमानस्य स्तोत्रमुपसंहरति।

निधनान्ताः पवमाना भवन्त्यह्नो धृत्यै स्तोमः ॥४१

एतदपि व्याख्यातं, एतदुक्तं भवति अध्वर्यो अद्रिभिरिति तृचे गायत्रं वैरूपं आषुभार्गवं मार्गीयवं सौमित्रमैडतं साकमश्वं वित्रश्वसौपर्णं इत्येवमष्टौ सामानि, अभिसोमास आयव इति तृचे द्वि हिङ्कारंवामदेव्यं गायत्रपार्श्वं पौरुहन्मनं द्वैगतं हारायणमच्छिद्रमिति षट्सामानि धर्त्तादिवः पवत इति तृचे उद्वङ्शार्गवमेकं साम प्रहिन्वान इत्यध्यास्यायां गीयमानं बार्हदुक्थं साम इत्य पञ्चदशसामानि तृचे विहितानि एकमेकर्च्चतया च षट्चत्वारिंशस्तोत्रीया भवन्ति एवं विहितस्य चतुश्चत्वारिंशस्तोमस्यातिरेकः स्यात् अतस्तत्परिहाराय गायत्र्यादीनामन्यतमनेकर्च्चं कार्य्यं तथा च चतुश्चत्वारिंशस्तोम एव माध्यन्दिनपवमानस्य भवतीति ॥ ४१ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्दशाध्यायस्य

नवमः खण्डः ।

---

अथ दशमः खण्डः ।

अथ ब्रह्मणश्छसाम्नः स्तोत्रीयां विधित्सुरत्र शाखान्तरीयस्तोत्रे प्रथमं तृचं दर्शयति ।

कईं वेद सुतेसचेति सतोबृहत्यः ॥ १ ॥

कईं वेदेत्याद्यास्तिस्रः सतोबृहत्यृचो ब्रह्मसाम्नः स्तोत्री-

त्तस्य शैथिल्योक्तिः एषा खलु प्रतिष्ठिता लब्धास्पदा स्थिरा बृहती या पुनः पदा सकृत्प्रयुक्तः पादः बृहतीत्वसम्पत्तये यस्याश्चि पुनरुपादाय प्रयुज्यते सा पुनः पदा येषा पुनः पदा बृहती का पुनस्ता यदिन्द्रप्रागपागुदगित्याद्याः अत्र हि पूर्व्वस्याः पूर्व्वस्या-ऋचः अन्त्यं पदं द्विरभ्यस्य तिस्रो बृहत्यो गानसमये क्रियन्ते अपिचास्मिन् प्रगाथे प्रागपागुदगिति प्राच्यादीनां दिशां विमर्शः कीर्त्तनं दृश्यते अतस्तासु दिक्षु यजमानस्य प्रतिष्ठानाय भवति ॥३

तासु गातव्यं ब्रह्मसाम दर्शयति ।

तासु नैपातिथं ब्रह्मसाम ॥ ४ ॥

तासु यदिन्द्र प्रागित्याद्यासु बृहतीषु नैपातिथं नीपातिथि-ना दृष्टं एतदाख्यं ब्रह्मसाम कार्य्यं ब्रह्मणः पृष्ठस्तोत्रनिवर्त्तकं साम कार्य्यं ॥ ४ ॥

अथैतदृषिसम्बन्धेन साम्नाभिधेयत्वात् स्वर्गहेतुरित्याह ।

सामार्षेयवत् स्वर्गाय युज्यते स्वर्गाल्लोकान्न च्यवते तुष्टुवानः ॥ ५ ॥

सिद्धमेतत् ॥ ५ ॥

चतुर्थस्य षष्ठस्य स्तोत्रीयं तृचमाह ।

उभयꣳ शृणवच्च न इति ॥ ६ ॥

स्पष्टोऽर्थः ॥ ६ ॥

अथैतं तृचमुभयशब्दयोगिनः सन्तानहेतुरिति स्तौति ।

यच्च पृष्ठानि यानि चैतान्यहानि तेषामुभयेषाᳬ सन्तत्यै ॥ ७ ॥

यत् यानि च पृष्ठानि च रथन्तरबृहद्रूपादीनि प्राक् षडहे प्रयुक्तानि यानि चैतानि छन्दोमाख्यान्यहानि तेषामुभयेषां द्विविधानां सन्तत्यै संश्लेषाय उभयशब्दयुक्तोऽयं तृचो भवति उभयशब्देन द्विधा द्वयस्य स्मारितत्वात् ॥ ७ ॥

अथैतस्मिंस्तृचे गातव्यं साम दर्शयति ।

तासु वैयश्वं ॥ ८ ॥

तासु श्यावश्च न इत्याद्यासृक्षु वैयश्वाख्यं साम गेयं ॥ ८ ॥

अथैतदृषिपुरःसरं स्वर्गसाधनमिति ब्रुवन् अच्छावाकसाम कार्य्यमित्याह ।

व्यश्वो वा एतेनाङ्गिरसोऽञ्जसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्यानुख्यात्या एतत् पृष्ठानामन्ततः क्रियते स्तोमः ॥ ९ ॥

आङ्गिरसोऽङ्गिरोगोत्रः व्यश्वोनाम ऋषिः शिष्टं स्पष्टं एतेषु च पृष्ठस्तोत्रेषु पूर्व्वोक्तएव चतुश्चत्वारिंशः स्तोमः कार्य्यः ॥ ९ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्दशाध्यायस्य

दशमः खण्डः ।

अथ एकादशः खण्डः ।

अथार्भवपवमानस्य प्रतिपत्तृचं विधाय सवने सङ्गतिमाह ।

पवस्व देव आयुषगिन्द्रं गच्छतु ते मद इति गायत्त्रो भवति मदवद्वै रसवत्तृतीयसवनं मदमेव तद्रसं दधाति ॥ १ ॥

पवस्व देव इति गायत्री प्रतिपद्भवति गायत्रं प्रथमस्तृचो भवतीत्यर्थः पवस्व देव आयुषगिति गायत्री भवति एतावता पर्य्याप्ते पुनरधिकोपादानं मदशब्दप्रदर्शनान्मदवत्त्वेन तृतीयसवने सङ्गतिकथनार्थं शिष्टं पूर्व्ववद्व्याख्येयं ॥ १ ॥

अथान्यं तृचं विधत्ते ।

अभिद्युम्नं बृहद्यश इत्यभीति रथन्तरस्य रूपम्बृहदिति बृहत उभयोः सहरूपमुपैत्युभौहि वर्णावेतदहः ॥ २ ॥

एतदपि सिद्धं ॥ २॥

अथ तृचान्तरं विधत्ते ।

प्राणाशिशुर्म्महीनामिति प्राणवत्यो भवन्ति प्राणानेव तद्यजमाने दधाति ॥ ३ ॥

प्राणाशिशुर्महीनामित्याद्यास्तिस्रः प्राणवत्यः प्राणशब्दयुक्ताः स्तोत्रीया भवन्ति एकस्यां प्राणशब्ददर्शनात् छत्रिन्यायेन तिस्रोऽपि प्राणवत्यः तत्तेन यजमाने प्राणानीन्द्रियाणि शिशुप्राणसहितानि दधाति धारयति ॥ ३ ॥

अथ तृचान्तरं विधाय अष्टमेनाह्ना तस्य सङ्गतिमाह ।

अभीनोवाजसातममित्यभीति रथन्तरस्य रूपꣳ राथन्तरꣳ ह्येतदहः ॥ ४ ॥

अभिशब्दयुक्तत्वृचोऽष्टमेऽहनि सङ्गत इत्यर्थः शिष्टं सिद्धं ॥४॥

अथाक्षरपङ्क्तिछन्दस्कं तृचं विधाय सप्तमेऽहनीव तत् स्तौति।

पवस्व सोम महान् समुद्र इत्यक्षरपङ्क्तिः स्तोमानां प्रसूतिरथो एतद्ध्वैतर्हि छन्दो यातयाम यदक्षरपङ्क्तिस्तेन छन्दोमा अयातयामानः क्रियन्ते ब्रह्मवादिनो वदन्ति यत् षड़हे स्तोमाश्छन्दाꣳस्याप्यन्ते किं छन्दसश्छन्दोमा इत्येतच्छन्दसो यदेता अक्षरपङ्क्तय इति ब्रूयात् ॥ ५ ॥

एतत्सर्वं यस्ते मदो वरेण्य इति पञ्चमखण्ड इवात्रापि व्याख्येयं ॥ ५ ॥

अथान्यं तृचं विधत्ते ।

हिन्वन्ति सूरमुस्रय इति गायत्र्यः सत्योजगत्यो रूपेण तस्माज्जतीनां लोके क्रियन्ते ॥ ६॥

हिन्वन्तीत्याद्यास्तिस्रो गायत्र्यः आर्भवस्यान्तिमाः स्तोत्रीयाः ताश्च देवदेवेभ्य इति देवशब्देन जागतेन रूपेण तस्माज्जगत्यः प्रजापतेर्मध्यदेहाद्देवैः सह खलु जगती सृष्टिकाल उत्पन्ना तस्माद्देवानां वाचको देवस्य शब्दो जागतं रूपं यस्मादेवं जगत्यस्तस्माज्जगतीनां लोके आर्भवान्तोहि प्राकृतो जगतीनां स्थाने तत्र क्रियन्ते ॥ ६ ॥

अथास्मिन्नेव तृचे पूर्ववद्गायत्रं साम विधाय तद्ब्राह्मणञ्च अतिदिशति ।

यागत्रं भवति यदेव गायत्रस्य ब्राह्मणं ॥ ७ ॥

स्पष्टोऽर्थः ॥ ७ ॥

अथ पवस्व देव आयुष इति विहितेऽस्मिंस्तृचे सामान्तरं विधत्ते ।

स्वाशिरामर्कों भवति ॥ ८ ॥

स्वाशिरामर्काख्यं साम पवस्वेत्यस्मिन्नेवाष्टत्ते तृचे गेयं ॥८॥

अत्र स्वाशिरामर्क इति पदद्वयाभिधेयेन साम्ना साध्यं फलमाह ।

अन्नं वा अर्कोऽन्नाद्यस्यावरुध्यै प्राणा वै स्वा-शिरः प्राणानामवरुध्यै ॥ ९ ॥

अन्नं खल्वर्चनसाधनत्वादर्क इति पदद्वयस्याभिधेयं सामान्नाद्यस्याप्त्यै भवति तथा प्राणाः खलु स्वाशिरः स्वयमेव शिरस्याश्रयितारः तस्मात्प्राणानामवरोधाय भवति ॥ ९ ॥

अथ सामान्तरं दर्शयति।

सुरूपं भवति ॥ १० ॥

एतदपि साम पवस्व देव इत्यस्मिन्नेव तृचे गातव्यं ॥ १० ॥

अथैतत् स्तौति।

पशवो वै सुरूपं पशूनामवरुध्यै ॥ ११ ॥

सुरूपं साम पशवो वै तेषां शोभनरूपयोगेन समानशब्दाभिधेयत्वात् तस्मादेतत्साम पशूनामवरोधाय भवति ॥ ११ ॥

अथ सामान्तरं विदधाति।

भासं भवति भाति तुष्टुवानः ॥ १२ ॥

भासाख्यमेतदपि साम पवस्व देव इत्यस्मिन्नेव तृचे गातव्यं अनेन तुष्टुवानः स्तुतवान् भाति यशसा दीप्यते ॥ १२ ॥

अथास्यानेनाह्ना सङ्गतिमाह।

पदनिधनं राथन्तरं ह्येतदहः ॥ १३ ॥

राथन्तरं रथन्तरसम्बन्धि रूपं पदनिधनं रथन्तरपृष्ठे प्रथमेऽहनि पदनिधनं प्रथमस्याह्नोरूपमिति विधिना तद्रूपता एतदृष्टमस्य राथन्तरं रथन्तरसम्बन्धि बृहद्रथन्तरं साम हि द्वितीयः छन्दोमाख्यमहः ॥ १३ ॥

अथैतत्प्रकारान्तरेण स्तोतुं संज्ञां निर्वक्ति ।

स्वर्भानुर्वा आसुर आदित्यं तमसाविध्यत् स न व्यरोचत तस्यात्रिर्भासेन तमोऽपाहन् स व्यरोचत यद्वै तद्भा अभवत्तद्भासस्य भासत्वं ॥ १४ ॥

आसुरः असुरवंशजः स्वर्भानुर्नाम पुरा आदित्यं सूर्य्यं तमसा अन्धकारेणाविध्यत् आच्छादितवान् तदनन्तरं स सूर्य्यो न व्यरोचत नादीप्यत तस्य सूर्य्यस्य सम्बन्धि स्वर्भानुकृतं तमः अत्रिऋषिः भासेनानेन साम्ना अपाहन् अपहतवान् ततः स सूर्य्यो व्यरोचत विशेषेण दीप्तोऽभवत् तत्तस्मादेतत्तदानीं सूर्य्योभास्वरोऽभवत् तत्तस्माद्भाससाधनत्वात् भासस्य साम्नो भासत्वं भासमिति नाम सम्पन्नं ॥ १४ ॥

किन्तत इत्याह ।

तम इव वा एतान्यहानि यच्छन्दोमास्तेभ्य एतेन साम्ना विवासयति ॥ १५ ॥

तम इव वै तमो रूपाण्येव एतान्यहानि यद्यानि छन्दोमाख्यानि प्रयोगबाहुल्येन दुःखप्रदत्वादेतस्य तमोरूपत्वं ततस्तेभ्योऽह्नोभ्य एतेन भाससाम्ना विवासयति तमो विश्लेषयति ॥ १५ ॥

अथ सामान्तरं विधत्ते ।

काक्षीवतं भवति ॥ १६ ॥

कक्षीवता दृष्टं काक्षीवतं तदपि पूर्व्वोक्त एव तृचे गेयं ॥१६॥

अथैतत् स्तौति ।

कक्षीवान्वा एतेनौशिजः प्रजातिं भूमानमगच्छत् प्रजायते बहुर्भवति काक्षीवतेन तुष्टुवानः॥१७

उशिजस्य पुत्रः कक्षीवान्नाम ऋषिः एतेन साम्ना प्रजातिं प्रकृष्टजननं प्रजोत्पत्तिं भूमानं बाहुल्यञ्चागच्छत् अथाद्यतनोऽपि अनेन स्तुवन् फलद्वयं लभत इत्यर्थः ॥ १७ ॥

अथ सामान्तरं विधत्ते ।

आसितं भवति ॥ १८ ॥

असितेन दृष्टमासितं तदपि पूर्व्वोक्ते तृचे गेयं ॥ १८ ॥

अथैतत् स्तौति ।

असितो वा एतेन दैवलस्त्रयाणां लोकानां

दृष्टिमपश्यत् त्रयाणाङ्कामानामवरुध्या आसितं क्रियते ॥ १९ ॥

दैवलो देवलस्य पुत्रः असितो नाम ऋषिः एतेन साम्ना साधनेन त्रयाणां पृथिव्यादीनां लोकानां दृष्टिं दर्शनसाधनमपश्यत् अजानात् तस्मादद्यतनैरपि पुरुषैस्त्रयाणां कामानां लोकत्रयविषयाणां त्रिविधानां फलानामवरुध्यै अवरोधनाय प्राप्त्यर्थं आसितं साम क्रियते प्रयुज्यते ॥ १९ ॥

अथ सामान्तरं विधत्ते।

ऐध्मिरं भवति प्रजातिर्वा ऐध्मिराणि प्रजायते बहुर्भवत्यैध्मिरेण तुष्टुवानः ॥ २० ॥

स्पष्टोऽर्थः * ॥ २० ॥

त्रैतं भवति प्रतिष्ठायै ॥ २१ ॥

त्रितेन दृष्टं साम त्रैतं तत् प्राणाभिप्लुर्मध्हीनामिति ऋचे गेयं तच्च यजमानस्य प्रतिष्ठानाय भवति ॥ २१ ॥

अथास्मिन्नहनि सङ्गतिमाह।

पदनिधनꣳ राथन्तरꣳ राथन्तरꣳ ह्येतदहः ॥ २२

गतमेतत् ॥ २२ ॥

---

* अत्र भाष्यं पतितमनुमीयते।

अथैतत् स्तौति ।

नाथविन्दु साम विन्दते नाथन्नाथविन्दून्येतान्य-ह्नानि यत् छन्दोमा नाथमेवैतैर्व्विन्दते ॥ २३ ॥

तत्रैतं साम नाथविन्दु नाथस्य नाथनीयस्य याचनीयस्य लम्भकं अतोऽनेन स्तुवन् नाथं याचितं फलं विन्दते किञ्चानेन साम्ना योगात् एतान्यहान्यपि नाथविन्दूनि याचनीयस्य फलस्य लम्भकानि यत् यानि छन्दोमाख्यानि स्पष्टमन्यत् ॥ २३ ॥

अथ सामान्तरं विधत्ते ।

गौरीवितं भवति यदेव गौरीवितस्य ब्राह्मणं ॥२४

गौरीविताख्यं साम अभीनो वाजसातममिति तृचे गेयं तस्य च यदेव प्रागाम्नातं ब्राह्मणं गौरीवितिर्वा एतच्छाक्त्य इत्यादि तदत्रापि द्रष्टव्यमित्यर्थः ॥ २४ ॥

अथान्यत्साम विधत्ते ।

कौत्सं भवति ॥ २५ ॥

कुत्सेन दृष्टं साम कौत्सं तच्च अभीन इति पूर्व्वोक्त एव तृचे गेयं ॥ २५ ॥

अथैतत् स्तौति ।

एतेन वै कुत्सोऽन्धसो विपानमपश्यत् स ह स्म वै सुराद्दतिनोपवसथं धावयत्युभयस्यान्नाद्यस्यावरुध्यै कौत्सं क्रियते ॥ २६ ॥

एतेन खलु साम्ना पुरा कुत्स ऋषिः अन्धसोऽन्धस्य विपानं विशेषेण पातव्यं रसं अपश्यत् दृष्टवान् तत एव स ऋषिः सुरा-दृतिना सुरापूर्णेन दृतिना युक्तः सन् उपवसथं खाद्यस्य अग्निसमीपे वसत्यस्मिन्दिवस इति उपवसथं यागदिवसात् पूर्व-मह: तद्धावयति स्म यत एवं ततो हेतोः उभयस्य पेयस्य चान्ना-द्यस्य अत्तुं योग्यस्यान्नस्य अवरुध्यै अवरोधनाय कौत्सं क्रियते यजमानैः प्रयुज्यते ॥ २६ ॥

अथास्मिन्नेव तृच आरत्ते सामान्तरं विधत्ते।

शुद्धाशुद्धीयं भवति ॥ २७ ॥

स्पष्टोऽर्थः ॥ २७ ॥

अशुद्धस्य शुद्ध्यापादकत्वात् शुद्धाशुद्धीयमिति निर्वचन-मभिप्रेत्याह।

इन्द्रोयतीन् सालावृकेयेभ्यः प्रायच्छत्तमश्लीला वागभ्यवदत्सोऽशुद्धोऽमन्यत स एतच्छुद्धाशुद्धीयमपश्य-त्तेनाशुध्यच्छुध्यति शुद्धाशुद्धीयेन तुष्टुवानः ॥ २८ ॥

यतीन् कर्म्मविरोधिजनान् सालावृकेयेभ्यः सालावृकी-पुत्रेभ्यः इन्द्रो दत्तवान् तमिन्द्रं अश्लीला पापरूपा वागभ्यवदत् इन्द्रस्य ब्रह्महत्या सञ्जातेत्येवं रूपा अपस्करी वाग्जातेत्यर्थः तदनन्तरं स इन्द्रः आत्मानमशुद्धोऽमन्यत अजानात् स च एतत् शुद्धाशुद्धीयाख्यं सामापश्यत् तेनाशुध्यत् शुद्धोऽभवत् तस्मादन्यो-ऽपि शुद्धाशुद्धीयेन तुष्टुवानः स्तुवन् शुध्यति शुद्धो भवति ॥ २८ ॥

अथ सामान्तरं विधाय तत् ब्राह्मणं प्रागाम्नातमप्यति-दिशति ।

## क्रौञ्चं भवति यदेव क्रौञ्चस्य ब्राह्मणं यत् द्वितीयेऽहनि ॥ २९ ॥

क्रौञ्चं साम अभीनो वाजसातममित्यस्मिन्नेव तृचे गेयं तस्य क्रौञ्चस्य यदेतत् ब्राह्मणं स्तावकमाम्नातं तदत्रापि द्रष्टव्यं तत्र ब्राह्मणं द्वितीयेऽहनि षष्ठेऽहनि च पृथगेवाम्नातं तत्र द्वितीये-ऽहनि वाग्वै क्रौञ्चमित्यादिकं तदेवाम्नातमतिदिश्यत इत्यर्थः ॥२९

अथ सामान्तरं विधत्ते ।

## रयिष्ठं भवति ॥ ३० ॥

एतत्साम अभीनोवाजसातममित्यस्मिन्नेव तृचे गातव्यं ॥ ३०

अथैतत् स्तौति ।

## पशवो वै रयिष्ठं पशूनामवरुध्यै ॥ ३१ ॥

यदेतद्रयिष्ठं साम तत्पशवो वै अतिशयेन रयिमान् हि लोके रयिमित्युच्यते अस्य च बहुपशुत्वमपि सम्भवतीति रयिष्ठस्य पशुरूपता तस्मादेतत्पशूनामवरुध्यै भवति ॥ ३१ ॥

अथास्मिन्नेव तृचेऽन्यत् साम विधत्ते ।

औद्दलं भवति ॥ ३२ ॥

स्पष्टोऽर्थः ॥ ३२ ॥

अथैतत् स्तौति ।

उद्दलो वा एतेन वैश्वामित्रः प्रजातिं भूमानम-गच्छत् प्रजायते बहुर्भवत्यौद्दलेन तुष्टुवानः ॥ ३३ ॥

वैश्वामित्रो विश्वामित्रगोत्रः उद्दलोनाम ऋषिः गतम-न्यत् ॥ ३३ ॥

अथान्यत्साम विधत्ते ।

धर्म्मं भवति धर्म्मस्य धृत्यै ॥ ३४ ॥

धर्म्माख्यं साम पवस्व सोमेत्यक्षरपङ्क्तिच्छन्दस्के तृचे गातव्यं तच्च धर्म्मस्य यागजन्यस्यापूर्वस्य धृत्यै धारणाय यावत् फलम-वस्थानाय भवति ॥ ३४ ॥

अथैतत् छन्दोद्वारेण स्तौति ।

ब्रह्मवादिनो वदन्ति यत् षड़ह स्तोमाश्छन्दांऽ-

स्साप्यन्ते किं छन्दसश्छन्दोमा इति पङ्क्षः छन्दस इति ब्रूयात् पुरुषो वै पाङ्क्तः पुरुषोऽद्विपदाश्छन्दोमानामयातयामतायै ॥ ३५ ॥

एतदपि यस्तेमदीवरेण्यइति पञ्चमखण्ड इव व्याख्येयं ॥३५॥

अथान्यत् साम विधत्ते।

विघ्नोविघ्नीयं भवति ॥ ३६ ॥

एतत्संज्ञं साम हिन्वन्ति सूरमुस्रय इति तृचे गेयं ॥ ३६ ॥

अथैतत् स्तौति।

अग्निरकामयत विघ्नोविघ्नोऽतिथिःस्यां विघ्नोविघ्न आतिथ्यमश्नुवीयेति स तपोऽतप्यत स एतद्विघ्नोविघ्नीयमपश्यत्तेन विघ्नोविघ्नोऽतिथिरभवत् विघ्नोविघ्न आतिथ्यमाश्नुत विघ्नोविघ्नोऽतिथिर्भवति विघ्नोविघ्न आतिथ्यमश्नुते विघ्नोविघ्नीयेन तुष्टुवानः ॥३७॥

अग्निः पुरा अकामयत किमिति विघ्नोविघ्नः सर्वस्माविघ्नः सर्व्वासां प्रजानामहमतिथिः स्यां अतिथिवत् पूज्यो भवेयं तथा विघ्नोविघ्नः सर्व्वस्माविघ्नः सकाशादातिथ्यं हविरश्नुवीय माप्नुयामिति एवं कामयित्वा तदर्थं तपस्तप्तवान् तप्त्वा च सोऽग्निरेतद्विघ्नोविघ्नीयं सामापश्यत् तेन साम्ना विघ्नोविघ्नः सर्व्वस्माः

अपि प्रजायाः अग्निरतिथिरभवत् तथा तर्ह्येश्याविशः सकाशात् आतिथ्यमाश्नुत प्राप्नोत् तस्मादद्यतनोऽपि विशोविशीयेन तुष्टुवानः स्तुवन् विशोविशोऽतिथिर्भवति आतिथ्यञ्चाश्नुते ॥२७॥

अथैतत् छन्दोद्वारेण स्तौति।

गायत्रीषु स्तुवन्ति प्रतिष्ठायै ब्रह्मवर्चसाय येनैव प्रायेन प्रयन्ति तमभ्युद्यन्ति ॥ २८ ॥

गायत्रीषु तु विशोनिशीयेन स्तुवन्ति तासाञ्च त्रिपादत्वात् अग्निना सहोत्पन्नत्वात् प्रतिष्ठाब्रह्मवर्च्चसे यजमानस्य सिध्यतः अपि च गायत्रेण तृचे स्तोत्रस्य प्रायणं कृतं उदयनमपि गायत्रेण क्रियते तस्माच्च त्रिष्टदात्मकेन प्रायणं स्तुतेन येनैव गायत्रेण प्रयन्ति तेनैव स्तोत्रं परिसमापयन्ति ॥ २८ ॥

अथैतत्पवमानस्तोत्रं पूर्व्ववदुपसंहरति।

इडान्ताः पवमाना भवन्ति पशवो वा इडा पशवश्छन्दोमाः पशुष्वेव तत्पशून्दधाति स्तोमः ॥ २९ ॥

सिद्धमेतत्। एवं गायत्रादीनि विशोविशीयान्तानि षोडशसामानि विहितानि अत्र चतुश्चत्वारिंशस्तोमस्य विधानात् तदतिरेकपरिहाराय सामद्वयस्यैकर्च्चे कार्य्यं तच्च सूत्रकारेणोक्तं सुरूपक्रौञ्चे एकर्च्चयोरेक इति अयमर्थः अष्टमेऽहन्याभवे स्तोमातिरेकपरिहाराय सुरूपक्रौञ्चे सामनी एकैकस्याङ्गाभाव इत्येतत्

सतं स्वपञ्चस्तु द्विप्रभृतिककुप्प्रभृत्यानन्तर्य्येणेति वचनादेतयोरे-कर्च्चकरणमिति ॥ ३६ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्दशाध्यायस्य
एकादशः खण्डः ।

---

अथ द्वादशः खण्डः ।

अथोक्थानां प्रथमस्य स्तोत्रीयं तृचन्दर्शयति ।

**प्रेष्ठं वो अतिथिमित्यातिथ्यस्यैव तद्रूपं क्रियते ॥१**

प्रेष्ठं वो अतिथिमित्यतिथिशब्दयोगात् एतस्य तृचस्य करणं आतिथ्यस्यैव रूपं क्रियते ॥ १ ॥

अथ द्वितीयस्योक्थस्य स्तोत्रीयं तृचं दर्शयति ।

**ऐन्द्रनोगधिप्रियेतीन्द्रियस्य वीर्य्यस्यावरुध्यै ॥ २ ॥**

इन्द्रशब्दयोगात् अयं तृचः इन्द्रियरूपस्य वीर्य्यस्यावरोध-नाय भवति ॥ २ ॥

अथ तृतीयस्योक्थस्य स्तोत्रीयं तृचं दर्शयति ।

**पुरां भिन्दुर्य्युवकविरमितौजा अजायतेन्द्रो वि-श्वस्य कर्म्मणो धर्त्ता वज्री पुरुष्टुत इति धृत्या एव ॥३**

पुरां भिन्दुरिति तृतीयस्योक्थस्य स्तोत्रीयस्तृचः कार्य्यः सच धर्त्तृशब्दयोगप्रदर्शनाय भूयसः पदसमूहस्यानुवादः ॥ ३ ॥

अथ प्रथमस्तोक्यस्य साम विधत्ते।

औशनं भवति ॥ ४ ॥

औशनाख्यं साम प्रेष्ठं व इति तृचे गेयं ॥ ४ ॥

अथैतत् स्तौति।

उशना वै काव्योऽकामयत यावानितरेषां काव्यानां लोकस्तावन्तꣳ स्पृणुयामिति स तपोऽतप्यत स एतदौशनमपश्यत्तेन तावन्तं लोकमस्पृणोद्यावानितरेषां काव्यानामासीत्तद्वाव स तर्ह्यकामयत कामसनि सामौशनं काममेवैतेनावरुन्धे ॥ ५ ॥

काव्यः कवेः पुत्रः उशना नाम ऋषिः पुरा कामितवान् इतरेषां स्वव्यतिरिक्तानां काव्यानां कविपुत्राणां स्वदायादानाम् यावान् यत्परिमाणको लोकः तावन्तं लोकं स्पृणुयां अहं प्राप्नुयामिति स च तपस्तप्त्वैतत्साम दृष्टवान् तेन च तावन्तं लोकं प्राप्नोत् यावान् यत्परिमाणः लोकः इतरेषां काव्यानामासीत् सिद्धमन्यत् ॥ ६ ॥

अथ द्वितीयस्तोक्यस्य साम विधत्ते।

सांवर्त्तं भवति ॥ ६ ॥

एतदाख्यं साम ऐन्द्रनो गधीत्यस्मिंस्तृचे गेयं ॥ ६ ॥

अथास्य साम्नः सांवर्त्तसंज्ञां निर्ब्रुवन् पापक्षयहेतुतामाह।

देवानां वै यज्ञᳪ रक्षाᳪस्यजिघाᳪसᳪस्तान्येतेन इन्द्रः संवर्त्तमुपावपद्यत् संवर्त्तमुपावपत्तस्मात् सांवर्त्तं पाप्मा वाव स तानसचत* तं सांवर्त्तेनापाघ्नतापपाप्मानᳪ हते सांवर्त्तेन तुष्टुवानः॥ ७॥

देवानां सम्बन्धिनं यज्ञं रक्षांस्यजिघांसन् हन्तुमैच्छन् तानि रक्षांसि एतेन साम्ना इन्द्रः संवर्त्तं प्रलयं उपावपत् उपागमयत् यत्संवर्त्तमुपावपत् तस्मादस्य साम्नः सांवर्त्तमिति नाम तं यज्ञं पाप्मा पापमेव असचत् गृहीतवत् तं पाप्मानं सांवर्त्तेन अनेन साम्ना देवा अपाघ्नत तस्मादद्यतनोऽपि सांवर्त्तेन स्तुवन् पाप्मानमपहते॥ ७॥

अथ तृतीयस्योक्थस्य साम दर्शयति।

मारुतं भवति॥ ८॥

मारुतं साम पुरां भिन्दुरित्यस्मिंस्तृचे गेयं॥ ८॥

अथैतत् स्तौति।

मासा वै रश्मयो मरुतो रश्मयोमरुतो वै देवानां भूयिष्ठा भूयिष्ठा असामेति वै सत्रमासते भूयिष्ठा एव

---

* तानसचत इत्यत्र तमसृजात् इति भाष्यसम्मतः पाठः।

भवन्त्यृतुमन्ति पूर्वाण्यहान्यनृतवः छन्दोमा यदेतत्साम भवति तेनैतान्यहान्यृतुमन्ति भवन्ति ॥ ९ ॥

मासाएव संवत्सरस्य रश्मिभूताः मरुतश्चेन्द्रस्य रश्मयः अतो मासानां मरुताञ्च साम्यात् छन्दोमानामृतुमत्त्वमिति उपरिष्टाद्वोच्यं एतत्सामसम्बन्धिनो ये मरुतः ते खलु देवानां मध्ये भूयिष्ठा बहुतराः तथैव वयं असाम भवाम एवं कामा यजमानाः सत्रमासते अत्र भूयसां मरुतां सम्बन्धिनानेन साम्ना स्तुवन्तो भूयिष्ठा एव भवन्ति किञ्च पूर्व्वेऽपि त्रिवृत्पञ्चदशादिस्तोमकानि षडहानि ऋतुमन्ति ऋतुयुक्तानि त्रिवृदादीनां षसां स्तोमानां वसन्ताद्यात्मना संस्तवात् तथाच तैत्तिरीयके वसन्तेन देवाः वसवस्त्रिवृता स्तुतमित्यनुवाके संस्तवो दृश्यते ऋतुवैलक्षण्यात् अनृतवः ऋतुरहितास्त्रयश्छन्दोमा यद्यस्मात् एतन्मारुतं साम भवति तेनैतानि छन्दोमाख्यानि त्रीण्यहान्यृतुमन्ति ऋतुयुक्तानि भवन्ति कुत एतत् मासा वै रश्मयो मरुतो रश्मय इति मरुतां मासात्मना संस्तवात् मासद्वयात्मकत्वाच्च ऋतूनां ॥ ९ ॥

एतेषु त्रिपूक्थस्तोत्रेषु पूर्व्ववत् स्तोमं विधाय स्तौति ।

चतुश्चत्वारिंश एव स्तोमो भवत्योजस्येव तद्वीर्य्ये प्रतितिष्ठत्योजो वीर्य्यं त्रिष्टुप् ॥ १० ॥

सिद्धमेतत् ॥ १० ॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीर-बुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे चतुर्दशाध्यायस्य द्वादशः खण्डः।

चतुर्दशाध्यायः समाप्तिमगमत्।

---

# पञ्चदशोऽध्यायः ।

अथ प्रथमः खण्डः ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

एवं दशरात्रस्याष्टानामह्नां स्तोमानां कॢप्तिरुक्ता अथ नव-मस्याष्टाचत्वारिंशस्तोमकस्य प्रथमेनावरणेन स्तोमकॢप्तिरारभ्यते तत्र बहिष्पवमानस्य प्रतिपत्तृचं दर्शयति ।

अक्रान् समुद्रः परमे विधर्म्मन्निति नवमस्याह्नः प्रतिपद्भवति ॥ १ ॥

प्रतिपद्यतेऽनयेति प्रतिपत् अक्रान् समुद्र इति तृचो बहि-ष्पवमानस्य प्रथमो भवतीत्यर्थः ॥ १ ॥

परमे विधर्म्मन्निति पदद्वययोगादस्य तृचस्य अनेन नवमे-नाऽह्ना सङ्गतिमाह ।

परमं वा एतदहर्विधर्मं विधर्म्म वा एतदन्यैरह-भिरहर्य्यन्नवमं ज्येष्ठं ह्रि वरिष्ठं ॥ २ ॥

एतन्नवममहः परमं वै उत्कृष्टतरं अष्टाचत्वारिंशेन त्रिर-

दादिभ्यः सर्व्वेभ्यः स्तोमेभ्योऽधिकेन स्तोमेन युक्तत्वात् अतएवै-तदहर्विधर्म्म स्तोत्रीयाधिक्येन गुरुत्वातिशयात् विशेषेण धार-णीयं एतदेव व्याचष्टे विधर्म्म वा इति अन्यैस्त्रिवृदादिस्तोमकै-रहर्भिरेतदहर्विधर्मं वै विशेषेण धारणीयं यन्नवमन्नवसंख्यापूर-केन तदहः कुतो विधरणीयमित्यत आह ज्येष्ठं वृहत्तरं तस्य व्याख्यानं वरिष्ठमिति यस्मादेतन्नवममहः वरिष्ठतरं तस्मात् विधर्मं एवञ्च परमविधर्मशब्दयुक्तस्तृचोऽस्मिन्नहनि संगच्छत इत्यर्थः ॥ २ ॥

अथास्य तृचस्य द्वितीयामनूद्य स्तौति ।

## मत्सिवायुमिष्टये राधसे न इति वारुण्येका भवति यद्वै यज्ञस्य दुरिष्टं तद्वरुणो गृह्णाति तदेव तदवयजति ॥ ३ ॥

मत्सिवायुमिष्टय इत्यस्यामृचि मत्सि मित्रावरुणापूयमान इति वरुणशब्दश्रवणात् एषा ऋक् वारुणी वरुणसम्बन्धिनी यद्वै यत् खलु यज्ञस्य दुरिष्टं दुर्ज्जरं तद्वरुणो गृह्णाति आदत्ते तत्तया वारुण्या तदेव दुरिष्टं तसेव तदवयजति ॥ ३ ॥

अथैतस्य प्रथमस्य तृचस्य स्तोत्रीयसंज्ञां कुर्व्वन् प्रकारान्त-रेण स्तौति ।

## स्तोत्रीयस्तृचो भवति प्राणापानानामवरुध्यै ॥४॥

सिद्धमेतत् ॥ ४ ॥

अथैतस्मिन् बहिष्पवमाने दशर्च्चस्तोत्रीया विधत्ते ।

दशर्च्चों भवति दशाक्षरा विराट् वैराजमन्नमन्ना-द्यस्यावरुध्यै ॥ ५ ॥

दशानामृचां समाहारो दशर्च्चः ऋक्पूरब्धूः पथामानक्षेत्य-कारः समासान्तः स च एष देवो अमर्त्य इत्यादिकः स्पष्टम-न्यत् ॥ ५ ॥

अथैतत् स्तौति ।

सप्रभृतयो भवन्तीन्द्रियस्य वीर्य्यस्य रसस्यान-तिचाराय यत्र वै देवा इन्द्रियं वीर्य्यं रसमपश्यꣳस्त-दनुव्यतुदन् ॥ ६ ॥

ता ऋचः सप्रभृतयः समानोपक्रमा एष देवो अमर्त्यः एषविप्रैरभिष्टुतः एष विश्वानि वार्य्येत्येवंविधा भवन्ति तच्च स-प्रभृतित्वं इन्द्रियस्य इन्द्रलिङ्गस्य वीर्य्यस्य वीर्य्यात्मकस्य रसस्य अनतिचाराय अतिचरणाभावाय भवति यत्र खलु मन्त्रभागे देवा इन्द्रियं वीर्य्यं रसमपश्यन् दृष्टवन्तः तन्मन्त्रभागं अनुव्यतु-दन् प्रत्यृचमभ्यस्यन् रसस्यानपगमाय अभ्यसनादृचयन्नित्यर्थः ॥ ६

अथान्या अष्टर्च्चस्तोत्रीया विधत्ते ।

अष्टर्च्चों भवति ॥ ७ ॥

अष्टानामृचां समाहारोऽष्टर्चः स चैषधिया यात्यश्वेत्या-दिकः ॥ ७ ॥

अथैतामष्टसंख्यामुपजीव्य स्तौति ।

**अष्टाशफाः पशवः पशूनेवाप्नोति अष्टा-क्षरा गायत्री तेजो ब्रह्मवर्चसं गायत्री तेज एव ब्रह्मवर्चसमवरुन्धे ॥ ८ ॥**

सिद्धप्रायमेतत् ॥ ८ ॥

अथ चतुरः षडृचान् विधत्ते ।

**षडृचा भवन्त्यृतूनां धृत्यै ॥ ९ ॥**

षसामृचां समाहारः षट् संख्यासाम्यात् षणामृतूनां धृत्यै धारणाय भवति ॥ ९ ॥

अथास्य षडृचस्य चतुःसंख्यामुपजीव्य स्तौति ।

**चत्वारः षडृचा भवन्ति चतुर्विंशतिरर्द्धमासाः संवत्सरः संवत्सरएव प्रतितिष्ठति ॥ १० ॥**

एष उक्थः एष वाजी एष कविः स सुतः पीतये इति चत्वारः षडृचा भवन्ति ताः तत्र चतुर्विंशतिस्तोत्रीया भवन्ति संवत्सर-श्चतुर्विंशतिरर्द्धमासात्मकः तथा च चतुर्भिः षडृचैः संवत्सर एव यजमानः प्रतिष्ठितो भवति ॥ १० ॥

तेषु चतुर्थस्य षड्टचस्य किञ्चिल्लिङ्गमुपजीव्य स्तौति ।

स वानुत्तमः षड्टचो भवत्युभयस्य परोक्षप्रत्यक्ष-स्यावरुध्यै ॥ ११ ॥

स वा समुतः पीतये स पवित्रे स वाजीरोचनं दिव इत्येवं सशब्दयुक्तानुत्तमः अन्यश्चतुर्थः षड्टचो भवति तच्छब्दस्य परोक्षवाचित्वात् तत्र स इति पदं परोक्षवाचकं इतरत्प्रत्यक्ष-वाचकमित्युभयस्य द्विविधस्य परोक्षप्रत्यक्षस्य देशकालादिवि-प्रकृष्टस्य प्रत्यक्षस्य पुरोवर्तिनः फलस्यावरोधनाय भवति ॥११

अथ बहिष्पवमानस्यान्त्यं तृचं विधाय स्तौति ।

तृच उत्तमो भवति येनैव प्राणेन प्रयन्ति तमभ्यु-द्यन्ति ॥ १२ ॥

अत्रोत्तराषाढे विनियुज्यान्तिमस्य तृचस्य पृथगाम्नानात् कोऽसावित्याशङ्क्य सूत्रकारेणोक्तं नवमस्य ज्योतिष्टोमः पर्यासः साप्तमिक इत्येक इति अयमर्थः नवमस्याह्नो बहिष्पवमानेऽन्त्य-स्तृचो ज्योतिष्टोमः ज्योतिष्टोमसम्बन्धी भवति सर्व्वत्र प्रकृति-भूते ज्योतिष्टोमे सप्तमेऽहनि वा यः पावमानी इत्यस्यान्त्यस्तृचः अनयोरन्यतरोऽस्मिन्नवमेऽहनि बहिष्पवमानस्यान्त्यस्तृचः कार्य्य इत्यर्थः गतमन्यत् ॥ १२ ॥

अथास्मिन् बहिष्पवमाने स्तोमं विधत्ते ।

**अष्टाचत्वारिंशः एव स्तोमो भवति प्रतिष्ठायै प्रजात्यै ॥ १३ ॥**

अष्टाचत्वारिंशत्स्तोत्रीयात्मकः स्तोमो भवति संख्याद्वारा प्रतिष्ठायै प्रतिष्ठानाय प्रजात्यै प्रजननाय च भवति जगती ह्यष्टाचत्वारिंशदक्षरा पशवश्च जागताः पशूनाञ्च प्रतिष्ठाहेतुत्वञ्च लोकसिद्धं एवं संख्याद्वारा अष्टाचत्वारिंशस्य प्रतिष्ठाहेतुता द्रष्टव्या ॥ १३ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चदशाध्यायस्य
प्रथमः खण्डः।

---

अथ द्वितीयः खण्डः।

अथास्मिन्नवमेऽहनि प्रथममाज्यस्तोत्रं दर्शयति।

**अगन्म महानमसा यविष्ठमित्याग्नेयमाज्यं भवति ॥ १**

अगन्म महेत्ययं तृचः आग्नेयमग्निदैवत्यं प्रथममाज्यस्तोत्रं भवति ॥ १ ॥

गमिधातुयुक्तत्वादयन्नवमेऽहनि सङ्गत इत्याह।

**गच्छन्तीव वा एते ये नवममहर्गच्छन्ति ॥ २ ॥**

ये यजमानाः नवममहर्गच्छन्ति प्राप्नुवन्ति एते गच्छन्तीव

वै दशरात्रस्य समाप्तप्रायत्वाद्यागाग्निं गच्छन्तीव तस्मादगन्मम-
हेति गमिधातुयुक्तस्तृचो नवमेऽहनि योज्य इत्यर्थः ॥ २ ॥

अथास्य तृचस्य प्रथमायामृचि लिङ्गत्रयमनूद्य सङ्गतिप्रद-
र्शनायाह।

योदीदाय समिद्धस्वे दुरोण इति दीदायेव ह्येष
यो नवभिरहर्भिस्तुष्टुवानः स्वाहुतमिति स्वाहुतो
ह्येष यो नवभिरहर्भिराहुतोविश्वतः प्रत्यञ्चमिति
विश्वतोह्येष प्रत्यङ् ॥ ३ ॥

योऽग्निर्नवमैरहर्भिः प्रायणीयातिरात्रसहितैरतीतैरष्टभि-
रहोभिस्तुष्टुवानः स्तुतः एष दीदायेव दिदीप्त एव हि यस्मा-
द्दीदायसमिद्धस्वे दुरोण इति लिट् श्टिद् रूपस्य दीदतेः प्रयोगः
सङ्गत इत्यर्थः तथा योऽग्निर्नवभिरहर्भिराहुत आहुतिभिस्तर्पितः
एष हि स्वाहुतः सुष्ठु आहुत्या तर्पितो भवति तस्मात् स्वाहुतमिति
पदयोगः तथा एष ह्यग्निर्विश्वतः सर्व्वत्र प्राणिषु प्रत्यङ् प्रत्यञ्चति
स्वरूपेण अन्तर्वर्त्तमानो भवति तस्मात् विश्वतः प्रत्यङिति
पदन्तत्र प्रयुज्यते ॥ ३ ॥

अथास्य तृचस्य तृतीयायामृचि किञ्चिल्लिङ्गं प्रदर्श्य स्तौति।

त्वं वरुण उत मित्रो अग्न इति वारुण्येका भवति

यद्वै यज्ञस्य दुरिष्टन्तद्वरुणो गृह्णाति तदेव तदवयजति ॥ ४ ॥

त्वं वरुण इति वरुणशब्दश्रवणात् एका स्तोत्रीया वारुणी वरुणसम्बन्धिनी भवति सिद्धं सिद्धं ॥ ४ ॥

अथ द्वितीयमाज्यस्तोत्रं दर्शयति ।

मित्रं ह्ववे पूतदक्षमिति राथन्तरं मैत्रावरुणं ॥ ५ ॥

मित्रं हुव इति रथन्तरसम्बन्धि मैत्रावरुणं मित्रावरुणदेवताकं द्वितीयमाज्यस्तोत्रं भवति गव्यन्तस्त्वा हवामह इति राथन्तरे प्रगाथे हवतिधातुदर्शनात् अत्रापि तत्सद्भावात् राथन्तरत्वं ॥ ५ ॥

वैश्वतेषु मध्ये सकृत्प्रयुक्तस्यास्य राथन्तरस्याज्यस्य पुनः प्रयोगे कारणमाह ।

उग्रगाधमिव वा एतद्यच्छन्दोमास्तद्यथाद उग्रगाधे व्यतिषज्य गाहन्त एवमेवैतद्रूपे व्यतिषजति छन्दोमानामसंव्याथाय ॥ ६ ॥

एतच्चाग्निं वो देवमग्निभिः सजोषा इति खण्डे व्याख्यातं ॥ ६ ॥

अथ तृतीयमाज्यस्तोत्रं दर्शयति ।

महाꣳ इन्द्रो य ओजसेत्यैन्द्रमष्टमेन वै देवा अहैन्द्रमव्राजयन्नवमेन पाप्मानमघ्नन्नहरेवैतेन मह-यन्ति ॥ ७ ॥

महां इन्द्रो य ओजसेति तृच ऐन्द्रमिन्द्रदैवत्यं तृतीयमाज्य-स्तोत्रं भवति शिष्टेनास्य तृचस्य नवमेऽहनि सङ्गतिः उच्यते अष्टमेन खल्वह्ना देवाः पुरा इन्द्रमवाजयन्नवलयन् नवमेनाह्ना पाप्मानं पापरूपं वृत्रं अघ्नन्नहिंसन् एतेन महच्छब्दयुक्तेन तृचेन तन्नव-ममहरेव महयन्ति महत् कुर्वन्ति ॥ ७ ॥

अथ चतुर्थमाज्यस्तोत्रं दर्शयति ।

ता हुवे ययोरिदमिति राथन्तरमैन्द्राग्नं ॥ ८ ॥

ता हुवे इति तृचः राथन्तरं रथन्तरसम्बन्धि ऐन्द्राग्नं इन्द्राग्निदेवताकं चतुर्थमाज्यस्तोत्रं भवति मित्र हुव इति पद-स्यापि रथन्तरसम्बन्धो द्रष्टव्यः ॥ ८ ॥

रथन्तरसम्बन्धिनोऽस्य तृचस्य प्रयोगे दोषं पूर्ववदुपपादयति ।

उग्रगाधमिव वा एतद्यच्छन्दोमास्तद्यथाद उग्र-गाधे व्यतिषज्य गाहन्त एवमेवैतद्रूपे व्यतिषजति छन्दोमानामसंव्याथाय स्तोमः ॥ ६ ॥

एतेष्वपि चतुर्ष्वाज्यस्तोत्रेषु पूर्वोक्ताष्टाचत्वारिंश एव स्तोमः

कार्य्यः सिद्धमन्यत् इत्थं पञ्चसु प्रातःसवनिकेषु स्तोत्रीयाः स्तोमक्लृप्तिश्च विहिता तासु गतव्यं साम प्राकृतमेवेत्यधिगन्तव्यं ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चदशाध्यायस्य

द्वितीयः खण्डः ।

---

अथ तृतीयः खण्डः ।

अथास्मिन्नवमेऽहनि माध्यन्दिनपवमानस्य प्रथमं तृचं दर्शयति ।

**पवमानस्य जिघ्नतो हरेश्चन्द्रा असृक्षतेति हरिवत्यो गायत्र्यो भवन्ति च्छन्दोमानामयातयामतायै ॥ १ ॥**

पवमानस्य जिघ्नत इत्याद्यास्तिस्रः हरिवत्यो हरिशब्दयुक्ताः गायत्र्यः स्तोत्रीया भवन्ति ताश्च हरिशब्दयोगात् छन्दोमानां त्रयाणामह्नामयातयामतायै अगतसारतायै भवति ॥ १ ॥

अथैता ऋचः प्रकारान्तरेण स्तौति ।

**पवमानस्य जिघ्नत इति वै बृहतो रूपꣳ हरेश्चन्द्रा असृक्षतेति जगत्या उभयोः सहरूपमुपैति साम्नश्च छन्दसश्च ॥ २ ॥**

जिघ्नत इति प्रतिपाद्यमानं हननं बृहत्साम्नो रूपं तद्धि क्षत्रियजात्या सहोत्पन्नत्वेन शौर्य्यवत्त्वात् हननक्षमं तथा चन्द्राः आह्लादकरिण्योहरेर्हरणशीलादसृक्षत सृष्टा अभूवन्निति आह्लादकत्वं प्रतिपाद्यते तच्च पशूनां सम्भवति पशवश्च जागता इति चन्द्रा इति पदं जगतीछन्दसो रूपं पवमानस्य जिघ्नत इति तृचं प्रयुञ्जानः साम्नश्च बृहतश्छन्दसश्च उभयो रूपं सहोपैति उपगच्छति भूयसो फलायेति शेषः ॥ २ ॥

अथान्यं स्तोत्रीयं विधाय स्तौति ।

परीतोषिञ्च तासुतमिति परिवत्यो भवन्त्यन्तो वै नवममहस्स्यैताः पर्य्याप्त्यै ॥ ३ ॥

परीतोषिञ्च तासुतमित्याद्यास्तिस्रः परिवत्यः परिशब्दयुक्ताः स्तोत्रीया भवन्ति तेन च परिशब्देन पर्य्याप्तिर्लक्ष्यते नवममहस्सान्तो वै दशरात्रे तृतीयस्य त्रिरात्रस्य अनेनाह्ना समाधानात् अतस्तस्य नवमस्याह्नः एताः परिवत्यः पर्य्याप्त्यै परिसमापनाय भवन्ति ॥ ३ ॥

अथान्यं तृचं विधत्ते ।

असावि सोमो अरुषोऽवृषा हरिरिति जगत्यः सत्यस्त्रिष्टुभो रूपेण तस्मात्त्रिष्टुभां लोके क्रियन्ते ॥४॥

असावि सोम इत्याद्यास्तिस्रः स्तोत्रीयाः ताश्च स्वभावतोऽपि

जगत्यो रूपेण त्रिष्टुभः इषच्छन्दोहि त्रैष्टुभं रूपं इषवद्-वृत्रहषद्र्यिमद्विभ्रवदित्यादिना तद्रूपत्वस्य परिगणनात् यस्मा देवसेनाः त्रिष्टुभः तस्मात् त्रिष्टुभां लोके स्थाने क्रियन्ते प्रयुज्यन्ते-प्रकृतौ हि माध्यन्दिनपवमानाख्यस्तृचः प्रतुद्रवेति त्रैष्टुभः ॥४॥

इत्थं तयस्तृचा विहिताः अथ सामानि क्रमेण विधित्सुः प्रथमतृचे गायत्रं साम विधाय पूर्ववद्ब्राह्मणमतिदिशति।

गायत्रं भवति यदेव गायत्रस्य ब्राह्मणं ॥ ५ ॥

प्रकृतौ गायत्रसाम्नो यद्ब्राह्मणं इमे वै लोका गायत्रमि-त्यादिकमाम्नातं तदेव अत्रापि गायत्रस्य ब्राह्मणं ॥ ५ ॥

अथ तस्मिन्नेव प्रथमे तृचे सामान्तरं विधत्ते।

भरद्वाजस्यादारसृद्भवति ॥ ६ ॥

भरद्वाजस्यादारसृदाख्यं साम पवमानस्य जिघ्नत इति तृचे गेयं ॥ ६ ॥

अथास्यैतां संज्ञां निर्ब्रुवन् स्तौति।

दिवोदासं वै भरद्वाजपुरोहितन्नानाजनाः पर्य्य-यतन्त स उपासीददृषे गातुम्मे विन्देति तस्मा एतेन साम्ना गातुमविन्दद्गातुविद्वा एतत्सामानेन दारे ना-सृन्मेति तददारसृतोऽदारसृत्त्वं विन्दते गातुन्न दारे धावत्यदारसृता तुष्टुवानः ॥ ७ ॥

भरद्वाजः पुरोहितो यस्य तं भरद्वाजपुरोहितं दिवोदास-न्नानाजनाः नानाविधाजनाः शत्रुजनाः पर्य्ययतन्त पर्य्यवेष्टयन् स दिवोदासो भरद्वाजमुपासीदत् विनयपूर्व्वमगच्छत् हे ऋषे गातुं मार्गं मे मम विन्द लम्भयेति ब्रुवन् एवमागताय तस्मै दिवो दासाय एतेन साम्ना गातुं मार्गमविन्दत् अलभत अतएतत्साम गातुविद्वै मार्गलम्भकं । एवमस्य भरद्वाजसम्बन्धमुक्त्वा अदार-सृत्त्वमपि निर्व्वक्ति अनेन खलु साम्ना दारे दारम्भे नासृन्न ना-गच्छामेति यस्मादेवमब्रुवन् तत्तस्माददारसृतः साम्नोऽदारसृत्त्वं अदारसृदिति नाम सम्पन्नं यस्मादेवं तस्मादनेनादारसृता तु-ष्टुवानो गातुं मार्गं विन्दते दारे दरणे श्वभ्रे न धावति न प्रापयत्यात्मानं ॥ ७ ॥

अथ सामान्तरं विधाय तद्ब्राह्मणञ्चातिदिशति ।

## सुरूपं भवति यदेव सुरूपस्य ब्राह्मणं ॥ ८ ॥

सुरूपाख्यमपि साम पवमानस्य जिघ्नत इत्यस्मिन्नेव तृचे गेयं पशवो वै सुरूपमित्यादिकं यद्ब्राह्मणं सुरूपमस्य प्रागा-म्नातं तदेवास्यापि सुरूपाख्यस्य साधकं ब्राह्मणं ॥ ८ ॥

अथान्यत्साम विधत्ते ।

## हरिश्रीनिधनं भवति ॥ ९ ॥

हरीश्रीरश४५इः इति निधनं यस्य तत्तथोक्तं एतत्संज्ञं साम पवमानस्य जिघ्नत इत्यस्मिन्नेव तृचे गातव्यं ॥ ९ ॥

अथैतत् स्तौति।

पशवो वै हरिश्रियः पशूनामवरुध्यै श्रियञ्च हरश्चोपैति तुष्टुवानः॥ १०॥

गवाद्याः पशवः खलु हरिश्रियः हरणशीलाः श्रयणाः अतो हरिश्रीशब्दनिधनमेतत्साम पशूनामवरोधनाय भवति अथानेन तुष्टुवानः स्तुतवान् श्रियं सम्पदं हरस्तेजश्चोपैत्युपगच्छति हरिश्रीशब्दाभ्यां उभयोः सूचनात्॥ १०॥

अथान्यत्साम विधत्ते।

सैन्धुक्षितं भवति यदेव सैन्धुक्षितस्य ब्राह्मणं॥११॥

सिन्धुक्षिता दृष्टं साम सैन्धुक्षितं तदपि पवमानस्य जिघ्नत इत्येव तृचे गेयं तस्य च सैन्धुक्षितस्य सिन्धुक्षिद्वै राजन्य ऋषिरित्यादिकं यद्ब्राह्मणं स्तावकं प्रागाम्नातं तदेवास्य ब्राह्मणं स्तुत्यर्थमानेतव्यं॥ ११॥

अथान्यत्साम विधत्ते।

गतनिधनं वाभ्रवं भवति गत्यै॥ १२॥

गमिधातुनिष्पन्नगशब्दयुक्तं निधनं यस्य तद्गतनिधनं वभ्रुणा दृष्टं साम पूर्वोक्तएव तृचे गेयं तच्च गत्यै गमनाय भवति॥ १२॥

अथैतद्वभ्रुषभ्रन्थग्रदर्शनपुरःसरं स्वर्गसाधनतया स्तौति।

वभ्रुर्वा एतेन कौम्भ्योऽञ्जसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्यानुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः॥ १३॥

कौम्भ्यः कुम्भगोत्रः वभ्रुर्नाम ऋषिः एतेन साम्ना साधनेन अञ्जसा आर्जवेन स्वर्गं लोकमपश्यत् अजानात् शिष्टं सिद्धं॥१३॥

अथान्यत्साम विधत्ते।

इडानाᳬ संचारो भवति॥ १४॥

इडनां संचाराख्यं साम पवमानस्य जिघ्नतेत्यस्मिन्नेव तृचे गेयं॥ १४॥

अथैतत् स्तौति।

पशवो वा इडा पशवश्छन्दोमाः पशुष्वेव तत्पशून्दधाति॥ १५॥

इडानां संचारइत्यत्र पष्ठ्यन्तेनेडाशब्देनाभिधेया इडानां पशवो वै पशव एव छन्दोमानां च पशुत्वं प्रागुक्तं तत्तथा च पशुष्वेव पशून्दधाति स्थापयति॥ १५॥

अथान्यत्साम विधत्ते।

ऋषभः पावमानो भवति ॥ १६ ॥

पावमानः पवमानसामसम्बन्धी ऋषभ एतत्पदद्वयाभिधेयं सामापि पवमानस्य जिघ्नत इत्यस्मिन्नेव तृचे कार्य्यं ॥ १६ ॥

अथैतत्पशुजन्मत्वेन स्तौति ।

पशवो वै छन्दोमाः पशुष्वेव तन्मिथुनमप्यर्ज्जति प्रजात्यै न ह वा अनृषभाः पशवः प्रजायन्ते ॥१७॥

छन्दोमाख्यान्यहानि पशवो वै पशुरूपाण्येव एतेष्वृषभे भवतीति यत्तत्तेन पशुष्वेव मिथुनमप्यर्ज्जति सम्पादयति किमर्थं प्रजात्यै प्रजननाय वत्सादिरूपेणाभिवृद्ध्यर्थं न खल्वृषभाः ऋषभेण पुंसा वियुक्ताः पशवः प्रजायन्ते वत्साञ्जनयन्ति ॥ १७ ॥

अथान्यत्साम विधत्ते ।

पृष्ठं भवति ॥ १८ ॥

पृष्ठाख्यं साम परीतोषिञ्चतासुतमित्यस्मिन् तृचे गेयं ॥१८॥

अथैतत् स्तौति ।

पृष्ठं वा एतदह्नां यन्नवमं पृष्ठ एव तत्पृष्ठेन स्तुवते प्रतिष्ठायै ॥ १९ ॥

यन्नवममहः एतदह्नां प्रायणीयादीनां पृष्ठं वै पृष्ठवंशस्था-

नीयं तत्तथा च पृष्ठरूप एवैतस्मिन्नवमेऽहनि पृष्ठेन स्तुवते स्तुवन्त्युद्गातारः किमर्थं प्रतिष्ठायै प्रतिष्ठानार्थं उभयोः साम्याद्यजमानस्य प्रतिष्ठाहेतुर्भवतीत्यर्थः ॥ १९ ॥

अथान्यत्साम विधत्ते ।

कौल्मलबर्हिषं भवति ॥ २० ॥

कुल्मलबर्हिःसम्बन्धि कौल्मलबर्हिषं एतदाख्यं साम परीतोषिञ्चेत्यस्मिन्नेव तृचे गेयं ॥ २० ॥

अथैतत् स्तौति ।

कुल्मलबर्हिर्वा एतेन प्रजापतिं भूमानमगच्छत् प्रजायते बहुर्भवति कौल्मलबर्हिषेण तुष्टुवानः ॥२१

स्पष्टोऽर्थः ॥ २१ ॥

अथान्यत्साम दर्शयति ।

अर्कपुष्पं भवति ॥ २२ ॥

अर्कपुष्पाख्यं सामापि परीतोषिञ्चेत्यस्मिन्नेव तृते गातव्यं ॥२२

अथैतद्रससहितान्नाद्यहेतुत्वेन स्तौति ।

अन्नं वै देवा अर्क इति वदन्ति रसमस्य पुष्पमिति सरसमेवान्नाद्यमवरुन्धेऽर्कपुष्पेण तुष्टुवानः ॥२३

देवा अन्नं खलु अर्क इति वदन्ति अर्च्यते अनेनेति व्युत्पत्तेः अस्यान्नस्य रसं पुष्पमिति वदन्ति तस्मादन्नरसयोर्वाचकोऽर्क-पुष्पशब्दः तदाख्येन साम्ना स्तुतवान् सरसं रससहितमेवान्नाद्य-मवरुन्धे ॥ २३ ॥

अथान्यत्साम विधत्ते ।

दैर्घ्यश्रवसं भवति ॥ २४ ॥

दीर्घश्रवसः सम्बन्धि दैर्घ्यश्रवसं एतदाख्यं सामापि परी-तोषिञ्चेत्यस्मिन्नेव तृचे गेयं ॥ २४ ॥

अथैतत् स्तौति ।

दीर्घश्रवा वै राजन्य ऋषिर्ज्योगपरुद्धोऽशना-यंश्चरन् स एतद्दैर्घश्रवसमपश्यत्तेन सर्व्वाभ्यो दिग्भ्योऽन्नाद्यमवारुन्ध सर्व्वाभ्यो दिग्भ्योऽन्नाद्य-मवरुन्धे दैर्घश्रवसेन तुष्टुवानः ॥२५॥

दीर्घश्रवा नाम राजन्यो राजपुत्र ऋषिः ज्योक् चिरकाल-मपरुद्धः शत्रुभिराक्रान्तो राज्याद्भ्रष्टः अशनायन् अशनामात्मन इच्छन् क्षुधार्त्तः चरन् सर्वतः परिभ्रमन् आसीत् स ऋषिः एत-द्दैर्घश्रवसमपश्यत् तेन च साम्ना सर्व्वाभ्यो दिग्भ्यः अन्नाद्यम-वारुन्ध प्राप्नोत् अतोऽद्यतनोऽपि दैर्घश्रवसेन स्तुतवान् सर्व्वाभ्यो दिग्भ्यः प्राच्यादिसर्वदिक्सकाशात् अन्नाद्यमवरुन्धे प्राप्नोति ॥२५

अथान्यत्साम विधत्ते ।

वैयश्वं भवति यदेव वैयश्वस्य ब्राह्मणं ॥ २६ ॥

व्यश्वेन दृष्टं साम वैयश्वं तदपि परीतोषिश्वेति तृचे गेयं तस्य च स्तावकं व्यश्वो वा एतेनेत्यादिकं यद्ब्राह्मणं पूर्वमाम्नातं तदत्रापि स्तुत्यर्थमानेतव्यं ॥ २६ ॥

अथैतस्मिन्नेव तृचे अन्यत्साम विधाय तद्ब्राह्मणश्चाति दिशति ।

आभीशवं यदाभीशवस्येति ॥ २७ ॥

आभीशवमिति भवति ब्राह्मणमिति पदद्वयमनुषज्यते आभीशवाख्यं साम यद्वा अश्वतमभीशुनातद्वाधारेत्यादिकं तस्य प्रागाम्नातं अन्यस्मिन्नं ॥ २७ ॥

अथान्यत्सामद्वयं विधत्ते ।

देवस्थानं भवति प्रतिष्ठायै संकृति भवति सं-स्कृत्यै ॥ २८ ॥

देवास्तिष्ठन्त्यस्मिन् साम्नीति देवस्थानं तत्साम परीतोषि-श्वत्यस्मिन्नेव तृचे गेयं तच्च स्थितिवाचिस्थानशब्दाभिधेयत्वात् प्रतिष्ठायै प्रतिष्ठानाय भवति तथा संकृत्याख्यमपि तस्मिन्नेव तृचे गेयं तच्च संस्कृत्यै संस्काराय भवति ॥ २८ ॥

अथैतत्सामद्वयं संप्रयुज्य स्तौति ।

**अह्नर्वा एतदब्रीयत तद्देवा देवस्थाने तिष्ठन्तः संकृतिना समस्कुर्वंस्तत् संकृतेः संकृतित्वं देवस्थानेन वै देवाः स्वर्गे लोके प्रत्यतिष्ठन् स्वर्गे लोके प्रतितिष्ठामेत्येतत् ॥ २९ ॥**

एतन्नवमहः खलु पुरा अब्रीयत व्यशीर्य्यत तद्देवा देवस्थाने साम्नि आधारभूते तिष्ठन्तः तन्नवममहः संकृतिना साम्ना समस्कुर्वन् तत्तस्मात्संस्कारसाधनत्वात्संकृतेरस्य साम्नः संकृतित्वं संकृतीति नाम सम्पन्नं अतएव संस्कृत्या इति युक्तं तथा देवस्थानेन खलु साम्ना देवाः पुरा स्वर्गे लोके प्रत्यतिष्ठन् प्रतिष्ठिता अभवन् यजमाना अपि स्वर्गे लोके प्रतितिष्ठाम प्रतिष्ठिता भवामेति हि एतत् एतर्हि एतस्मिन्काले सत्रमासते अतो देवस्थानं एवं प्रतिष्ठाप्रापकमित्यर्थः ॥ २९ ॥

अथ देवस्थानं विप्रुज्य श्रैष्ठ्यहेतुत्वेऽपि स्तौति ।

**वरुणाय देवता राज्याय नातिष्ठन्त स एतद्देवस्थानमपश्यत्ततो वै तास्तस्मै राज्यायातिष्ठन्त तिष्ठन्तेऽस्मै समानाः श्रैष्ठ्याय ॥ ३० ॥**

वरुणाय षष्ठ्यर्थे चतुर्थी पुरा वरुणस्य राज्याय राजत्वाय अन्याः सर्व्वा देवता नातिष्ठन्त राजत्वं नाभ्युपागच्छन् राजत्वान-

भ्युपगमं प्रकाशितवन्त इत्यर्थः अतो यो देवस्थानेन स्तौति अस्मै यजमानाय समानाः सदृशा ज्ञातयः श्रैष्ठ्याय श्रेष्ठत्वाय तिष्ठन्ते अनुमन्यन्ते पूर्ववदात्मनेपदचतुर्थ्यौ ॥ ३० ॥

अथैतद्वेदनफलमाह ।

क्षत्रस्येवास्य प्रकाशो भवति प्रतितिष्ठति य एवं वेद ॥ ३१ ॥

क्षत्रस्य क्षत्रियस्येव अस्य वेदितुः प्रकाशः कीर्त्तिर्भवति स्पष्टमन्यत् ॥ ३१ ॥

अथान्यत्सामद्वयं विधत्ते ।

भर्गएव भर्गेण तुष्टुवानो भवति यशो यशसा ॥३२

परीतोषिञ्चेत्यस्मिंस्तृचे क्रमेण भर्गेण यशसा च द्वाभ्यां सामभ्यां स्तुतवान् भर्गः तेजस्वी यशो यशस्वी च भवति ॥ ३२ ॥

अथान्यत्साम विधाय तद्ब्राह्मणमतिदिशति ।

वासिष्ठं भवति यदेव वासिष्ठस्य ब्राह्मणं ॥ ३३ ॥

वसिष्ठेन दृष्टं साम वासिष्ठं तदपि परीतोषिञ्चेति तृचे क्रीणन्त इत्यध्यास्यायामृचि गेयं वसिष्ठो वा एतेन वैडव इत्यादिकं तत्स्तावकं यद्ब्राह्मणं प्रागाम्नातं तदत्रापि स्तुत्यर्थमानेयं ॥ ३३ ॥

अथान्यत्साम विधत्ते ।

दीर्घतमसोऽर्कौ भवत्यन्नं वा अर्कोऽन्नाद्यस्याव-रुध्यै ॥ ३४ ॥

दीर्घतमा नाम ऋषिः तस्य सम्बन्धी अर्कः एतत्संज्ञं साम असावि सोमो वृषाहरिरित्यस्मिंस्तृचे गेयं शिष्टं सिद्धं ॥ ३४ ॥

अथान्यत्साम विधत्ते ।

सामराजं भवति साम्राज्यमाधिपत्यं गच्छति सामराज्ञा तुष्टुवानः ॥ ३५ ॥

साम्नां राजा सामराजः राजाहःसखिभ्यष्टचिति समा-सान्तः एतत्संज्ञं साम असावि सोमो अरुष इत्यस्मिन्नेवाहत्ते तृचे गेयं अनेन च साम्ना सामराज्ञा तुष्टुवानः स्तुतवान् साम्रा ज्यमभिषिक्तस्य राजसूयेनेष्टवतः सार्वभौमस्य राज्ञः कर्म आधि पत्यं अधिपतित्वञ्च गच्छति अत्र सामराज्ञेति समासान्तविधेर-नित्यतेति टजभावरूपं ॥ ३५ ॥

अथैतत्स्वर्गसाधनमित्याह ।

तदु संवदित्याहुः संवता वै देवाः स्वर्गं लोकं प्रायन्नुद्धतोऽदायन् ॥ ३६ ॥

तद्‌ तत्सामराजाख्यं साम संवत् स्वर्गप्रापणाय भवतीत्यर्थः ॥ ३६ ॥

अथैतत्पवमानस्तोत्रमुपसंहरति ।

## निधनान्ताः पवमाना भवन्त्यह्नो धृत्यै स्तोमः ॥३७

अष्टाचत्वारिंशः पूर्व्वोक्त एवास्य स्तोत्रस्य स्तोमः सिद्धमन्यत्। ननु पवमानस्य जिघ्नत इति गायत्रे तृचे गायत्रादि सामाष्टकं विहितं तथा परीतोषिञ्चेति बार्हते पृष्ठकौल्मलवर्हिषादीनि एकादशसामानि असावि सोमो अरुषो वृषाहरिरिति जागते तृचे सामद्वयं एवं एकविंशतिसामसु तृचेषु गीयमानेषु त्रिषष्टिस्तोत्रीयाः सम्पद्यन्ते तथा चाष्टाचत्वारिंश स्तोमातिरेकस्यानेनैष दोषः सूत्रकृता परिहृतत्वात् स खल्वेवं नवममहःप्रस्तुत्यासूत्रयत् तस्य वृहत्यामरण्ये गेयानि तृचेषु पृष्ठञ्चेति अस्यायमर्थः यानि बार्हते तृचे एकादशसामानि विहितानि तेषु पृष्ठं कौल्मलवर्हिषं अर्कपुष्पं दैर्घश्रवसं वैयश्वमाभीशवं वासिष्ठमिति सप्त ग्रामे गेयानि देवस्थानं संकृतिभर्गो यश इति चत्वार्य्यरण्ये गेयानि तथा च तस्य नवमस्याह्नो वृहत्यां गेयेषु सामसु मध्ये देवस्थानप्रभृति अरण्ये गेयं सामचतुष्टयं ग्रामे गेयेषु च पृष्ठञ्चेत्येतत्सामपञ्चकमेव तृचे कुर्य्यात् अन्यानि षट्सामान्येकर्चानि कार्य्याणि दैर्घतमसो कौल्मः सामराजश्चेति सूत्रकारेण जगत्यां गीयमानस्य सामद्वयस्य विकल्पनाभिधानात् अन्यतरस्यैव प्रयोगात् पञ्चदशस्तोत्रीया हीयन्ते तथाष्टाचत्वा-

रिंश एव स्तोमो भविष्यति पचान्तरमपि सूत्रकृतोक्तं तत् अति-
विस्तारभयात् न लिखितमिति तत्रैव द्रष्टव्यं ॥ ३७ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चदशाध्यायस्य
तृतीयः खण्डः ।

---

अथ चतुर्थः खण्डः ।

अथ षष्ठस्तोत्रे चतुर्षु तृतीयं स्तोत्रीयं तृचं दर्शयति ।

आयन्तइव सूर्य्यंवत्यो भवन्ति ॥ १ ॥

सूर्य्यवत्यः सूर्य्यशब्दयुक्ताः आयन्त इवेत्याद्यास्तिस्रः ऋचो ब्रह्मसाम्नः स्तोत्रीयाः ॥ १ ॥

अतासां सूर्य्यवत्त्वं कोऽसावस्मिन्नहनि सङ्गतिरित्याह ।

आदित्यदेवत्यꣳ ह्येतदहरन्तो वै सूरोऽन्त एतन्नवममह्नामन्त एव तदन्तेन स्तुवते प्रतिष्ठायै ॥ २ ॥

एतन्नवममहरादित्यदेवत्यं आदित्यदेवतार्थं अग्निवायु-सूर्य्यक्रमेणादित्यस्तृतीयो भवति एतदहश्च छन्दोमानां तृतीयमिति तद्देवत्यत्वं यस्मादेवं तस्मात् सूर्य्यवत्यः सङ्गता इत्यर्थः अपि च सूरः सूर्य्योऽन्तो वै उक्तप्रकारेणान्तिमः एतन्नवममहश्च अह्नां अनुष्ठितानां प्रायणीयादीनामन्तः अवसानं अनेन नवरात्रस्य समाप्यमानत्वात् तत्तथा च अन्तएवान्तेन सूर्य्यवतीभिः

स्तोत्रीयाभिः स्तुवते तच्च स्तवनं उभयोरैकरूप्यात्प्रतिष्ठानाय भवति ॥ २ ॥

अथाच्छावाकपृष्ठस्य स्तोत्रीयं तृचं दर्शयति ।

यत इन्द्रभयामहे ततोनो अभयं कृधि मघवञ्छग्धि तव तन्न ऊतये वि द्विषो विमृधो जहीति द्विषश्चैव मृधश्च नवमेनाह्ना विहत्य दशमेनाह्नोत्तिष्ठन्ति ॥ ३ ॥

यत इन्द्रभयामह इत्याद्यास्तिसृः ऋचोऽच्छावाकसाम्नः स्तोत्रीयाः स्तुत्यर्थमृचोऽनुवादः अस्मार्थंच द्विषो द्वेष्टृन् मृधः संग्रामकारिणः एवमुभयविधान् शत्रून् हे इन्द्र त्वं जहि विनाशयेत्यर्थः प्रतिपाद्यते अतएवं रूपवाचकशब्दयुक्तेन तृचेन द्विषश्चैव मृधश्च द्वेष्टृंश्च संग्रामकारिणः उभयविधांश्च शत्रून् अनेन नवमेनाह्ना विहत्य विनाश्य दशमेनानुष्ठास्यमानेनाविवाक्यसंज्ञेनाह्ना उत्तिष्ठन्ति सत्रादुत्थानं कुर्व्वन्ति तस्माद्विद्विषो विमृधो जहीति लिङ्गयुक्तामृचो नवमेऽहनि सङ्गत इत्यर्थः ॥३॥

अथ ब्रह्मपृष्ठनिवर्त्तकं साम दर्शयति ।

आयन्तीयं भवति ॥ ४ ॥

आयन्त इव सूर्य्यमित्याद्यासु गीयमानं आयन्तीयं ब्रह्मसाम भवति ॥ ४ ॥

अथैतत् स्तौति ।

श्रीर्वै श्रायन्तीयꣳ श्रीर्न्नवममहः श्रियमेव तच्छ्रि-यां प्रतिष्ठापयति ॥ ५ ॥

श्रीः सम्पद्रूपमेव श्रायन्तीयं श्रीशब्दोदितश्रियतिधातौ निष्पन्नः श्रीयतीति यः शब्दस्य तथेति ताद्रूप्यं नवममहश्च श्रीर्वै च सूर्य्यरूपं अष्टाचत्वारिंशस्तोमकत्वेन स्तोतीयाबाहुल्यात् तत्तेन श्रियमेव सम्पदमेव श्रियां सम्पदि प्रतिष्ठापयति उद्गाता प्रतिष्ठितां करोति ॥ ५ ॥

अथाच्छावाकपृष्ठस्तोत्रनिवर्त्तकं साम दर्शयति ।

समन्तं भवति ॥ ६ ॥

समन्ताख्यं साम यत इन्द्रभयामह इत्यस्मिं स्तृचे गातव्यं ॥ ६

एवं नित्यत्वेन विधाय काम्यमपीत्याह ।

समन्तेन पशुकामः स्तुवीत पुरोधाकामः सम-न्तेन स्तुवीत ॥ ७ ॥

पशुकामः पशून् कामयमानो यजमानः समन्तेन साम्ना स्तुवीत तथा पुरोधाकामः पौरोहित्यं कामयमानोऽप्येतेन सम-न्तेन स्तुवीत एवन्नित्यकाम्यविषयवाक्यद्वयेन खादिरो यूपो भवति खादिरं वीर्य्यकामस्य यूपं कुर्व्वीतेति तत् एकस्यैव नित्यत्वं काम्यत्वञ्चोक्तं भवति तदुक्तं एकस्य तूभयत्वे संयोगपृथक्त्वमिति ॥ ७

अथैतस्य फलद्वयसाधनतामुपपादयति ।

आग्नेयी पृथिव्याग्नेयो ब्राह्मण ऐन्द्री द्यौरैन्द्रो राजन्योऽन्तरिक्षेण द्यावापृथिवी समन्ते अन्तरिक्षेणैवैनꣳ समन्तं करोति विन्दते पशून् प्र पुरोधामाप्नोति य एवं विद्वान् समन्तेन स्तुते स्तोमः ॥ ८ ॥

आग्नेयी अग्निदेवत्या पृथिवी ब्राह्मणस्त्वाग्नेयः अग्निना सह प्रजापतिमुखादुत्पत्तेः तथा द्यौरैन्द्री इन्द्रदेवत्या राजन्यश्चेन्द्रेण सह प्रजापतेः उरसोबाहुभ्याञ्चोत्पत्तेः एतेन ब्राह्मणराजन्ययोर्द्यावापृथिव्यात्मकत्वमुक्तं भवति तच्च द्यावापृथिवी द्यावापृथिव्यौ अन्तरिक्षेण मध्यवर्त्तिना समन्ते सङ्गच्छते अतः समन्तेन स्तुवन् समतान्तत्वहेतुनान्तरिक्षेणैव एनं यजमानं समन्तं समतान्तगतं करोति किमुक्तं भवतीत्यत आह विन्दत इत्यादि य एवं ब्राह्मणार्थं विद्वान् समन्तेन स्तुते सोऽयं पशून् विन्दते लभते पुरोधां पुरोधानं पौरोहित्यञ्च प्राप्नोतीति तेषु च पृष्ठस्तोत्रेषु पूर्व्वोक्त एवाष्टाचत्वारिंश एव स्तोमः कार्य्यः ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चदशाध्यायस्य
चतुर्थः खण्डः ।

---

अथ पञ्चमः खण्डः ।

अथास्मिन्नवमेऽहन्यार्भवपवमानस्तोत्रीयांस्तृचान् क्रमेण दर्शयति । तत्र प्रथमं तृचं विधाय स्तौति ।

**त्वꣳ सोमासि धारयुरिति गायत्री भवत्यह्नो धृत्यै त्वमिति बृहतो रूपं बार्हतꣳ ह्येतदहः ॥ १॥**

त्वं सोमासीति गायत्री आर्भवस्य प्रतिपद्भवति तदादिकस्तृचो भवतीत्यर्थः तच्च धारयुरिति धृञ् धातोर्निष्पन्नेन शब्देन योगात् अस्य नवमस्याह्नो धृत्यै धारणाय भवति सा चास्थानेनाह्ना सङ्गतिः इति तदाह त्वमित्येतत्पदं बृहत्साम्नोरूपं तद्योनौ त्वामिद्धि हवामह इति युष्मच्छब्ददर्शनात् एतदहश्च बार्हतं बृहत्साम्नः सम्बन्धि तृतीयं बृहत्पृष्ठोहि छन्दोमाः अतोऽस्मिन्नहनि तृचः सङ्गत इत्यर्थः ॥ १ ॥

अथ तृचान्तरं विधाय सङ्गतिमाह ।

**त्वꣳ ह्यङ्ग दैव्येति त्वमिति बृहतो रूपं बार्हतꣳ ह्येतदहः ॥ २ ॥**

त्वं ह्यङ्गदैव्येति तृचोऽप्यार्भवस्य स्तोत्रीयः सिद्धमन्यत् ॥ २॥

अथापरं तृचं विधाय सङ्गतिमाह ।

पवस्व देव वीतय इति बृहतो रूपं बार्हतं ह्ये-तदहः ॥ ३ ॥

पवस्व देव वीतय इति तृचः तत्र पवस्वेत्येतद् बृहत्साम्नो रूपं सिद्धमन्यत् ॥ ३ ॥

अथान्यं तृचं विधत्ते ।

परित्यं हर्य्यतं हरिमिति परिवत्यो भवन्त्यन्तो वै नवममहस्तस्यैताः पर्य्याण्त्यै ॥ ४ ॥

परित्यं हर्य्यतं हरिमिति परिशब्दयुक्तास्तिस्रः स्तोत्रीया भवन्ति शिष्टं सिद्धप्रायं ॥ ४ ॥

अथाक्षरपङ्क्तिछन्दस्कं तृचं विधाय पूर्व्वयोरह्नोरिव तं प्रशं-सति ।

पवस्व सोम महे दक्षायेत्यक्षरपङ्क्तिः स्तोमानां प्रभूतिरथो एतद्ध्वैतर्हि छन्दोऽयातयाम यदक्षर-पङ्क्तिस्तेन छन्दोमा अयातयामानः क्रियन्ते ब्रह्म-वादिनो वदन्ति यत् षड़हे स्तोमाश्छन्दांस्याप्यन्ते किं छन्दसश्छन्दोमा इत्येतच्छन्दसो यदेता अक्षर-पङ्क्तय इति ब्रूयात् ॥ ५ ॥

एतत्सर्व्वं पूर्व्वस्मिन्नध्याये व्याख्यातं ॥ ५ ॥

अथापरं तृचं विधत्ते ।

उपोषु जातमप्तुरमिति गायत्र्यः सत्योजगत्यो रूपेण तस्मात् जगतीनां लोके क्रियन्ते ॥ ६ ॥

गोभिर्भङ्गं परिष्कृतमिति गोशब्देन जागतं रूपं पशवो वै जगत्य इति श्रुतेः जगत्यो रूपेण योगाज्जगत्यः गतमन्यत् ॥ ६ ॥

अथैतेषु तृचेषु क्रमेण सामानि विधास्यन्ते । तत्र प्रथमे तृचे गायत्रं प्रथमं साम गातव्यं, तस्य पूर्व्वोक्तं ब्राह्मणमतिदिशति ।

गायत्रं भवति यदेव गायत्रस्य ब्राह्मणं ॥ ७ ॥

स्पष्टं ॥ ७ ॥

अथैतस्मिन्नेव तृचे साम विदधाति ।

आश्वसूक्तं भवति ॥ ८ ॥

आश्वसूक्तन्नाम त्वं सोमासीत्येव तृचे गातव्यं ॥ ८ ॥

तस्य च साम्नोऽवसाने शुक्र आहुत इति पदद्वयं श्रूयते तत् स्तौति ।

अग्निं वै पूर्वैरहभिराजुहोत्यथैतदादित्यदेवत्यमहः शुक्र आहुत इत्यसौ वा आदित्यः शुक्रस्तमेवैतेनाजुहोति ॥ ९ ॥

पूर्वैः पूर्वमनुष्ठितैरष्टभिरहोभिः अग्निं वै अग्निमेवाभि-जुहोति हविर्भिर्जुहोतीति तेन सूर्य्यः अधुना तु एतन्नवममहः आदित्यदैवत्यं आदित्यदेवतार्थं एवञ्चास्मिन्नहनि आम्नस्रक्तो शुक्रआहुत इति श्रूयमाणेनैतेन पदेन तमेवादित्यमभिजुहोति असौ खल्वादित्यः शुक्रोदीप्तः सोऽयं शुक्र आहुतः आहुतिभिः तर्पित इति अस्यार्थस्य प्रतिभासमानत्वात् एतद्विशिष्टेनानेन नवमेनाह्ना अभिजुहोतीति व्यपदेशः ॥ ९ ॥

अथैतस्मिन्नेन तृचे सामान्तरं विदधाति ।

शाम्मदं भवति ॥ १० ॥

शम्मदा ऋषिणा दृष्टं साम शाम्मदं एतदपि त्वं सोमासी-त्यस्मिन्नेव तृचे गेयं ॥ १० ॥

तदेतत् साक्षात् स्वर्गसाधनमिति स्तौति ।

शम्मदा एतेनाङ्गिरसोऽञ्जसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्यानुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टु-वानः ॥ ११ ॥

आङ्गिरसो अङ्गिरोगोत्रः शम्मदृषिः एतेन साम्ना सिद्ध-मन्यत् ॥ ११ ॥

अथास्मिन्नेव तृचेऽन्यत् साम विधत्ते ।

दावसुनिधनं भवति ॥ १२ ॥

द्वावसुर्निधनं यस्य तत्तथोक्तं ॥ १२ ॥

अथैतत् स्तौति ।

आशिषमेवास्मा एतेनाशास्ते साम हि सत्याशीः ॥ १३ ॥

द्वावसुनिधनं यस्येति द्वावसुशब्दार्थः तथाचास्मै यजमानाय धनविषयमाशिषामेवैतेन द्वावसुनिधनेन साम्ना आशास्ते कामयते साम खलु सत्याशीः ऋचां यजुषाञ्च मध्ये अवितथत्वेन फलप्रतिपादकं सामेत्यर्थः ॥ १३ ॥

अथैतत्पशुपोषहेतुत्वेन स्तौति ।

द्वावसुर्वा एतदाङ्गिरसः पशुकामः सामापश्यत्तेन सहस्रं पशूनसृजत यदेतत् साम भवति पशूनां पुष्ट्यै ॥ १४ ॥

द्वावसुर्नामाङ्गिरसः ऋषिः पशुकामः सन् तत्साधनत्वेनैव तत्साम दृष्टवान् तेन साम्ना सहस्रसंख्यान् पशून् असृजत अलभत तथा चैतत् सामास्मिन्नवमेऽहनि भवतीति यत् तत्पशूनां पुष्ट्यै पोषायाभिवृद्धै भवति ॥ १४ ॥

अथ सामान्तरं विधत्ते ।

प्रतीचीनेडं काशीतं भवति ॥ १५ ॥

प्रतीचीना इडा यस्य तथाविधं काशीताख्यं साम त्वं सोमासि धारयुरित्यस्मिन्नेव तृचे गेयं॥ १५॥

अथैतस्य प्रतीचीनेडत्वं पुत्रपश्वादिरूपस्य फलस्य जनिहेतुरिति स्तौति।

**पराचीभिर्वा अन्याभिरिडाभी रेतो दधदेत्यथैतत्प्रतीचीनेडङ्काशीतं प्रजात्यै तस्मात्पराञ्चो गर्भाः सम्भवन्ति प्रत्यञ्चः प्रजायन्ते तस्मादु तेऽवाचीनविलेभ्यो नावपद्यन्त एतेन ह्येव ते धृताः॥ १६॥**

कालेयगौतमरौरवारिष्टतैरश्चयान्धीगवादिषु पूर्व्वं प्रयुक्तेषु सामसु हो इडा इत्येवं रूपाः पराचीना इडाः ताभिरन्याभिः पराचीभिरनिवृत्ताभिः पराग्गताभिरिडाभिर्यजमानो रेतोदधत् पुत्रपश्वादेरुपादानभूतं वीर्य्यं स्वयोनावादधाति गच्छति अथाधुना प्रयुज्यमानं प्रतीचीनेडं काशीतं प्रजात्यै पूर्व्वां हि तस्य गर्भस्य प्रजननाय भवति होवा इडा इत्यनेन योगादेतत्साम प्रतीचीनेडं यस्मादेवं वेदे प्रतिपाद्यते तस्मादेव कारणाल्लोकेऽपि गर्भाः पुंसां योनौ निषिच्यमानाः पराचः प्राङ्मुखाः सम्भवन्ति उत्पत्तिसमये प्रत्यञ्चः प्रत्यङ्मुखाः प्रजायन्ते उत्पद्यन्ते हि यस्मादेतेन साम्ना ते गर्भा धृताः तस्मादेव हेतोरवाचीनविलेभ्यो योनिभ्यो नावपद्यन्ते नाधःपद्यन्ते॥ १६॥

अथान्यत्साम विधत्ते।

हाविष्कृतं भवति प्रतिष्ठायै कृतानुवाद एव सः ॥ १७ ॥

हाविष्कृतं हविष्कृता दृष्टं साम तदपि त्वं सोमासि धारयु-रिति तृचे गातव्यं तत्र यजमानस्य प्रतिष्ठानाय भवति स च हविष्कृत् पुरा हविष्मान् वै हविःश्चुदाङ्गिरसावाकामयतेत्यादिना कृतानुवाद उक्तानुवाद एव तत्र हि नवमेऽहनि हविष्कृदरा-ध्नोदित्यर्थः प्रतिपादितः अथ एतत्साम समृद्धिहेतुरित्युक्तं भवति ॥ १७ ॥

अथ सामान्तरं विधाय तद्ब्राह्मणञ्चातिदिशति ।

सौपर्णं भवति यदेव सौपर्णस्य ब्राह्मणं ॥ १८ ॥

सौपर्णाख्यं साम त्वं ह्यङ्ग दैव्येत्यस्मिंस्तृचे गातव्यं यज्ञो वै देवेभ्योऽपाक्रामत् स सुपर्णरूपं कृत्वाऽचरदित्यादिकं सौप-र्णस्य ब्राह्मणं प्रागाम्नातं तदेवास्यापि सौपर्णस्य ब्राह्मणमा-नीय तेन स्तोतव्यं ॥ १८ ॥

अथान्यत्साम विधत्ते ।

वैश्वमनसं भवति ॥ १९ ॥

विश्वमनसा ऋषिणा दृष्टं साम वैश्वमनसं तत्पवस्व देव वीतय इत्यस्मिंस्तृचे गेयं ॥ १९ ॥

अथैतस्याम्नो विश्वमनसः सम्बन्धं पापहननहेतुताञ्च प्रतिपादयितुमाख्यायिकामाह ।

विश्वमनसं वा ऋषिमध्यायमुदव्रजितꣳ रक्षोऽगृह्णात्तमिन्द्रोऽचायदृषिं वै रक्षोऽग्रहीदिति तमभ्यवदद्दृषे क्वैष इति स्थाणुरिति ब्रूहीति रक्षोऽब्रवीत् स स्थाणुरित्यब्रवीत्तस्मै वा एतेन प्रहरेत्यस्मा इषीकां वज्रं प्रयच्छन्नब्रवीत्तेनास्य सीमानमभिनत् सैषेन्द्रेषितेषीका पाप्मा वाव स तमगृह्णात्तं वैश्वमनसेनापाहतापपाप्मानꣳ हते वैश्वमनसेन तुष्टुवानः ॥२०॥

अध्यायमध्ययनं उद्व्रजितं प्राप्तं वैश्वमनसं विश्वमनससंज्ञमृषिं रक्षोऽगृह्णात् पुरा कश्चित् राक्षसो गृहीतवान् तं वृत्तान्तमिन्द्रोऽचायत् ध्यानयोगेनाज्ञासीत् चायृपूजानिशामनयोरिति धातुर्ऋषिं खलु रक्षोऽग्रहीदिति मनसाजानत् स इन्द्रः तमृषिमभ्यवदत् ऋषे कः खल्वेष तव गृहीतेति एवमिन्द्रेण पृष्टे ऋषिं रक्षोऽब्रवीत् स्थाणुर्मामग्रहीदितीन्द्राय ब्रूहीति ततः स ऋषिः स्थाणुर्मां गृहीतवानित्यब्रवीत् एवमृषिणोक्ते तस्मै तदृक्षसं एतेन वज्रेण प्रहर जहीति अस्मा ऋषये इषीकां वज्रं इषीका तृणविशेषः तदेव वज्रीकृत्य प्रयच्छन् इन्द्रोऽब्रवीत् ततः तेन वज्रेण स ऋषिरस्य रक्षसः सीमानं शिरःकपालमध्यमभिनत् विदारितवान् इन्द्रेषिता इन्द्रेण निर्मिता सैषेषीका भूमावुपलभ्यते

एवं तस्मिन् रक्षसि हते स एव स्थाणुः पाप्मा वाव स पापरूप एव भूत्वा तं विखनसमगृह्णात् तं पाप्मानं वैखानसेन साम्ना-पाहत व्यनाशयत् अतो अद्यतनोऽपि वैखानसेन स्तुतवान् यजमानः पाप्मानमपहते ॥ २० ॥

अथान्यस्मिंस्तृचे सामान्तरं विधाय तत् स्तावकं ब्राह्मणं-स्वातिदिशति ।

## गौरीवितं भवति यद्देव गौरीवितस्य ब्राह्मणं ॥२१॥

परित्यं हर्य्यतं हरिमिति तृचे गौरीवितं साम गातव्यं तस्य च गौरीवितिर्वा एतच्छाक्त्य इत्यादिकं यद्ब्राह्मणमाम्नातं तदत्राप्यनुसन्धेयं ॥ २१ ॥

अथास्मिन्नेव तृचेऽन्यत् साम विधत्ते ।

## निहवो भवत्यन्नाद्यस्यावरुध्यै ॥ २२ ॥

वसिष्ठनिहवाख्यं साम परित्यमिति पूर्व्वोक्त एव तृचे गेयं तच्चान्नाद्यस्यावरोधनाय भवति ॥ २२ ॥

कुत एतदित्यत आह ।

## ह्वीति वा अन्नं प्रदीयत इत्यग्निरन्नमत्ति ॥ २३ ॥

अस्मिन् साम्नि ओ ही हो२ ओ ही एहि या औ २३४ वा हा ही इति स्तोभो दृश्यते लौकिके च ह्विशब्देनान्नं प्रदीयते

बालानामन्नस्य निवारणार्थं भोजयितृभिर्हीँशब्दस्य प्रयोगात् तद्देवैतामनुब्रूहीति हिंशब्दमुच्चार्य्य ततो देवेभ्यो हविर्लक्षणमन्नं दीयते तथा ई इति एवं रूपं शब्दं कुर्वन्नग्निरन्नं स्वात्मनि कृतं हविरत्ति दहति अतो ईडीत्यन्नप्रदानस्वकयोः शब्दयोः प्रयोगादस्य साम्नोऽन्नहेतुत्वं ॥ २३ ॥

अथैतत्साम प्रकारान्तरेण स्तोतुमाख्यायिकामाह ।

ऋषयो वा इन्द्रं प्रत्यक्षन्नापश्यन् स वसिष्ठोऽकामयत कथमिन्द्रं प्रत्यक्षं पश्येयमिति स एतन्निहवमपश्यत्ततो वै स इन्द्रं प्रत्यक्षमपश्यत् स एनमब्रवीद् ब्राह्मणन्ते वक्ष्यामि यथात्वत्पुरोहिता भरताः प्रजनिष्यन्तेऽथ मान्येभ्य ऋषिभ्यो मा प्रवोच इति तस्मा एतान् स्तोमभागानब्रवीत्ततो वै वसिष्ठपुरोहिता भरताः प्राजायन्त सेन्द्रं वा एतत्साम यदेतत्साम भवति सेन्द्रत्वाय ॥ २४ ॥

वसिष्ठाद्या ऋषयः पुरा इन्द्रं प्रत्यक्षन्नापश्यन् अपरोक्षेण नाजानन् तेषामृषीणाम्मध्ये स प्रसिद्धो वसिष्ठ ऋषिरकामयत कथं केन प्रकारेणोपायेन इन्द्रं प्रत्यक्षं पश्येयं साक्षात्कार्य्यमिति एवं कामयमानः सः निहवाख्यमेतत्सामापश्यत्तस्मादेतस्य वसिष्ठस्य निहव इति संज्ञा ततोऽनन्तरमेव स ऋषिरिन्द्रं प्रत्य-

बलपञ्चत्वाद्यान् ज्ञतवान् स इन्द्र एवमृषिमब्रवीत् हे वसिष्ठ ते तुभ्यं ब्राह्मणं वक्ष्यामि अनुष्ठेयार्थप्रतिपादकं वेदभागमुपदेक्ष्यामि यथा येन प्रकारेण त्वत्पुरोहिताः त्वं पुरोहितो येषां तथाविधा भरता एतत्संज्ञाः राजानः यद्वा भरता इति मनुष्यनाम सर्व्वे मनुष्याः प्रजनिष्यन्ते उत्पत्स्यन्ते अथ मदुपदेशानन्तरं मामिन्द्र अन्येभ्यस्त्वद्व्यतिरिक्तेभ्य ऋषिभ्यो मा प्रवोचः न ब्रूयाः इत्येवमुक्त्वा तस्मै वसिष्ठाय एतान् पूर्व्वोक्तान् स्तोमभागान् रश्मिरसीत्याद्यान् स्तोमानुमन्त्रणान् मन्त्रान् अब्रवीत् उक्तवान् ततो वै तत एव कारणात् सर्वे भरता वसिष्ठपुरोहिताः प्राजायन्त वसिष्ठः पुरोहितो येषां ते तथोक्ताः एवमिन्द्रप्रत्यक्षीकरणं वसिष्ठेन दृष्टत्वात् एतन्निहवाख्यं साम सैन्द्रं वै इन्द्रसहितं खलु स्पष्टमन्यत् ॥ २४ ॥

अथान्यत्साम विधत्ते ।

यद्वाहिष्ठीयं भवति ॥ २५ ॥

योनौ यद्वाहिष्ठशब्दान्वयाद्यद्वाहिष्ठीयं एतत्संज्ञं सामापि परित्यमित्यस्मिन्नेव तृचे गेयं ॥ २५ ॥

अथैतत् स्तौति ।

ब्रह्मयशसं वा एतानि सामान्यृचा ओचीयायि ब्रह्मयशसी भवति यद्वाहिष्ठीयेन तुष्टुवानः ॥ २६ ॥

एतानि यद्वाहिष्ठीयप्रभृतीनि सामानि ऋचा योनिभूता

ऋचोऽवयवेन पदेन श्रोतीयाणि श्रोतव्यानि ब्रह्मयशसं वै ब्राह्मणजातेः सम्बन्धि यशोरूपाणि अतो अनेन यद्वाहिष्ठीयेन तुष्टुवानः स्तुतवान् यजमानो ब्रह्मयशसी भवति ॥ २६ ॥

अथ सामान्तरं विधाय तत्स्तावकं ब्राह्मणञ्चातिदिशति।

आसितं भवति यदेवासितस्य ब्राह्मणं ॥ २७ ॥

असितेन ऋषिणा दृष्टं सामासितं तदपि परित्यं हर्य्यतमित्यस्मिन्नेव तृचे गातव्यं तस्य चासितस्यासिवा एतेन देवल इत्यादिकं यद्ब्राह्मणं पूर्व्वमाम्नातं तदस्याप्यसितस्य स्तावकं ब्राह्मणं ॥ २७ ॥

अथैतस्मिं स्तृचेऽन्यत्साम विधत्ते।

साध्रं भवति सिद्ध्यै ॥ २८ ॥

राधसाध संसिद्धाविति धातोः ट्रक् प्रत्यये साध्रशब्दनिष्पत्तिः तथा च साध्रशब्दाभिधेयं साम परित्यं हर्य्यतं हरिमिति तृचे गीयमानं यजमानाभिमतफलस्य सिद्ध्यै प्राप्त्यै सम्पद्यते ॥२८

अथान्यत्साम विधत्ते।

आकूपारं भवति ॥ २९ ॥

एतदपि परित्यमिति पूर्व्वोक्त एव तृचे गेयं ॥ २९ ॥

अथैतत् स्तौति।

अकूपारो वा एतेन कश्यपो जैमानम्महिमान-मगच्छज्जैमानम्महिमानं गच्छत्याकूपारेण तुष्टुवानः ॥ ३० ॥

अकूपाराख्यः कश्यपगोत्रऋषिः जैमानं जेतृत्वं महिमानं महत्वञ्च एतेन साम्ना प्राप्नोत् स्पष्टमन्यत् ॥ ३० ॥

अथ सामान्तरं विधत्ते ।

विधर्म्म भवति धर्म्मस्य विधृत्यै ॥ ३१ ॥

एवस्य सोममहेदद्यायेत्यस्मिन्नचरपङ्क्तिछन्दस्कतृचे विधर्म्माख्यं साम गेयं एतद्विधर्मेत्यस्य साम्नैवावसाने दर्शनाद्विधर्मसंज्ञा यस्मादेतत्साम विधर्मं विधृत्य कारणं तस्माद्धर्मस्यानुष्ठेयस्य यागस्य विधृत्यै विधारणाय भवति ॥ ३१ ॥

अथैतेषु छन्दोमाख्येष्वहःसु ब्रह्मवादिभिः कृतं कञ्चित् प्रश्नमुपन्यस्यास्य साम्न आधारभूततृचछन्दसा परिहरति ।

ब्रह्मवादिनो वदन्ति यत् षड़हे स्तोमाश्छन्दांस्याप्यन्ते किं छन्दसश्छन्दोमा इति पुरुषः छन्दस इतिब्रूयात् पुरुषो वै पाङ्क्तः पुरुषोद्विपदाश्छन्दोमानामयातयामतायै ॥ ३२ ॥

ब्रह्मवादिनो वेदार्थचिन्तकाश्छन्दोमेषु चोदयन्ति किमिति

एतषष्ठे समाप्ते त्रिवृदादयः स्तोमाः गायत्र्यादीनि छन्दांसि च क्रमेण षट्स्वह:सु विनियुक्तत्वाद्यस्मात्समाप्यन्ते तस्मात् छन्दोमाः किं छन्दः केन छन्दसा निष्पन्नाः यदि वेति त्युक्तानां गायत्र्यादीनामन्यतमस्मेतर्हि गतसारता स्यात् अस्योत्तरं पुरुषः छन्दसः छन्दोमा इति ब्रूयात् ननु पुरुषो नाम गायत्र्यादिछन्दोऽनन्तरं न प्रसिद्ध इत्यत आह पुरुषो वै पाङ्क्तः इति अयमर्थः पङ्क्तिस्तावत् पञ्चपदत्वात् पञ्चसंख्यावती पुरुषश्च त्वङ्मांसस्नावास्थिमज्जेति पञ्चधातुभिः पञ्चज्ञानेन्द्रियैः पञ्चकर्मेन्द्रियैश्चोत्पत्तिमत्त्वेन पञ्चसंख्याद्वारा पङ्क्तिः द्विपदाश्च पदद्वयसाम्यात् पुरुषस्थानीयाः ताश्च पवस्व सोममहेदक्षायेत्यादि तिस्रोऽक्षरपंक्तिछन्दस्काः द्विपदाः अतएव छन्दोद्वयं पूर्वमविनियुक्तत्वात् छन्दोमानामयातयामतायै अगतसारतायै भवति ॥ ३२ ॥

अथान्यत्साम विधत्ते ।

**सुज्ञं भवति ॥ ३३ ॥**

उपोषु जातमित्यस्मिंस्तृचे तत् सुज्ञाख्यं साम गेयं ॥ ३२ ॥

अथैतत्पशुसाधनत्वेन स्तौति ।

**पशवो वै सुज्ञं पशूनामवरुध्यै ॥ ३४ ॥**

स्पष्टोऽर्थः ॥ ३४ ॥

एतदेव व्याचष्टे ।

प्रजापतिः पशूनसृजत तेऽस्मात् सृष्टा अपाक्रामꣳ स्तानेतेन साम्ना सुधिया एहियेत्यन्वह्वयत्त एन-मुपावर्त्तन्त यदेतत् साम भवति पशूनामुपावृत्त्यै ॥३५

पुरा प्रजापतिः पशूनसृजत सृष्टवान् ते च सृष्टा अस्मात् प्रजापतेः सकाशादपाक्रामन् अपलायन्त तानपाक्रान्तान् पशूने-तेन सुद्धेन साम्ना सूधिया एहियेति सामावयवेन स्तोभेनान्व-ह्वयत् अनुक्रमेणाहूतवान् स्तोभस्यायमर्थः हे पशुसङ्घ त्वं मद्वचनं सूधि शृणु एहि आगच्छेति एवमाहूतास्ते पशव एनं प्रजापति-मुपावर्त्तन्तोपागताः तस्मादेतत्साम पशूनामुपावृत्त्या उपावर्त्त-नाय भवति ॥ ३५ ॥

अथैतद्वेदनफलमाह ।

उपैनं पशव आवर्त्तन्ते य एवं वेद ॥ ३६ ॥

स्पष्टोऽर्थः ॥ ३६ ॥

अथास्य साम्न आधारभूतानामृचां छन्दोद्वारेण स्तुतिं कुर्व्वन् एतत्पवमानस्तोत्रमुपसंहरति ।

गायत्रीषु स्तुवन्ति प्रतिष्ठायै ब्रह्मवर्च्चसाय येनैव प्राणेन प्रयन्ति तमभ्युद्यन्तोऽडान्ताः पवमाना भवन्ति पशवो वा इडा पशवश्छन्दोमाः पशुष्वेव तत्पशून्द-धाति स्तोमः ॥ ३७ ॥

उपोषु जातमप्सुरमित्याद्यासु गायत्रीषु श्रुद्धेन साम्ना स्तुवन्त्युद्गातारः अस्य चावसाने इड शब्दः श्रूयते तस्मादस्य पवमानस्तोत्रस्येडान्तत्वं सिद्धमन्यत् एवं गायत्र्यादिश्रुद्धान्तेषु षोडशसु सामसु प्रत्येकं तृचे गीयमानेषु अष्टाचत्वारिंशत् स्तोत्रीयाः सम्पद्यन्ते तत्सङ्ख्यात्मकोऽष्टाचत्वारिंशस्तोम एवास्य स्तोत्रस्य कार्य्यः॥ २७॥

इति ताण्ड्यमहाब्राह्मणे पञ्चदशाध्यायस्य

पञ्चमः खण्डः।

---

अथ षष्ठः खण्डः।

अथोक्थेषु प्रथमस्य स्तोत्रीयं तृचं विधित्सुराह।

आग्नेयीषु पूर्व्वेषामह्नामुक्थानि प्रणयन्त्यथै-तस्याह्न आग्नेय्यैन्द्र्यां प्रणयन्त्युभयोरेव रूपयोः प्रतितिष्ठति॥ १॥

अथाग्नेयीषु अग्निदेवत्यासु ऋक्षु एह्यू षु ब्रवाणि त इत्याद्यासु पूर्व्वेषां गतानामह्नां उक्थानि तृतीयसवन उक्थस्तोत्राणि प्रणयन्ति कुर्व्वन्ति अथशब्दस्तुशब्दार्थे एतस्य नवमस्याह्नस्तु आग्नेय्यैन्द्र्यां अग्निरिन्द्रश्चोभे देवते यस्यास्तस्यामृचि प्रणयन्ति

तथा चोभयोरेव रूपयोः अग्नाविन्द्रे च यजमानः प्रतिष्ठितो भवति ॥ १ ॥

अथ प्रथमोक्थस्तोत्रनिर्वर्त्तकं साम दर्शयति ।

ऐध्मवाहं भवति ॥ २ ॥

ऐध्मवाहाख्यं साम अग्नेय्यैन्द्र्याज्ञातव्यमित्यर्थः ॥ २ ॥

एतदेवानूद्य स्तौति ।

आग्नेय्यैन्द्रीषु स्तुवन्ति ब्रह्म चैव तत् क्षत्रञ्च सयुजी करोति ब्रह्मैव क्षत्रस्य पुरस्तान्निदधाति ब्रह्मणे क्षत्रञ्च विशञ्चानुगे करोति ॥ ३ ॥

आग्नेय्यैन्द्रीषु अग्नीन्द्रौ देवते यासां तासु आद्या ये अग्निमिन्धत इत्याद्यासु ऐध्मवाहेन स्तुवन्ति ब्रह्म ब्राह्मणजातिं क्षत्रं क्षत्रियजातिञ्चैव सयुजी समानयुञ्जाने संयुक्ते करोति अग्नेः ब्राह्मणजात्या सह प्रजापतिमुखादुत्पन्नस्य इन्द्रस्य क्षत्रियजात्या सह प्रजापतेरुरसो वाहुभ्याञ्चोत्पन्नस्य च उभयोरेकस्मार्ष्च संयोजनात् तत्राप्यग्निशब्दः प्रथमः श्रुतः पश्चादिन्द्रस्य क्षत्रियजातेः पुरस्ताद्ब्रह्मैव ब्राह्मणजातिमेव निदधाति तथा ब्रह्मणे ब्राह्मणजातये क्षत्रं क्षत्रियजातिं च विशं वैश्यजातिञ्चानुगे अनुगन्त्र्यौ करोति ॥ ३ ॥

अथ द्वितीयोक्थस्तोत्रनिर्व्वर्त्तकं साम दर्शयति ।

त्रैककुभं भवति ॥ ४ ॥

य एक इद्विदयत इत्यादिके तृचे एतत्त्रैककुभाख्यं साम गीयमानं ब्रह्मण उक्थस्तोत्रं भवति ॥ ४ ॥

अथैतत् स्तौति ।

ओजस्येव तद्वीर्य्यं प्रतितिष्ठत्योजोवोर्य्यन्त्रैक-ककुभं ॥ ५ ॥

तत्तेन त्रैककुभेन ओजोरूप एव वीर्य्ये प्रतितिष्ठति अस्य साम्नो वीर्य्यं त्रैककुभमिति त्रिककुभं विनिधाय चरदित्यारभ्य त्रिवीर्य्यं वा एतत्सामेत्यादिना पूर्व्वमेव प्रतिपादितं ॥ ५ ॥

अथ तृतीयस्योक्थस्य निर्व्वर्त्तकं साम दर्शयन् तद्ब्राह्मणं चादिशति ।

उद्वंशीयं भवति यदेवोद्वंशीयस्य ब्राह्मणं ॥ ६ ॥

गायन्ति त्वा गायत्रिण इत्यस्मिंस्तृचे गीयमानमुद्वंशीयम-च्छावाकस्योक्थस्तोत्रं भवति तस्य चोद्वंशीयस्य इष्टानि वा असृ-ज्यन्त तेषां यत्तेजोरसोत्यरिच्यतेत्यादिकं यत् स्तावकं ब्राह्मण-माम्नातं तदत्रापि स्तुत्यर्थमनुसन्धेयं ॥ ६ ॥

अथैतेषु स्तोत्रेषु पूर्व्ववत् स्तोत्रीयं विधाय स्तौति ।

अष्टाचत्वारिꣳश एव स्तोमो भवति प्रतिष्ठायै प्रजात्यै ॥ ७ ॥

अस्य स्तोमस्य संख्याद्वारा जगतीसम्बन्धात्तस्याश्च पशुत्व-कत्वात्पशूनाञ्च प्रतिपादनहेतुत्वञ्च स्पष्टमित्येवं संख्याद्वारा अष्टाचत्वारिंशस्तोमस्योभयहेतुत्वमधिगन्तव्यं ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चदशाध्यायस्य षष्ठः खण्डः ।

---

अथ सप्तमः खण्डः ।

इत्थं दाशरात्रिकाणान्नवानामह्नां स्तोमक्लृप्तिरुक्ता, अथ दशमस्याह्नः स्तोमक्लृप्तिरध्यायशेषेण विधीयते, प्रथमं तावत्त-स्मिन्नहनि अनुष्टुभां प्रयुचोपायनं निषेद्धुकामः तत्रानुष्टुभस्य छन्दसः प्रसक्तिमाह ।

गायत्रं वै सप्तममहस्त्रैष्टुभमष्टमञ्जागतं नवम-मथैतदानुष्टुभमहर्यद्दशमं ॥ १ ॥

गायत्र्यादीनां छन्दसां पृष्ठ्यषडहे क्रमेण विनियुक्तत्वेन समा-प्तत्वात् पुनरपि सप्तमाष्टमादिष्वहःसु तान्येव गायत्र्यादीनि छन्दांसि क्रमेण प्रयोज्यानि तस्माद्गायत्रं गायत्रीछन्दस्कं सप्तम-

महस्त्रिष्टुप्छन्दस्कमष्टमं जगतीछन्दस्कन्नवमं यद्दशममहः एतदा-नुष्टुभं अनुष्टुप्छन्दस्कं तस्मादनुष्टुभोऽस्मिन् दशमेऽहनि प्रयोज्या इत्यर्थः ॥ १ ॥

इत्थं प्रयोज्यानामनुष्टुभां प्रत्यक्षापायने दोषं दर्शयन् सम्पत्त्या तासां सद्भावमाह।

तदाहुर्य्यदनुष्टुभꣳ स्तोत्रीयां प्रत्यक्षमुपेयुः परा-म्परावतं यजमानो गच्छेन्न प्रतितिष्ठेदिति या वै चतुर्विꣳशतिर्गायत्र्यस्ता अष्टादशानुष्टुभोऽनुष्टुभ-मेव तत् स्तोत्रीयां परोक्षमुपयन्ति प्रतिष्ठायै प्रतिति-ष्ठति ॥ २ ॥

तत्तत्र दशमेऽहनि विषये ब्रह्मवादिनः आहुः स्तोत्रीयां स्तो-मार्हां स्तोत्रीयामनुष्टुभमृचं यद्यपि प्रत्यक्षस्वरूपेणोपेयुरुपग-च्छेयुः कुर्य्युरित्यर्थः तदा परां परावतं अतिशयेन दूरं यजमानो गच्छेत् तथा न प्रतितिष्ठेत् प्रतिष्ठितश्च न भवेदिति तस्मादनु-ष्टुप् तत्प्रत्यक्षमुपेयात् कथं तर्ह्यस्याह्न आनुष्टुभत्वं प्रतिज्ञातमिति तदुच्यते चतुर्विंशस्तोमो ह्यस्मिन्नहनि विधास्यते तत्र वहिष्पव-माने विधास्यमाना याः चतुर्विंशतिः गायत्र्यस्ता अष्टादशानुष्टुभो भवन्ति अष्टादशसु गायत्रीषु अवशिष्टा गायत्रीषट्कसम्बन्धिनां पादानामष्टादशानां एकैकस्य प्रक्षेपणेन द्वात्रिंशदक्षरसम्पत्तेः तत्तस्मात् स्तोत्र्यां स्तोत्रीयामनुष्टुभमेव परोक्षं उक्तसम्पत्तिद्वारा

परोक्षेणोपयन्त्युपगच्छन्ति प्रतिष्ठायै प्रतिष्ठार्थं अनुष्टुभो हि चतुष्पात्त्वात् प्रतिष्ठाहेतवः ॥ २ ॥

अथास्मिन्नहनि प्रमादाद्विस्मृतस्यानुष्ठेयस्य प्रतिबोधनं पार्श्वस्थैर्न्न कार्य्यमिति दर्शयति।

प्रजापतिं वा एतेनाह्ना परिवेविषति तन्न व्यववद्यं यद्वै श्रेष्ठे परिविष्यमाणेऽवदत्यन्नाद्यस्य सोवग्रहस्त-स्मान्न व्यववद्यमन्नाद्यस्यानवग्राहाय ॥ ३ ॥

प्रजापतिं सर्व्वकारणभूतं स्रष्टारं खलु एतेन दशमेनाह्ना परिवेविषति भोजयति तर्पयति तत्तस्मान्न व्यववद्यं ऋत्विग्भिर्वि-स्मृतं अनुष्ठेयं न विवाच्यं एतदेव सदृष्टान्तमुपपाद्यते यद्वा इत्या-दिना श्रेष्ठे प्रशस्यतमे विद्यातपःप्रभृतिभिरधिके अतिशयोक्ते परिविष्यमाणे भोज्यमाने यत् खलु तत्रत्यं वैकल्यं वदति सो-ऽन्नाद्यस्य भोजनस्यावग्रहः प्रतिबन्धकः तस्मात्कारणान्न व्यववद्यं विवादो न कार्य्यः किमर्थमन्नाद्यस्य भोजनस्यानवग्राहाय अप्र-तिबन्धाय एवमत्रापि प्रजापतेर्भोजनाविच्छेदाय विस्मृतमनुष्ठे-यजातं न केनचिदप्यभिज्ञेनाविष्करणीयमित्यर्थः ॥ ३ ॥

अथ पक्षान्तरमाह।

तदु व्यववद्यं यथा श्रेष्ठाय बलिꣳहियमाणं पन्थानं पर्य्यवनुदति गत्यै तथा तत् ॥ ४ ॥

उभयथोऽवधारणे तत्तत्र दशमेऽहनि व्यववद्यं निश्चितमनुष्ठेयं कर्म व्यववद्यं विविच्य कथनीयमेव यथा खलु श्रेष्ठाय प्रशस्यतमायातिथये अपथेन ह्रियमाणं नीयमानं बलिमुपहारं मार्गाभिज्ञः पन्थानं पर्य्यवनुदति प्रपयति गत्यै गमनार्थं तथैव तत् यद्दशमेऽहन्यनुष्ठेयस्य विस्मृतस्य प्रकरणमिति ॥ ४ ॥

अस्मिन् पक्षे कञ्चिद्धर्मं विधत्ते ।

यावत्यनुष्टुप्तावतीं वाचं सम्पाद्य विब्रूयुस्तद्वनतिरिक्तं ऌ खल्वोचैव यज्ञस्यारिष्ट्यै ॥ ५ ॥

यावती यत् परिमाणाक्षरानुष्टुप् तावतीं तावत्परिमाणां वाचं सम्पाद्य उच्चार्य्य विब्रूयुः विस्मृतं स्मारयेयुः विस्मरणं हि मन्त्रविषयमर्थविषयं चेति द्वेधा सम्पद्यते तत्रानुष्टुभोऽधिके छन्दसि विस्मरणे द्वात्रिंशदक्षरपर्य्यन्तं मन्त्रमुच्चार्य्य ततो विवेचनं कार्य्यं न्यूने छन्दसि गायत्र्यादौ यावत् द्वात्रिंशदक्षरसम्पत्तिस्तावदभ्यस्य विविच्य अथ विस्मृतौ तु समर्थमनुष्टुप्श्लोकेन स्मारयेयुः तद्यथा पृष्ठहोमस्त्वया कार्य्यस्तदनन्तरमृग्जपः ततश्च स्तोमयोगः स्यात्ततः स्तोत्रं ततो जप इति एतत्सर्व्वं सूत्रकृतोक्तं अप्रतिभाते तस्मिन्नहन्यनुष्टुम्मात्रां कृत्वाचक्षीरन् ज्यायसि छन्दसि लुम्पेयुरक्षराणि कनीयस्यभ्यस्येयुरिति वाचैव ब्रूयुरिति यानञ्जप्योवागनुष्टुबिति हि ब्राह्मणं भवतीत्यादिना एवमनुष्टुभं सम्पाद्य च द्विवचनं तत् उभ्यनतिरिक्तं अतिरिक्तमधिकन्न भवति

तस्याश्च आनुष्टुभत्वात् एवं विवेचनं यज्ञस्यारिष्ट्यै अहिंसायै सम्पूर्णतायै भवति ॥ ५ ॥

एवं कृत्स्नाहःसम्बन्धिधर्मविशेषमुक्त्वा बहिष्पवमानस्य स्तोत्रीयां विधित्सुराह ।

अभि वा एते देवानारोहन्तीत्याहुर्ये दशभिरहभिः स्तुवत इति पञ्चानामह्नामनुरूपैः प्रत्यवयन्ति यथाख्यायस्य प्रत्यवरोहेत्तथा तन्नवर्चो भवति या एवामूः प्रयुङ्क्ष्व्या अवदधाति ता एता उद्धरति ॥ ६ ॥

ये यजमाना अतीतैः प्रायणीयातिरात्रसहितैर्दशभिः स्तुवते एते देवानारोहन्ति क्रमेण तैरहोभिः देवान् प्राप्नुसेतदारोहन्ति तथा चेह लोके स्थितिर्न स्यात्तदर्थं पञ्चानामह्नामनुरूपैः प्रत्यवयन्ति अवरोहन्ति एतत् सूत्रकृताविस्पष्टं व्याख्यातं दशमस्य बहिष्पवमानं द्वितीयप्रभृतीनां पञ्चानामह्नामनुरूपाः प्रथमाच्च बहिष्पवमानं तन्नवर्चमिति तस्यायमर्थः पृष्ठ्यषडहस्य द्वितीयप्रभृतीनामह्नां बहिष्पवमानेषु येऽनुरूपास्तृचाः पवस्वेन्दो वृषासुत एते असृग्रमिन्दवः पवमानैरजीजनत् पवमानस्य विश्ववित् असृक्षत प्रवाजिन इत्यादिकाः तानत्राहरेत् प्रथमाच्चाह्नः कृत्स्नं बहिष्पवमानं अस्य प्रत्नामनुद्युतमित्यादिकमाहरेदिति यथा खलु दशमायस्य प्रत्यवरोहेत् तथा तदनुरूपैः

प्रत्यवरोहणं एवमनुरूपतृचपञ्चकानन्तरं तन्नवर्चं भवति प्रथमस्याह्नो बहिष्पवमानस्य अस्य प्रत्नामनुद्युतमित्यादिकं तन्नवर्चं प्रयोक्तव्यमित्यर्थः तत्र च प्रत्यवरोहणे सूत्रकारेण बहवः पक्षाः दर्शिताः अनुरूपेषु तृचाः प्रतिलोमा ऋचो नवर्चे इति गौतमः इत्येकः पक्षः, अनुरूपेषु असृग्रन्त प्रवाजिन इति षष्ठस्याह्नोऽनुरूपतृचं प्रथममाहृत्य पञ्चमचतुर्थाद्यनुरूपं तदवरोहेणाहरेत् तदस्य प्रत्नामनुद्युतमिति तन्नवर्चेषूपास्मै गायतानर इत्युपक्रम्य अस्य प्रत्नामनुद्युतमित्यन्तं ऋचएव प्रतिलोमाः स्युरिति गौतमपक्षस्यार्थः, अथ तथैव सूत्रकृता पुनस्त्रिपक्षाः प्रतिपादिताः सर्वत्र तृचा इति धानञ्जप्यो यथाधीतं नवर्चमिति शाण्डिल्यायनः सर्वत्रर्चः प्रतिलोमा इति शाण्डिल्य इति यथानुरूपेषु तृचानां प्रातिलोम्यं नवर्चे तथा नवर्चे नास्त्येव प्रातिलोम्यं यथाधीतमेव प्रयोक्तव्यमिति शाण्डिल्यायनमतं अनुरूपेषु नवर्चे च ऋचएव प्रतिलोमाः स्युर्न पुनस्तृचा इति शाण्डिल्यमतं, प्रकृतमनुसरामः अथ दशरात्रं प्रारभमाणाः प्रथमेऽहनि या एवासूः अस्य प्रत्नामनुद्युतमित्याद्या नवर्चः शम्याः नवरात्रस्य शम्यास्थानीयाः अवदधाति योजनाय प्रक्षिपति ता एताः शम्या इदानीमुदस्यति अङ्गां विमोचनार्थमुत्क्षिपति ॥ ६ ॥

अथ तस्मिन्नवर्चे द्वयोर्ऋचोर्लिङ्गमनूद्य स्तौति ।

वाक्छम्येका भवति यद्वै यज्ञस्य दुरिष्टन्तद्वरुणो

गृह्णाति तदेव तदवयजत्यादित्यैका भवतीयं वा अदितिरस्यामेव प्रतितिष्ठति॥ ७॥

एष प्रत्नेन मन्मना देवो देवेभ्य इत्यस्यामृचि कविर्विप्रेण वावृध इति कविशब्दश्रवणात् एषा वारुणी कवी नो मित्रावरुणेत्यादौ कविशब्दस्य मित्रावरुणयोर्वाचकत्वात् इत्थं वारुणी वरुणसम्बन्धिनी एकाक्षरवती यत् खलु यज्ञसम्बन्धि दुरिष्टं दुर्यजनं तद्वरुणो गृह्णात्यादत्ते तत्र या वारुण्या तदेव दुरिष्टं तदवयजति निरस्यति तथा आदित्या अदितिसम्बन्धिनी एका भवति इहानः प्रत्नमित्ययमित्यस्यामृचि श्रान्दं देवा अजीजन इति देवजनयितृत्वं प्रतिपाद्यते तच्चादितेरेवेति लिङ्गात् एषा आदित्या इयं पुरोवर्त्तिनी भूमिरेवादितिः अदितिशब्दाभिधेया तया चादित्यया ऋचा अस्यां पृथिव्यामेव यजमानः प्रतितिष्ठतीति॥७

अथैतस्मिन् बहिष्पवमाने स्तोमं विधाय स्तौति।

चतुर्विंश एव स्तोमो भवति तेजसे ब्रह्मवर्चसाय॥ ८॥

पञ्चस्वनुरूपतृचेषु तन्नवर्चे च क्रियमाणे चतुर्विंशस्तोत्रीयाः सम्पद्यन्ते तत्सङ्घातात्मकचतुर्विंशस्तोम एवास्य बहिष्पवमानस्य भवति स च चतुर्विंशतिसंख्याद्वारा गायत्रसम्बन्धात् गायत्रस्य वा छन्दसः प्रजापतिमुखादग्निना सहोत्पत्तेस्तेजोरूपत्वाद्

ब्रह्मवर्चसस्य च तेजोऽवान्तरजातित्वात् तेजोब्रह्मवर्चसयोर्हेतु-र्भवतीत्यर्थः ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चदशाध्यायस्य

सप्तमः खण्डः ।

---

अथ अष्टमः खण्डः ।

अथास्मिन् दशमेऽहनि प्रथममाज्यस्तोत्रं दर्शयति ।

सुषमिद्धो न आवहेत्याप्रिय आज्यानि भवन्ति ॥१॥

आप्रिय इति प्रयाजानुयाजानां संज्ञा सुषमिद्धो न आवहे-त्याद्या एकादशर्च्चो दाशतय्यामाम्नाताश्वलायनेन सूत्रकृता समिद्धो अद्येति सर्व्वेषां यथर्षिचेति प्रयाजयाज्यात्वेन विहिताः तस्मादेता आप्रीसंज्ञाः सुषमिद्धो न आवहेत्याद्यास्तिस्त्रऋचः आग्नेयं प्रथममाज्यस्तोत्रं भवति आज्यानि भवन्तीति बहुव-चनं आप्रिय इति बहुत्वापेक्षया ॥ १ ॥

अथैतस्यामाप्रीसंज्ञां निर्ब्रुवन् स्तौति ।

प्रजापतिः प्रजा असृजत सदुग्धो रिरिचानो ऽमन्यत स एतान्याप्रिय आज्यान्यपश्यत्तैरात्मान-माप्रीणात् दुग्धइव वा एष रिरिचानो यो दशमि-

रहर्भिस्तुष्टुवानो यदेतान्याप्रिय आज्यानि भवन्त्या-त्मानमेवैतैराप्रीणाति ॥ २ ॥

पुरा प्रजापतिः एतान्याप्रिय आज्यानि आप्रीभिर्निष्पाद्य-मिह आज्यस्तोत्रमपश्यत् तैराज्यैरात्मानमाप्रीणात् अतएव आप्रीणसाधनत्वात् एतासां आप्री इति संज्ञा तच्छन्दः केवलो ऽप्युत्पूर्वेतिष्ठतेरर्थे वर्त्तते इत्यर्थः ॥ २ ॥

यदद्य सूर उदित इति सूरवन्मैत्रावरुणमन्तो वै सूरोऽन्त एतद्द्यमसहामन्त एव तदन्तेन स्तुवते प्रतिष्ठाया उत्वा मन्दन्तु सोमा इत्युद्दैन्द्रमुत्थानस्य रूपं* ॥ ३ ॥

अथ चतुर्थमाज्यस्तोत्रं दर्शयति ।

इन्द्राग्नी आगतं सुतमिति येनैव रूपेण प्रयन्ति तदभ्युद्यन्ति स्तोमः ॥ ४ ॥

इन्द्राग्नी आगतं सुतमिति तृचः इन्द्राग्निदेवताकं चतुर्थ-माज्यस्तोत्रं दशरात्रस्य प्रथमेऽह्नन्यपि एतदेव चातुर्थमाज्यस्तोत्रं पूर्व्वं विहितं तथाच येनैव रूपेण एतत्तृचलक्षणं प्रयन्ति दशरात्रं प्रारभन्ते तदेवाभिलक्ष्योद्यन्ति दशरात्रं परिसमापयन्ति एतेषु

* अस्य ब्राह्मणस्याभासस्तथा भाष्यञ्च पतितमनुमीयते ।

चतुर्थ्यांज्यस्तोत्रेषु पूर्व्वोक्तश्चतुर्व्विंशएव स्तोमः कार्य्यः इत्थं प्रातः-सवनिकानां स्तोत्राणां स्तोत्रीया ऋचो विहिताः साम एतासु प्राकृतमेवेत्यधिगन्तव्यं ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चदशाध्यायस्य
अष्टमः खण्डः।

---

अथ नवमः खण्डः।

अथास्मिन् दशमेऽहनि माध्यन्दिनपवमानस्य स्तोत्रीयं तृचं दर्शयति।

उच्चाते जातमन्धस इत्युद्वत्यो गायत्र्यो भवन्तु-त्थानस्य रूपं ॥ १ ॥

उच्चाते जातमन्धस इत्याद्यास्तिस्रो ऋचः साधनत्वात् तासामाप्रीसंज्ञा एवञ्च यो दशभिरहर्भिस्तुष्टुवानः स्तुतवान् यजमानः एषदुग्धोरिरिचानो रिक्तो भवति यत् यान्येतान्याप्रिय आज्यानि भवन्ति आत्मानमेव एतैराज्यैराप्रीणाति तर्पयति* ॥१

अथान्यं स्तोत्रीयं तृचं दर्शयति।

पुनानः सोमधारयेति पन्थानमेव तत् पर्य्यव-यन्ति ॥ २ ॥

---

* एवञ्चेत्यादि तर्पयति इति पर्य्यन्तं भाष्यं अष्टमखण्डीयद्वितीयब्राह्मणस्य भाष्यमित्यनुमीयते।

पुनानः सोमधारयेति बार्हतस्तृचो भवति तत्तेन पन्थानमेव पर्य्यवयन्ति परिप्राप्नुवन्ति सर्व्वप्रकृतिभूतेऽग्निष्टोमे उच्चा ते जातमन्धस इत्यनन्तरं पुनानः सोमेति तृचो विहितः स च तत्र क्लृप्तत्वात् पन्था इत्युच्यते ॥ २ ॥

अथान्यं तृचं विधत्ते ।

आजाग्निर्विविंप्रकृतम्प्रतीनामिति यदाप्ते प्रवतीः कुर्य्युरतिपद्येरन्यदावत्यो भवन्त्यनतिपादाय ॥ ३ ॥

आजाग्निरिति आद्यास्तिस्रः स्तोत्रीयाः कार्य्याः यद्यदि आप्ते समाप्यमाने दशरात्रे प्रवतीः प्रतुद्रवेत्याद्याः प्रशब्दयुक्ताः कुर्य्युः यदाप्ते अतिपद्येरन् अतिदूरं गता भवेयुः प्रशब्देन प्रकर्षगमनस्य सूचनात् तस्मादावत्यः आ इत्यनेनोपसर्गेण युक्ताः स्तोत्रीयाः भवन्ति पशुवद्यजमानानामनतिपादाय अतिदूरगमनाभावाय भवति ॥ ३ ॥

अथ प्रथमे तृचे पूर्व्ववद्गायत्रं साम विधाय तद्ब्राह्मणञ्चातिदिशति ।

गायत्रं भवति यदेव गायत्रस्य ब्राह्मणं ॥ ४ ॥

उच्चा ते जातमन्धस इति तृचे गायत्रं साम गातव्यं तस्य चेमे वै लोका गायत्रमित्यादिकं यद्ब्राह्मणमाम्नातम् तदत्राप्यनुसन्धेयं ॥ ४ ॥

अथास्मिन्नेव तृचेऽन्यत्साम विधाय स्तौति ।

आमहीयवं भवति तृप्तिश्चान्नाद्यञ्च तृप्तिञ्चै-
वैतेनान्नाद्यञ्चाभ्युत्तिष्ठन्ति ॥ ५ ॥

आमहीयवाख्यमपि साम उच्चाते जातमन्धस इत्यस्मिन्नेव तृचे आवृत्ते गेयं तच्च साम तृप्तिः कल्पकं सामर्थ्यप्रदं अन्नाद्यं अदनीयानुरूपञ्च तथाच तृप्तिञ्चैवान्नाद्यञ्चाभिलक्ष्य एतेनाम-हीयवेन साम्नोत्तिष्ठन्ति ॥ ५ ॥

अथ सामान्तरं विधत्ते ।

आजिगं भवत्याजिजित्यायै ॥ ६ ॥

आजिगाख्यमपि साम पूर्वोक्त एव तृचे गेयं आजिं गच्छ-तीत्याजिगमिति अन्वर्थसंज्ञकत्वात् तत्साम आजिजित्यायै आजिगन्तव्यभूलेर्मध्यपर्य्यन्तं तच्च जयाय भवति ॥ ६ ॥

एतदेव व्याचष्टे ।

आजिर्वा एष प्रततो यद्द्वादशाहस्तस्यैतदु-
ज्जित्यै ॥ ७ ॥

यत् योऽयं द्वादशाहपृष्ठः प्रततो विस्तृत आजिः वै यथा धाव-तां पुरुषाणामतिशीघ्रपरीक्षार्थं आजिः कल्पते एवमनुष्ठातॄणां

सामर्थ्यपरीक्षणाय आजिवत्कल्पित इत्यर्थः तस्य द्वादशाहस्य लक्षणस्याजेः उज्जित्यै उज्जयाय एतत्साम भवति ॥ ७ ॥

अथान्यत्साम विधत्ते।

**आभीकं भवत्यभिक्रान्त्यै ॥ ८ ॥**

आभीकाख्यमपि साम उच्चाते जातमन्धस इत्यस्मिन्नेव तृच आहृत्ते गेयं तच्चाभिक्रान्त्यै स्वर्गस्याभिक्रमणाय भवति ॥ ८ ॥

अथैतत् शोकापशमनहेतुरिति आख्यायिकाप्रदर्शनेन स्तौति।

**अङ्गिरसस्तपस्तेपानाः शुचमशोचꣳस्त एतत्सामा-पश्यꣳस्तानभीकेऽभ्यवर्षत्तेन शुचमशमयन्त यदभी-केऽभ्यवर्षत्तस्मादाभीकं यामेव पूर्वैरहोभिः शुचꣳ शोचन्ति तामेतेनाच शमयित्वोत्तिष्ठन्ति ॥ ९ ॥**

अङ्गिरसस्तपस्तेपानाः तप्यवन्तः शुचमशोचन् शोकं प्रापु-वन् ततः शोकस्य निष्कृतिं कामयमानाः एतत्सामापश्यन् तच्च साम तान्त्सर्षीन् अभीके समीपेऽभ्यवर्षदभिप्राप्नोत् तेन समीपं गतेन साम्ना तेऽङ्गिरसः शुचमशमयन्त अपाघ्नन् यस्मादेतत् सामाभीकेऽभ्यवर्षत् तस्मादाभीकसम्बन्धादस्य साम्नः आभीक-मिति नाम सम्पन्नं यस्मादेवं तस्मात् यामेव शुचं शोकं पूर्वै-रहोभिः प्रायणीयाद्यैरनुष्ठितैः शोचन्ति शोकं प्राप्नुवन्ति तां

युधं शोकं एतेनाभीकेन साम्ना अतास्मिन् काले शमयित्वा अपहत्योत्तिष्ठन्ति यागादुत्थानं कुर्व्वन्ति यागं समापयन्तीति यावत् ॥ ९ ॥

अथ तृचान्तरेऽन्यत्साम विधत्ते।

उत्सेधो भवति ॥ १० ॥

उत्सेधाख्यं साम पुनानः सोमधारयेत्यस्मिंस्तृचे गेयं ॥ १० ॥

अथैतत् स्तौति।

उत्सेधेन वै देवाः पशूनुदशेधन्निषेधेन पर्य्यगृह्णन् ॥ ११ ॥

उत्सेधाख्येन साम्ना पर्य्यगृह्णन् पर्य्यवेष्टयन् एतेन निषेधाख्यमपि सामास्मिन्नेव तृचे गेयमिति विहितं भवति ॥ ११ ॥

अथैतयोः साम्नोर्मध्ये सामान्तरस्य गानं विधत्ते।

अन्तरोत्सेधनिषेधौ यज्ञायज्ञीयं ॥ १२ ॥

उत्सेधनिषेधावन्तरावुत्सेधनिषेधयोः साम्नोर्मध्ये यज्ञायज्ञीयं साम पुनानः सोमेति तृचे गेयं प्रथममुत्सेधं गीत्वा ततो यज्ञायज्ञीयं ततो निषेधं गायेदित्यर्थः ॥ १२ ॥

अथैतस्य यज्ञायज्ञीयस्य उत्सेधनिषेधयोरन्तराले करणं स्तौति।

पशवोऽन्नाद्यं यज्ञायज्ञीयं पशूनेव तदन्नाद्यमुत्सेध-निषेधाभ्यां परिगृह्णाति ॥ १३ ॥

यदेतद्यज्ञायज्ञीयं साम एतत्पशवः पश्वात्मकं अन्नाद्यरूपञ्च तत्तस्मात्पशूंश्चैवान्नाद्यञ्च उत्सेधनिषेधाभ्यामुभयतो वर्त्तमाना-भ्यामिति परितोवध्नाति ॥ १३ ॥

अथैतद्यज्ञायज्ञीयस्य माध्यन्दिनपवमाने गानं स्वर्गसाधन-मिति स्तौति ।

माध्यन्दिने वै पवमाने देवा यज्ञायज्ञीयेन यज्ञं सꣳस्थाप्य स्वर्गं लोकमारोहꣳस्तद्य एवं वेद माध्य-न्दिन एवैतत्पवमाने यज्ञायज्ञीयेन यज्ञꣳसꣳस्थाप्य स्वर्गं लोकमारोहति ॥ १४ ॥

पुरा देवाः माध्यन्दिनपवमान एव यज्ञायज्ञीयेन साम्ना स्तुत्वा यज्ञं संस्थाप्य परिसमाप्य स्वर्गं लोकमारोहन् यज्ञायज्ञी-येन हि साम्ना प्रकृतिभूतस्याग्निष्टोमस्य समापनात् यत्र कुत्रापि क्रियमाणमेतत्साम समाप्तिहेतुर्भवति तत्तथाच यो यजमानः एवमुक्तं ब्राह्मणार्थं वेद जानाति एतत् एष वेदिता माध्यन्दिने पवमान एव यज्ञायज्ञीयेन साम्ना यज्ञं समाप्य स्वर्गं लोकमा-रोहति ॥ १४ ॥

यदुक्तं अस्मिन् दशमेऽहनि अनुष्टुप् परोक्षमुपेतोद्यन्ति तदप्यनेन साम्ना सिध्यतीत्याह ।

अथो परोक्षमनुष्टुभं सम्पद्यते ह्येषा वै प्रत्यक्ष-मनुष्टुब्यद्यज्ञायज्ञीयं तद्यत्तृतीयसवने कुर्य्युः प्रत्यक्ष-मनुष्टुभमृच्छेयुस्तस्मान्मध्यन्दिने कुर्वन्ति तेन परो-क्षमनुष्टुभमुपयन्ति ॥ १५ ॥

अथोऽपि च एतद्दशममहः परोक्षं परोक्षेण वर्त्तमानमनुष्टुभं सम्पद्यते सम्प्राप्नोति कथमिति तदुच्यते एषा वै प्रत्यक्षं प्रत्यक्षेण वर्त्तमानानुष्टुप् यद्यज्ञायज्ञीयाख्यं साम वाङ्निधनत्वात् वागनुष्टुबिति हि ब्राह्मणं तत्सामानुष्टुप्संस्तुतं यज्ञायज्ञीयं यद्यदि तृतीयसवने कुर्युः प्रयुञ्जीरन् प्रत्यक्षमनुष्टुभं अस्मिन् दश-मेऽहनि ऋच्छेयुः प्राप्नुयुः तच्च न कार्य्यमित्युक्तं तस्मान्माध्यन्दिने पवमाने यज्ञायज्ञीयं कुर्युः तथाच स्तोत्रमध्ये सामान्तरैर्निगूढ़-त्वात् परोक्षं परोक्षेणैव वर्त्तमानमनुष्टुभमुपयन्त्युपगच्छन्ति ॥१५

अथार्न्तिमे तृचे गेयं साम दर्शयति ।

गौरीवितं भवति ॥ १६ ॥

आजाग्टविर्विप्रज्ञातस्मतीनामिति तृचे गौरीवितं साम गेयं ॥ १६ ॥

अथैतस्य माध्यन्दिने करणं स्तौति ।

एतद्वै यज्ञस्य स्वस्तनं यद्गौरीवितमेतदायतनो

यजमानो यन्माध्यन्दिनो यज्ञौरीवितन्माध्यन्दिने भवति श्वस्तनमेव तद्यजमान आत्मन्धत्ते स्तोमः ॥ १७ ॥

श्वस्तनमेव तद्यजमान आत्मन् आत्मनि यस्मिन् धत्ते धारयति एवं गायत्र्यादि गौरीवितान्तेष्वष्टसु सामसु प्रत्येकं तृचे गीयमानेषु चतुर्विंशतिस्तोत्रीयाः सम्पद्यन्ते तथाच तत्सङ्ख्यातात्मकचतुर्विंशएव स्तोमस्य पवमानस्य स्तोत्रस्य भवति ॥ १७ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चदशाध्यायस्य

नवमः खण्डः ।

---

अथ दशमः खण्डः ।

अथ प्रथमस्य पृष्ठस्य स्तोत्रीयं तृचं दर्शयति ।

कयानश्चित्र आभुवदिति कवत्यस्तेन प्राजापत्याः को हि प्रजापतिः प्रजापतेराप्त्यै ॥ १ ॥

कयानश्चित्र इत्याद्यास्तिस्रः स्तोत्रीयाः प्रथमस्य पृष्ठस्तोत्रस्य सम्भवति तास्च कवत्यः कशब्दोपेताः तेनैव कारणेन प्रजापतिदेवताकाः हि यस्मात्प्रजापतिः कः कशब्दाभिधेयः एव चैताः स्तोत्रीयाः प्रजापतेराप्त्यै प्राप्त्यै सम्पद्यन्ते ॥ १ ॥

अथ द्वितीयस्य पृष्ठस्य स्तोत्रीयं तृचं दर्शयति ।

माचिदन्यद्विशंसतेत्युत्थानमेतदाशिषो ह्येतर्हि ॥२

माचिदन्यद्विशंसतेति तृचः मैत्रावरुणपृष्ठस्तोत्रीयाः अन्यन्माचिद्विशंसन्त स्तुतशस्त्रान्तरमावृतेति शंसनादुपरमस्य प्रतिपाद्यमानत्वात् एतदुत्थानस्य योगान्निर्गमनस्य रूपं एतर्हि एतस्मिन् दशमस्याह्नोऽनुष्ठानकाले एतदाशिषो हि एतदुत्थानमाशीः आशीर्व्यं फलं येषां तथाविधाः खलु यजमानाः भवन्ति तस्मादेतस्मिन्नहन्ययं तृचः सङ्गत इत्यर्थः ॥ २ ॥

अथ तृतीयस्य पृष्ठस्तोत्रीयं तृचं दर्शयति ।

उदुत्ये मधुमत्तमा इत्युद्वत्य उदयनीयेऽहन्येतदाशिषो ह्येवैतर्हि ॥ ३ ॥

उदुत्ये मधुमत्तमा इत्याद्यास्तिस्त्रऋचो ब्रह्मसाम्नः स्तोत्रीया भवन्ति तास्वोद्वत्य उच्छब्दयुक्ता उदयनीये दशरात्रस्य समापके दशमेऽहनि सम्बन्धयोग्या गतमन्यत् ॥ ३ ॥

अथ चतुर्थस्य पृष्ठस्य स्तोत्रीयं तृचं दर्शयति ।

तरोभिर्वो विदद्वसुमिति स्तोमो वै तरो यज्ञो विदद्वसुः स्तोमेन वै यज्ञो युज्यते यत्तरोभिर्वो विदद्वसुमित्याह यज्ञमेव तद्युनक्ति ॥ ४ ॥

तरोभिर्वो विदद्वसुमिति तृचोऽच्छावाकपृष्ठसाम्नः स्तोत्रीय-

स्तुचः स्तोमो वै देवेषु तरो नामासीदित्यादिना पूर्वंप्रतिपादितत्वात् स्तोमो वै तरः तरशब्देन स्तोम एवोच्यते विदद्वसुशब्देन च यज्ञः स्तोमेन खलु त्रिवृदादिना यज्ञो युज्यते संयुक्तो भवति एवञ्च तरोभिर्वो विदद्वसुमिति यदाह तत्तेन यज्ञमेव स्तोमेन युनक्ति योजयति ॥ ४ ॥

अथ प्रथमपृष्ठस्तोत्रनिवर्त्तकं साम विधत्ते ।

वामदेव्यस्यर्क्षु रथन्तरं पृष्ठं भवति गायत्री वै रथन्तरस्य योनिः स्वायामेव तद्योनौ रथन्तरं प्रतिष्ठापयति ॥ ५ ॥

वामदेव्यस्य साम्नो योनिभूतास्वृक्षु कयानश्चित्र इत्याद्यासु पूर्वं विहितासु रथन्तरं साम पृष्ठस्तोत्रं भवति अथैतासु कयानश्चित्र इत्याद्यासु गायत्रीषु रथन्तरस्य करणं युक्तमित्याह गायत्री खलु रथन्तरस्य योनिः उत्पत्तिकारणं प्रजापतिर्वा एतां गायत्रीं योनिमपश्यत् आदीधीतेत्यादिना तत्रैव पूर्वं प्रतिपादितत्वात् तत्तया स्वायां स्वकीयायां रथन्तरं जननहेतावेव योनौ कयानश्चित्र इत्यस्यामृचि तत् साम प्रतिष्ठापयति ॥५॥

अथ ऋक्सामस्तोमानां समुदायमतत्यं प्रशंसति ।

तेजो वै गायत्री छन्दसां तेजो रथन्तरꣳ साम्नां

तेजश्चतुर्विंशस्तोमानां तेज एव तत्सम्यक् सन्दधात्यपि ह पुत्रस्य पुत्रस्तेजस्वी भवति ॥ ६ ॥

तेज एव खलु गायत्री छन्दसाम्मध्ये तथा साम्नाम्मध्ये रथन्तरं तेजः उभयोरग्निना सह प्रजापतिमुखादुत्पत्तेस्तेजस्त्वं स्तोमानां मध्ये चतुर्विंशाख्यस्तोमस्तेजः चतुर्विंशतिसंख्यायोगेन तस्य गायत्रीसम्बन्धात्तस्यास्तु तेजस्त्वमुक्तं तथाच गायत्र्यादीन्येतानि त्रीणि संयोजयन् तेजएव सम्यक् समीचीनं सन्दधाति संयोजयति एवं प्रयोक्तुर्यजमानस्य यः पुत्रः तस्य पुत्रोऽपि तेजस्वी भवति ॥ ६ ॥

अथैतस्य रथन्तरस्य प्रथमस्तोत्रीयायाः पूर्व्वं विहितं प्रस्तावभागपरिमाणमभित्वा शूरेत्यस्यामेव कयानश्चित्र इत्यस्यामपि तथैव भवितव्यमनूद्य स्तौति ।

अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौत्यष्टाशफाᳬस्तत्पशूनवरुन्धे ॥ ७ ॥

अष्टाक्षरेण कयानश्चित्र आभुवदित्यनेन पादेन प्रथमायां स्तोत्रीयायामृचं प्रस्तौति क्रियाग्रहणं कर्त्तव्यमिति कर्मणः संप्रदानसंज्ञा चतुर्थ्यर्थे षष्ठी यस्मादेवमष्टाक्षरेण प्रथमायाः प्रस्तावस्तस्मात् अष्टाशफान् अष्टौ शफाः खुरा येषां तथाविधान् पशूनवरुन्धे यजमानो लभते ॥ ७ ॥

अथ द्वितीयतृतीययोः स्तोत्रीययोः प्रस्तावभागं पूर्ववदनूद्य स्तौति।

द्व्यक्षरेणोत्तरयोर्ऋचोः प्रस्तौति द्विपाद्यजमानो यजमानमेव यज्ञे पशुषु प्रतिष्ठापयति॥ ८॥

उत्तरयोः कस्त्वासत्यो मदानामित्यादिकयो ऋचोरादितो द्व्यक्षरेण प्रस्तावः कार्य्यः स्पष्टमन्यत्॥ ८॥

अथैतद्रथन्तरं ऋद्धिसाधनत्वेन स्तौति।

गायत्रं वै रथन्तरं गायत्रछन्दो यद्गायत्रीषु रथन्तरं भवति तेन स्वायाञ्जनतायामृध्नोतीमे वै लोका गायत्री यद्गायत्रीषु रथन्तरं भवतीमानेव तल्लोकान् समाप्योत्तिष्ठन्ति॥ ९॥

रथन्तरं साम गायत्रं वै गायत्र्याः सम्बन्धि प्रजापतेर्वा एतद्गायत्रीमित्यादिना रथन्तरस्य गायत्रीसकाशात् सृष्टेः प्रतिपादितत्वात् तथाच रथन्तरं गायत्रीछन्दस्कं छन्दसाम्मध्ये गायत्र्याख्यं छन्दो यस्य सम्बन्धि तत्तथोक्तं दाशरात्रिके प्रथमे गायत्रेऽहनि रथन्तरपृष्ठस्तोत्रतया सम्बन्धात् गायत्रछन्दस्कं एवञ्च यद्गायत्रीषु कयानश्चित्र इत्याद्यासु रथन्तरं साम भवति तेन कारणेन स्वीयां स्वकीयायामेव जनतायां जनसमूहे यजमानः ऋध्नोति अभिवृद्धो भवति अपिच इमे वै पृथिव्यादयस्त्रयो लोका

गायत्री त्रिष्टुं त्रिवृत्प्रायं, समाप्य सम्यक् प्राप्य उत्थानं कुर्वन्तीत्यर्थः ॥ ९ ॥

अथ मैत्रावरुणपृष्ठनिवर्त्तकं साम विधत्ते ।

मैधातिथं भवति ॥ १० ॥

मेधातिथिना दृष्टं साम मैधातिथं तन्माचिदन्यद्विशंसतेत्यस्मिंस्तृचे गेयं ॥ १० ॥

अथैतदृषिसम्बन्धप्रदर्शनेन पशुप्राप्तिसाधनमित्याह ।

एतेन वै मेधातिथिः काण्वो विभिन्दुकाद्व्यूढ्वीर्गा उदसृजत पशूनामवरुध्यै मैधातिथं क्रियते ॥११॥

काण्वः कण्वगोत्रो मेधातिथिर्नाम ऋषिः एतेन साम्ना साधनेन विभिन्दुकात् विभेदनशीलादेतत्संज्ञकादसुरात् व्यूढ्वीः विरुद्धोधस्का गा उदसृजत उदगमयत् तस्मादेतन्मैधातिथं पशुप्राप्त्यर्थमेवेदानीं क्रियते ॥ ११ ॥

अथ तृतीयस्य पृष्ठस्य निवर्त्तकं साम दर्शयति ।

अभीवर्त्तो ब्रह्मसाम भवत्येकाक्षरणिधनः प्रतिष्ठायै ॥ १२ ॥

अभीवर्त्ताख्यं साम उदुत्ये मधुमत्तमा इत्यस्मिंस्तृचे ब्रह्म-

साम ब्रह्मणः पृष्ठस्तोत्रनिवर्त्तकं साम कार्य्यं सफाजीवन्तः एका-
क्षरणिधनः सा २ ३ ४ ५ इति कृपत्रान्त्यमक्षरन्निधनं यस्य स
तथोक्तः सोऽयं प्रतिष्ठायै यजमानस्य प्रतिष्ठानाय भवति ॥ १२ ॥

कथं प्रतिष्ठाहेतुतेत्यत आह ।

एकाक्षरा वै वाग्वाच्येव प्रतिष्ठायोत्तिष्ठन्ति ॥१३॥

वागित्येकेनाक्षरेणाभिधेया हि वाक् तस्माच्च प्रतिष्ठाहेतुत्वं
रावस्य दृष्टं तथाच वाच्येव प्रतिष्ठाया कृप उत्तिष्ठन्ति ॥ १३ ॥

अथ चतुर्थं पृष्ठस्तोत्रनिवर्त्तकं साम दर्शयति ।

कालेयमच्छावाकसाम भवति ॥ १४ ॥

कालेयाख्यं साम तरोभिर्वो विदद्वसुमित्यस्मिंस्तृचे गीय-
मानमच्छावाकस्य पृष्ठसाम भवति ॥ १४ ॥

अथास्मिन्नहनि रथन्तरकालेययोः प्रयोगं संहृत्य स्तौति ।

समानलोके वै कालेयञ्च रथन्तरञ्चेयं वै रथन्तरं
पशवः कालेयमस्यामेव पशुषु च प्रतिष्ठायोत्तिष्ठन्ति
स्तोमः ॥ १५ ॥

कालेयञ्च रथन्तरञ्चैते सामनी समानलोके वै समानस्थाने
खलु यस्मिन्नहनि रथन्तरं साम पृष्ठं तत्र कालेयमप्यच्छावाक-
सामत्वेन प्रयुक्तं यथा रथन्तरपृष्ठे प्रकृतौ ज्योतिष्टोमे दाशरा-

त्रिके प्रथमेऽहनि च अतोऽस्य दशमस्याह्नो रथन्तरपृष्ठत्वात् कालेयमपि प्रयोज्यं इयं वै सर्व्वैरनुभूयमाना पृथिव्येव रथन्तरं पशव इव कालेयं तत्साधनत्वात् तथाच अस्यामेव पृथिव्यां पशुषु च प्रतिष्ठाय प्रतिष्ठिताभूता उत्तिष्ठन्ति सत्रादुत्थानं कुर्व्वन्ति एतेषु पृष्ठस्तोत्रेषु पूर्व्वोक्तः चतुर्व्विंश एव स्तोमः कार्य्यः ॥ १५ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चदशाध्यायस्य

दशमः खण्डः ।

---

अथ एकादशः खण्डः ।

अथास्मिन् दशमेऽहन्यार्भवपवमानस्य स्तोत्रीयं प्रथमं तृचं दर्शयति ।

स्वादिष्ठया मदिष्ठयेति गायत्री भवति मदवद्वै रसवत्तृतीयसवनम्मदमेव तद्रसं दधाति ॥ १ ॥

स्वादिष्ठयेति आर्भवस्य स्तोत्रीया शिष्टं स्पष्टं ॥ १ ॥

अथास्मिंस्तृचे पूर्व्वयज्ञायज्ञं साम विधाय तद् ब्राह्मणमपर्शति-दिशति ।

गायत्रं भवति यदेव गायत्रस्य ब्राह्मणं ॥ २ ॥

सिद्धमेतत् ॥ २ ॥

अथास्मिन्नेव तृचेऽन्यत्साम विधत्ते।

**सꣳहितं भवति द्व्यक्षरणिधनं प्रतिष्ठायै प्रतिष्ठायैवोत्तिष्ठन्ति॥ ३॥**

संहिताख्यं साम स्वादिष्ठयेत्यस्मिंस्तृचे गेयं तच्च द्व्यक्षरणिधनं द्वे अक्षरे निधनं यस्य तत्तथोक्तं तच्च पादद्वयसाम्यात् प्रतिष्ठायै भवति तथा च प्रतिष्ठायैवोत्तिष्ठन्ति॥ ३॥

अथान्यत्साम विधत्ते।

**सफं भवति॥ ४॥**

पवस्व मधुमत्तम इत्यस्मिंस्तृचे सफाख्यं साम गेयं॥ ४॥

अथैतस्य सफसंज्ञान्निर्ब्रुवन् लोकत्रयप्राप्तिहेतुतामाह।

**सफेन वै देवा इमान् लोकान् समाप्नुवन्यत्समाप्नुवꣳस्तत्सफस्य सफत्वमिमानेवैतेन लोकान् समाप्योत्तिष्ठन्ति॥ ५॥**

सफाख्येन खलु साम्ना पुरा देवा इमान् लोकान् समाप्नुवन् संप्राप्ताः यद्यस्मात् अनेन साम्नाप्नुवन् तत्तस्मात् सफाख्यस्य साम्नः सफत्वं सफमिति नाम जातं संपूर्व्वादाप्नोतेर्वर्णव्यात्यत्या सफशब्दनिष्पत्तिरित्यर्थः ततश्चेदानीन्तना अपि यजमानाः एतेन सफेनेमानेव लोकान् समाप्य सम्यक्प्राप्य यज्ञादुत्तिष्ठन्ति॥ ५॥

अथान्यस्मिन् सामान्तरं विधाय तत् स्तावकं ब्राह्मणमति-दिशति ।

रौहितकूलीयं भवति यदेव रौहितकूलीयस्य ब्राह्मणं ॥ ६ ॥

रौहितकूलीयाख्यं साम इन्द्रमच्छेत्यस्मिंस्तृचे गेयं तस्य च रौहितकूलीयस्य एतेन वै रौहिताभ्यां रौहितकूल आजिमज-यदित्यादिकं यद्ब्राह्मणं पूर्व्वमाम्नातं तदस्यापि रौहितकूली-यस्य ब्राह्मणं ॥ ६ ॥

अथ सामद्वयं विधत्ते ।

श्यावाश्वान्धीगवे भवतः समीच्यौ विराजौ दधा-त्यन्नाद्याय ॥ ७ ॥

श्यावाश्वान्धीगवे सामनी भवतः ते च प्रकृतौ पुरोजिती वो अन्धस इत्यस्मिंस्तृचे गीयेते तत्र च यद्यावा अन्या विराडच्यत्या-न्येति विराट् इयं पूर्व्वमुक्तं एवञ्चैते सामनी प्रयुञ्जानः समीच्यौ सङ्गते ते एवं विराजौ दधाति किमर्थमन्नाद्यर्थं ॥ ७ ॥

अथैतयोराधारभूताः ऋचो विधत्ते ।

पिपीलिकमध्यासु स्तुवन्ति ॥ ८ ॥

पर्य्यूषु प्रधन्व वाजसातय इत्याद्यास्तिस्रोऽनुष्टुभः पिपीलिक-

मध्यास्त्रिपदाः प्रथमतृतीयौ पादौ द्वादशाक्षरौ मध्यमोऽष्टाक्षर इति पिपीलिकमध्या मध्यं यथा अल्पीयो भवति एवं न्यूनाक्षरत्वेन मध्यमपादस्याल्पीयस्त्वात् पिपीलिकमध्या तासु स्वावास्वान्यौगवाभ्यां स्तुवन्ति ॥ ८ ॥

अथैतासु गानं स्तौति ।

इन्द्रो वृत्रं हत्वा नास्तृषीति मन्यमानः परां परावतमगच्छत्स एतामनुष्टुभं व्यौहत्तान्मध्ये व्यवासर्पदिन्द्रगृहे वा ऐषोऽभये यजतेऽभय उत्तिष्ठति यएवं विद्वानेतासु स्तुते ॥ ९ ॥

इन्द्रो वृत्रमसुरं हत्वा नास्तृषि नाहिंसिषं वृत्रमिति मन्यमानः सन्नानः तस्माद्भीतः सन् परां परावतं पलायमानोऽत्यन्तं दूरं प्राप्नोत् गत्वा च स इन्द्रः एतां पिपीलिकमध्यामनुष्टुभं व्यौहत् विशेषेणाहृतवान् ततस्तस्यामध्ये व्यवासर्पत् अभयार्थं प्राविशत् अतो यो यजमानः एवं ब्राह्मणार्थं विद्वाञ्जानन् एतासु पिपीलिकमध्यानुष्टुप्सु एताभ्यां सामभ्यां स्तुते ऐषोऽभये भयरहिते इन्द्रगृहे यजते तथा अभय एव स्थान उत्तिष्ठति ॥ ९ ॥

अथ सामान्तरं विधत्ते ।

यज्ञायज्ञीयनिधनं सौहविषं भवति यज्ञायज्ञीयादेव तत्तृतीयसवने न यन्ति ॥ १० ॥

यज्ञायज्ञीयस्य वागिति निधनं तदेव निधनं यस्य तथाविधं सौहविषं साम परिप्रधन्वेत्यस्मिंस्तृचे गेयं तथाच तृतीयसवने यज्ञायज्ञीयादेव साम्नो न यन्ति नापगच्छन्ति तृतीयसवनं हि यज्ञायज्ञीयस्य स्थानं तच्चैतस्मिन्नहनि माध्यन्दिन एव पवमाने प्रयुक्तं तृतीयसवनेऽपि तदेकदेशस्य निधनस्य प्रयोगात् यज्ञायज्ञीयमेव तृतीयसवने कृतं भवति ॥ १० ॥

अथान्यत्साम विधत्ते।

वाजजिद्भवति ॥ ११ ॥

वाजजिदाख्यं साम सूर्य्यस्येव रश्मय इत्यस्मिंस्तृचे गेयं ॥ ११ ॥

वाजोऽन्नं जनयेत्यनेनेति निर्वचनमभिप्रेत्य स्तौति।

सर्व्वस्याप्त्यै सर्व्वस्य जित्यै सर्वं वा एते वाजं जयन्ति ये दशममहरागच्छन्त्यन्नं वै वाजोऽन्नाद्यस्यावरुध्यै ॥ १२ ॥

एतदिन्द्रायेन्दो मरुत्वत इति मरुत्वत्यो गायत्र्यो भवन्तीत्यस्मिन् खण्डे व्याख्यातं ॥ १२ ॥

अथास्य साम्नो निधनपरिमाणं विधाय स्तौति।

दशाक्षरन्निधनमुपयन्ति दशरात्रस्य धृत्यै दशाक्षरा विराड्वैराजमन्नमन्नाद्यस्यावरुध्यै ॥ १३ ॥

दशाक्षराणि निधनानि यस्य तत्तथोक्तं तच्च दशाक्षरनिधनं अक्षरशो दशरात्रस्य दशानामह्नां धारणाय भवति शिष्टं सिद्धं ॥ १३ ॥

अथैतस्याधारभूतौ विधाय स्तौति ।

**सूर्य्यवतीषु स्तुवन्त्यतो वै सूरोऽन्त एतद्दशमस्याह्नामन्तएवं तदन्तेन स्तुवते प्रतिष्ठायै ॥ १४ ॥**

सूर्य्यस्येव रश्मय इत्याद्यासु सूर्य्यशब्दयुक्तासु तिसृषु ऋक्षु स्तुवन्ति शिष्टं सुषमिद्धो न आवहेत्याग्निय आज्यानीत्यत्र व्याख्यातं ॥ १४ ॥

तथैवास्यैव लिङ्गद्वयमनूद्य स्तौति ।

**उपवत्यो भवन्ति प्रतिष्ठायै परिवत्यो भवन्ति सर्वस्य पर्य्याप्त्यै ॥ १५ ॥**

उपोमतिः पृच्छ्यते सिच्यतेमधित्युपशब्दयोगादेता उपवत्यो भवन्ति उपशब्दस्योपगमनद्योतक इति ता यजमानस्य प्रतिष्ठायै भवन्तीति तथा मधुमां द्रप्सः परिवारमर्षतीति परिशब्दवत्यः परिवत्यो भवन्ति तथाच सर्वस्य फलस्य पर्य्याप्त्यै संपूर्णतायै ॥ १५ ॥

एवं गायत्रादि वाजजिदन्तेष्वष्टसु सामसु प्रत्येकं तृचे

गीयमानेषु यः स्तोमः तत्सम्पद्यते स एवास्य पवमानस्य स्तोत्रस्य स्तोम इत्याह।

चतुर्विंशएव स्तोमो भवति तेजसे ब्रह्मवर्चसाय॥ १६॥

स्पष्टोऽर्थः॥ १६॥

इति ताण्ड्यमहाब्राह्मणे पञ्चदशाध्यायस्य
एकादशः खण्डः।

---

अथ द्वादशः खण्डः।

अथाग्निन्नह्न्यन्तिमं स्तोत्रीयं दर्शयति।

विराट्सु वामदेव्यमग्निष्टोमसाम भवति शान्त्यै क्लृप्त्यै॥ १॥

अग्निन्नरोदीधितिभिररण्योरित्याद्यासु विराट्सु वामदेव्यं गीयमानं अग्निष्टोमसाम भवति तच्च शान्त्यै परितापशमनाय क्लृप्त्यै कल्पनाय सामर्थ्याय च भवति॥ १॥

तथैतस्मिन् स्तोत्रे सर्वसामस्तोमान् संहृत्य स्तौति।

सर्वै वामदेव्यᳪ साम्नाᳪ सद्विराट् छन्दसाᳪ सप्तयस्त्रिᳪशः स्तोमानाᳪ सतामन्तान् सन्धायोत्तिष्ठन्त्यपिह पुत्रस्य पुत्रः सत्त्वमश्नुते॥ २॥

साम्नाम्मध्ये वामदेव्यं साम यत् उत्कृष्टं तथा विराट् छन्दसां मध्ये स्तोमानाम्मध्ये त्रयस्त्रिंश एवञ्चैतान् सह प्रयुञ्जानः सतामुत्कृष्टानामन्तान् पर्य्यन्तान् सन्धाय संहृत्य एकीकृत्य सत्रादुत्तिष्ठन्ति अपि वास्य यः पुत्रः तस्य पुत्रोऽपि सत्त्वं सद्भावमश्नुते प्राप्नोति ॥ २ ॥

यथास्य द्व्यरात्रस्य समापने ब्रह्मवादिभिः कृतञ्चोद्यमुद्भाव्य परिहरति।

ब्रह्मवादिनो वदन्ति यतः सत्रादुदस्थाता ३ स्थिता ३दिति यद्यत इति ब्रूयुरप्रतिष्ठाना अप्रजसो भविष्यन्तीत्येनान् ब्रूयाद्यत् स्थितादिति ब्रूयुः स्थायुकैषाꣳ श्रीर्भविष्यति न वसीयाꣳसो भविष्यन्तीत्येनान् ब्रूयात् पूर्णादेव पूर्णमभ्युदस्थामेति ब्रूयुः ॥ ३ ॥

ब्रह्मवादिनो वेदार्थचिन्तकाश्चोदयन्ति किमेते यजमानाः यतो गच्छतः सत्राद्व्यरात्रादुदस्थाता उत्तिष्ठन्ति उत स्थितात् सत्रादिति यद्यपि यतो गच्छतः सत्रादुदस्थाता इति ब्रूयुः तथा च गमनशीलाद्यज्ञादुत्थितत्वात् यजमाना अप्रतिष्ठानाः प्रतिष्ठानरहिताः गन्तुकामाः अप्रजसः प्रजारहिताश्च भविष्यन्तीत्येनान् यजमानानभिज्ञः प्रतिब्रूयात् यद्यदि स्थितान्निश्चलात् सत्रादुदस्थातेति ब्रूयुस्तर्ह्येषां श्रीः स्थायुका स्थानशीला भविष्यति नोत्तरोत्तरं वर्द्धते अत एतेन वसीयांसो वसुमत्तराश्च

भविष्यन्तीत्येनान् यजमानान् प्रतिब्रूयात् एवं पक्षद्वयेऽपि दोष-दर्शनात् पूर्णादेव पूर्णमभ्युदस्थामेति ब्रूयुः ॥ ३ ॥

एतद्व्याचष्टे ।

एते वै पूर्णात् पूर्णमभ्युत्तिष्ठन्ति ये वामदेव्येन स्तुत्वोत्तिष्ठन्ति ॥ ४ ॥

एते खलु पूर्णात् अधिकात् पूर्णमधिकमभिलक्ष्य सत्रादुत्ति-ष्ठन्ति ये वामदेव्येन साम्ना स्तुत्वोत्तिष्ठन्ति ॥ ४ ॥

वामदेव्यस्य च पूर्णत्वमुपपादयति ।

अन्तरिक्षं वै वामदेव्यमन्तरिक्षेणेदꣳ सर्वं पूर्णं ॥५॥

अन्तरिक्षेण च इदं सर्वं जगत् पूर्णं सर्वव्यापकान्तरिक्षात्म-कत्वात् वामदेव्यस्य पूर्णत्वमित्यर्थः ॥ ५ ॥

एवं साम्नः समृद्धिहेतुमुक्त्वा स्तोमस्यर्चां समृद्धिहेतुतामाह ।

एष वै समृद्धः स्तोमो यत् त्रयस्त्रिꣳशस्त्रयस्त्रिꣳ-शदक्षरासु समृद्धावेव प्रतितिष्ठन्ति ॥ ६ ॥

यस्त्रयस्त्रिंशः स्तोमः एष वै खलु समृद्धः पूर्णः स्तोमः त्रिवृ-दादिभ्यः पञ्चभ्यः स्तोमेभ्योऽधिकत्वात् स च त्रयस्त्रिंशः स्तोमः त्रयस्त्रिंशदक्षरास्वग्निन्नर इत्याद्यासु विराट्सु निष्पद्यते तथाच समृद्धावेव यजमानाः प्रतितिष्ठन्ति ॥ ६ ॥

अथैता ऋचः सर्व्वच्छन्दोरूपेण स्तौति ।

सर्व्वेषां वा एतास्छन्दसाꣳ रूपं यत्त्रिपदास्तेन गायत्र्यो यदेकादशाक्षराणि पदानि तेन त्रिष्टुभो यत् द्वादशाक्षरं पदं तेन जगत्यो यत् त्रयस्त्रिꣳशदक्षरास्तेन विराजस्तेनो अनुष्टुभो न ह्येकस्मादक्षराद्विराधयन्ति ॥ ७ ॥

एता अग्निर्नरोदीधितिभिरित्याद्याः सर्व्वेषां गायत्र्यादीनां छन्दसां रूपं यद्यस्मादेतास्त्रिपदास्तेन गायत्र्यो भवन्ति यद्यस्मादासां एकादशाक्षराणि पदानि एकादशाक्षराः पादाः तेनैतास्त्रिष्टुभः यद्यस्मात् द्वादशाक्षरं पदं अक्षरव्यूहेन प्रथमः पादो द्वादशाक्षरो भवति तेनैता जगत्यः यद्यस्मादेतास्त्रयस्त्रिंशदक्षराः तेनैताविराजः तेनैव चानुष्टुभः तत्रानुष्टुप् द्वात्रिंशदक्षराणामनुष्टुप्त्वमिति नह्येकस्मादिति न खल्वेकस्मादक्षरादधिकात् न्यूनाद्वा छन्दांसि विराधयन्ति विभिद्यन्ते अतो अधिकमप्येकमक्षरमासामनुष्टुप्त्वं न चान्तर इत्यर्थः ॥ ७ ॥

अथैतस्य स्तोत्रस्य विधित्सितं पूर्व्वं स्तुतं स्तोमं विधाय स्तौति ।

त्रयस्त्रिꣳशएव स्तोमो भवति प्रतिष्ठायै देवतासु वा एष प्रतिष्ठितः ॥ ८ ॥

अस्याग्निष्टोमसाम्न: त्रयस्त्रिंशएव स्तोम: कार्य्यो न प्रकृतस्त्रिवृत्त्रिंश: त्रयस्त्रिंशत्संख्याकासु देवतासु खलु एष त्रयस्त्रिंश: प्रतिष्ठित: तस्मात् त्रयस्त्रिंशएवान्तत: प्रयोक्तव्य इत्यर्थ: ।

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वर: ॥ ८ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे पञ्चदशाध्यायस्य द्वादश: खण्ड: ।

पञ्चदशाध्याय: समाप्तिमगमत् ।

---

# षोडशोऽध्यायः ।

अथ प्रथमः खण्डः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

एवं द्वादशाहस्य व्यूढस्य दशरात्रस्य स्तोमक्लृप्तिरुक्ता स-मूढस्य तु कल्पकारेण क्लृप्तावगन्तव्या स च व्यूढो दशरात्रो हीनात्मकः सत्रात्मकश्च उभयलिङ्गसद्भावात् एकोदीक्षेतैकस्यैव दीक्षाविधानं द्वादशाहेन यजत इति यजतिचोदना अतिरिक्तं वा एतदतिरिक्तेन स्तुवन्ति यद्गौरीवितेनाहीनानिति अही-नत्वस्य सिद्धवदनुवादः यजमानं वा अनुप्रतितिष्ठन्त्युद्गाता प्रतितिष्ठतीति ऋत्विग्यजमानयोर्भेददर्शनं यजमानमेवैतया वर्द्धयन्तीति एकस्यैव यजमानस्य वर्द्धनं ध्वस्ने वै पुरुपन्तीतर-न्तपुरुमीढाभ्यां वैददश्विभ्यां सहस्राण्यदित्सतामिति दक्षिणा-प्रवाद इत्यादीनि बहून्यहीनलिङ्गानि स्तोमो युज्यते सवि-येभ्योऽहर्भ्यः यतः सत्रादुदस्थाता २ स्थिता २ दिति सत्रसंशब्दनं सर्व्वं वा एतेवाजञ्जयन्ति ये दशममहरागच्छन्तीति येनैव रूपेण प्रयन्ति तमभ्युद्यन्तीत्यादीनि बहुकर्तृकत्वप्रतिपादनानि बहुशः सत्रलिङ्गानि यान्युपलभ्यन्ते तस्मादेवमुभयलिङ्गसद्भावात् सत्रा-

हीनात्मको दशरात्र: सोऽयं प्रायणीयोदयनीयावतिरात्राभ्यां संयुक्तो द्वादशाहाख्य: क्रतुर्भवति स च द्वादशाहो विधास्यमानानां द्विरात्रप्रभृतीनां अहीनानामेकादशरात्रादीनां सत्त्राणाञ्च प्रकृतिरिति सर्व्वप्रकृतेरग्निष्टोमस्य विधानानन्तरं गतैरध्यायैर्विहित: एवं प्रकृतिभूतावग्निष्टोमद्वादशाहौ येनैव क्रमेण विहितौ तेनैव क्रमेणात: परं तद्विकृतयो विधास्यन्ते तत्र प्रथममग्निष्टोमविकृतिभूतानेतान् विधित्सुस्त्रिकद्रुकाख्यानां त्रयाणामेकाहानां प्रथमस्य ज्योतिरिति संज्ञां निर्वक्ति।

प्रजापतिर्वा इदमेक आसीन्नाहरासीन्न रात्रिरासीत्सोऽस्मिन्नन्धे तमसि प्रासर्पत्स ऐच्छत्स एतमभ्यपद्यत ततो वै तस्मै व्यौच्छद्व्युष्टिर्वा एष आह्रियते यद्वै तज्ज्योतिरभवत्तत् ज्योतिषो। ज्योतिष्ट्वं ॥ १ ॥

प्रजापति: प्रजानामधिपति: सर्व्वकारणभूत: स्रष्टा इदं दृश्यमानं यज्जगदस्ति एतदात्मक: एकएव पुरा आसीत् पुरातनस्य प्रपञ्चस्य प्रविलीनत्वात् अद्यतनस्य वासृष्टत्वात् अद्वितीय: प्रजापतिरेक एवावर्त्तत इत्यर्थ: एवञ्चाहोरात्रविभागहेतो: सूर्य्यस्याप्यभावात् अहोरात्रविभागोऽपि नासीत् एवं प्रकाशाभावात् स प्रजापति: अस्मिन्नन्धे तमसि अन्धत्वापादके दृष्ट्याच्छादके अन्धकारे प्रासर्पत् प्रावर्त्तत स च तमोनिरोधकं तेज ऐच्छत् अकामयत स च कामयमान: एतं ज्योतिराख्यं यज्ञ-

मभ्यपद्यत अभिप्राप्नोत् ततोऽनन्तरं तस्मै प्रजापतये व्यौच्छत् तमोऽपागच्छत् तस्माद्व्युष्टिर्विवासनं तमसो निवृत्तिः एतदात्मक एव एष क्रतुराह्रियते यस्मात्तदानीं ज्योतिस्तमोनिवर्त्तकं तेजोऽभवत् तस्मादस्य ज्योतिषः ज्योतिराख्यस्य क्रतोः ज्योतिष्ट्वं ज्योतिःसंज्ञकत्वं ज्योतिर्नाम सम्पन्नमित्यर्थः एवञ्च स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वादिति न्यायेन स्वर्गकामः एतेन ज्योतिषा एकाहेन यजेतेति विधिरुन्नेतव्यः प्रकृतिभूतस्य ज्योतिष्टोमस्य प्रकरणात् अन्यत्राम्नातत्वादेतत् ज्योतिःसंज्ञं कर्मान्तरं यथा कुण्डपायिनामयने मासमग्निहोत्रं जुहुतीति मासाग्निहोत्रं नित्याग्निहोत्रात् कर्मान्तरं तथेति द्रष्टव्यं ॥ १ ॥

अथैतस्य ज्योतिष्टोमविकृतेः स्तुत्यर्थं सर्वप्रकृतेर्ज्योतिष्टोमस्य प्रथमानुष्ठानं स्तौति ।

**एष वाव प्रथमो यज्ञानां य एतेनानिष्ट्वाथान्येन यजते कर्त्तपत्यमेव तज्जीयते वा प्रवामीयते ॥ २ ॥**

योऽयमिदानीं ज्योतिःसंज्ञ एकाहो विधीयते एष एव यज्ञानां प्रथमः अन्येषां सोमयागानां प्रथमोऽनुष्ठेयः एतदुक्तं भवति प्रजापतिरकामयत बहुः स्यां प्रजायेयेति स एतमग्निष्टोममपश्यदित्यादिभिरध्यायैर्योऽयं सर्वप्रकृतिभूतोऽग्निष्टोमो विहितः तत्सदृश एष ज्योतिराख्यः एकाह इति एतेन प्रकृतिभूतेन ज्योतिष्टोमेनाग्निष्टोमेनानिष्ट्वा अथान्येन यज्ञक्रतुना यजते तत् स यज-

मान: कर्त्तृत्वं कर्त्तृपतनं यथा भवति तथैव जीयते ज्यावयोहानाविति धातु: अथवा प्रमीयते म्रियते तस्मादन्येभ्यो यज्ञेभ्य: पूर्वमेष एवानुष्ठेय: ॥ २

एवं विपक्षे वाधोपन्यासमुखेन प्राथम्यमुक्त्वा अथान्येषां यज्ञानां तज्जन्यत्वेन पश्चाद्भावित्वात्तज्जनकत्वेन चैतस्य प्रथमानुष्ठानं सदृष्टान्तमुपपादयति।

यथा वा इदमग्नेर्ज्जातादग्नयो विह्रियन्त एवमेतस्मादध्यन्ये यज्ञा विह्रियन्ते ॥ ३ ॥

इदं इदानीं यथा वै यथा खलु जागान्निर्मथनादुत्पन्नादग्ने: अन्ये अग्नय आहवनीयाद्या: पश्चाद्विह्रियन्ते विभज्यन्ते तं देशमाह्रियन्ते एवं एतस्मात् ज्योतिष्टोमात् अधि ऊर्द्धं अन्ये तद्विकृतयो यज्ञा विह्रियन्ते विस्तार्य्यन्ते अत: सर्व्वेषामुत्पादकत्वादेष एव प्रथमोऽनुष्ठेय: ॥ ३ ॥

ज्योतींषि स्तोमा यस्यासौ ज्योतिष्टोम इति हि नामनिर्वचनं तत्सिद्ध्यर्थं त्रिवृदादीनां स्तोमानां ज्योतीरूपत्वमाह।

यो हि त्रिवृदन्यं यज्ञक्रतुमापद्यते सतन्दीपयति य: पञ्चदश: सतं य: सप्तदश: सतं य एकविंश: सतं ॥ ४ ॥

यो हि त्रिवृत् स्तोम: अन्यं सर्वप्रकृतेर्ज्ज्योतिष्टोमात् अन्यं

सोमयागमापद्यते प्राप्नोति स्तोमस्तं सोमयागं दीपयति एव-मुत्तरत्रापि योज्यं त्रिवृदादीनां मध्ये एकैक एव सोमयागं निर्वर्त्तयितुं शक्त इत्यर्थः अतएव दशरात्रे प्रथमादिष्वहःसु त्रि-वृदादि एकैक एव स्तोमः क्रमेण विहितः ॥ ४ ॥

नन्वेवं दीपकत्वादस्त्वेतेषां ज्योतीरूपत्वं तथापि ज्योति-ष्टोमस्य त्रिवृदादिज्योतिः स्तोमचतुष्टयसाध्यत्वादेकैकस्तोमकानां ज्योतिष्टोमता नस्यादित्यत आह ।

एतत्तद्यदाहुरेको यज्ञ इत्येतद्धि सर्वे ज्योति-ष्टोमा भवन्ति ॥ ५ ॥

त्रिवृदादीनामेक एव यज्ञोयज्ञसाधन इति यदाहुर्ब्रह्मवा-दिनः तदेतदेव यत्सामर्थ्यं यो हि त्रिवृदन्यं यज्ञक्रतुमित्यादिना त्रिवृदादीनां प्रत्येकं प्रतिपादितं एतद्धि एकैकस्य स्तोमस्य प्रत्येकं यज्ञसाधनत्वात् एकस्तोमका एव सर्वे ज्योतिष्टोमाः ज्योतिष्टोमशब्दवाच्या भवन्ति ॥ ५ ॥

एवं त्रिवृदादीनां प्रत्येकं ज्योतीरूपत्वेन ज्योतिष्टोमनिष्पा-दकत्वमभिधाय अथ प्रकृतिभूते ज्योतिष्टोमे तेषां समावेश-विशेषमाह ।

असूरिर्वा एष सन्ततो यज्ञो द्वौ द्वौ हि स्तोमौ सवनं बहतस्त्रिवृत्पञ्चदशौ प्रातःसवनं पञ्चदश-

सप्तदशौ माध्यन्दिनꣳ सवनꣳ सप्तदशैकविंशौ तृतीयसवनं ॥ ६ ॥

सन्ततो वक्ष्यमाणप्रकारेण अन्योन्यासंश्लिष्टस्तोमकाः एष ज्योतिष्टोमोऽश्वपूरिर्वै एकेनाश्वेन युक्तो रथः श्वपूरिः तद्विलक्षणो-द्वाभ्यामश्वाभ्यान्नीयमानो रथोऽश्वपूरिः तत्सदृशोज्योतिष्टोम इत्यर्थः तथाहि द्वौ द्वौ स्तोमौ त्रिवृदादिकौ संहतौ अस्य ज्योतिष्टोमस्यैकैकं सवनं वहतः कतमं कतमौ वहत इति उच्यते त्रिवृत्पञ्चदशस्य स्तोमौ प्रातःसवनं वहतः तत्र वहिष्पवमाने त्रिवृत्स्तोमः चतुर्ष्वाज्येषु पञ्चदशसवनयोः सान्तत्यार्थं अनुवर्त्तमानः पञ्चदशः सप्तदशस्य इत्येतौ स्तोमौ माध्यन्दिनं सवनं वहतः माध्यन्दिने पवमानस्तोत्रे पञ्चदशः पृष्ठस्तोत्रेषु सप्तदशः तथैव सप्तदशैकविंशौ तृतीयसवनं वहतः आर्भवपवमाने सप्तदशएकविंशोऽग्निष्टोमसाम्नीत्यर्थः ॥ ६ ॥

एवं ज्योतिःशब्दवाच्यानां समावेशमुक्त्वा परिच्छिन्नदक्षिणावत्त्वादपि ज्योतिष्टोम एव प्रथमः कार्य्य इत्याह ।

या मितदक्षिणैव स्यादेष एव कार्य्य इयं वै ज्योतिरियममितस्य यन्त्रिकैषा वा एतं यन्तुमर्हति ॥ ७॥

या यज्ञक्रिया मितदक्षिणा एव स्यात् परिमितदक्षिणैव भवेत् एष एव यज्ञः कार्य्योऽनुष्ठेयः नन्वेवमपरिमितस्यानुष्ठानात् अपरिमितं फलं नस्यादित्यत आह इयं वै सर्व्वैः परि-

दृश्यमाना इयमेव पृथिवी ज्योतिः पृथिव्यात्मको ज्योतिष्टोम इत्यर्थः इयञ्च पृथिवी स्वयमपरिमितत्वात् अमितस्य अपरिमितस्य यागस्य फलस्य वा यन्त्रिका नियन्त्री एतदेव प्रपाद्यते एषा वा इति ॥ ७ ॥

अथैनं ज्योतिष्टोमं स्तोत्रीयासङ्ख्यया स्तौति ।

तस्य नवतिशतꣳ स्तोत्रीयास्तासां या अशीतिशतं ताः षट्त्रिꣳशिन्यो विराजः षडृतव ऋतुष्वेव विराजा प्रतितिष्ठति ॥ ८ ॥

तस्य ज्योतिष्टोमस्य विहितस्तोमानुसारेण नवतिशतं नवत्युत्तरशतसङ्ख्यास्तोत्रीयाः सम्पद्यन्ते प्रातःसवने पञ्चसु स्तोत्रेषु एकोनसप्ततिस्तोत्रीयाः माध्यन्दिनसवनेऽप्युत्तरा अशीतिस्तोत्रीयाः तृतीयसवने त्वष्टात्रिंशदिति नवतिशतस्य सम्पत्तिः तासां स्तोत्रीयाणाम्मध्ये या अशीतिशतं अशीत्युत्तरशतसंख्याकाः स्तोत्रीयाः त्रिंशिन्यस्त्रिंशदक्षरास्त्रिंशत्सङ्ख्यया विभज्यमानाः षट् विराजो भवन्ति वसन्ताद्या ऋतवश्च षट् तस्मादृतुष्वेव एकैकया विराजा प्रतितिष्ठति यजमानः प्रतिष्ठितो भवति ॥ ८ ॥

अथावशिष्टाभिः स्तोत्रीयाभिः स्तौति ।

अथ या दशैषा वा आत्मन्या विराडेतस्यां वा इदं पुरुषः प्रतिष्ठितः ॥ ९ ॥

अथाशीतिशतादनन्तरं या दशस्तोत्रीया एष खल्वात्मन्या-त्मसम्बन्धिनी देहसम्बन्धदशेन्द्रियरूपा विराट् एतस्यां खलु विराजि अयं पुरुषः आत्मा प्रतिष्ठित आश्रितः ॥ ९ ॥

अथास्मिन् ज्योतिष्टोमदक्षिणाङ्गत्वेन दातव्यानि द्रव्याणि प्रदर्श्य स्तौति ।

गौश्चाश्वश्चाश्वतरश्च गर्द्दभश्चाजाश्चावयश्च व्रीह-यश्च यवाश्च तिलाश्च माषाश्चैतस्यामेव विराजि प्रति-तिष्ठति ॥ १० ॥

एवं गवादीनि दशद्रव्याणि दातव्यानीत्यर्थः यदुक्तं सूत्र-कारेण स्वतन्त्रस्य ज्योतिष्टोमस्य संस्थाविकल्पा अग्निष्टोम-मुक्थ्यतातिरात्रमितीति तस्य चायमर्थः योऽयं मूलसंस्तुतः पुरु-षस्यावस्थको ज्योतिष्टोमः स अग्निष्टोम उक्थ्यो वा अतिरात्रो वा स्यात् इति विकल्पः ॥ १० ॥

एवं प्रथमप्रयोज्यानां त्रयाणाम्मध्ये द्वयोरेवैतद्दक्षिणाविधा-नमिति तेनैव सूत्रकृतोक्तं ।

तस्य द्वादशं शतं दक्षिणाः ॥ ११ ॥

तस्य अनतिरात्रस्य द्वादशं शतं दक्षिणा इति ॥ ११ ॥

स्तोत्रीयावद्दक्षिणामप्यवयुज्य स्तौति ।

वीरहा वा एष देवानां यः सोममभिषुणोति याः

शतं वैरं तद्देवानवदयतेऽथ या दशदश प्राणाः प्राणांस्ताभिस्स्पृणोति यैकादश्यात्मानं तया या द्वादशी सैव दक्षिणा ॥ १२ ॥

यो यजमानः सोममभिषुणोति एष देवानां मध्ये वीरहा वै वीरोवीर्यवान् यः सोमः तस्य हन्ता खलु तस्मादस्य वीरहन्तृतालक्षणो दोषो जायत इत्यर्थः तत्र याः शतं शतसंख्याभावः तत्तेन शतेन वैरं वीरहननलक्षणं पापं देवान् प्रत्यनवदयते निरस्यति अथ शतादधिकात् दश या गावः ताभिः प्राणान् स्पृणोति प्रीणयति दशसंख्या हि प्राणा नव वै पुरुषे प्राणाः नाभिर्दशमीति हि ब्राह्मणं अथ या एकादशी गौः तयात्मानं स्पृणोति अथ या द्वादशी द्वादशसंख्यापूरणी सैव यज्ञस्य दक्षिणा ॥ १२ ॥

अथैतद्दक्षिणावत्त्वं स्तौति ।

श्लेष्म वा एतद्यज्ञस्य यद्दक्षिणा नवा अश्लेष्मा रथो वहत्यथ यथाश्लेष्मवता यं कामं कामयते तमश्नुत एवमेतेन दक्षिणावता यं कामं कामयते तमश्नुते ॥ १३ ॥

* पुरुषः प्राप्नोति एवमेतेन दक्षिणा च यागेन यत् फलं कामयते तत् फलं प्राप्नोति ॥ १३ ॥

---

* अत्र भाष्यं पतितमनुमीयते ।

अथ प्रकारान्तरेण दक्षिणादानं स्तौति ।

शुभो वा एता यज्ञस्य यद्दक्षिणा यद्दक्षिणावता यजते शुभमेवास्मिन्दधाति ॥ १४ ॥

यत् या दक्षिणा एता यज्ञस्य शुभो वै शोभाहेतवोऽलङ्काराः तस्मात् यत् यो दक्षिणावता यागेन सोमेन यजते तस्मिन् यज्ञे शुभं शोभाहेतुमलङ्कारमेव दधाति निदधाति स्थापयति इत्थं सर्व्वप्रकृतिभूतस्य ज्योतिष्टोमस्य स्तुतिः कृता सैव प्रकृतिवद्विकृतिः कर्त्तव्येत्यतिदेशवाक्येन ज्योतिष्टोमविकृतौ ज्योतिराख्येऽस्मिन्नेकाहेऽतिदिश्यमाना अस्यैव स्तुतिर्भवति यद्यप्येतत्सर्वं तत्प्रकरण एव वक्तव्यं तथापि विधास्यमानानां विकृतीनां तत्प्रकृतित्वं द्योतयितुं तदुपन्यास इत्यदोषः ॥ १४ ॥

इति ताण्ड्यमहाब्राह्मणे षोड़शाध्यायस्य

प्रथमः खण्डः ।

---

अथ द्वितीयः खण्डः ।

अथान्यमेकाहं विधत्ते ।

अथैष गौः ॥ १ ॥

अथानन्तरं गवाख्योऽन्य एकाहोऽभिधीयते इति शेषः ॥ १ ॥

तत्र भ्रातृव्यजयहेतुत्वं वक्तुमाह ।

गवा वै देवा असुरानेभ्यो लोकेभ्योऽनुदन्तैभ्यो लोकेभ्यो भ्रातृव्यन्नुदते य एवं वेद ॥ २ ॥

गवा वै गवाख्येनैकाहेन खलु देवाः पुरा असुरानेभ्यो लोकेभ्यः पृथिव्यादिभ्यस्त्रिभ्यो लोकेभ्यः सकाशात् अनुदन्त प्रेरितवन्तः अपाक्रमयन् स्पष्टमन्यत् ॥ २ ॥

अथास्य गौरितिसंज्ञां निर्वक्ति ।

यद्वै तद्देवा असुरानेभ्यो लोकेभ्यो गोवयंस्त-द्गोगौत्वं ॥ ३ ॥

तत्तदानीन्तनसमये यद्वै यस्मादेव असुरानेभ्यो लोकेभ्यः गोवयन् गुप्तांस्तिरोहितान् कुर्व्वन् तत्तस्माद्गोः गवाख्यैकाहस्य गोत्वं गौरितिनाम सम्पन्नं गोवयतिः तिरोधानार्थः छान्दसो-धातुः तस्य च क्विपि पृषोदरादित्वात् गोभाव इति श्रुत्यभिप्रायः यद्वा गमेर्डो इति डोप्रत्यये यथा गमेर्गोशब्दनिष्पत्तिः एवं गो-वयतेरित्यौणादिको डोप्रत्ययः ॥ ३ ॥

अथैतद्वेदनफलमाह ।

गोवयति पाप्मानं भ्रातृव्यं य एवं वेद ॥ ४ ॥

पाप्मानं पापरूपं भ्रातृव्यं गोवयति तिरोहितं करोति य एवमुक्तं ब्राह्मणार्थं जानाति इत्थं वाक्यदोषपर्य्यालोचनया भ्रातृव्यवाननेन गवा यजेतेत्युक्तं भवति ॥ ४ ॥

अथैतस्य एकाहस्य स्तोमक्लृप्तिरभिधीयते, तत्र बहिष्प-वमानस्य स्तोमं विधाय स्तौति ।

तस्य पञ्चदशं बहिष्पवमानं वज्रो वै पञ्चदशो वज्रमेव तत्पुरस्तान्निदधाति तेन विजयते ॥ ५ ॥

तस्य गोरेकाहस्य बहिष्पवमानं पञ्चदशं पञ्चदशस्तोमकं भवति स च पञ्चदशो वै वज्रो वज्ररूप एव इन्द्रेण सहोत्पत्ते-रैन्द्रत्वात् वज्रस्य च तदायुधत्वात् पञ्चदशस्य वज्रत्वोपचारः तत्तथा च वज्रमेव पुरस्तात् पूर्व्वभागे यज्ञस्यादौ निदधाति स्थाप-यति तेन च वज्रेण परान् विजयते विपराभ्यां जेरित्यात्मने-पदं ॥ ५ ॥

अथैतस्य पञ्चदशस्य प्राथम्यं प्रकारान्तरेण स्तौति ।

पशुस्तोमो वा एष एवमिव वै पशुः समाहितः शिरः स्थवीयोऽणीयस्यौ ग्रीवा पार्श्वाभ्यां वरीयाᳪ सक्थिभ्यां वरिष्ठः ॥ ६ ॥

एष सोमयागो गोशब्दाभिधेयत्वात् पशुस्तोमः स्तोमसं-स्थानेन पशुसदृशः एवमिव वै एवम्विध एव खलु पशुः समा-हितः अवस्थितो भवति एवं शब्देन परामृष्टमेव प्रदर्श्यते शिर इत्यादिना पशोः शिरो मूर्द्धा स्थवीयः स्थूलतरं स्थूलतरेत्यादिना ईयसुनियसुनियणादिपरलोपः पूर्व्वस्य च गुणः शिरसः

सकाशादणीयस्तः अणुतरा अल्पपरिमाणा ग्रीवा कण्ठो भवति स च पशुः पार्श्वाभ्यां पार्श्वद्वयेन वरीयान् गुरुतरोऽतिशयेन विस्तीर्णः तथा सक्थिभ्यां जघनाभ्यां वरिष्ठ उरुतरोऽतिविस्तृततमः एवं ग्रीवास्थानीयेभ्य आज्येभ्यः शिरःस्थानीयं बहिष्पवमानं अधिकेन स्तोमेन युज्यमानं सङ्गच्छत इत्यर्थः ॥६॥

अथोक्तग्रीवादिसाम्यप्रदर्शनायाह ।

यत् पञ्चदशं बहिष्पवमानं भवति त्रिवृन्त्याज्यानि सप्तदश माध्यन्दिनꣳ सवनमेकविꣳशं तृतीयसवनꣳ रूपेणैवैनन्तत् समर्द्धयति ॥ ७ ॥

बहिष्पवमानं पञ्चदशस्तोमकं भवति आज्यानि त्रिवृन्ति त्रिवृत्स्तोमकानि भवन्ति माध्यन्दिनꣳ सवनं कृत्स्नं पवमानादिषु पञ्चस्वपि स्तोत्रेषु सप्तदशः स्तोम इत्यर्थः तृतीयसवनं कृत्स्नमेकविंशं एकविंशस्तोमकं उक्थसंस्थोऽयं तेन तृतीयसवने पञ्चसु स्तोत्रेषु एकविंशः स्तोमः कार्य्यः एवमस्मिन्नहनि स्तोमकॢप्तिर्भवतीति यत् तत्तेन पशुसम्बन्धिरूपेणैव एनं सोमयागं समर्द्धयति ॥ ७ ॥

एवं स्तोमकॢप्तौ सत्यां एका स्तोत्रीया विराट्सम्पत्तेरतिरिच्यते सा च पशोः पुच्छस्थानीयेत्याह ।

एका सꣳस्तुतानां विराजमतिरिच्यते तस्मात् पशोः पश्चादतिरिक्तं ॥ ८ ॥

संस्तुतानां सहस्तुतानां स्तोत्रीयाणां परिगणनायां एका स्तोत्रीया विराजं अतिरिच्यते तस्मादेव पशोः लौकिकस्य पश्चाद्परभागे सति एकैकस्याः स्तोत्रीयाया अतिरेको भवति सा च पश्वात्मना संस्तूयमानस्य क्रतोः पुच्छस्थानीयेत्यर्थः ॥८॥

इति ताण्ड्यमहाब्राह्मणे षोड़शाध्यायस्य

द्वितीयः खण्डः ।

---

अथ तृतीयः खण्डः ।

अथान्यमेकाहं विधत्ते ।

अथैष आयुः ॥ १ ॥

उच्यत इति शेषः, अथानन्तरं एष वक्ष्यमाणः आयुराख्यः सोमयागः ॥ १ ॥

अथास्यायुरिति संज्ञामर्थान्निर्वक्ति ।

आयुषा वै देवा असुरानायुवतायुते भ्रातृव्यं य एवं वेद ॥ २ ॥

आयुषा वै आयुराख्येन एतेन यज्ञेन देवा असुरानायुवता आसमन्तात्प्राणादिभिर्वियोजयत यौतिरत्र पृथग्भावे वर्त्तते तस्मादायुर्वर्त्तनसाधनत्वात् अस्यायुरिति संज्ञेत्यर्थः यएवं

ब्राह्मणार्थं वेत्ति असौ भ्रातृव्यं खलु आयुते आत्मनः सका-
शात् पृथक्करोति ॥ २ ॥

अथास्मिन्नधिकारिणमाह ।

स्वर्गकामो यजेत ॥ ३ ॥

आयुराख्यो यज्ञः स्वर्गसाधनमित्यर्थः ॥ ३ ॥

अथास्मिन्नहनि स्तोमक्लृप्तिमाह ।

ऊर्द्ध्वाः स्तोमा यन्त्यनपभ्रंशाय ॥ ४ ॥

गवाख्येऽतीतएकाहे यैव स्तोमक्लृप्तिरुक्ता सैवास्यापि स्तोम-
क्लृप्तिः इयांस्तु विशेषः ऊर्द्ध्वाः ऊर्द्ध्वगामिनः त्रिवृत्पञ्चदशसप्त-
दशादिक्रमेणोत्तरोत्तरमधिकसंख्यां प्राप्ताः स्तोमा यन्ति गच्छ-
न्ति सवनत्रये सम्बध्यन्ते पूर्व्वत्र हि प्रथमं पञ्चदशस्तोमो बहि-
ष्पवमाने आज्येषु त्रिवृदित्युक्तं यद्येवमेवात्रापि क्रियते तमधिक-
संख्याता न्यूनसंख्यायामाक्रमणात् अपभ्रंशोऽधःपातः स्यात्
आयुराख्ये एकाहे बहिष्पवमाने त्रिवृत्स्तोमः आज्येषु पञ्च-
दशः शिष्टं गोष्टोमवदिति एवमूर्द्ध्वा अभिमुखा एव स्तोमा
भवेयुः तच्चानपभ्रंशाय अपभ्रंशाभावाय भवति ॥ ४ ॥

अथास्याधिकारिविशेषे संस्थान्तरमाह ।

एतेनैवामयाविनं याजयेदतिरात्रः कार्य्यः ॥ ५ ॥

एतेनैवायुराख्येनैकाहेन आमयाविनं दीर्घरोगिणं यजमानं याजयेत् तदानीमयमतिरात्रसंस्थः कार्य्यः उक्थसंस्थो-ह्यायुः ॥ ५ ॥

आमयाविनः प्रयोगे अतिरात्रसंस्थाया आनुकूल्यमाह ।

स गायत्रीᳫं सम्पद्यते प्राणो गायत्र्यायुरेष आयु-श्चैवास्मिन् प्राणञ्चोभे समीची दधाति ॥ ६ ॥

योऽतिरात्रसंस्थ आयुः स गायत्रीं सम्पद्यते तथाहि प्रातः-सवने बहिष्पवमानेन स्तोत्रीयास्व चतुर्ष्वाज्येषु षष्टिर्मिलित्वा नवषष्टिस्तोत्रीया भवन्ति एवं सवनत्रयगतानि मिलित्वा अष्टाच-त्वारिंशदधिकचतुःशतसंख्याकाः स्तोत्रीया भवन्ति तास्त्रतुर्विं-शतिसंख्यया विभज्यमाना अष्टादशगायत्र्यो भवन्ति द्वौ च गायत्रौ पादौ भवतः एवमतिरात्रस्य गायत्रीसम्पत्तिर्द्रष्टव्या, अस्त्वेवं किन्तत इत्यत आह प्राणो गायत्रीति प्राणापानव्यान-रूपेण गायत्र्यात्मकः प्राणः गायत्री च त्रिपदा तथा साम्यात् प्राणएव गायत्रीत्युपचारः तथा एष सोमयाग आयुःसंज्ञकः एवं प्राणायुषोः सद्भावात् अस्मिन्नामयाविनि यजमाने आयु-र्जीवनञ्च प्राणञ्च उभे समीची सङ्गते दधाति स्थापयति ॥६॥

अथ विहितान् ज्योतिरादिकान् त्रीन् एकाहान् संहत्य स्तौति ।

स्वर्ग्या वा एते स्तोमा यत् ज्योतिर्भवति ज्योति-

रेवास्मै स पुरस्ताद्धरत्यथैष गौरेकया विराज-मतिरिक्त आरम्भणमेव तदथैष आयुरेकस्या विराज ऊन आसाद एव सोऽथो ऊनातिरिक्तौ स्तोमौ मिथुनौ प्रजात्यै ॥ ७ ॥

एते स्तोमाः स्तोमयुक्ता ज्योतिराद्या एकाहाः स्वर्ग्या वै स्वर्गार्हाः खलु स्वर्गहेतव इत्यर्थः एवं सह स्तुत्वा अवयुज्य स्तूयते यत् ज्योतिराख्य एकाहो भवति सोऽस्मै यजमानाय ज्योतिरेव पुरस्तात् पूर्व्वभागे ज्योतिः प्रकाशं हरति गमयति ज्योतिष्मान यत्र यत्र गच्छति तत्र तत्र सर्व्वप्रकाशो जायते इत्यर्थः अथेति वाक्यान्तरोपक्रमे एष पूर्व्वोक्तो गौर्गवाख्यः एकाहः एकया स्तोत्रीयया विराजमतिरिक्तो अधिको भवति तदाधिक्यं विराजं तस्यारम्भणं उपक्रम एव अथैषः आयुः एक-स्या विराज ऊनः एकया स्तोत्रीयया विराट्सम्पत्तेर्न्यूनः स गोष्टोमोपक्रान्ताया विराज आसाद एव आसक्तिः प्राप्तिरेव आयुष एकया स्तोत्रीयया विराजो न्यूनता प्रदर्श्यते स्वभावत उक्थसंस्थत्वात् एतस्मिन् पञ्चदशस्तोत्राणि तेषु च पूर्व्वोक्त-संख्यापरिगणनायां नवपञ्चाशदधिकशतद्वयसंख्याका स्तोत्रीया भवन्ति तथा च दशसंख्यया विभागे पञ्चदशविराजः ततः परा विराट् एकया स्तोत्रीयया न्यूना गोष्टोमेऽधिकया स्तोत्रीयया सहास्या ऊनाया विराजो योजने विराट् सम्पत्तिर्भवति अथो अपि ऊनातिरिक्तौ उक्तप्रकारेण न्यूनाधिकौ आयुष्टोमगोष्टोमौ

मिथुनरूपौ मिथुनौ स्त्रीपुमांससदृशौ प्रजात्यै यजमान-प्रकृष्टजन्मने भवतः ॥ ७ ॥

अथैतान् संहृत्य प्रकारान्तरेण स्तौति ।

एते वै त्रिकद्रुकाः स्तोमा एतैर्वा इन्द्रः सर्व्वां तृप्तिमतृप्यत् ॥ ८ ॥

एते खलु त्रिकद्रुकाख्याः स्तोमाः एतैः खलु इन्द्रः सर्व्वां सम्पूर्णां तृप्तिं अतृप्यत् अतिशयेन तृप्तोऽभवत् त्रिकद्रुकेषु महिषोयवाशिरन्तु विष्णुपस्तृम्पदिति मन्त्रवर्णात् ॥ ८ ॥

अथैतद्वेदितुः फलमाह ।

तृप्यति प्रजया पशुभिर्य्यं एवं वेद ॥ ९ ॥

स्पष्टोऽर्थः । एषां त्रयाणां एकाहानां स्तोत्रीयोक्तिभिः कल्पकारेण त्रृभो ज्योतिष्टोमो गौर्भ्रंर्कं जन्मस्य लोक इत्यादिना उद्वंशीयस्य नासैधमिति रात्रिः समानमितरं सांवत्सरिकेणेत्यन्तेन प्रतिपादिता सा चात्र विस्तरभयान्न लिख्यते ॥ ९ ॥

इति ताण्ड्यमहाब्राह्मणे षोड़शाध्यायस्य

तृतीयः खण्डः ।

---

अथ चतुर्थः खण्डः।

अथाभिजिद्विश्वजितावेकाहौ विधित्सुस्तत्संज्ञां निर्वक्तुमा-ख्यायिकामाह।

प्रजापतिः प्रजा असृजत ता अस्मै श्रैष्ठ्याय ना-तिष्ठन्त स आसान्दिशां प्रजानाञ्च रसं प्रवृह्य स्रजं कृत्वा प्रत्यमुञ्चत ततोऽस्मै प्रजाः श्रैष्ठ्यायाति-ष्ठन्त॥ १॥

पुरा प्रजापतिः प्रजाः सृष्टवान् ताः सृष्टाः प्रजाः अस्मै अस्य प्रजापतेः श्रैष्ठ्याय नातिष्ठन्त श्रेष्ठत्वं नावमन्यन्त स प्रजा-पतिः आसां प्रसिद्धानां प्राच्यादिदिशां सर्व्वासां प्रजानाञ्च रसं सारं प्रवृह्य उद्धृत्य स्रजं मालां कृत्वा प्रत्यमुञ्चत स्वगले ऽवध्नात् ततोऽनन्तरं स्रजो महिम्ना प्रजापतेः श्रैष्ठ्यै प्रजाः अन्व-मन्यन्त ॥ १ ॥

अथैतद्वेदितुः फलमाह।

तिष्ठन्तेऽस्मै समानाः श्रैष्ठ्याय य एवं वेद॥ २॥

समानाः विद्याकर्म्मवयोभिः सदृशाः पुरुषाः अस्मै वेदित्रे श्रैष्ठ्याय श्रेष्ठत्वा यतिष्ठन्ते अवतिष्ठन्ते श्रेष्ठत्वमनुजानन्तीत्यर्थः स्पष्टमन्यत् ॥ २ ॥

ततः प्रजापतिः किमकार्षीदिति तदाह ।

सोऽकामयतेन्द्रो मे प्रजायाᳬ श्रेष्ठः स्यादिति ता-स्मै स्रजं प्रत्यमुञ्चत्ततो वा इन्द्राय प्रजाः श्रैष्ठ्याया-तिष्ठन्त तच्छिल्पं पश्यन्त्यो यच्छितर्य्यपश्यन् ॥ ३ ॥

प्रजायामिति जातावेकवचनं मे मदीयासु प्रजासु मध्ये इन्द्रः श्रेष्ठः प्रशस्यतमः अधिकः स्यादिति सः प्रजापतिः कामितवान् कामयित्वा च तामात्मीयां स्रजं अस्येन्द्रस्य प्रत्यमुञ्चत गले बद्धवान् ततोऽस्येन्द्रस्य श्रैष्ठ्याय प्रजा अन्वजानन् यच्छितरि श्रैष्ठ्यकारणं शिल्पमपश्यत् तच्छिल्पमाश्चर्य्यं सुरूपमिन्द्रे पश्यन्त्यः विलोकयन्त्यः लक्षणहेत्वोः क्रियाया इति हेतौ शतृ-प्रत्ययः ॥ ३ ॥

अथान्यं प्रासङ्गिकमाह ।

तस्माद्यः पुत्राणां दायन्धनतममिवोपैति तं मन्यन्ते यमेवेदं भविष्यतीति ॥ ४ ॥

यस्मात्पितुः प्रजापतेः सकाशात् स्रजोलाभेन श्रेष्ठोऽभूत् तस्माल्लोके पुत्राणां मध्ये यः पुत्रो धनतममिव अतिशयितमेव धनदायमुपैति पितुः सकाशात् दायत्वेनोपगच्छति तं पुत्रम्मन्यन्ते लौकिका जानन्ति अयमेव पुत्र इदं सर्व्वं पितृसम्बन्धि ग्रामा-दिकं भविष्यति सर्व्वस्याधिपतिः भविष्यति ॥ ४ ॥

अस्त्वेवं प्रकृते क्रियमाणे किमायातमित्यत आह ।

ततो वा इदमिन्द्रो विश्वमजयद्यद्विश्वमजयत्त-स्माद्विश्वजित् ॥ ५ ॥

ततः ऐश्वर्यप्राप्त्यनन्तरमिदं विश्वं जगदजयत् जितवान् आत्म-त्वेन कृतवान् यद्यस्मात्कारणात् क्रतुरूपावस्थितेनानेन यज्ञेन विश्वमजयत् तस्माद्विश्वजिदिति यज्ञस्याख्या ॥ ५ ॥

अथाभिजितः संज्ञानिर्वक्तुमाह ।

सोऽकामयत यन्मेऽनभिजितं तदभिजयेयमिति स एतमभिजितमपश्यत्तेनानभिजितमभ्यजयत् ॥६॥

स इन्द्रोऽकामयत यन्मे ममानभिजितं जयेनाप्राप्तमस्ति तदिदानीमभिजयेयं यज्ञेनाप्नुयामिति स एतमभिजिदाख्यं सोम-यागमपश्यत् तेनानभिजितं सर्व्वमभ्यजयत् तस्मादभिजयसाधन-त्वात् अस्याभिजित्संज्ञा ॥ ६ ॥

अथैतावभिजिद्विश्वजितौ विधत्ते ।

यदभिजिद्भवत्यनभिजितस्याभिजित्यै ॥ ७ ॥

एतद्विश्वजितोपलक्षणं अयमर्थः अभिजिदाख्य एकाहो भवति यचानभिजितस्य वस्तुनोऽभिजित्यै अभिजयाय भवति विश्वजिदाख्य एकाहो भवति स च विश्वस्य जयाय भवति

विश्वजिद्भवति विश्वस्य जित्या इति हि ब्राह्मणान्तरं ॥ ७ ॥

अथैतौ स्तौति।

तौ वा एताविन्द्रस्तोमौ वीर्य्यवन्तौ शिल्पं वा एतौ नाम स्तोमावास्तां ॥ ८ ॥

तावेतावभिजिद्विश्वजिताविन्द्रस्तोमौ उक्तप्रकारान्तरेणैन्द्र-सम्बन्धत्वादिन्द्रस्तोमाख्यौ इन्द्रसम्बन्धिनौ स्तोमवन्तावित्यर्थः ततो वीर्य्यवन्तौ वीर्य्ययुक्तौ एतौ च पुरा उक्तं शिल्पं वै शिल्पं नाम शिल्पाख्यौ विचित्रसंस्थानौ स्तोमौ स्तोमवन्तावास्तां अभूतं यच्छिल्पं पश्यन्तो यत्नितर्य्यपश्यन्निति विश्वजितः शिल्परूप-त्वमुक्तं तत्सम्बन्धादभिजितोऽपि शिल्पत्वोपचारः ॥ ८ ॥

अथैतद्वेदनफलमाह।

पश्यते गृह्हे शिल्पं य एवं वेद ॥ ९ ॥

य एवं ब्राह्मणार्थं जानाति सोऽयं गृहे शिल्पज्ञानारूपं वस्तुजातं पश्यति ॥ ९ ॥

अथैतयोः प्रयोगप्रकारमाह।

न वै यमौ नाम स्तोमौ स्तो यो यमाभ्यां यजेतै-ताभ्यां यजेत सन्तृष्टौ ॥ १० ॥

न वै खलु यमौ नाम स्तोमौ यमाख्यस्तोमवन्तौ यज्ञौ भवतः

यो यजमानो यमाभ्यां यजेत स एताभ्यामभिजिद्विश्वजिद्भ्या-मेकाहाभ्यां यजेत सम्बद्धौ सम्बद्धार्थं एतदुक्तं भवति यमाभ्यां यमलाभ्यां संहताभ्यामभिजिद्विश्वजिद्भ्यां यजेत तौ दर्श-पौर्णमासवत् संहतौ एव फलसाधनमिति तयोस्त्वानुष्ठानक्रमः सूत्रकृतोक्तः विश्वजिदभिजिद्भ्यां यमाभ्यां यजमानः पूर्व्वा-पराभ्यां यजेतेति धानञ्जय्यो युगपदिति शाण्डिल्योऽभिजितो दक्षिणा देवयजनं स्याद्विश्वजित उत्तरं तन्मति पत्नीशाला स्यान्नानर्त्विज इत्यादिना अयमर्थः दर्शपौर्णमासवदेव पौर्व्वा-पर्य्येणानयोरनुष्ठानमिति धानञ्जय्यमतं एकस्मिन् काले उभयोः सहानुष्ठानमिति शाण्डिल्यमतं दक्षिणत उत्तरतश्च देवयजन-द्वयं कृत्वा दक्षिणेऽभिजित् उत्तरे विश्वजित् विश्वजितः पश्चा-त्पत्नीशाला नाभिजितः प्रत्येकं षोड़शर्त्विज इति एवं संहतयो-रेव फलसाधनत्वमिति यमाभ्यामिति शब्देनावगम्यते पश्चान्त-रमपि सूत्रकृतोक्तं कामञ्च यमाभ्यां यजेतेति नावश्यं संहत-योरेव फलसाधनत्वमपि तु पृथक् साधनत्वमपि विद्यते तस्मा-दन्यतरपरिहारेणान्यतरप्रयोगोऽपि कर्त्तुं शक्यत इत्यर्थः ॥ १० ॥

उभयोः स्तोमानामावृत्तिं विधत्ते

पुनरभ्यावर्त्तं स्तोमा भवन्ति पुनरभ्यावर्त्तं ह्येताभ्यामिन्द्रो जितमजयत् ॥ ११ ॥

पुनरभ्यावर्त्तं पुनः पुनरावृत्तं अनयोरभिजिद्विश्वजितोः स्तोमा भवन्ति हि यस्मात् पुनरभ्यावर्त्तं आवृत्त्याभ्यामेव एता-

ष्यामभिजिद्भ्यां अजितं जेतव्यं इन्द्रो अजयत् जितवान् तस्मादित्यर्थः ॥ ११ ॥

अथाभिजिति स्तोमानां तासेवाभ्यावृत्तिं विदृणोति ।

त्रीᳪस्त्रिवृदभिजितः प्रणायति त्रीन् पञ्चदशा-स्त्रीन् सप्तदशा-स्त्रीनेकविᳪशास्ते द्वादश सम्पद्यन्ते द्वादशमासाः संवत्सरः संवत्सरः प्रजापतिः प्रजापति-मेवाप्नोति ॥ १२ ॥

त्रिवृत्स्तोमोऽभिजितः त्रीन् प्रणायति बहिष्पवमानादीनि त्रीणि स्तोत्राणि निष्पादयति एवं पञ्चदशादिष्वपि योजना त्रिवृदादिनैकैकेन स्तोमेन बहिष्पवमानादीनां स्तोत्राणां त्रयं त्रयं अभिजिति निर्वर्त्यमित्यर्थः तथाच कल्पकारेण अभिजित-मधिकृत्योक्तं सर्वस्तोमस्य सतस्त्र्यावृतस्तोमास्त्रतुःप्रणाया इति एवं द्वादशस्तोत्राणि सम्पद्यन्ते द्वादशमासात्मकः संवत्सरः संव-त्सरः प्रजापत्यात्मकः तथाच तमेव प्रजापतिं द्वादशभिः स्तोमैः आप्नोति ॥ १२ ॥

अथ विश्वजिति स्तोमानामभ्यावृत्तिं स्पष्टयति ।

चतुरस्त्रिवृद्विश्वजितः प्रणायति चतुरः पञ्चद-शांश्चतुरः सप्तदशास्ते द्वादश सम्पद्यन्ते द्वादशमासाः संवत्सरः संवत्सरः प्रजापतिः प्रजापतिमेवाप्नोति॥१३॥

विश्वजितो बहिष्पवमानादीन् चतुरश्चत्वारि स्तोत्रादीनि त्रिवृत् प्रणयति निर्वर्त्तयति तथा पञ्चदशस्तदनन्तरभावीनि चत्वारि स्तोत्राणि सप्तदशोऽप्येवं तथाच द्वादश स्तोत्राणि सम्पद्यन्ते अन्यत् पूर्व्ववत् इमामध्याहृत्तिं विश्वजितमधिकृत्य कल्पकृदुक्तवान् सर्व्वस्तोमस्य सतश्चतुराहृत्तस्तोमास्त्रिप्रणाया इति ॥१२

इति ताण्ड्यमहाब्राह्मणे षोड़शाध्यायस्य चतुर्थः खण्डः ।

---

अथ पञ्चमः खण्डः ।

अथ विश्वजिति बहिष्पवमानस्य नवस्तोत्रीयाः क्रमेण विदधाति तत्र प्रथमामाह ।

## उप त्वा जामयोगिर इत्युपवती प्रतिपद्भवति स्तोमस्य रूपं ॥ १ ॥

उपवती उपशब्दयुक्ता प्रतिपद्यते अनयेति प्रतिपद्बहिष्पवमानस्य प्रथमा भवति तद्योपेति स्तोमस्य अत्र प्रयोज्यस्य त्रिवृताख्यस्य रूपं उपास्मै गायतानर इति प्रकृते त्रिवृत्स्तोमके बहिष्पवमाने दर्शनात् ॥ १ ॥

वायोरनीके अस्थिरन्नित्यस्यास्तृतीयः पादस्तद्योगेनैतां प्रशंसितुमाह ।

प्राणैर्वा एष व्यृध्यत इत्याहुर्यः सर्व्वं ददाति सर्व्वान् स्तोमान् सर्व्वाणि पृष्ठान्युपैतीति यद्वायव्या भवति प्राणानाᳪ समृद्ध्यै ॥ २ ॥

प्राणैरेव एष यजमानोऽव्यृध्यते वियुज्यत इत्याहुर्ब्रह्मवादिनः योऽयं यजमानः सर्वं ददाति सर्वांश्च त्रिवृदादीन् स्तोमान् सर्व्वाणि च रथन्तरबृहद्वैरूपवैराजादीनि षाडहिकानि पृष्ठसामान्युपैति उपगच्छति विश्वजित् सर्वपृष्ठः सर्वस्तोमः सर्वस्वदक्षिणः एवं विशिष्टमेनं कुर्वन् प्राणैरेव वियुज्यत इति तथाच वायोरनीक इति वायुशब्दयोगात् वायव्या वायुदेवत्या उपत्वा जामय इत्येषा भवतीति यत् तत्प्राणानां समृद्ध्यै पुनः समर्धनाय भवति यः प्राणः स वायुरिति वायुप्राणयोस्तादात्म्यश्रवणात् एवं प्रथमतृचस्य प्रथमा विहिता ॥ २ ॥

अथोत्तरे विधत्ते ।

सारस्वतश्च सरस्वत्याश्चोत्तरे भवतः ॥ ३ ॥

जनीयन्तोन्वग्रव इत्येषा सरस्वता देवस्य सम्बन्धिनी उत नः प्रियेति सरस्वत्या एते ऋचावुत्तरे भवतः ॥ ३ ॥

अथैते स्तौति ।

मिथुनं वा एतद्यत् सरस्वाᳪश्च सरस्वती च मिथुनमेवास्य यज्ञमुखे दधाति प्रजननाय ॥ ४ ॥

सरस्वांश्च सरस्वती चेति यदेतद्दृन्द्वयप्रतिपाद्ये देवते एतन्मिथुनं वै स्त्रीपुंसात्मकत्वात् एवञ्चास्य यजमानस्य प्रजननाय प्रजात्यर्थं मिथुनमेव यज्ञमुखे यज्ञप्रारम्भे दधाति स्थापयति ॥४॥

अथान्यां स्तोत्रीयां विधत्ते ।

सावित्री चतुर्थी भवति ॥ ५ ॥

तत्सवितुर्वरेण्यमित्येषा सावित्री सवितृदेवताका चतुर्थी-त्वम्भवति ॥ ५ ॥

अथैतां स्तौति ।

दुष्करं वा एष करोति यः सर्व्वं ददाति यत् सावित्री भवति सवितृप्रसूतं मे कर्म्मासदिति सवितृ-प्रसूतमेवास्य कर्म भवति ॥ ६ ॥

यो यजमानः सर्व्वं धनं ददाति एष दुष्करं कर्त्तुमशक्यं एव करोति तथा सर्वास्मिन् दक्षिणे अस्मिन् यदेषा सावित्री भवति सवितृप्रसूतं सवित्रा प्रसवित्रा देवेन प्रसूतमनुज्ञातं मम मदीयं कर्म सर्वस्वदानदक्षिणं असत् अस्त्वित्यभिप्रायेण सवितृ-देवत्या प्रयुज्यते तस्य यजमानस्य कर्म सवितृप्रसूतं भवति ॥६॥

अथान्यां स्तोत्रीयां विधत्ते ।

ब्राह्मणस्पत्या पञ्चमी भवति ॥ ७ ॥

सोमानां स्वराणामिति एषा ब्रह्मणस्पतिदेवताका पञ्चमी ऋग् भवतीति ॥ ७ ॥

अथ स्तौति।

**ब्रह्म वै ब्रह्मणस्पतिर्ब्रह्मैवास्य यज्ञमुखे दधाति ॥८**

ब्रह्म वेदस्तस्य पतिरीशिता ब्रह्मणस्पतिः स च ब्रह्म वै पर-ब्रह्म तथा चास्य यजमानस्य यज्ञमुखे तदेव ब्रह्म निदधाति ॥८॥

अथान्यां स्तोत्रीयां विधत्ते।

**आग्निपावमानी षष्ठी भवति ॥ ९ ॥**

अग्निः पवमानो देवता यस्याः सा आग्निपावमानी अग्न आयूंषि पवस इत्येषा षष्ठी भवति ॥ ९ ॥

अथ स्तौति।

**अग्निरेवैनन्निष्टपति पवमानः पुनाति पूतमे-वैनं यज्ञियं पृष्ठान्युपनयति ॥ १० ॥**

अस्यां हि अग्निः पवमानः सोम इति देवताद्वयं प्रतिपद्यते तयोर्मध्ये अग्निरेव एनं यजमानं निष्टपति निःशेषेण तप्तक-लुषं करोति पवमानः सोमः पुनाति पूतं शुद्धं करोति एवं हि बहिष्पवमानेन पूतमेवैनं यजमानं यज्ञियं यज्ञार्हं पृष्ठानि रथ-न्तरादीनि करिष्यमाणानि उपनयति उपगमयति ॥ १० ॥

अथोत्तमं तृचं विधित्सुराह।

**घ्नन्ति वा एते पथ इत्याहुर्ये सम्याय्याः कुर्वते ॥११**

य उद्गातारः सम्भार्य्याः सम्भरणीयाः प्रदेशान्तरे आम्नाता-मेकैकामृचमुपादाय उक्तक्रमेण सम्भृताः सम्पन्नाः कुर्व्वते प्रयु-ञ्जते एते पथो न्याय्यादनुष्ठानमार्गात् यन्ति अपगच्छन्तीति ब्रह्मवादिन आहुः ॥ ११ ॥

कस्तर्हि परिहार इति तदाहुः।

पावमान उत्तमस्तृचो भवति तेन पथो नयन्ति॥१२

पवमानस्य ते वयमिति पवमानसोमदेवताक इति पवमान-सोमदेवताकबहिष्पवमानस्यान्त्यस्तृचो भवति तेन यथाम्नात-तृचकरणेन पथः सकाशान्न गच्छन्ति आम्नातानां त्वचां तथैव प्रयोगो ह्यनुष्ठानमार्गः ॥ १२ ॥

एवं विश्वजितो बहिष्पवमानस्य नवस्तोत्रीयाः संस्तुतिका दर्शिताः अथैताभिरेव करिष्यमाणानां रथन्तरादीनां पञ्चानां पृष्ठानां योगं प्रतिपादयति।

स तु वै पृष्ठैः स्तुवीतेत्याहुर्य एतानि बहिष्पव-माने युञ्ज्यादिति ॥ १३ ॥

स तु वै स एव पृष्ठैः रथन्तरादिभिः स्तुवीत स्तौति य एतानि पृष्ठानि बहिष्पवमाने युञ्ज्यात् योजयेदिति ब्रह्मवादिन आहुः तस्मात् पृष्ठानां बहिष्पवमाने स्तोत्रीयाभिर्योजनं कार्य्यं यथा दशरात्रस्य प्रथमेऽहनि अस्य प्रत्नामनुद्युतमित्यादिभिर्नवभिर्न-वानामह्नां योगस्तथात्रापि पृष्ठानां योजनं कार्य्यमित्यर्थः ॥१३॥

तत्र कया स्तोत्रीयया किं योज्यत इत्याशङ्क्य रथन्तरयोगं तावदाह।

**उपवती प्रतिपद्भवत्युप वै रथन्तरꣳ रथन्तरमेवास्मै तया युनक्ति ॥ १४ ॥**

उपत्वाजामयोगिर इत्येषा प्रथमा भवति उपशब्दसम्बद्धं हि रथन्तरपृष्ठं ज्योतिष्टोमे उपास्मै गायतानर इति उपशब्दस्य प्रयुक्तत्वात् एवञ्चैतयोपवत्या अस्मै यजमानाय रथन्तरं साम युनक्ति ॥ १४ ॥

अथ बृहतो योगं दर्शयति।

**सरस्वतो द्वितीया भवति स्वर्गो लोकः सरस्वान् स्वर्गोलोको बृहद् बृहदेवास्मै तया युनक्ति ॥ १५ ॥**

सरस्वतः सरस्वदाख्यस्य देवस्य सम्बन्धिनी द्वितीया जनीयन्तोन्वग्रव इत्येषा भवति स्वर्गाख्यो लोकएव सरस्वान् अमावास्या वै सरस्वती पौर्णमासः सरस्वानिति ब्राह्मणान्तरात् सरस्वतः पूर्णमासत्वात् तस्य च स्वर्गसाधनत्वात् तदात्मकत्वव्यपदेशः बृहत्साम च स्वर्गलोकात्मकं इयं वै रथन्तरमसौ वै लोको बृहदिति श्रुतेः एवं परम्परया सरस्वतो बृहत्सम्बन्धिन्या एतया सरस्वद्देवताकया बृहदेव तस्मै युनक्ति ॥ १५ ॥

अथ वैरूपस्य योगमाह।

सरस्वत्यास्तृतीया भवति वाग्वै सरस्वती वाग्वै रूपं वैरूपमेवास्मै तया युनक्ति ॥ १६ ॥

सरस्वत्याः सम्बन्धिनी उप नः प्रियास्वित्येषा तृतीया भवति वाक्शब्दात्मिका हि सरस्वती वैरूपञ्च वाक्संस्तुतं तथा च तया तृतीयया वैरूपमेवास्मै युनक्ति ॥ १६ ॥

अथ वैराजस्य योगमाह ।

सावित्रो चतुर्थी भवति प्रजापतिर्वै सविता प्रजापतिर्वैराजं वैराजमेवास्मै तया युनक्ति ॥ १७ ॥

सावित्री सवितृदेवताका तत्सवितुर्वरेण्यमित्येषा चतुर्थी भवति सा प्रजापतिरेव सविता सर्व्वस्य प्रेरकत्वात् वैराजञ्च साम प्रजापतिसंस्तुतं तथा चैतया सावित्र्या वैराजमेवास्मै युनक्ति ॥ १७ ॥

अथ शाक्वरस्य साम्नो योगमाह ।

ब्राह्मणस्पत्या पञ्चमो भवति ब्रह्म वै ब्रह्मणस्पतिर्ब्रह्म शक्वर्य्यः शक्वरीरेवास्मै तया युनक्ति ॥१८॥

ब्राह्मणस्पत्या ब्रह्मणस्पतिदेवताका सोमानां स्वरणमित्येषा पञ्चमी भवति परब्रह्मैव ब्रह्मणस्पतिरित्युच्यते विदा मघवन्नित्याद्याः शक्वर्य्यश्च परब्रह्मणः प्रतिपादकत्वात् ब्रह्मात्मिका तथा चैतया ब्राह्मणस्पत्यया शक्वरीरेव शक्वरीषु ऋक्षु गीयमानं शाक्वरं सामैवास्मिन् युनक्ति ॥ १८ ॥

अथ रैवतस्य साम्नो योगमाह ।

**आग्निपावमानी षष्ठी भवति गायत्री वै रेवती गायत्रच्छन्दा अग्नीरेवतीरेवास्मै तया युनक्ति ॥१९॥**

आग्निपावमानी अग्न आयूंषि पवस इत्येषा षष्ठी भवति गायत्री गायत्रच्छन्दस्का खलु रेवती: रैवतसाम्नो योनिभूता रेवतीर्न्न इत्येषा अनया प्रतिपाद्यमानोऽग्निश्च गायत्रछन्दा: गायत्रं छन्दो यस्य स तथोक्त: एवञ्चैतया आग्नेय्या गायत्र्या रेवतीरेव रेवतीषु गीयमानं रैवतं सामास्मै युनक्ति ॥ १९ ॥

ननु एवं रथन्तरादीनि षट्सामानि योजितानि कथं तेषां चतुर्षु पृष्ठस्तोत्रेष्वन्तर्भाव इत्यत आह ।

**न चत्वारि षड्भ्यो विभवन्ति यदनिरुक्तानि तेन विभवन्ति ॥ २० ॥**

खलु चत्वारि पृष्ठस्तोत्राणि न षड्भ्य: सामभ्यो विभवन्ति न व्याप्नुवन्ति यद्यस्मादेतानि षट्सामान्यनिरुक्तानि पृष्ठस्तोत्रेष्वेव कार्य्याणीति न नि:शेषेणोक्तानि तेन कारणेन पृष्ठस्तोत्रेष्वन्यत्र प्रयोक्तुं शक्यत्वात् विभवन्ति व्याप्तुं शक्नुवन्ति ॥ २० ॥

आज्यस्तोत्रेषु कञ्चिद्दोषमाशङ्क्य समाधत्ते ।

**सर्व्वाणि स्वाराण्याज्यानि तज्जामि नानादेवत्यै: स्तुवन्त्यजामितायै ॥ २१ ॥**

सर्व्वाणि चत्वार्य्याज्यस्तोत्राणि स्वारनिधनानि तथाच स

सर्व्वेषां समानावस्थानत्वात् जामितादोषः स्यात् अतस्तत्परिहाराय नानादेवत्यैः अग्निर्मित्रावरुणाविन्द्राग्नी चेति क्रमेण तद्देवताकैराज्यैः स्तुवन्ति ॥ २१ ॥

कानि पुनस्तथाविधानीत्यत आह ।

**सुषमिद्धो न आवहेत्याप्रिय आज्यानि भवन्ति ॥ २२ ॥**

आप्रिय इति प्रयाजानुयाजा इत्युच्यन्ते सुषमिद्धो न आवहेत्याद्यास्तिस्र आप्रियस्तोत्रीयाआग्नेयं प्रथममाज्यस्तोत्रं भवति इतराणि च त्रीणि कल्पकारेणोक्तानि ता नः शक्रं पार्थिवस्य युञ्जन्ति ब्रध्नमरुषम् तमीडिष्वयो अर्च्चेयेति ॥२२॥

अथाप्रीणामाज्यत्वं सर्व्वस्वदानेन रिक्तीकृतस्य यजमानस्य पुनः पोषणार्थमिति स्तौति ।

**प्रजापतिः प्रजा असृजत स दुग्धोरिरिचानोऽमन्यत स एतान्याप्रिय आज्यान्यपश्यत्तैरात्मानमाप्रीणाद्दुग्धइव वा एष रिरिचानोयः सर्वन्ददाति यदाप्रिय आज्यानि भवन्त्यात्मानमेव तैराप्रीणाति ॥ २३ ॥**

एतत्सर्व्वं पूर्वस्मिन्नेवाध्याये व्याख्यातं ॥ २३ ॥

अथ रथन्तरादीनां षण्णां पृष्ठानां स्थानविशेषं व्यवस्थापयितुमाह ।

एतर्हि तु वै पृष्ठानि यथायतनं कल्पन्त इत्याहु-र्यद्रथन्तरं प्रथमं बृहदुत्तमम्मध्य इतराणीति ॥ २४ ॥

माध्यन्दिनपवमाने रथन्तरं साम बृहदग्निष्टोमसाम इत-राणि चत्वारि पृष्ठस्तोत्रेषु प्रयोज्यानि तथाच कल्पः अस्य प्रत्ना-मनुद्युतमिति गायत्रनामहीयवञ्च परीतोषिञ्च तासु तमिति कालेयमेकस्यां रथन्तरं तिसृषु दैर्घश्रवसन्तिसृषु यौधाजयमे-कस्यां अयं सोम इति पार्थमन्त्यं वैराजञ्च महानाम्नयश्च वैरूपञ्च रैवत्यश्चेति तथा त्वमग्ने यज्ञानां होतेति बृहदग्नि-ष्टोमसामेति अयमर्थः माध्यन्दिनपवमाने परीतोषिञ्च तासु तमिति तिसृषु रथन्तरं कार्य्यं वैराजञ्च होतुः पृष्ठे शाक्वरं मैत्रावरुणपृष्ठे वैरूपञ्च ब्रह्मपृष्ठे रैवतमच्छावाकपृष्ठे त्वमग्ने यज्ञानामिति तिसृषु बृहदग्निष्टोमसामत्वेन कार्य्यमिति ॥२४॥

अथैवं क्रियमाणे किञ्चिद्दूषणमाशङ्क्य निरस्यति ।

जामि वा एतद्यज्ञे क्रियत इत्याहुर्य्यत्सर्व्वाणि निधनवन्ति सह क्रियन्त इति यदन्तरा सोमा यन्त्य-न्तरोक्थानि भक्षयन्तेऽन्तरा वषट्कुर्वन्ति तेना-जामि ॥ २५ ॥

अलसमेतद्यज्ञे क्रियते यत्सर्व्वाणि वैराजादीनि सामानि निधनवन्ति निधनयुक्तानि सह क्रियन्ते नैरन्तर्य्येण प्रयुज्यन्त इति एतज्जामि क्रियत इति ब्रह्मवादिन आहुः अयं दोषः

परिह्रियते यदन्तरेत्यादिना यद्यस्मादन्तरा अन्तराले तेषां मध्ये सोमाः ग्रहचमसपूरिताः सन्तो होमार्थं यन्ति उत्तरवेदिं गच्छन्तीति तथान्तरा मध्ये उक्थानि शस्त्राणि च शस्यन्ते बह्वृचैः तथान्तराले होत्रादयः सप्त वषट् कुर्वन्ति वौषडन्तया याज्यया यजन्ति तेन कारणेन द्वयोर्द्वयोर्मध्ये उक्तस्य बहुविधस्यानुष्ठेयस्य सद्भावेन व्यवधानात् जामिदोषो न भवतीत्यर्थः ॥ २५ ॥

अथ प्रकारान्तरेणाजामित्वमुपपादयति ।

व्यत्यासमिडाश्च निधनानि चाहुस्तेनाजामि ॥२६

व्यत्यासं व्यत्यस्य व्यत्यस्य परिहृत्य परिहृत्य इडाश्चाद्यानि च निधनान्याहुः तेन निधनवत्त्वे समानेऽपि तेषान्निधनानां व्यत्यस्य प्रयोगे परस्परं वैलक्षण्याज्जामिदोषो न भवतीत्यर्थः अतएव पूर्व्वमुक्तं निधनं वैराजं प्रथमं कृत्वा इडानिधनं शाक्वरमनन्तरं कार्य्यमित्यादि ॥ १६ ॥

अथ रैवतसाम्नि कञ्चिद्दोषमाशङ्क्य समाधत्ते ।

च्यवन्ते वा एतद्रेवत्यः स्वादायतनादित्याहुर्यत् त्रयस्त्रिंशात् स्तोमाद्यन्तीति यद्गायत्रो भवन्ति तेनायतनान्न च्यवन्ते या हि का च गायत्री सा रेवती ॥ २७ ॥

एतत् एतर्हि रेवत्यः रैवतं साम स्वादात्मीयादायतनात् च्यवन्ते प्रच्युता भवन्तीति ब्रह्मवादिन आहुः यद्यस्मात् त्रयस्त्रिं-

गात् स्तोमाद्यन्ति गच्छन्तीति षष्ठेऽहनि तस्यैव स्तोमस्य तदायतनत्वेन क्लृप्तत्वात्, तत्रायं परिहारः यद्यस्मात् अस्य रैवतसाम्नो गायत्र्यो गायत्रीछन्दस्का ऋच आधारभूता भवन्ति तेन कारणेन स्वादायतनान्न च्यवन्ते कुत एतत् रेवतीर्नः सधमाद इति गायत्री रैवतसाम्नो योनिस्तत्सामान्यात् अन्यापि या कापि गायत्री सैव रेवती हि यस्मादेवं तस्मात् स्वयोनिसदृशीषु गायत्रीषु ऋक्षु गीयमानं रैवतं स्वादायतनान्न च्यवन्त इति ॥१७॥

इति ताण्ड्यमहाब्राह्मणे षोड़शाध्यायस्य

पञ्चमः खण्डः।

---

अथ षष्ठः खण्डः।

अथ सर्व्वस्वदाननिमित्तं यजमानस्य व्रतं दर्शयति, तदङ्गत्वेनादौ वस्त्रत्वचः परिधानं विधत्ते।

**पशुभिर्वा एषव्यृध्यत इत्याहुर्यः सर्वन्ददातीति कृवीं परिधत्ते पशुभिरेव सम्टध्यते ॥ १ ॥**

यो यजमानः सर्व्वं धनं ददाति एष पशुभिः खलु व्यृध्यते विहीयते इति ब्रह्मवादिन आहुः ॥ १ ॥

तत्र परिधानं विधाय स्तूयते।

**रोहिणी कृवी भवत्येतद्वै पशूनां भूयिष्ठꣳ रूपं यद्रोहितꣳ साक्षादेवैनानवरुन्धे ॥ २ ॥**

रोहिणी रोहितं वस्त्रं छवी भवति सर्वेषां गवादीनां पशू-नां भूयिष्ठं रोहितं तद्रक्ततरं यद्रोहितं लोहितवर्णस्तथा च साचात् प्रत्यचमेव एनान् पशूनवरुन्धे लभते ॥ २ ॥

एवं कृतपरिधानस्य यजमानस्य त्रिरात्रमरण्यवासं परि-धत्ते ।

**अरण्ये तिस्रोवसत्यारण्यं ताभिरन्नाद्यमवरुन्धे॥३॥**

तिस्रो रात्रीः अरण्ये वसति अत्यन्तसंयोगे द्वितीया तेन वासेन आरण्यमरण्यसम्बन्धि अन्नाद्यमवरुन्धे लभते ॥ ३ ॥

तत्रारण्यवासे स्थानविशेषं विधत्ते ।

**उदुम्बरे वसत्यूर्गुदुम्बर ऊर्ज्जमेवावरुन्धे ॥ ४ ॥**

उदुम्बरे उदुम्बरमूले वसति ऊर्ज्जं अन्नं उदुम्बरः सदा फलत्वात् तथा च तन्मूले वसन् ऊर्ज्जमन्नमेवावरुन्धे ॥ ४ ॥

अथ तत्र जीविकां विधत्ते ।

**खनित्रेण जीवत्यहत्तिमपजयति ॥ ५ ॥**

यदरण्ये कन्दमूलादिकं खान्यमस्ति तत् खनित्रेण खनन-साधनेन खात्वा तेन जीवेदित्यर्थः तथाच अहत्तिदारिद्र्यमेवाप-जयति अपजितं करोति ॥ ५ ॥

किं तत् खनित्रमिति तदाह ।

**उभयतः चणुदद्भिर्भवत्युभयत एवास्मा अन्नाद्यं रदत्यस्माच्च लोकादमुष्माच्च ॥ ६ ॥**

तत् खनित्वं उभयतः स्यात् उभयतस्तीक्ष्णमुखोदङ्क्रिर्भवति सा च वैणवी कल्माषीति केचित् अन्यवृक्षजातापि इति पक्षान्तरं एवम्भूताभिरुभयतः उभयविधानादेव अस्मै यजमानाय अन्नाद्यं रञ्जयति उभयत इत्येतद्व्याक्रियते अस्मात् भूर्लोकात् अमुष्माच्च स्वर्गात् ॥ ६ ॥

अथ त्रिरात्रं निषादकुले निवासं विधाय स्तौति ।

निषादेषु तिस्रोवसत्यस्यां वा एते परीत्ताय देवास्यामन्नाद्यन्तदवरुन्धे ॥ ७ ॥

निषादेषु निषादग्रामसमीपे तिस्रोरात्रीर्वसेत् अस्यां भूमौ एते निषादाः परीत्ताः प्राप्तपरिदाना भवन्ति एवं तेषां भूमिसम्बन्धात् यदेवास्यां पृथिव्यामन्नाद्यन्तदवरुन्धे लभते एवं वसतो जीवनं सूत्रकृतोक्तं तेषाङ्ग्राममारण्यं भुञ्जीत नैवारं श्यामाकम्मार्गमिति ॥ ७ ॥

अथापरं त्रिरात्रवासं विधत्ते ।

जने तिस्रो वसति जन्यन्ताभिरन्नाद्यमवरुन्धे ॥८

विवाहयोग्योऽसमानगोत्रो ब्राह्मणो जनः यद्वा राजन्यबन्धुकस्य गृहे तदीयमन्नं भुञ्जानः तिस्रो रात्रीर्वसेत् तथा च ताभीरात्रीभिर्जन्यं जनसम्बन्ध्यन्नाद्यमवरुन्धे ॥ ८ ॥

अथापरं त्रिरात्रवासं विधत्ते ।

समानजने तिस्रः समानजन्यन्ताभिः ॥ ९ ॥

वसति अन्नाद्यमवरुन्ध इत्यनुवर्त्तते समानगोत्रोजनः समानजनः यद्वा ब्राह्मणमात्रं तस्य गृहे तदीयमन्नं भुञ्जानस्तिस्रो रात्रीर्वसेत् जने तिस्रोवसतीत्यादिवाक्यद्वयं राजन्यबन्धुना ब्राह्मणः समानजन इति शाण्डिल्य इत्यादिना सूत्रकारेण बहुधा व्याख्यातं ॥ ९ ॥

अथैता रात्रीः संहृत्य स्तौति ।

द्वादशैता रात्रयो भवन्ति द्वादशमासाः संवत्सरः संवत्सरमन्वन्नाद्यं प्रजायते तदेवाप्त्वावरुन्धे ॥ १० ॥

अरण्ये तिस्रो निषादे तिस्रो जने तिस्रः समानजने तिस्र इत्येवमेतारात्रयो द्वादश भवन्ति संवत्सरश्च द्वादशमासात्मकः तथाच संवत्सरं संवत्सरपर्य्यन्तं अन्नं अनु अनुसहं प्रजायते तेनोत्पद्यते एवं रात्रिगतसंख्यया तदेवान्नाद्यं आप्त्वा अवरुन्धे स्वीकरोति ॥ १० ॥

अथान्यत् व्रतमाह ।

संवत्सरन्न याचेदामाद्यमिव वा एतद्यः सद्योदत्तं प्रत्यत्ति सद्यो वै देवानांᳪ संवत्सरः ॥ ११ ॥

संवत्सरं सर्वस्वदानानन्तरं संवत्सरपर्य्यन्तं न याचेत् मह्यमेतद्देहीति परं नाभ्यर्थयेत् किं कारणमयाचनं तदाह आमाद्यमिव वा एतद्यः सद्योदत्तं प्रत्यत्तीति एतदामाद्यमिव वै आमस्यापरिपक्वफलस्य भक्षणमिव खलु यो दत्तं धनं सद्यस्तदानीमेव प्रत्यत्ति प्रतिनिहृत्य भक्षयति, ननु बहुषु दिवसेषु गतेषु

संवत्सरमध्येऽपि प्रतिग्रहो न विरुध्यत इत्यत आह सद्यो वा इति अस्माकं संवत्सर इति यत् तद्देवानां सद्यो वै अविलम्बितः कालः एकं वा एतद्देवानामहर्य्यत् संवत्सर इति हि ब्राह्मणान्तरं तस्मात् संवत्सरस्यापि सद्यःकालात्मकत्वात् यदि तन्मध्ये सर्वस्वं दत्तवान् पुनर्याचेत् तदा तदपरिपक्वफलभक्षणसदृशं भवेत् इति याच्ञाप्रतिषेधः समर्थ्यते ॥ ११ ॥

यद्ययाचमानायापि तस्मै यत्किञ्चिद्धनं दातुमिच्छेत्तदा न विरोधमित्याह।

नोदीयमानं प्रति नुदेदन्नाद्यस्याप्रतिनोदाय॥१२

अयाचितमन्येन दीयमानं न प्रतिनुदेत् न प्रतिषेधेत् अपि तु प्रतिगृह्णीयादेव अन्नाद्यस्यातःपरं प्राप्तस्यान्नस्य प्रतिनोदः प्रतिषेधो माभूत् इत्येवमर्थम् ॥ १२ ॥

अथास्योष्णीषधारणं विधत्ते।

उष्णीषम्बिभर्त्ति शिल्पत्वाय॥ १३ ॥

उष्णीषं शिरोवेष्टनवस्त्रं तद्बिभ्रियात् तद्धरणं शिल्पत्वाय वैचित्र्याय भवति परिधानीयाया रोहिण्याः वत्सत्वचः सकाशात् वैलक्षण्यात्॥ १३ ॥

अथान्यन्निषेधयति।

न कन्मयेन पिबेदाहुतिर्वा एषा यद्ब्राह्मणस्य मुखन्न वै कन्मयमाहुतिमानशेऽथ यत्कन्मयपो भवति स्वएव मुखआहुतिञ्जुहोति॥ १४ ॥

मृन्मयेन मृद्विकारेण पात्रेण जलादिकन्न पिबेत् एषा आ-हुतिर्वै यज्ञमिव आहुत्यधिकरणं यत् ब्राह्मणमुखं न खलु मृन्मयं मृद्विकारपात्रं आहुतिमानशे आहुतियोग्यतां प्राप्नोति अतो यत् यस्मात् अमृन्मयपः अमृन्मयेन दारुमयादिना पात्रेण पाता भवति तेन स्वएव आत्मीयएव मुखे आहुतिं हविर्जु-होति॥ १४॥

इति ताण्ड्यमहाब्राह्मणे पञ्चदशाध्यायस्य

षष्ठः खण्डः।

---

अथ सप्तमः खण्डः।

अथ सर्व्वजित्संज्ञमेकाहं विधास्यन् तस्य स्तोमसंस्थे दर्श-यति।

पञ्चविंशोऽग्निष्टोमः॥ १॥

अग्निष्टोमसंस्थः पञ्चविंशस्तोमका इत्यर्थः॥ १॥

अथ तं विधत्ते।

सर्व्वजिता वै देवाः सर्वमजयन् सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाप्नोति सर्वञ्जयति॥ २॥

सर्व्वजिता सर्व्वजिताख्येन यज्ञेन खलु पुरा देवाः सर्वं जगद-जयन् तस्मात् सर्व्वस्य फलस्य प्राप्त्यै सर्वस्य जेतव्यस्य जित्यै जयाय अनेन सर्वजिता यष्टव्यं स्पष्टमन्यत्॥ २॥

अथास्मिन्नेकाहे प्रथमं पृष्ठस्तोत्रं विधत्ते।

**तस्य महाव्रतं पृष्ठं ॥ ३ ॥**

तस्य सर्वजितः महाव्रताख्यं प्रागुक्तं स्तोत्रं पृष्ठं भवति माहेन्द्रस्तोत्रं भवतीत्यर्थः कल्पकारेण विस्तरेण महाव्रतस्तोत्रस्वरूपमुक्तं इन्द्रमिद्गाथिनो बृहदिन्द्रोदधीचो उद्वेदभिश्रुतामद्यमिति त्रिष्टुच्छिरो गायत्रं पञ्चदशं रथन्तरं दक्षिणः पक्षः सप्तदशो बृहदुत्तरः पक्षः एकविंशं भद्रं पुच्छं तदिदास भुवनेषु ज्येष्ठमिति पञ्चविंश आत्मा राजनमिति शिर आद्यवयवपञ्चकत्वेन रूप्यमाणं गायत्र्यादि सामपञ्चकं उक्तस्तोमकं महाव्रतस्तोत्रमिति कल्पार्थः ॥ ३ ॥

अथ शस्त्रं विधत्ते ।

**अर्कंᳪ शस्यते ॥ ४ ॥**

अर्कः सूर्यः तत्सम्बन्धिबृहती सहस्राख्यं शस्त्रं शस्यते अनेन शस्त्रेण होत्रा महाव्रतस्यानुशंसनं कार्य्यमित्यर्थः ॥ ४ ॥

अथ पञ्चविंशस्तोमकत्वं स्तौति ।

**चतुर्विंᳪशतिः संवत्सरस्यार्द्धमासाः संवत्सरः पञ्चविंशोऽन्नं व्रतᳪ संवत्सरादेतेनान्नाद्यमवरुन्धे ॥ ५ ॥**

संवत्सरस्य चतुर्विंशतिः संख्या ह्यर्द्धमासास्तत्स्थानीयाश्चतुर्विंशतिः स्तोत्रीयाः तेषामर्द्धमासानां पञ्चविंशः पञ्चविंशतिसंख्यापूरकः संवत्सरः स एवं पञ्चविंशस्तोत्रीयात्मकः यदेतन्महाव्रताख्यं स्तोत्रं तदन्नं तस्यान्नरूपत्वं प्रथमपञ्चिकायामुक्तं

एवञ्च पञ्चविंशस्तोमं महाव्रतं प्रयुञ्जानः संवत्सरादेव एतेन यागेनान्नाद्यमवरुन्धे ॥ ५ ॥

अथैतद्वेदितुः फलमाह।

अन्नादो भवति य एवं वेद ॥ ६ ॥

स्पष्टोऽर्थः ॥ ६ ॥

अथ प्रकारान्तरेण स्तौति।

एतेन वै गौराङ्गिरसः सर्वं पाप्मानमतरत्सर्वं पाप्मानन्तरत्येतेन स्तोमेन तुष्टुवानः ॥ ७ ॥

एतेन पञ्चविंशस्तोमेन गौर्नामाङ्गिरसः ऋषिः सर्वं पाप्मानं पापं अतरत् अत्यक्रमीत् स्पष्टमन्यत् अस्यावशिष्टस्तोत्रकल्पनं कल्पकारोक्तं द्रष्टव्यं ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे षोडशाध्यायस्य

सप्तमः खण्डः।

---

अथ अष्टमः खण्ड

अथ सहस्रदक्षिणाः साहस्रा नाम चत्वारएकाहास्तत्र ज्योतिरग्निष्टोमः प्रथमस्तं दर्शयति।

अथैषज्योतिः ॥ १ ॥

अथेत्यानन्तर्य्ये एष वक्ष्यमाणो ज्योतिःसंज्ञ एकाहः ॥ १ ॥

अथाग्निष्टोमसंस्थां विधित्सुराह।

पराङ्वै त्रिरात्रोऽर्वाङग्निष्टोमो यस्त्रिरात्रे विभ्रꣳ-शते न तस्मिन् पुनरस्त्यथ योऽग्निष्टोमे प्रायश्चित्ति-मत्तदपि ह्येतेनैकविꣳशतिदक्षिणेन पुनर्यजेत यस्मिन् ह्येव यज्ञक्रतौ विभ्रꣳशते सैव तस्य प्रायश्चित्तिः ॥२॥

योऽयं त्रिरात्रस्त्रिसृणां रात्रीणां समाहारः अहीनोगर्ग-त्रिरात्राख्यो विधास्यते स पराङ्वै पराग्गतः पराङ्मुखः योऽयं प्रकृतिभूतोऽग्निष्टोमः सः अर्व्वाङ् अभिमुखः अतो यो यज-मानस्त्रिरात्रे क्रतौ विभ्रंशते विभ्रष्टो भवति स तस्मिंस्त्रिरात्रे पुनर्नास्ति पुनरधिकृतो न भवति योऽग्निष्टोमे विभ्रंशते तत्तस्य प्रायश्चित्तिमत् प्रायश्चित्तयुक्तं कर्म्म भवति किं तत् प्रायश्चित्त-मुच्यते एतेनाग्निष्टोमेन एकविंशतिदक्षिणेन पुनरविकलेन यजेत यस्मिन्नेव यज्ञक्रतौ विभ्रंशते पूर्व्वं विभ्रष्टो भवति तस्य यज्ञस्य सैव प्रायश्चित्तिः अतस्त्रिरात्रादप्यग्निष्टोमस्य गरी-यस्त्वात् अग्निष्टोमसंस्थैवास्य ज्योतिषः कार्य्येत्यर्थः ॥ २ ॥

अथ तस्मिन्नेकाहे प्रातरनुवाकस्य होत्रानुवक्तव्यस्य परि-माणं कालविशेषं दक्षिणापरिमाणं ब्रह्मसाम्नः स्तोत्रीयाक्षर-परिमाणञ्च सिद्धवदनूद्य प्रतिष्ठाहेतुत्वेन स्तौति ।

उपसदि सहस्रं प्रातरनुवाकमन्वाह तदसौ लोकः सहस्रं दक्षिणास्तदन्तरिक्षꣳ सहस्रमेतान्यक्षराणि तदयं लोक एषु लोकेषु प्रतितिष्ठति य एवं वेद ॥३॥

उपसदि उपसद्दिवसे सहस्रं सहस्रसंख्याभिर्ऋग्भिः परिमितं प्रातरनुवाकं होतानुब्रूयात् तं सहस्रं असौ स्वर्गलोकः तथाग्निनैकाहे सहस्रं दक्षिणाः सहस्रसंख्यागावो दक्षिणात्वेन दातव्याः तत् सहस्रमन्तरिक्षात्मकं एतानि ब्रह्मसामानि ब्रह्मसाम्नः सम्बन्धीनि ब्रह्मसाम्नः सहस्रमक्षराणीत्युक्तं कल्पकारेण ब्रह्मसामस्वादौरिकृथेति पंक्त्यां ग्ध्रतमाम्नातं सा च चत्वारिंशद्भिरक्षरैरुपेता एवञ्च पञ्चविंशस्तोमकल्पनया सहस्रं सम्पद्यत इति तदयं भूर्लोकः एवं सहस्रत्रयस्य लोकत्रयात्मकतां यो वेत्ति विदित्वा चानुतिष्ठति स एषु त्रिषु लोकेषु प्रतितिष्ठति ॥ ३ ॥

अथैतत् सहस्रदक्षिणापरिमाणं प्रकारान्तरेण स्तौति ।

## ऋक्था वा अन्यत् सहस्रमित्याहुरक्षरेण्या अन्यदिति यत् त्रिरात्रे दीयते तदृक्था अथ यदग्निष्टोमे तदक्षरेण्या ॥ ४ ॥

अन्यदेकं सहस्रं सहस्रसंख्यादक्षिणा ऋक्था ऋक्संख्यया तत्स्थिताः अपरं सहस्रं सहस्रसंख्यादक्षिणा अक्षरेण्या अक्षरसंख्ययावस्थिता इति ब्रह्मवादिन आहुः का पुनः कुत्रेति विविच्यते यत् सहस्रं गर्गत्रिरात्रे दक्षिणात्वेन दीयते तदृक्था तत् सहस्रसंख्यादक्षिणा ऋक्था तत्र हि सहस्रं स्तोत्रीयाः सहस्रं दक्षिणा इति स्तोत्रीयाणामृचां सहस्रसंख्या दृश्यते तथाच तत्संख्यया दक्षिणा ऋक्था भवति अथ यत् सहस्रमग्नि-

ष्टोमे अग्निष्टोमसंस्थे अस्मिन्नेकाहे दक्षिणा सहस्रमक्षरेस्था ब्रह्मसाम्नः स्तोत्रीयाक्षरसंख्यावस्थिता अक्षरेस्था ॥ ४ ॥

एतावद्भिष्टणोति।

यत् सहस्राक्षरासु ब्रह्मसाम भवति सहस्रस्यैव सा प्रतिष्टुतिः ॥ ५ ॥

स्वादोरित्थाविषूवत इत्याद्यास्तिस्रः पङ्क्तयोऽत्र ब्रह्मसाम्नः स्तोत्रीयास्ताः प्रत्येकं चत्वारिंशदक्षराः पञ्चविंशस्तोमकत्वात् आवृत्त्या पञ्चविंशतिसंख्याकाः पङ्क्तयो भवन्ति एवञ्च प्रत्यृचां चत्वारिंशत्सङ्ख्यया परिगणनायां सहस्राक्षराणि सम्पद्यन्ते तदिदमुक्तं सहस्राक्षरास्विति यत् सहस्राक्षरासु ब्रह्मसाम ब्रह्मणः पृष्ठस्तोत्रनिर्वर्त्तकं श्यैताख्यं साम भवति सा सहस्रस्यैव दीयमानस्यैव प्रतिष्टुतिः प्रतिस्तवनं ॥ ५ ॥

अथान्यप्रकारेण दक्षिणादानं स्तौति।

यावद्वै सहस्रङ्गाव उत्तराधरा इत्याहुस्तावदस्मात् लोकात् स्वर्गोलोक इति तस्मादाहुः सहस्रयाजी वा इमान् लोकान् प्राप्नोति ॥ ६ ॥

सहस्रं सहस्रसङ्ख्यागावः उत्तराधरा अन्योन्यस्योपरि उत्तराधरभावेनावस्थिताः यावदुच्छ्रिता भवन्ति अस्माल्लोकात्तावत्प्रमाणे उन्नते स्थाने स्वर्गाख्योलोक इति ब्रह्मवादिन आहुः यस्मादेवं सहस्रगवोर्द्धप्रमाणे स्वर्गः तस्मादेव आहुर्ब्रह्मवा-

दिन: सहस्रयाजी सहस्रगोदक्षिणेन यागेनेष्टवान् पृथिव्यादीन् लोकान् व्याप्नोतीति यद्यपि पूर्व्वं सहस्रगवोर्द्ध्वप्रमाणः स्वर्ग इति एकस्यैव लोकस्य प्राप्यत्वमवगम्यते तथापि नान्तरीयकं पृथिव्यन्तरिक्षयोः प्रापणमित्यभिप्रायेणेमान् लोकानिति बहु-वचनं ॥ ६ ॥

अथ ब्रह्मसाम्नः पङ्क्तिच्छन्दस्का ऋचो विधातुमाह ।

पशुभिर्वा एष व्यृध्यत इत्याहुर्यः सद्यः सहस्रं ददातीति पङ्क्तिषु ब्रह्मसाम भवति पाङ्क्तो यज्ञः पाङ्क्ताः पशवो यज्ञ एव पशुषु प्रतितिष्ठति ॥ ७ ॥

योऽयं यजमानः सद्योयुगपदेव गवां सहस्रं ददाति एष पशुभिः व्यृध्यते हीयते तत्परिहाराय पङ्क्तिषु पङ्क्तिच्छन्दस्कासु ऋक्षु स्वादोरित्थाविषूवत इत्याद्यासु एतं ब्रह्मसाम भवति पाङ्क्तः पङ्क्तिसम्बद्धो यज्ञः पशवश्च पाङ्क्ताः पङ्क्तिसम्बद्धाः एवञ्च पङ्क्तिछन्दसा यज्ञएव पशुषु प्रतितिष्ठति पुनर्बहुपशुको भवती-त्यर्थः ॥ ७ ॥

अथैतस्याह्नः स्तोत्रीयासम्पत्तिद्वारेण स्तुतिं करोति ।

त्रिष्टतꣳ स्तोमꣳ सम्पद्यते विराजं छन्दः ॥ ८ ॥

स्तोत्रीयाणामियत्तापरिज्ञानाय कल्पकारेण कृतास्तोम-क्लृप्तिः प्रदर्श्यते त्रिष्टद्बहिष्पवमानं पञ्चदशः त्रयस्त्रिंश्यानीति द्वे

पञ्चदशके द्वे त्रिवृती इत्यर्थः पञ्चदशत्रिवृन्त्याज्यानि सप्तदशो माध्यन्दिनः पवमानो होतुश्च पृष्ठं पञ्चदशं मैत्रावरुणस्य पञ्चविंशं ब्राह्मणाच्छंसिनः सप्तदशमच्छावाकस्य एकविंश आर्भवः पवमान एकविंशोऽग्निष्टोम इति एवञ्च प्रातःसवनीयाः स्तोत्रीयाः सप्तपञ्चाशत् ५७ माध्यन्दिनपवमानीया एकनवतिः ६१ तृतीयसवने द्विचत्वारिंशत् ४२ संहत्य नवत्यधिकशतस्तोत्रीया भवन्ति १६० तास्वतुर्विंशतिसंख्या त्रिवृतः एका विराट् भवति तदेतदुच्यते त्रिवृतं स्तोममिति पूर्व्वोक्तस्तोमको यज्ञस्त्रिवृतं स्तोमं सम्पद्यते विराडाख्यं छन्दश्च त्रिवृतो हि नवस्तोत्रीयाः तथाच स्तोत्रीयाणां नवनवशो भागे अशीतिशताभिः स्तोत्रीयाभिः विंशतित्रिवृतः सम्पद्यन्ते ॥ ८ ॥

अवशिष्टा दशस्तोत्रीयाः सा एका विराट् किन्तत इत्याह।

## प्राणो वै त्रिवृदन्नं विराण्नवैव प्राण ऋतेऽन्नात्पारयति नान्नमृते प्राणात्प्राणेषु चैवान्नाद्ये च प्रतितिष्ठति ॥ ६ ॥

त्रिवृत् स्तोमः प्रजापतिमुखादुत्पन्नः प्राणवायुश्च मुखे वर्त्तत इति तस्य प्राणात्मकत्वं विराट् छन्दे दशाक्षरं अन्नञ्च दशविधेन्द्रियतर्पकं तस्माद्विराजोऽन्नत्वं नवैव खलु प्राणः प्राणवायुः अन्नाद्यो अन्नं विहाय पारयति शरीरेऽवस्थातुं शक्नोति अन्नं प्राणमन्नमपानमाहुरिति श्रुतेः तथा प्राणादृते प्राणं विहाय अन्नमपि शरीरं पोषयितुन्न शक्नोति तस्मादनयोः

परस्परसहकारित्वादुभयोरेव सह सम्पादनेन प्राणेषु चैव अन्नाद्येषु यजमानः प्रतिष्ठितो भवति ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे षोड़शाध्यायस्य
अष्टमः खण्डः।

---

अथ नवमः खण्डः।

अथ द्वितीयमन्यं साहस्रमेकाहं दर्शयति।

अथैष सर्व्वज्योतिः सर्व्वस्याप्तिः सर्व्वस्य जितिः सर्व्वमेवैतेनाप्नोति सर्व्वञ्जयति ॥ १ ॥

अथानन्तरमेष वक्ष्यमाणः सर्व्वज्योतिर्नामैकाह उच्यत इति शेषः स च सर्व्वस्य फलस्याप्तिः प्राप्तिसाधनं तथा सर्व्वस्य जेतव्यस्य जितिर्जयसाधनं तस्मादनेन यो यजते स सर्व्वमेतेन फलमाप्नोतीति सर्व्वं च जेतव्यं जयति ॥ १ ॥

अथास्य सहस्रदक्षिणात्ववेदनं स्तौति।

परमो वा एष यज्ञः परमꣳ सहस्रं परमतां गच्छति य एवं वेद ॥ २ ॥

एष सर्व्वज्योतिर्नाम यज्ञः परमोवै सर्व्वेभ्य उत्कृष्टः सर्व्वज्योतिरिति संज्ञया सकलतेजोमयत्वात् यदस्य दक्षिणारूपं सहस्रं

तदपि परमं शतादिसंख्याया आधिक्यात् एवं सहस्रदक्षिणस्य परमत्वं यो वेद परमतां श्रेष्ठतां गच्छति ॥ २ ॥

अथास्य स्तोत्रीयाः संहृत्यानूद्य सहस्रदक्षिणात्वमित्याह ।

**तस्य द्विशताः स्तोत्रीया अन्तो वै वाचो द्विशतमन्तः सहस्रमन्त एव तदन्तं प्रतिष्ठापयति ॥ ३ ॥**

पूर्ववदत्रापि स्तोमक्लृप्तिः कल्पकारकृता प्रदर्श्यते तस्य त्रिवृत्बहिष्पवमानं पञ्चदशान्याज्यानि सप्तदशो माध्यन्दिनः पवमानस्तोत्राणि च पृष्ठानि पञ्चविंशं ब्राह्मणाच्छंसिनः सप्तदश आर्भव एकविंशोऽग्निष्टोम इति एवञ्च प्रातःसवने एकोनसप्ततिः ६९ स्तोत्रीयाः माध्यन्दिने त्रिनवतिः ९३ तृतीयसवनेऽष्टत्रिंशत् ३८ मिलित्वा द्विशतं स्तोत्रीया भवन्ति २०० तदिदमुक्तं तस्य द्विशता इति तस्य सर्वज्योतिर्नाम्नः द्विशता शतद्वयपरिमिताः स्तोत्रीया ऋचो भवन्ति वाचः शब्दस्य द्विशतसंख्यान्तो वै अवसानभूतं सहस्रसंख्या चान्तः तस्मात् न्यूनसंख्यानां अवसानभूतत्वात् तथाच द्विशतस्तोत्रीयात्मके क्रतौ सहस्रदक्षिणादानं कुर्वन् अन्तत एवान्तं प्रतिष्ठापयति परस्परं सम्बद्धे करोतीत्यर्थः ॥३॥

अथैतत् प्रकारान्तरेण स्तौति ।

**ऋतस्तोमो वा एष सर्वमेवैतेनाप्नोति सर्वं जयति सर्वꣳ हि ऋतेन जयति ॥ ४ ॥**

एष सर्वज्योतिर्नामैकाहः ऋतस्तोमो वै ऋतः पूर्वस्मिन्नेकाहे

क्लृप्तः स्तोमः स्तोत्रीयासमूहो यस्य स तथोक्तः निष्पन्नस्तोत्रक इत्यर्थः स्पष्टमन्यत् सर्व्वजयहेतुः सर्वं हि क्लृप्तेनेति सर्वं जेतव्यं हि यस्मात् क्लृप्तेन निष्पन्नेनैव साधनेन लोकोजयति यस्मादित्यर्थः ॥ ४ ॥

अथान्नप्राप्तिसाधनत्वेन स्तौति ।

विराजꣳ सम्पद्यतेऽन्नं विराडन्नाद्यमेवावरुन्धे ॥ ५ ॥

दशाक्षरा विराट् अस्य चैकाहस्य पूर्व्वोक्तानां स्तोत्रीयाणां दशसंख्यया विभागे विंशतिर्विराजो भवन्ति तथा चायं यज्ञो विराजं सम्पद्यते प्राप्नोति शिष्टं सिद्धं ॥ ५ ॥

अथाग्निष्टोमसाम्नः स्तोमं विधाय स्तौति ।

एकविंशोऽग्निष्टोमो भवति प्रतिष्ठा वा एकविंशोऽन्तत एव यज्ञस्य प्रतितिष्ठति ॥ ६ ॥

एकविंशस्तोमकोऽग्निष्टोमो भवति अग्निष्टोमसाम एकविंशस्तोमको भवतीत्यर्थः किमतो भवति तदुच्यते तथा प्रतिष्ठारूपो ह्येकविंशः पूर्व्वमुक्तः तथा च यज्ञस्यान्ततोऽवसान एव यजमानः प्रतिष्ठितो भवतीति ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे षोड़शाध्यायस्य

नवमः खण्डः ।

---

अथ दशमः खण्डः ।

अथ विश्वज्योतिःसंज्ञं तृतीयं साहस्रमेकाहं दर्शयति ।

**अथैष विश्वज्योतिरुक्थ्यः ॥ १ ॥**

अथानन्तरं एष वक्ष्यमाणो विश्वज्योतिर्नाम उक्थ्यः उक्थसंस्थः अन्यः साहस्र एकाहः ॥ १ ॥

अथैतस्य विश्वज्योतिरिति संज्ञां उक्थसंस्थतां च स्तौति ।

**पशवो वा उक्थानि पशवो विश्वं ज्योतिर्विश्व एव ज्योतौ पशुषु प्रतितिष्ठति ॥ २ ॥**

उक्थानुक्थस्तोत्रीयाणि पशवो वै तत्साधनत्वात् तच्छब्दवाच्याः पशवश्च विश्वं व्याप्तं ज्योतिस्तेजः बहुपशुको हि लोकेऽतिशयेन प्रकाशते तस्माद्विश्वज्योतिःसंज्ञ एकाहे उक्थस्तोत्राणि प्रणयन् विश्वव्याप्ते ज्योतौ ज्योतींष्येव पशुषु प्रतितिष्ठति ॥ २ ॥

अथैतं चिरात्वसाम्येन स्तौति ।

**अहर्भिर्वै चिरात्व इमान् लोकानाप्नोति सवनैरेष उत्तरमुत्तरं चिरात्वस्याहर्वर्षीय उत्तरमुत्तरमेतस्य सवनं वर्षीयस्तेन चिरात्वमाप्नोत्युत्तर उत्तर एषां लोकानां ज्यायांस्तेनेमान् लोकानाप्नोति ॥३॥**

योऽयं वक्ष्यमाणो गर्गत्रिरात्राख्यः सोमयागः अयमहर्भिः क्रमेणानुष्ठितैः अग्निष्टोमोक्थातिरात्रसंस्थैस्त्रिभिरहोभिरेव इमान् पृथिव्यादीन् लोकानाप्नोति एष तु विश्वज्योतिर्नाम यज्ञस्त्रिभिरेव सवनैस्तानाप्नोति तथा चास्य त्रिरात्रस्य यदुत्तर-मुत्तरमहस्तद्वर्षीयः वृद्धतरं अग्निष्टोमोक्थातिरात्रसंज्ञाना-मुत्तरोत्तरं विवृद्धस्तोमकत्वात् एतस्यैकाहस्य उत्तरमुत्तरं सवनं वर्षीयः प्रातःसवनात् माध्यन्दिनं सवनं वृद्धतरं ततोऽपि तृतीयसवनं वृद्धतरं एतच्चाग्रे दर्शयिष्यते तथाच एष यस्त्रिरात्रं यज्ञक्रतुमाप्नोति तद्वत्प्रशस्तो भवतीत्यर्थः अपिच एषां पृथि-व्यादिलोकानां मध्ये उत्तरउत्तरो लोकोज्यायन् वृद्धतरोऽति-शयेन विस्तीर्णः तेनोत्तराधिकसवनेन यज्ञेन इमानेव लोका-नाप्नोति ॥ ३ ॥

अथास्य सवनानामुत्तरोत्तराधिक्यं दर्शयितुमाह ।

**अस्थूरिर्वा एष सन्ततो यज्ञो द्वौ द्वौ हि स्तोमौ सवनं वहतः ॥ ४ ॥**

अस्थूरिरश्वद्वन्द्वयुक्तो यो रथस्तत्सदृश एष सन्ततः संहितो यज्ञः कुतः हि यस्मात् द्वौ द्वौ स्तोमौ संहत्य अस्यैकैकं सवनं वहतः ॥ ४ ॥

कतमौ च द्वौ द्वौ स्तोमाविति तत्राह ।

**त्रिवृत्पञ्चदशौ प्रातःसवनꣳ सप्तदशपञ्चविꣳशौ**

माध्यन्दिनꣳ सवनञ्चतुर्विꣳशैकविꣳशौ तृतीयसवनं ॥ ५ ॥

त्रिवृद्बहिष्पवमानस्य स्तोमः पञ्चदश आज्यानां एवमेतौ संहतौ प्रातःसवनं वहतः एवमुत्तरौ द्वौ द्वावपि द्वे सवने वहतः ॥ ५ ॥

अथैतत् स्तोमद्वययोजनं प्रशंसन् पूर्ववत्सहस्रं देयमित्याह ।

यद्वै युक्ते सन्तत आधीयते वहति तद्यथा युक्ते सन्तत आदध्यादेवमेतस्मिन् सहस्रमाधीयते ॥ ६ ॥

यद्वै यत् खलु द्रव्यं युक्ते अश्वाभ्यां योजिते सन्तते सम्बद्धे रथे आधीयते आरोप्य निधीयते स रथस्तद्द्रव्यं वहति यथैव युक्ते सन्तते च रथे आदध्यात् वोढव्यं भारं निदध्यात् एवमेवैतस्मिन्नेकाहे प्रतिसवनं स्तोमद्वयेन युक्ते दक्षिणानां गवां सहस्रमाधीयते आरोप्यते अस्यापि यज्ञस्य पूर्ववत् सहस्रं दक्षिणा दातव्या इत्यर्थः ॥ ६ ॥

चोदकेन प्राप्तयोर्बृहद्रथन्तरयोः प्रकृतिवद्विकल्पे प्राप्ते समुच्चयं विधत्ते ।

उभे बृहद्रथन्तरे भवतः ॥ ७ ॥

रथन्तरम्माध्यन्दिने पवमाने कार्य्यं बृहद्धोतुः पृष्ठइति उभयं चानयोः पूर्व्वमुक्तं ॥ ७ ॥

अथैतत् स्तौति ।

इयं वै रथन्तरं द्यौर्बृहदेवास्माच्चामुष्माच्चोभयोरनयोर्लोकयोः प्रतितिष्ठति ॥ ८ ॥

इयं पृथिव्येव रथन्तरं साम द्यौः स्वर्गोलोको बृहत् एव आद् इव अस्मादेव भूर्लोकाद्रथन्तरं गायति अमुष्मात् द्युलोकाद् बृहद्गायति तथा चानयोरुभयोर्द्यावापृथिव्योर्लोकयोर्यजमानः प्रतितिष्ठति ॥ ८ ॥

अथान्यत्साम विधत्ते ।

अनुष्टुभ्याथर्वणं भवति ॥ ९ ॥

आर्भवे पवमाने पुरोजिती वो अन्धस इत्यस्मिन्नानुष्टुभे तृचे श्यावाश्वान्धीगवे गीत्वा तस्मिन्नेव तृचे पुनराथर्वणं साम गातव्यं तथा च कल्पकृतोक्तं यस्तेमदो वरेण्य इति गायत्रमौक्ष आन्धीगवादुत्तरमाथर्वणं इति ॥ ९ ॥

अथैतत् स्तौति ।

भेषजं वै देवानामथर्वाणो भेषज्यायैवारिष्ट्यै ॥१०

अथर्वाणः अथर्वणा ऋषिणा दृष्टा मन्त्राः देवानां भेषजं वै भैषज्यरूपास्तस्मादेतत्साम भेषजाय भैषज्याय अरिष्ट्यै अहिंसायै भवति ॥ १० ॥

अथोक्थस्तोत्रेष्वन्तिमेऽन्यत्साम विधाय स्तौति ।

उद्वंशीयमुक्थानामन्ततो भवति सर्वेषां वा एतत् पृष्ठानां रूपं सर्वेष्वेव रूपेषु प्रतितिष्ठति ॥ ११ ॥

उक्थानामुक्थस्तोत्राणामन्ततोऽवसाने अच्छावाकोक्थस्तोत्रे उद्वंशीयं साम भवति यथोक्तं कल्पकारेण साकमश्वं सौभरं नैककुभश्चोद्वंशीयमित्युक्थानीति साकमश्वं होतुरुक्थं सौभरनैककुभयोरन्यतरद् ब्रह्मण: उद्वंशीयमच्छावाकस्येति कल्पार्थ: एतदुद्वंशीयं सर्व्वेषां रथन्तरादीनां पशां पृष्ठानां रूपं एतच्चाष्टमेऽध्याये प्रपञ्चेन दर्शितं स्पष्टमन्यत् ॥ ११ ॥

अथास्य पूर्व्वोक्तामुक्थसंस्थामनूद्य स्तौति ।

उक्थो भवति पशवो वा उक्थानि पशव: सहस्रं पशुष्वेव तत्सहस्रन्दधाति ॥ १२ ॥

अयमुक्थसंस्थो भवति उक्थस्तोत्राणि पशुसाधनत्वात् पश्वात्मकानि सहस्रसंख्यादक्षिणाश्च पशवस्तेन पशुष्वेव पशून् दधाति स्थापयति ॥ १२ ॥

इति ताण्ड्यमहाब्राह्मणे षोडशाध्यायस्य
दशम: खण्ड: ।

---

अथ एकादश: खण्ड: ।

अथाग्निष्टोमसंस्थं चतुर्थं साहस्राख्यं एकाहं विधित्सुराह ।

यो वा अग्निष्टोमे त्रिरात्रं प्रोतं विद्यात्सोऽग्निष्टोमे सहस्रं दद्यात् त्रिरात्रायतनꣳ हि सहस्रं ॥१॥

यो ह्यग्निष्टोमे अग्निष्टोमसंस्थे एकाहे त्रिरात्रं वक्ष्यमाणं गर्गत्रिरात्राख्यंयज्ञं प्रोतं प्रतिमुक्तं विद्यात् जानीयात् सोऽग्नि-न्नग्निष्टोमे सहस्रं दक्षिणा दद्यात् त्रिरात्रायतनं त्रिरात्र एव आयतनमिति स्थानं यस्य तथाविधं हि सहस्रं सहस्रदक्षिणा-दानं तस्मादस्यैकाहस्य त्रिरात्रसम्बन्धं विदुषा सहस्रगावो दक्षिणात्वेन दातव्या इत्यर्थः एवञ्चाग्निष्टोमसंस्थेन सहस्र-दक्षिणेन यजेतेति विधिरुन्नेतव्यः ॥ १ ॥

अथास्मिंस्त्रिरात्रस्य प्रोतत्वं दर्शयितुं तदीयानां त्र्याणा-मह्नां याः प्रतिपदस्तासामन्यतमास्य प्रतिपत्कार्य्येत्याह ।

उपास्मै गायतानर उपोषु जातमप्तुरं पवस्व वाचो अग्रिय इति प्रतिपदो भवन्त्येतद्वै त्रिरात्र-मकः ॥ २ ॥

उपास्मै गायतानर इत्यादितृचानां मध्ये अन्यतमस्तृचोऽस्मि-न्नहनि बहिष्पवमानस्य प्रथमस्तृचः कार्य्यः एतत् वै एतद्धि प्रति-पत्त्रयं त्रिरात्रं गर्गत्रिरात्रं अकः अकार्षीत् तदीयेषु त्र्यहःसु एतेषां बहिष्पवमानस्य क्रमेण प्रथमतृचत्वात् तस्मादेतायेषाम-न्यतमः प्रथमस्तृचः अपरौ तृचौ दविद्युतत्यारुचा पवमानस्य ते कव इति कल्पकारोक्तौ द्रष्टव्यौ ॥ २ ॥

अथ त्रिरात्रसम्बन्धित्र्यहःसु यानि पृष्ठसामानि तान्यप्यत्र क्रियन्त इत्याह ।

पवमाने रथन्तरं करोति पवमानस्यान्त्यं वाम-देव्यं बृहत् पृष्ठं ॥ ३ ॥

अत्र कल्पः उच्चाते जातमन्धस इति गायत्रञ्चामहीयवञ्च पवस्व मधुमत्तम इतीडानां संक्षार एकस्यां प्रत्नं पीयूषं पूर्व्यं यदुक्थ्यमिति यौधाजयं तिसृषु पुनानः सोमधारयेति रौरव-मेकस्यां रथन्तरं तिसृषु शिशुञ्जज्ञानं हर्य्यतम्मृतीति वामदेव्य-मन्त्यं बृहत् पृष्ठमिति तस्मादेवं क्लृप्तान् माध्यन्दिने पवमाने पुनानः स सेति तृचे रथन्तरं साम बृहत्साम होतुः पृष्ठं स्तोत्रं गातव्यं तथा शिशुञ्जज्ञानमित्यस्मिंस्तृचे गीयमानं वामदेव्यं तस्य पवमानस्यान्त्यं साम भवति तथा बृहत्साम होतुः पृष्ठं भवति ॥ ३ ॥

अथैतेषां सङ्घातकरणं स्तौति ।

इयं वै रथन्तरमन्तरिक्षं वामदेव्यं द्यौर्बृहदिमे लोकास्त्रिरात्रो यदेतानि सामानि सध्रञ्चि करोती-मानेव तल्लोकान् सन्दधाति तेन त्रिरात्रमाप्नोति ॥ ४

रथन्तरवामदेव्यबृहतां पृथिव्यन्तरिक्षस्वर्गात्मकत्वं प्रागुक्तं त्रिरात्रश्चेमे पृथिव्यादयो लोकाः वसुरुद्रादित्यैस्त्रिरात्रावयवा-नामग्निष्टोमोक्थ्यातिरात्राणां त्रयाणामह्नां पृथिव्यादिलोक-त्रयसाधनतया क्रमेण प्रयुक्तत्वात् तथा चाम्नास्यते एवञ्च यदे-तानि त्रिरात्रे वियुज्य प्रयुज्यमानानि रथन्तरादीनि सामानि

सभ्रश्चि सहाभ्वतीति तत्तथा अस्मिन्नहनि सह प्रयुक्तानि करो-
ति तत्तेनेमानेव पृथिव्यादिलोकान् सन्दधाति परस्परं संयोज-
यति तथा लोकद्वारा तिरात्रं यज्ञक्रतुमाप्नोति ॥ ४ ॥

अथ सर्वप्रकृतौ ज्योतिष्टोमे तृतीयसवने पवस्व मधुमत्तम
इति यः काकुभः प्रगाथः सोऽत्रापि चोदकेन तृतीयसवन एव
प्रयोज्यत्वेनातिदिश्यते तस्य माध्यन्दिनपवमान आकृष्य प्रयोगं
विधत्ते ।

ककुभं प्राचीमुदूहति ॥ ५ ॥

पवस्व मधुमत्तम इत्येतां ककुप्छन्दस्कां स्तोत्रीयां प्राचीं
प्राग्भागे वर्त्तमानामुदूहति आर्भवात् पूर्वभागे माध्यन्दिनपव-
माने तां प्रापयेत प्रयुञ्जीतेत्यर्थः ॥ ५ ॥

अथैतस्मात् पूर्वस्मिन् भागे आकर्षणमुपपादयति ।

पुरो ह्येतया सत्या अपशुर्वीर्य्यं करोति ॥ ६ ॥

पुरः पुरस्तात् पूर्वभागे वर्त्तमानया ह्येतया ककुभा स्तोत्री-
यया अपशुः पशुरहितः सोमयागः तदुत्पत्त्यर्थं वीर्य्यं करोति
तस्मात्तां प्राचीमुदूहेदित्यर्थः ॥ ६ ॥

अथ तत्र कर्त्तव्यभिगेयं साम विधाय स्तौति ।

तस्यामिडानाꣳ संक्षारः पुरुषो वै ककुप् पशव
इडानाꣳ संक्षार आत्मन्येव तत्पशून् प्रतिष्ठापयति
॥ ७ ॥

तस्यां ककुभि स्तोत्रीयायामिडानां संक्षाराख्यं साम गातव्यं तथैव पूर्वं कल्प उदाहृत: किमतस्तदुच्यते पुरुषो हि ककुप्छन्द: ककुप्प्राया: रूपस्य पुंस्त्वात् अस्यापि ककुप्स्थानीयेनाधिकेन मध्यमपादेन युक्तत्वेन तत्सास्यात् पुंस्त्वं योऽयमिन्द्रानां संक्षार: सएव: गोवाचकेनेडानां शब्देनाभिधेयत्वात् तत्तथा च ऋक्सामयो: पुरुषपश्वात्मकत्वात् पुरुषरूपे आत्मन्येव पशून् प्रतिष्ठापयति ॥ ७ ॥

अथास्मिन्नेव माध्यन्दिने पवमाने यौधाजयस्याधारभूतास्तिस्र: स्तोत्रीया विदधाति ।

प्रत्नम्पीयूषम् पूर्व्यं यदुक्थ्यमिति सतोबृहत्यो भवन्ति ॥ ८ ॥

स्पष्टोऽर्थ: ॥ ८ ॥

अथैता: स्तौति ।

सतोबृहत्या वै देवा इमान् लोकान् व्याप्नुवन्निमानेवैताभिर्ल्लोकान् व्याप्नोति ॥ ९ ॥

सतोबृहत्या बृहतीछन्दस्कया खलु पुरा देवा: इमान् पृथिव्यादिलोकान् व्याप्नुवन् स्पष्टमन्यत् ॥ ९ ॥

अथैतासां गायत्र्यादिसर्व्वछन्दोरूपत्वं प्रदर्शयन् सर्व्वपशुसाधनतामाह ।

ता वा एता गायत्र्यो यत्त्रिपदास्तेन गायत्र्य-

स्तावा एता जगत्यो यद्द्वादशाक्षराणि पदानि तेन जगत्यस्तावा एता बृहत्यो यत् षट्त्रिंशदक्षरास्तेन बृहत्यः सर्वेषां वा एताश्छन्दसाꣳ रूपꣳ सर्वाणि रूपाणि पशूनामवरुन्धे ॥ १० ॥

ता वा एताः प्रत्नं पीयूषमित्याद्याः गायत्र्यो भवन्ति कथं सतोबृहतीनां गायत्रीत्वमिति अत्रोच्यते यद्यस्मात् एतास्त्रि-पदास्तेन गायत्रीसाम्यात् गायत्र्यस्तथा ता एता जगत्यो भवन्ति एतदुपपद्यते यत् द्वादशाक्षराणि पदानीति पादाः प्रथमपादस्य अक्षरव्यूहेन द्वादशाक्षरत्वं एवं बृहतीत्वमपि योज्यं यस्मादेव-मेताः सर्वेषां गायत्र्यादीनां छन्दसां रूपं तस्मादेताभिः सर्वाणि पशूनां रूपाण्यवरुन्धे नानारूपान् सर्वान् पशून् लभत इत्यर्थः॥१०

अथैतं यज्ञम्महाव्रतात्मना रूपयन् स्तौति ।

एतद्वै प्रत्यक्षं महाव्रतन्तस्य गायत्रꣳ शिरो बृह-द्रथन्तरे पक्षौ वामदेव्यमात्मा यज्ञायज्ञीयं पुच्छन्द-क्षिणा एवार्क्यमेष वाव प्रत्यक्षम्महाव्रतेन स्तुते य एतेन यजते ॥ ११ ॥

एष खलु वै यज्ञः प्रत्यक्षं मुख्यं महाव्रतं यद्येवं शिरः-पक्षादिभिरवयवैर्भवितव्यं महाव्रतस्तोत्रस्य शिरःप्रभृति पक्षाव-यवात्मकत्वात् अत्र कथं तेषां सद्भाव इति तत्राह तस्येति तस्य प्रकृतस्य साहस्रस्य महाव्रतस्य सतः यद्गायत्रं साम प्रातःसव-

नादौ प्रयुज्यते तच्छिरः पश्चात् माध्यन्दिनपवमाने बृहत् स्तोत्रे च प्रयुज्यमाने बृहद्रथन्तरे पक्षौ भवतः माध्यन्दिनपवमानान्ते प्रयुज्यमानं वामदेव्यं आत्मा मध्यदेहः अग्निष्टोमसामत्वेन प्रयुज्यमानं यज्ञायज्ञीयं पुच्छं याः सहस्रसंख्याका दक्षिणास्ता एवार्कस्य महाव्रतस्तोत्रानुशंसनं बृहती सहस्राख्यं शस्त्रं तस्मादेतेनैवंगुणविशिष्टेन एकाहेन यो यजते एष एव प्रत्यक्षं साक्षान्महाव्रतेन महाव्रतस्तोत्रेण स्तुते स्तौति उक्तसामपञ्चकात्मकत्वात्तस्य ॥ ११ ॥

अथ आयन्तीयं ब्रह्मसाम विधित्सुः पक्षान्तरमुपन्यस्य तत्र दोषमुद्भावयति ।

तस्य बृहत्पृष्ठं पङ्क्तिषु ब्रह्मसाम तदाहुश्छन्दोव्याधीयते यद्बृहत्पृष्ठम्भवति पङ्क्तिषु ब्रह्मसामेति ॥ १२ ॥

अस्मिन्नहनि बृहत्साम होतुः पृष्ठमित्युक्तं तस्यायमनुवादः पङ्क्तिषु स्यादोरिक्था विषूवत इत्याद्यासु यत् प्रथमे सहस्र एकाहे ब्रह्मसाम विहितं तत् पङ्क्तिषु तदेव ब्रह्मणः पृष्ठस्तोत्रं तत्र एवं क्रियमाणे सामद्वये आहुर्ब्रह्मवादिनस्तोदर्षान्त कथमिति यद्यदि बृहत् बृहत्साम बृहतीषु गीयमानं पृष्ठस्तोत्रं भवति पङ्क्तिषु गीयमानं ब्रह्मसाम भवति तदा छन्दो व्याधीयते स्पष्टं विभिद्यते तच्चायुक्तमिति ॥ १२ ॥

किं तर्हि कार्य्यं तदाह।

आयन्तीयमेव कार्य्यन्न छन्दो व्याधीते ॥ १३ ॥

आयन्तीयमेव स्यात्तु ब्रह्मसाम कार्य्यं तथा च बृहती ब्रह्मसाम्नस्य बार्हते तृचे गानात् न छन्दोव्याधीयते भिद्यते ॥ १३ ॥

नन्वेवं पङ्क्तीर्विहाय बृहत्यां ब्रह्मसाम्नि क्रियमाणे सहस्राक्षरसम्पत्तेरभावात् पूर्वोक्तसहस्रप्रतिष्टुतिर्न स्यादित्यत आह।

एषो सहस्रस्य प्रतिष्टुतिः ॥ १४ ॥

एषो एषैव आयन्तीयस्य स्यात्तु स्तोत्रीयासु गानमेव सहस्रस्य दक्षिणारूपस्य गवां सहस्रस्य प्रतिष्टुतिः प्रतिस्तवनं ॥ १४

ननूक्तं ब्रह्मसाम्नोऽक्षराणां सहस्रसंख्यापूर्त्यभावात् प्रतिष्टुतिर्न स्यादिति तत्राह।

सहस्रमन्यमभितिष्ठतीत्याहुः सहस्रमन्योऽन्वातिष्ठतीति ॥ १५ ॥

सहस्रस्वयं अन्यं यज्ञमभितिष्ठति तत्रत्यब्रह्मसाम्नोऽक्षरसङ्ख्यया तमधितिष्ठते अन्यस्तु यागः सहस्रमन्वातिष्ठतीति हीने अनोः कर्म्मप्रवचनीयत्वं सहस्रसंख्यातो न्यूनया ब्रह्मसाम्नोऽक्षरसंख्ययैव स्वयं सहस्रमधितिष्ठतीति ब्रह्मवादिन आहुः एवमुभयथापि सहस्रसम्बन्धसम्भवात् सहस्रस्य प्रतिष्टुतिः सिद्ध्यतीत्यर्थः ॥ १५ ॥

कथमयं यज्ञः सहस्रमन्वातिष्ठतीति तत्राह ।

**ककुभं प्राचीमुदूहत्यथ यदेषा द्विपदा ककुभो-लोके क्रियते सहस्रस्यैव सोऽन्वाख्यायः॥ १६॥**

आर्भवपवमाने स्थितां पवस्व मधुमत्तम इत्येतां ककुभं प्राचीमुदूहति प्राग्देशस्थमाध्यन्दिनपवमानलक्षणं नयति अथानन्तरं तस्याः ककुभो लोके स्थाने यत्तारिप्रधन्नेत्येषा द्विपदा क्रियते प्रयुज्यते स च सहस्रस्यान्वाख्यानं ॥ १६ ॥

अथ स्तोत्रियासङ्घातं संहृत्य स्तौति ।

**अनुष्टुभꣳ सम्पद्यते वागनुष्टुब्वाक् विराट्स्तेन विराजमाप्नोति॥ १७॥**

अयमेकाहः संस्तुतोऽनुष्टुभं अनुष्टुप्छन्दः सम्पद्यते अत्र कल्पः त्रिवृद् बहिष्पवमानं पञ्चदशानि त्रीण्याज्यानि त्रिष्टन्मैत्रावरुणस्य सप्तदशो माध्यन्दिनः पवमानो होतुश्च पृष्ठं पञ्चदशं मैत्रावरुणस्य पञ्चविंशं ब्राह्मणाच्छंसिनः सप्तदशमच्छावाकस्य सप्तदश आर्भव एकविंशोऽग्निष्टोम इति एवञ्च स्तोमक्लृप्तौ सत्यां प्रातः-सवने त्रिषष्टि स्तोत्रीया भवन्ति ६३ माध्यन्दिने त्वेकनवतिः ९१ तृतीयसवनेऽष्टत्रिंशत् ३८ मिलित्वा द्व्यधिकनवतिशतं स्तोत्रीया भवन्ति १९२ द्वात्रिंशदक्षराऽनुष्टुप् तथाच द्वात्रिंशत्संख्यया विभज्यमाना षडनुष्टुभो भवन्ति एवमनुष्टुभं सम्पद्यते अयं यज्ञः प्राप्नोति अनुष्टुप् खलु वाक्संस्तुता विराडपि वाक्संस्तुतः

तेनानुष्टुभा वाचा च त्रिरात्रं गर्गत्रिरात्राख्यं यज्ञक्रतुमाप्नोति तत् फलं प्राप्नोतीत्यर्थः ॥ १७ ॥

इति ताण्ड्यमहाब्राह्मणे षोड़शाध्यायस्य
एकादशः खण्डः।

---

अथ द्वादशः खण्डः।

अथ साद्यःक्रानाम पञ्चैकाहाख्येषु प्रथमद्वितीययोर्दीक्षा-प्रभृत्यवभृथान्तं सर्वमेकस्मिन्नेवाहन्यनुष्ठेयं तृतीयस्य तु एकस्मिन् दिवसे दीक्षा परस्मिन् दिवसे सोमक्रयाद्यवभृथान्तं चतुर्थपञ्च-मयोरप्येवं यद्वा एका दीक्षा सोमक्रयप्रभृतिउपवसथान्तं द्विती-येऽहनि सुत्येति एवं सूत्रकारमतं पञ्चस्वपि साद्यःक्रान्वयात् सद्यएव एकस्मिन्नेवाहनि दीक्षाद्यवभृथान्तं कर्त्तव्यमिति मता-न्तरं एतत्सर्वं साद्यःक्रेण वक्ष्यमाणे महारात्रे प्रातरान्हुतिं हुत्वेत्यादिना सूत्रकारेण विस्पष्टमुक्तं तत्र प्रथमस्य यदुक्तं सर्वं सद्योऽनुष्ठेयमिति तद्विधित्सुराह।

आदित्याश्चाङ्गिरसश्चादोऽक्षन्त ते स्वर्गे लोके-ऽस्पर्द्धन्त तेऽङ्गिरस आदित्येभ्यः श्वः सुत्यां प्राब्रुवꣳस्त आदित्या एतमपश्यꣳस्तꣳ सद्यः परिक्रीयायास्य-मुद्गातारं वृत्वा तेन स्तुत्वा स्वर्गं लोकमायन्नहीय-न्ताङ्गिरसः ॥ १ ॥

पुरा आदित्याश्चाङ्गिरसश्च अदीक्षन्त यज्ञाय दीक्षां कृतवन्तः ते उभे स्वर्गे लोके स्वर्गलोकनिमित्तमस्पर्द्धन्त वयं प्रथमं गमिष्यामो वयं प्रथमं गमिष्याम इति स्पर्द्धां कृतवन्तः एवं स्पर्द्धमानास्तेऽङ्गिरस आदित्येभ्यः सुत्यां श्वः परश्मिन्दीक्षानन्तरदिने करिष्यमाणां सोमयागं प्राब्रुवन् प्रोक्तवन्तः अथ ते आदित्या एवं वचःसामायज्ञमपश्यन् तं यज्ञं सद्यः एकस्मिन्नेवाहनि परिक्रीय सोमं क्रीत्वा अयास्यमुपिसुद्गातारं हत्वा त्वमुद्गाता भवेत्युद्गातृत्वेन हत्वा तेनायास्येन सर्वैः स्तोत्रैः स्तुत्वा स्तावयित्वा समापयन् दीक्षाद्यवभृथान्तं सर्वं कर्म्म एकस्मिन्नेवाहनि अन्वतिष्ठन्नित्यर्थः यज्ञसमाप्त्यनन्तरमेव ते स्वर्गं लोकमायन् प्राप्नुवन् अङ्गिरसस्त्वहीयन्त दीक्षानन्तरदिवसे सुत्येति तैरुक्तत्वात् एतस्मिन् दिने दीक्षाद्यवभृथान्तस्य सर्वस्यानुष्ठानेन स्वर्गप्राप्त्यभावात् सह दीक्षितैरादित्यैः सद्योऽनुष्ठानेन स्वर्गगतेः हीनाः-भूमावेव परित्यक्ताः आसन्॥ १॥

एवं सद्योऽनुष्ठेये यज्ञेऽधिकारिणमाह।

भ्रातृव्यवान्यजेत॥ २॥

भ्रातृव्यः शत्रुस्तद्वमेन यागेन यजेत शत्रुक्षयहेतुरयं यागइत्यर्थः॥ २॥

अथैतद्वेदितुः फलमाह।

भवत्यात्मना परास्य भ्रातृव्यो भवति यएवं वेद॥ ३

यएवं ब्राह्मणार्थञ्जानाति स आत्मना स्वयमेव भवति भवनशीलः सम्बद्धो भवति अस्य यो भ्रातृव्यः शत्रुः स परा भवति पराभूतः तिरस्कृतो भवति ॥ ३ ॥

अथास्मिन् यागे दक्षिणां विधित्सुराह।

**तस्मा अमुमादित्यमश्वꣳ श्वेतं कृत्वा दक्षिणा-मानयꣳस्तं प्रतिगृह्य व्यभ्रꣳशत स एतान्यायास्या-न्यपश्यत्तैरात्मानꣳ समश्रीणात् ॥ ४ ॥**

तस्मै अयास्यायोद्गात्रे अमुं दृश्यमानमादित्यं श्वेतं शुक्ल-वर्णमश्वं कृत्वा दक्षिणामानयन् क्रतुदक्षिणात्वेन प्रायच्छन् तमश्वं प्रतिगृह्य सोऽयास्यो व्यभ्रंशत विभ्रष्टवीर्य्योऽभूत् स ऋषिः एतानि इदानीं समाम्नायमानान्यायास्यानि सामान्यपश्यत् तैः दृष्टैः सामभिरात्मानं समश्रीणात् वीर्य्येण समयोजयत् तस्मात् श्वेताश्वोऽस्य क्रतोर्दक्षिणा सचोद्गातुर्दोतव्यः इतरे-ऽप्यृत्विजो यथा सन्तोषमायान्ति तथा तेभ्यो यत्किञ्चित् धनं दद्यादिति विधिरुन्नेतव्यः तदेतत् सूत्रकृतोक्तं अश्वः श्वेत एतस्य दक्षिणामुद्गात्रे दद्यात् किञ्चिच्चेतरेभ्य इति ॥ ४ ॥

यस्मादेवं तस्मादिदानीमप्यस्मिन् यज्ञे आयास्यं साम प्रयो-क्तव्यमित्याह।

**यदायास्यानि भवन्ति भेषजायैव शान्त्यै ॥ ५ ॥**

यदेतेषु साद्यःक्रोश्वेतान्यायास्यानि सामानि भवन्ति तच्च-

पजायैव अश्वप्रतिग्रहजनितस्य दोषस्य चिकित्साया एव शान्त्यै उपशमाय च भवति तथा चास्मिन् यज्ञे माध्यन्दिनसवने दक्षिणारूपाश्वप्रतिग्रहजन्यदोषनिर्हरणाय आर्भवे पवमाने इन्द्रमच्छेत्यस्यां स्तोत्रीयायां आयास्यं साम कार्यं तथा चास्याङ्गः स्तोमस्तोत्रीयाविधाने कल्पकारेणोक्तं उपास्मै गायतानरः पवमानो अजीजनत् पवमानस्य ते कवे इममूषु त्वमस्माकमिति मरुत्व स्वादिष्ठया मदिष्ठयेति गायत्रञ्च स्वाशिरामर्कः पवस्वेन्द्रमच्छेति सफायास्ते पुरोजिती वो अन्धस इति श्यावाश्वान्धीगवे कावमन्त्यं यज्ञायज्ञीयमग्निष्टोमसामेति ॥ ५ ॥

अथाधिकार्यन्तरमाह।

स्वर्गकामो यजेत ॥ ६ ॥

स्पष्टोऽर्थः ॥ ६ ॥

अथैतस्य स्वर्गसाधनतामुपपादयति।

बृहतीꣳ सम्पद्यते बृहत्या वै देवाः स्वर्गं लोकमायन् स्वर्गमेवैतेन लोकमाप्नोति ॥ ७ ॥

अस्य यज्ञस्याग्निष्टोमसंस्थत्वात् द्वादशस्तोत्राणि तेषु सर्व्वेषु त्रिवृदेव स्तोमः तथाच प्रतिस्तोत्रं नवस्तोत्रीया इति मिलित्वा अष्टोत्तरशतं स्तोत्रीया भवन्ति १०८ षट्त्रिंशदक्षरा च बृहती तत्संख्यया विभज्यमानास्तास्तिस्रो बृहत्यो भवन्ति एवञ्च अयामेकां बृहतीं सम्पद्यते बृहत्या बृहतीच्छन्दसा साधनेन देवाः

पुरा स्वर्गं लोकमायन्नगच्छन् अतो बृहतीसम्पन्नेनैतेन स्वर्गमेव लोकमाप्नोति ॥ ७ ॥

अथान्यमधिकारिणमाह ।

**पशुकामो यजेत ॥ ८ ॥**

स्पष्टोऽर्थः ॥ ८ ॥

तथैव तस्य पशुसाधनत्वमुपपादयति ।

**पशवो वै बृहती पशुष्वेव प्रतितिष्ठति ॥ ९ ॥**

छन्दांसि पशुर्वाजिमजयंस्तान् बृहत्यजयत् तस्माद्बार्हताः पशव उच्यन्ते इति ब्राह्मणान्तरात् बृहत्याः पशुरूपत्वं अतः पशुरूपान्वयात् बृहत्या सम्पत्तेः पशुष्वेव यजमानः प्रतितिष्ठतीति ॥ ९ ॥

इति ताण्ड्यमहाब्राह्मणे षोडशाध्यायस्य
द्वादशः खण्डः ।

---

अथ त्रयोदशः खण्डः ।

अथ द्वितीयं साद्यःक्रमेकाहं दर्शयति ।

**एतस्यैवैकविंशमग्निष्टोमसाम कृत्वामयाविनं याजयेत् ॥ १ ॥**

एतस्यैव पूर्व्वोक्तस्य यज्ञस्याग्निष्टोमसाम एकविंशं एकविंशस्तोमकं कृत्वा एतेनामयाविनं रोगिणं यजमानं याजयेत् यथा दर्शपौर्णमासयोर्गुणविकृता राकायज्ञादयः यथा वा अग्निष्टोमस्य गुणविकृता उक्थादयः एवं अयं द्वितीयः साद्यःक्रः पूर्व्वोक्तएव गुणविकृतः ॥ १ ॥

अथास्य व्याधिनिर्हरणहेतुतामाह ।

प्राणो वै त्रिवृदात्मा आदित्यः प्राणैरेष व्यृध्यते य आमयावी प्राणैरेवैनꣳ समर्द्धयति ॥ २ ॥

अस्मिन् हि यागे बहिष्पवमानादौ प्रथमं त्रिवृत्स्तोमः प्रयुज्यते स च प्राणसंस्तुतः प्राणश्चादित्यः स हि सर्व्वेषां भूतानां प्राणनहेतुः योऽसौ तपन्नुदेति स सर्व्वेषां भूतानां प्राणानादायोदेतीति श्रुतेः य आमयावी व्याधिग्रस्तः एष प्राणैः व्यृध्यते वियुज्यते एवञ्च प्राणसंस्तुतस्त्रिवृत्स्तोमकेन तेनैनं आमयाविनं पुनः प्राणैरेव समर्द्धयति ॥ २ ॥

अथ प्रकारान्तरेण आमयाव्यधिकारमुपपादयति ।

विराजꣳ सम्पद्यतेऽप वा एतस्मादन्नाद्यं क्रामति यश्चामयाव्यन्नं विराडन्नाद्यमेवास्मिन् दधाति ॥ ३ ॥

अयं द्वितीयः साद्यःक्रो विराजं छन्दः सम्पद्यते अस्य हि अग्निष्टोमसामव्यतिरिक्तान्येकादशत्रिवृन्ति स्तोत्राणि तेषु नवनवतिस्तोत्रीया भवन्ति एकविंशस्तोमकमग्निष्टोमसामेति विंश-

त्रिंशतं स्तोत्रीया भवन्ति दशाक्षरा विराडिति दशसङ्ख्यया विभागे सति विराट्सम्पत्तिः य आमयावी रोगी एतस्मात् अन्नाद्यं अन्नस्यादनमपक्रामति अपगच्छति स्पष्टमन्यत् ॥ ३ ॥

अथाग्निष्टोमसाम्न एकविंशतिस्तोमतामनूद्य आमयाविनः प्रतिष्ठाहेतुतामाह ।

एकविꣳशोऽग्निष्टोमो भवत्यप्रतिष्ठितो वा एष य आमयावी प्रतिष्ठैकविꣳशः प्रत्येव तिष्ठति ॥ ४ ॥

एकविंशकमग्निष्टोमसाम भवति य आमयावी रोगी एषोऽप्रतिष्ठितः प्रतिष्ठारहितः गतमन्यत् ॥ ४ ॥

अथापरावधिकारिणावाह ।

एतेनैवान्नाद्यकामो वा प्रतिष्ठाकामो वा यजेतान्नं विराट् प्रतिष्ठैकविꣳशोऽत्त्यन्नं प्रतितिष्ठति ॥ ५

अन्नाद्यमदनीयमन्नं कामयमानो वा प्रतिष्ठाकामो वा एतेनैव साद्यःक्रेण यजेत अयं हि विराट्सम्पन्न इत्युक्तं सा च विराट् अन्नं अन्नात्मिका अतोऽन्नाद्यकामोऽन्नमत्ति अत्तुं योग्यो भवति अग्निष्टोमसाम्नः एकविंशस्तोमकत्वात् प्रतिष्ठाकामोऽपि प्रतितिष्ठति अथैतस्य स्तोमकॢप्तिः कल्पकारोक्ता प्रदर्श्यते तस्यैकविंशमग्निष्टोमसामोभौ त्रिवृताविति उभौ प्रथमद्वितीयावेतौ साद्यःक्रौ त्रिवृत्स्तोमकौ द्वितीये त्वग्निष्टोमसामैकविंशस्तोमकमिति तस्यार्थः अथ साद्यःक्राणां साधारणधर्मविधास्यन्ते यद्य-

प्येते प्रथमसाद्यःक्रानन्तरमेव वक्तव्याः तथापि तस्यैवायं द्वितीयः साद्यःक्रो गुणविकार इत्यभिप्रेत्य विकारसहितस्य तस्यानन्तरं धर्म्माणां प्रतिपादनं तथाच सूत्रकारेणोक्तं उर्व्वरावेदिरिति प्रथम इति अयमर्थः उर्व्वरावेदिरित्याद्यङ्गजातं वक्ष्यमाणं प्रथमेऽपि साद्यःक्रे द्रष्टव्यं न केवलमस्मिन्नेवेति ततो यन्नवनीतमुदियात्तदाज्येऽपि कार्य्यं सद्यस्त्वायेति आम्नायमानत्वात् साद्यःक्रतैव धर्म्मान्वयहेतुः नान्यत् साद्यःक्रता च प्रथमादीनां सर्व्वेषां समानेति सर्व्वत्र वक्ष्यमाणा धर्म्माः कर्त्तव्या इति ॥ ५ ॥

तत्र वेदिं विधाय स्तौति।

## उर्व्वरा वेदिर्भवत्येतद्वा अस्या वीर्य्यवत्तमं वीर्य्येणैव यज्ञꣳ समर्द्धयति ॥ ६ ॥

उर्व्वरा सर्व्वसस्याढ्या यवोर्वरा पक्वा स्याद्व्रीह्यूर्वरावेति सूत्रकृतोक्तत्वात् व्रीहियवयोरन्यतरेण परिपक्वेन सस्येनाढ्या भूमिर्वेदिर्भवति एतत् खलु स्थानं अस्याः पृथिव्या वीर्य्यवत्तमं अतिशयेन वीर्य्यवत् अतो वीर्य्येणैव यज्ञं समर्द्धयति समृद्धं करोति उर्व्वरां वेदिं कुर्वन् ॥ ६ ॥

अथोत्तरवेदिस्थानं विधत्ते।

## खलउत्तरवेदिरत्र हि स रसः समवैति सरसमेव यज्ञं करोति ॥ ७ ॥

तस्यामुर्वरायां परिपक्वा व्रीहियवा यस्मिन् स्थाने स्तम्बेभ्यो

विविच्यन्ते स खल उत्तरवेदिः अत हि स्थाने स प्रसिद्धः व्रीहि-
यवानां रसः समवैति समवेतो भवति धान्यसारस्यात्रावस्थानात्
तथाच सरसं रससहितमेव यज्ञं करोति ॥ ७ ॥

अथ यूपं विधत्ते।

खलेवाली यूपोभवत्येतया हि तꣳ रसमुत्क-
षन्ति ॥ ८ ॥

खले मध्ये निखाता मेढी खलेवाली स एव यूपो भवति एतया
हि खलेवाल्या तं खलसमवेतं रसं उत्कृषन्ति उद्गमयन्ति अयं
वाक्यशेषो खलेवालीमेढीत्यस्मिन् पक्षे न सङ्गच्छत इत्यभिप्रेत्यै-
तद्वाक्यमनूद्य लाङ्गलेषा यूपः स्यादिति सूत्रकृता व्याख्यातं
लाङ्गलसम्बन्धिनी ईषा दण्डो यूपः कार्य्य इति तस्य च कर्षण-
साधनत्वात् भूगतं रसं तेनोत्कृषन्ति कर्षुका इति सङ्गतिर्भ-
वति ॥ ८ ॥

अथ सोमक्रयसाधनं द्रव्यं विधत्ते।

त्रिवत्सः साण्डः सोमक्रयणः सेन्द्रत्वाय ॥ ९ ॥

ईषदपरिसमाप्तत्रिवर्षस्य त्रिवत्स इति यौगिकी संज्ञा
यद्वा यो वत्सः तिस्रोऽब्दीःऽनूद्वपेत् स तिसृणां वत्सत्वात् त्रिवत्सः
यद्वा वत्सरपदस्यान्त्यवर्णलोपः त्रिवत्सः त्रिवर्ष इत्यर्थः एतत्प्र-
त्ययं सूत्रकृतोक्तं बर्ह्कृतिवर्षस्य जानपदी त्रिवत्स इति यो वा
तिस्रो धयेत्त्रिवर्षोवैव स्यादिति स च त्रिवत्सः साण्डः समुष्कः

सोमक्रयणा: सोमक्रयसाधनं द्रव्यं ईदृशेन गवा सोमः क्रेतव्य इत्यर्थः स चाण्डसहितत्वेन वर्षणसमर्थत्वात् इन्द्रस्य च वर्षित्वात् सेन्द्रत्वाय इन्द्रसाहित्याय भवति ॥ ६ ॥

अथैतेषु साद्यःक्रेषु प्राच्यादिचतुर्द्दिगवस्थितान् सहर्त्विज आनेतुं सोमप्रवाकानां गमनं विधत्ते।

सर्व्वादिग्भ्योऽश्वरथाः सोमप्रवाका विधावन्ति ॥१०॥

अत्र सूत्रं प्राञ्चं होतारं वहेयुरुदञ्चमुद्गातारं प्रत्यञ्चमध्वर्य्युं दक्षिणा ब्रह्माणमिति अयमर्थः अश्वरथाः अश्वयुक्तरथसहिताः सोमप्रवाकाः सोमस्य प्रवक्तारो यजमानपुरुषाः सर्व्वाभ्यस्तो दिषः विधावन्ति वक्ष्यमाणप्रकारेण गच्छेयुः गत्वा च प्रतीच्यां दिश्यवस्थितं होतारं रथे आरोप्य तत्रत्यः सोमप्रवाकः प्राङ्मुखन्तमानयेत् एवमन्यास्वपि दिक्षु अन्ये सोमप्रवाकाः कुर्य्युः ॥ १० ॥

किमतस्तदाह।

सर्व्वाभ्य एवास्मै दिग्भ्योऽन्नाद्यमवरुन्धे ॥ ११ ॥

एवं सर्व्वासु दिक्षु विधानात् सर्व्वाभ्य एव दिग्भ्यः सकाशात् अस्मै यजमानाय अन्नाद्यमवरुन्धे प्राप्नोति ॥ ११ ॥

कस्यान्दिशि केन रथेन कियत्परिमाणं धावनमिति क्रमेण सर्व्वमाह

योजने चतुर्व्वाहिणा प्राच्यां दिशि प्राहैवमिव वा

अध्वानो विमिता यैवाध्वनोमात्रा तान्धावयन्ति त्रैपदे प्रष्ठिवाहिनोदीच्याङ्गव्यूतौ द्वियोगेन प्रतीच्यां क्रोशे स्थूरिणा दक्षिणैतद् वै दिशाꣳ रूपं यदेव दिशाꣳ रूपन्तेन यज्ञꣳ समर्द्धयन्ति ॥ १२ ॥

चतुर्व्वाहिणा चत्वारो वाहा यस्मिन् युज्यन्ते स चतुर्व्वाही तादृशेन रथेन प्राच्यान्दिशि योजने क्रोशचतुष्टयपरिमिते दूरे धावेत् अहेति प्रसिद्धौ एवमिव खल्वध्वानो मार्गाः प्रकर्षेण विमिता अतिदीर्घोऽप्यध्वा पञ्चयोजनो दशयोजनः शतयोजन इति योजनप्रमाणेनैव परिच्छिद्यत इत्यर्थः तस्माद्योजनपरिमितं दूरं गच्छेदित्यर्थः तथाच यैव खल्वध्वनोमार्गस्य मात्रा प्रमा-णन्तां धावयन्ति प्राप्नुवन्ति उदीच्यामुत्तरदिशि त्रैपदे त्रिपा-द्योजने क्रोशत्रयपरिमिते प्रष्ठिवाहिना अश्वत्रययुक्तोरथः प्रष्ठिवाही तेन रथेन धावेयुः तथा प्रतीच्यान्दिशि गव्यूतौ क्रोश-द्वयपरिमितदूरे द्वियोगेन अश्वद्वययुक्तेन रथेन च वहेयुः दक्षिणा दक्षिणदिशि क्रोशपरिमिते दूरे स्थूरिणा एकाश्वयुक्तेन रथेन वहेयुः एवं रथविशेषैः प्राच्यादिदिक्षु योजनादिदूरं गत्वा तत्रत्यानां महर्त्विजां सोमं प्रोच्य सोमप्रवाकाख्यान् रथेष्वा-रोप्य प्रागुक्तनीत्या नयेयुरित्यर्थः यदेतच्चतसृषु दिक्षु रथाध्वनो-र्विशेषप्रतिपादनं एतत् खलु तासां दिशां रूपं तथाच यद्वै दिशां रूपं तेन यज्ञं समर्द्धयन्ति समृद्धं कुर्व्वन्ति ॥ १२ ॥

अथान्यदङ्गं विधत्ते।

**सक्षीरदृतयो रथा भवन्ति ततोऽयन्नवनीतमुदियात्तदाज्येऽपि कार्य्यं सद्यस्काय ॥ १३ ॥**

ते च रथाः सक्षीरदृतयः सद्योदुग्धेन क्षीरेण पूर्णाः सक्षीराखादृतयो येषु रथेषु तथाविधा भवेयुः तदुक्तं सूत्रकारेण ततो यन्नवनीतमुदियात् फेनो वा तदाज्येऽपि सृजेयुरिति ॥१३॥

इति ताण्ड्यमहाब्राह्मणे षोड़शाध्यायस्य
त्रयोदशः खण्डः ।

---

अथ चतुर्द्दशः खण्डः ।

अथान्यं साद्यःक्रसेकाहं दर्शयति ।

**अथैषोऽङ्गिरसामनुक्रीः ॥ १ ॥**

अथानन्तरमेष वक्ष्यमाण अङ्गिरसामृषीणां सम्बन्धी अनुक्रीर्नाम साद्यःक्रः एकाहः ॥ १ ॥

अथास्मिन्नधिकारिणमाह ।

**एतेन वा अङ्गिरस आदित्यानाप्नुवन् यो हीन आनुजावरइव स्यात् स एतेन यजेताप्नोति पूर्व्वेषां प्रहामाप्नुवन् ह्येतेनाङ्गिरस आदित्यान् ॥ २ ॥**

एतेन खलु यज्ञेन अङ्गिरस ऋषयः आदित्यान् सह दीक्षित्वैकस्मिन्नेव दिने यागं समाप्य पूर्व्वमेव स्वर्गं गतान् पश्चादाप्नुवन्

अतोऽस्य यज्ञस्याङ्गिरसां सम्बन्धः तस्माद्यो यजमानः हीनो निकृष्ट आनुजावर इव अनुजादप्यवर इव स्यात् स एतेन यजेत स यजमानः पूर्व्वेषां स्वस्मादधिकानां यजमानानां ग्रहां ग्रहाणां आप्नोति पूर्व्वं ये स्वस्माद्गुणैरधिकास्तेऽपि यथा प्रहीना भवन्ति तथा स्वयमुत्कृष्टो भवतीत्यर्थः हि यस्मात् हीना अङ्गिरसः एतेन यागेन आदित्यानधिकानाप्नुवन् तत्सायुज्यमगच्छन्नित्यर्थः ॥२

अथास्य माध्यन्दिनार्भवयोः पवमानयोः स्तोमक्लृप्तिं विधत्ते।

तस्य चतुर्व्विंᳪशौ पवमानौ ॥ ३ ॥

तस्यानुक्रीसंज्ञस्य चतुर्व्विंशौ चतुर्व्विंशस्तोमकौ पवमानौ यद्यपि बहिष्पवमानस्य प्राथम्यात्तस्य माध्यन्दिनपवमानस्य च चतुर्व्विंशस्तोमविधानमिति व्याख्यानं न्याय्यं तथापि कल्पकृता चतुर्व्विंशावुत्तरौ पवमानाविति कल्पितत्वात् माध्यन्दिनार्भवयोरेतत् स्तोमविधानं ॥ ३ ॥

तदेतत् स्तौति।

चतुर्व्विंᳪशत्यक्षरा गायत्री गायत्र्या वै देवा इमान् लोकान् व्याप्नुवन्निमानेवैतेन लोकान् व्याप्नोति ॥ ४ ॥

चतुर्विंशस्तोमे चतुर्विंशतिसङ्ख्या विद्यते गायत्री चतुर्विंशत्यक्षरा गायत्र्यैव छन्दसा साधनेन देवाः पुरा इमान् पृथिव्यादिलोकान् व्याप्नुवन् तत्सांख्यसाम्यादेतेन चतुर्विंशस्तोमेन इमानेव लोकान् यजमानो व्याप्नोति ॥ ४ ॥

अथैतत्प्रकारान्तरेण स्तौति ।

तेजो ब्रह्मवर्चसङ्गायत्री तेज एव ब्रह्मवर्चसमवरुन्धे प्राणो गायत्री प्रजननं प्राणादेव गायत्र्याः प्रजायते ॥ ५ ॥

या इयं गायत्री सा तेजोरूपा ब्रह्मवर्चसरूपा च प्रजापतेर्मुखादग्निना ब्राह्मणजात्या च सहोत्पत्तेः तथाच गायत्रीसंस्तुतेन चतुर्विंशस्तोमकेन तेजश्च ब्रह्मवर्चसञ्च यजमानोऽवरुन्धे तथा प्राणरूपा गायत्री प्रजननं प्रजासाधनञ्च एवञ्च प्राणात् प्राणरूपाया एव गायत्र्याः सकाशात् प्रजायते पुत्रपौत्रादिरूपेणोत्पद्यते ॥ ५ ॥

अथास्य यज्ञस्य प्रकारान्तरेण प्रजासाधनतामाह ।

उभये स्तोमा युग्मन्तश्चायुजश्च तन्मिथुनं तस्मान्मिथुनात्प्रजायते ॥ ६ ॥

उभये उभयविधा युग्मन्तश्च युक्संख्याका अयुजश्च विषमसंख्याकाश्च स्तोमा भवन्ति अस्य च पवमानयोश्चतुर्विंशस्तोमो विहितः स च समसंख्याक एकविंशोऽग्निष्टोमसाम्नि विधास्यति स विषमसंख्याकः अन्येषु स्तोत्रेषु कल्पकारेण समानमितरत् पूर्वेण स स्तोममिति द्वितीयसाद्यःक्रस्सर्वान्विनः स्तोमस्यातिदिष्टत्वात् त्रिवृत्स्तोम एवमुभयविधा स्तोमा भवन्ति तन्मिथुनं

स्त्रीपुंसात्मकं तस्मान्मिथुनात् प्रजायते यजमानस्यापत्यपुत्र-पौत्रादिरुत्पद्यते ॥ ६ ॥

अथ स्तोत्रीयासङ्ख्यसम्पत्तिद्वारेण स्तौति।

**विराजꣳ सम्पद्यतेऽन्नं विराडन्नाद्यमेवावरुन्धे ॥७**

अस्य यज्ञस्य स्तोत्रीयासमुदायः विराजश्छन्दः सम्पद्यते अग्निष्टोमसंस्थोक्थ्यं तत्र नवानां स्तोत्राणां त्रिवृत्स्तोमकत्वात् एकाशीतिस्तोत्रीया भवन्ति ८१ द्वयोश्चतुर्विंशत्वात् अष्टाचत्वारिंशदग्निष्टोमसाम्न एकविंशतिरिति एवं पञ्चाशदधिकं शतं स्तोत्रीया भवन्ति १५० एवं दशसंख्यया विभज्यमाने विराट्सम्पत्तिः शिष्टं स्पष्टं ॥ ७ ॥

**एकविꣳशोऽग्निष्टोमो भवति प्रतिष्ठा वा एक-विꣳशोऽन्तत एव यज्ञस्य प्रतितिष्ठति ॥ ८ ॥**

एकविंशस्तोमकोऽग्निष्टोमो भवति गतमन्यत् ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे षोडशाध्यायस्य
चतुर्दशः खण्डः।

---

अथ पञ्चदशः खण्डः।

अथ चतुर्थं साद्यःक्रमेकाहं दर्शयति।

**अथैष विश्वजिच्छिल्पः ॥ १ ॥**

अथानन्तरमेष वक्ष्यमाणः विश्वजिन्नाम साद्यःक्र एकाहः स च शिल्पश्चित्वभूतः तस्य च शिल्पत्वं एकाहिकस्य विश्वजितः शिल्पत्वव्याख्यानेन पूर्वोक्तेन व्याख्यातं ॥ १ ॥

अथैतस्य वेदितुः फलमाह ।

शिल्पं वा एष स्तोमानां पश्यते गृहे शिल्पं य एवं वेद ॥ २ ॥

स्तोमानां स्तोमसाध्यानां एषः यज्ञः शिल्पं वै सर्वष्ठत्वात् सर्वस्तोमकत्वात् सर्वस्वदक्षिणत्वाच्चाश्चर्य्यभूतः य एवमस्य शिल्पं वेत्ति सः स्वकीये गृहे शिल्पं चित्रं पश्यति ॥ २ ॥

अथास्य माध्यन्दिनार्भवयोः पवमानयोः स्तोमं विधत्ते ।

तस्याष्टादशौ पवमानौ ॥ ३ ॥

तस्य साद्यःक्रस्य विश्वजितः अष्टादशावष्टादशस्तोमकौ माध्यन्दिनार्भवपवमानौ कार्य्यौ ॥ ३ ॥

अथ रथसाम्येन इमं यज्ञं स्तौति ।

चक्रीवान्वा एष यज्ञः कामाय यङ्कामङ्कामयते तमेतेनाभ्यश्नुते यत्र हि चक्रीवता कामयते तदभ्यश्नुते ॥ ४ ॥

चक्रीवान्वै चक्रयुक्तोरथ एवैष यज्ञः कामाय फलप्राप्त्यै अतो-यङ्कामङ्कामयते यजमानस्तमेतेन यज्ञेनाभिप्राप्नोति यत्र हि

यस्मिन् खलु विषये चक्रीवता रथेन पुरुषः कामयते तदश्नुते प्राप्नोति तस्माच्चक्रीवत्संस्तुतेनापि यज्ञेन फलप्राप्तिरिति ॥ ४ ॥

अथास्मिन्नधिकारिणमाह।

स्वर्गकामो यजेत ॥ ५ ॥

स्पष्टोऽर्थः। ५।

अथैतत् स्वर्गफलत्वमुपपादयति।

स्वर्गोलोकः पृष्ठानि स्वर्गमेवैतेन लोकमाप्नोति ॥ ६ ॥

स्वर्गपृष्ठोहि विश्वजित् पूर्वमनुक्रान्तः अत्रापि विश्वजिन्नाम्ना इतराङ्गवत्सर्वपृष्ठत्वमप्यतिदिश्यते तस्माद्रथन्तरादीनि षट्पृष्ठसामान्यत्र प्रयोज्यानि तानि च पृष्ठानि स्वर्गलोकः केवलैन्द्रत्वात् स्वर्गलोकात्मकानि तस्मादेतेन सर्वपृष्ठेन विश्वजिता स्वर्गमेवाप्नोति ॥ ६ ॥

अथ प्रकारान्तरेणास्य सर्वपृष्ठतां स्तौति।

तेजो ब्रह्मवर्चसं पृष्ठानि यदेकधा पृष्ठानि भवन्त्येकधैवास्मिंस्तेजो ब्रह्मवर्चसं दधाति ॥ ७ ॥

तेजोरूपाणि ब्रह्मवर्चसरूपाणि च पृष्ठानि रथन्तरस्य तावत् प्रजापतिमुखात् अग्निना ब्राह्मणजात्या च सहोत्पत्तेस्तेजोरूपत्वं ब्रह्मवर्चसरूपत्वञ्च तत्कार्य्यकारित्वे तत्साम्यादितरेषामपि बृहदादीनां पृष्ठानां तेजोब्रह्मवर्चसरूपता यद्य-

स्यादेकधा सह अस्मिन्रथन्तरादीनि षट्पृष्ठानि भवन्ति एकधैव एकयज्ञेनैवास्मिन् यजमाने तेजो ब्रह्मवर्च्चसञ्च दधाति ॥७॥

अथ प्रकारान्तरेण स्तौति।

अन्नं पशवः पृष्ठानि यदेकधा पृष्ठानि भवन्त्येकधैवास्मिन्नन्नाद्यं पशून् दधाति ॥ ८ ॥

वैराजस्यान्नरूपत्वं पूर्वमुक्तं तथा शाक्वररैवतयोरपि पशुरूपत्वं प्रागुक्तं तत्सम्बन्धादितरेषामन्नपशुत्वात्मकता शिष्टं पूर्ववद्योज्यं ॥ ८ ॥

अथास्य स्तोत्रस्य एकविंशं स्तोमं विधातुमाह।

तदाहुर्नानालोकानि पृष्ठानि यदेकस्मिन्यज्ञक्रतौ समवरुध्यन्त ईश्वरो यजमानोऽप्रतिष्ठातोरिति ॥ ६ ॥

तत्तस्मिन् विश्वजिद्विषये आहुश्चोदयन्ति ब्रह्मवादिनः कथमिति यान्येतानि पृष्ठानि रथन्तरादीनि एतानि नानालोकानि विभिन्नस्थानानि दशरात्रस्यादितः षट्स्वहःसु तेषां रथन्तरादीनां वियुज्यैकैकस्य प्रत्यहं विनियुक्तत्वात् तथा चैकस्मिन्यज्ञक्रतौ यदि एतानि सर्व्वाणि समवरुध्यन्ते सह प्रयुज्येरन् तर्हि यजमानोऽप्रतिष्ठातोः अप्रतिष्ठातुं अप्रतिष्ठानमनाश्रयत्वं ईश्वरः शक्तः स्यात् स्वकीयस्थानेभ्यः पृष्ठानाञ्चालितत्वादिति ॥ ६ ॥

कस्तर्ह्यस्य दोषस्य परिहार इत्यत आह।

एकविꣳशꣳ होतुःपृष्ठं भवति प्रतिष्ठा वा एक-विꣳशो मध्यत एव यज्ञस्य प्रतितिष्ठत्येकविꣳशोऽग्नि-ष्टोमो भवति प्रतिष्ठा वा एकविꣳशोऽन्तत एव यज्ञस्य प्रतितिष्ठति॥ १०॥

होत्रनुशंसनीयं पृष्ठं होतुःपृष्ठन्तदेकविंशस्तोमकं भवति प्रतिष्ठारूपोऽप्येकविंशस्तोमः प्रतिष्ठाहेतोः प्रजापतिपादप्रदे-शोत्पत्तेः इदं हि स्तोत्रं यज्ञस्य मध्यन्तथाच प्रतिष्ठाहेतुनैक-विंशेन यज्ञस्य मध्यतो मध्यदेश एव प्रतितिष्ठति अपि चाग्नि-ष्टोमोऽग्निष्टोमसामापि एकविंशः एकविंशस्तोमकं भवति गत-मन्यत्॥ १०॥

अथैतयोरेकविंशयोर्द्वित्वसंख्यामुपजीव्य स्तौति।

द्वावेतावेकविꣳशौ भवतो द्विपाद्यजमानो यज-मानमेव यज्ञे पशुषु च प्रतिष्ठापयति॥ ११॥

पूर्व्वोक्तावेतौ एकविंशौ द्वौ भवतः यजमानस्य द्विपात् पाद-द्वययुक्तः तथाच द्वित्वसंख्यया यज्ञे पशुषु च प्रतिष्ठापयति प्रतिष्ठितं करोति द्वयोरेकविंशयोः प्रयोक्ता उद्गातेत्यर्थः॥ ११॥

इति ताण्ड्यमहाब्राह्मणे षोड़शाध्यायस्य

पञ्चदशः खण्डः।

---

अथ षोडशः खण्डः ।

अथ श्येनाख्यः पञ्चमः साद्यःक्रः कल्पकारेण लुप्तः स षड्विंशब्राह्मणे विधास्यते, अथैकत्रिकाख्यं षष्ठं साद्यःक्रं दर्शयति ।

## अथैष एकत्रिकः प्रजापतेरुद्भित्॥ १ ॥

एकया तिसृभिश्च स्तोत्रीयाभिः स्तोमक्लृप्तिर्यस्य स एकत्रिकः एष एकत्रिकाख्यो यज्ञः प्रजापतेर्विधातुः सम्बन्धी उद्भिद्‌दुद्भिद् भेदनसाधनं अयमपि शौचिवृक्षिमतेन साद्यःक्रत्वात् एकस्मिन्नेव दिनेऽनुष्ठेय इति पूर्व्वमुक्तं मतान्तरमपि सूत्रकारेणोक्तं एकदीक्षस्त्र्युपसत्क इति गौतम इति ॥ १ ॥

अथैतस्य प्रजापतेरुद्भित्त्वमुपपादयति ।

## एतेन वै प्रजापतिरेषां लोकानामुदभिनत् ॥ २ ॥

एतेन खलु यज्ञेन प्रजापतिः स्रष्टा एषां पृथिव्यादिलोकानां सम्बन्धीनि वस्तून्युदभिनत् उद्भिन्नवान् निर्म्मितवान् ॥ २ ॥

अथैतं प्रकारान्तरेण स्तौति ।

## कृतस्तोमो वा एष उद्भिन्नꣳ ह्येव कृतस्य ॥३ ॥

एष यागः कृतस्तोमो वै कृतो निष्पन्नः स्तोमो यस्य स तथोक्तः अस्य हि षट्सु स्तोत्रेषु एकैव स्तोत्रीया अपरेषु षट्सु तिस्रस्तिस्र इति स्तोमान्तरवत् आवृत्त्या निष्पत्त्यनपेक्षत्वात् तथा च कृतस्य तृतीयार्थे षष्ठी कृतेन हि तेन सर्व्वं फलं उद्भिन्नं निष्पन्नमेव भवति ॥ ३ ॥

अथैतस्य पूर्व्वोक्तां स्तोमक्लृप्तिं विधाय स्तौति।

**यदेकया स्तुवन्त्येको वै प्रजापतिः प्रजापति-मेवाप्नोत्यथ यत्तिसृभिस्त्रय इमे लोका एष्वेव लोकेषु प्रतितिष्ठति ॥ ४ ॥**

बहिष्पवमानादीनाम्मध्ये षट्सु स्तोत्रेषु एकयैव स्तोत्रीयया स्तुवन्ति यदेतत् स्तवनं तेन प्रजापतिमेवाप्नोति कुतः एको वै एक एव खलु प्रजापतिः सर्व्वकारणभूतः एकैव स्तोत्रीया इति उभयोः साम्यात् अथ एकस्तोत्रानन्तरं यत् तिसृभिः स्तुवन्ति त्रय इमे लोका एष्वेव लोकेषु प्रतितिष्ठति यत्तिसृभिः स्तोत्री-याभिः स्तुवन्ति इमे पृथिव्यादयस्त्रयोलोकास्तस्मात्तेन तिसृभिः स्तवनेन एष्वेव लोकेषु यजमानः प्रतिष्ठितो भवति अयमर्थः त्रिकस्तोमं बहिष्पवमानं एकस्तोमं तदनन्तरमाज्यं एवं व्यत्या-समस्य द्वादशस्तोत्राणि भवन्तीति अत्र सूत्रं एकत्र्यक्तिनसेक इति त्रिकं बहिष्पवमानं स्यादिति शाण्डिल्य इत्यादिनान्येपि पक्षाः सूत्रकारेणोक्ताः तेऽपि द्रष्टव्याः ॥ ४ ॥

अथैताः संहृत्य स्तौति।

**ता उ चतस्रः सम्पद्यन्ते चतुष्पादाः पशवः पशु-ष्वेव प्रतितिष्ठति ॥ ५ ॥**

ता उ ता एव पूर्व्वोक्ताश्चतस्रः सम्पद्यन्ते एका तिस्रश्च मि-लिता चतस्रो ऋचो भवन्ति स्पष्टमन्यत् ॥ ५ ॥

अथ सर्व्वस्तोत्रगतस्तोत्रीयासम्पत्तिद्वारेण स्तौति।

गायत्रीᳪ सम्पद्यते तेजो ब्रह्मवर्च्चसं गायत्री तेज एव ब्रह्मवर्च्चसमवरुन्धे ॥ ६ ॥

एष संस्तुतो गायत्रीछन्दः सम्पद्यते षण्णां स्तोत्राणामेकस्तोमत्वात् षट्स्तोत्रीयाः अवशिष्टेषु षट्सु त्रिकस्तोम इत्यष्टादशस्तोत्रीया १८ मिलित्वा चतुर्विंशतिस्तोत्रीया भवन्ति २४ चतुर्विंशत्यक्षरा गायत्रीति सङ्ख्यासाम्याद्गायत्रीसम्पत्तिः गतमन्यत् ॥ ६ ॥

प्रकारान्तरेण गायत्रीसम्पत्तिं स्तौति।

प्राणो गायत्री प्रजननं प्राणादेव गायत्र्याः प्रजायते ॥ ७ ॥

एतदपि सिद्धं ॥ ७ ॥

अथार्भवपवमाने स्तोत्रीयां विधीयते।

अयारुचा हरिण्या पुनान इत्यार्भवः पवमानः ॥८॥

अयारुचेत्येषातिछन्दस्का स्तोत्रीया आर्भवः पवमानो भवति ॥ ८ ॥

अथैनां स्तौति।

सर्व्वेषां वा एषा छन्दसाᳪ रूपᳪ सर्व्वेष्वेव छन्दःस्वार्भवं पवमानं प्रतिष्ठापयति ॥ ६ ॥

अस्यां अतिच्छन्दःस्वेव गायत्र्यादीनां सर्व्वेषां छन्दसामन्तर्भावात् एषा सर्व्वच्छन्दसां रूपं स्वरूपभूता तथा चैनामार्भवपवमानस्तोत्रीयां कुर्व्वन् सर्व्वेष्वेव छन्दःस्वार्भवं पवमानं प्रतिष्ठापयतीति ॥ ६ ॥

अथैतस्यां गातव्यं साम विधाय स्तौति ।

तस्याङ्गायत्रपार्श्वं न गायत्रादेति न साम्नो न निधनात् ॥ १० ॥

तस्यां पूर्व्वोक्तायां अयावच्चाहरिप्येतस्यां गायत्रपार्श्वाख्यं साम गातव्यं अस्यापि नामैकदेशेन गायत्रशब्देनाभिधेयत्वात् गायत्रीच्छन्दसो नैति नापगच्छति अतएव गायत्राख्यात् साम्नोऽपि नापगच्छति प्रकृतौ ह्यार्भवे स्वादिष्ठयामदिष्ठयेति गायत्र्यां गायत्रं साम क्रियते तत्परित्यज्य छन्दोऽन्तरे सामान्तरे क्रियमाणे ततो गायत्रादयो यस्मादित्याशङ्क्य गायत्रपार्श्वमित्यत्र गायत्रशब्दसद्भावात् उक्तदोषो न भवतीत्यर्थः तथा गायत्रपार्श्वस्य करणान्निधनादपि नापगच्छति अस्य हि निधनं भवति ततो निधनत्वात् आर्भवपवमानो निधनयुक्तोऽपि भवतीत्यर्थः ।

वेदार्थस्य प्रकाशेन तमोहार्दन्निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १० ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीर-बुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे षोड़शाध्यायस्य षोड़शः खण्डः।

षोड़शाध्यायः समाप्तिमगमत्।

---

## सप्तदशोऽध्यायः ।

अथ प्रथमः खण्डः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ चत्वारो व्रात्ययज्ञा एकाहास्तेषु षोडशस्तोमं साधारण्येन विधित्सुराह ।

देवा वै स्वर्गं लोकमायꣳस्तेषां दैवा अहीयन्त व्रात्यां प्रवसन्तस्त आगच्छन् यतो देवाः स्वर्गं लोकमायꣳ स्तेन तꣳ स्तोमन्न च्छन्दोऽविन्दन्येन तानाप्स्यꣳ स्तेदेवा मरुतोऽब्रुवन्नेतेभ्यस्तꣳ स्तोमन्तच्छन्दः प्रायच्छत येनास्मानाप्नवानिति तेभ्य एतꣳ षोडशꣳ स्तोमं प्रायच्छन् परोक्षमनुष्टुभं ततो वै ते तानाप्नुवन् ॥ १ ॥

देवाः पुराऽस्मिन् लोकेऽवस्थाय यागानुष्ठानेन स्वर्गं लोकं प्राप्नुवन् तेषां देवानामनुचराः अतएव देवसम्बन्धात् दैवा जनाः व्रात्यां व्रात्यतां आचारहीनतां प्राप्य प्रवसन्तः प्रवासं कुर्व्वन्तः सन्तोऽहीयन्त हीनाः पृथिव्यामेव परित्यक्ता आसन् अथ देवेषु

स्वर्गङ्गतेषु ते देवजना आगच्छन् यतः यस्मिन् स्थाने देवाः स्वर्गसाधनयागमन्वतिष्ठन् तत्स्थानं प्रति स्वर्गसाधनदिदृक्षया समागता इत्यर्थः आगत्य च तं स्वर्गसाधनं स्तोममनाविन्दन् तथा छन्दश्च नाविन्दन् नालभन्त येन स्तोमेन छन्दसा वाऽऽत्मानाप्तवान् ते प्राप्नुयुरिति एवन्देवैरुक्ता मरुतः तेभ्यो हीनेभ्यः एतं षोडशं षोडशस्तोत्रीयात्मकं स्तोमं प्रायच्छन् परोक्षेण वर्त्तमानं अप्रत्यक्षमनुष्टुभं छन्दश्च प्रायच्छन् व्रात्ययज्ञेषु प्रथमस्य चतुर्षु स्तोत्रेषु षोडशः स्तोमः तथाच चत्वारः षोडशाः द्वे अनुष्टुभौ भवतः एवमनुष्टुभः परोक्षत्वं द्रष्टव्यं ततोऽनन्तरं स्तोमछन्दोरूपेण साधनेन ते हीनात्मान् देवान् आप्नुवन् एवं सर्वेष्वपि व्रात्ययज्ञेषु षोडशस्तोमः प्रयोक्तव्य इत्युक्तं भवति परोक्षमनुष्टुभमित्यनेन चतुःषोडशी व्रात्ययज्ञः कार्य्य इति विधिरुन्नेतव्यः चतुर्व्विधा हि व्रात्याः निन्दिताः कनीयांसो ज्यायांसः एतत्त्रितयव्यतिरिक्ता हीनाचाराश्चेति तत्र कनीयःप्रभृतीनां व्रात्यानां उत्तरे त्रयो यज्ञाः त्रितयव्यतिरिक्तानां व्रात्यानां अयं प्रथमश्चतुःषोडशी तदुक्तं आपस्तम्बेन चतुःषोडशी सर्व्वेषाम् इति ॥ १ ॥

अथैतत् प्रशंसते योजयति ।

हीना वा एते हीयन्ते ये व्रात्यां प्रवसन्ति न हि ब्रह्मचर्य्यञ्चरन्ति न कृषिन्न वणिज्याꣳ षोडशो वा एतत् स्तोमः समाप्तुमर्हति ॥ २ ॥

ये पुरुषाः व्रात्यां व्रात्यतां विहिताकरणप्रतिषिद्धनिषेवनरूपामाप्य प्रवसन्ति एते हीना निकृष्टाः सन्तो हीयन्ते निकृष्टतमा भवन्ति तत् कस्य हेतोः न खल्वेते ब्रह्मचर्य्यं ब्राह्मणोचितं कर्म्माचरन्ति ततो हीनाः सम्पन्ना यस्माच्च कृषिवाणिज्यां वणिजः क्रियां क्रयविक्रयादिरूपाञ्च न कुर्व्वन्ति ततो वैश्यजातेरपि हीनाः तस्मादेते निकृष्टतमा भवन्तीत्यर्थः तथा विधानात् यत् यः स्तोमः समाप्तुमर्हति श्रैष्ठ्यं प्रापयितुं योग्यो भवति एष षोडशः स्तोमः ॥ २ ॥

कथमस्येदृशं सामर्थ्यमिति तदाह ॥

मरुत्स्तोमो वा एष यानि क्षुद्राणि छन्दाꣳसि तानि मरुतां ॥ ३ ॥

एष षोडशस्तोमो मरुत्स्तोमो वै मरुतां सम्बन्धि स्तोमः कथमस्य मरुतां सम्बन्ध इति तदुच्यते यानि क्षुद्राणि न्यूनाक्षराणि छन्दांसि तानि मरुतां सम्बन्धीनि सप्तगणात्मका एकोनपञ्चाशत् ४९ संख्यया च विभक्तत्वेन तेषामपि क्षुद्रत्वात् ॥ ३ ॥

अतः क्षुद्रत्वसाम्यात् आह ।

ककुभं प्राचीमुदूहत्यथ यदेषा द्विपदा ककुभो लोके क्रियते रूपेणैवैनाꣳस्तत् समर्द्धयति ॥ ४ ॥

पवस्व मधुमत्तमः परिप्रधन्व अधाहीन्द्रगिर्व्वण इत्यादीनि ककुप्शब्देन वृषभस्य ककुदः स्थानीयत्वात् द्विपदेत्यनेन च पाद-

द्व्यक्षरत्वात् एतान् व्रात्यान् रूपेण धारयन्तेनैव समृद्धान् करोतीत्यर्थः ॥ ४ ॥

अथ ब्रह्मसाम्नः स्तोत्रीया विधाय स्तौति ।

अधाहीन्द्र गिर्वण इति विषमं च्छन्दो विषमइव वै व्रातः सर्वानेवैतान् समान् करोति ॥ ५ ॥

अधाहीन्द्रगिर्व्वण इत्याद्यास्तिस्रो ब्रह्मसाम्नः स्तोत्रीयास्तासु च विषमं विविधं छन्दो दृश्यते प्रथमा ककुप् मध्यमपादस्य द्वादशाक्षरत्वात् द्वितीया उष्णिक् तृतीयपादस्य द्वादशाक्षरत्वात् तृतीयायास्तु द्वौ पादौ द्वादशाक्षरौ तृतीयोऽष्टाक्षर इति छन्दोवैषम्यं व्रातो व्रात्यसमुदायो विषम इव वै विविध इव भवति विविधानाचारयुक्ता हि व्रात्याः तथा विषमछन्दसा तेषां वैषम्यं परिहरन् सर्व्वानेवैतान् व्रात्यान् समान् श्रेष्ठत्वापादनेन समवीर्य्यान् करोति ॥ ५ ॥

अथ तासु गातव्यं साम विधत्ते ।

तासु द्यौतानं ॥ ६ ॥

तासु पूर्व्वोक्तास्वधाहीन्द्रगिर्व्वण इत्याद्यासु द्युतानेन दृष्टं साम द्यौतानं गातव्यं तच्च ब्रह्मसाम भवतीत्यर्थः तथा च कल्पकारः अधाहीन्द्रगिर्व्वण इत्यैन्द्रमिन्द्राय सिञ्चतेति द्यौतानमाहते इति ॥ ६ ॥

अथैतस्य समृद्धिहेतुतामाह ।

द्युतानो मारुतस्तेषां गृहपतिरासीत्त एतेन स्तोमेनायजन्त ते सर्व आर्ध्नुवन् यदेतत् साम भवत्यृध्या एव ॥ ७ ॥

मारुतो मरुतां सम्बन्धी द्युतानः तेषां देवानां व्रात्यानां गृहपतिरासीत् बहुयजमानके कर्म्मणि यूपाञ्जनत्तुयाज्यावचनादीनि केवलक्रत्वर्थानि यः करोति स गृहपतिरित्युच्यते एवं द्युतानं गृहपतिं कृत्वा ते देवा व्रात्याः द्युतानः गृहपतयः एतेन स्तोमेन षोड़शस्तोमकेन यज्ञेनायजन्त ततस्ते सर्व्वे आर्ध्नुवन् समृद्धा अभवन् यदेतत् द्युतानेन दृष्टं साम व्रात्यस्तोमे ब्रह्मसाम भवति तदेषां समृध्या एव सम्पद्यते ॥ ७ ॥

अथैतस्य शाखान्तरीयं निधनं निषिध्य अस्माभिरधीयमानं निधनमेव कार्य्यमिति प्रतिपादयन् स्तौति ।

यन्निरुक्तन्निधनमुपेयुर्गृहपतिरेवर्ध्नुयादपेतरान्भीताथ यदनिरुक्तमुपयन्ति सर्वानेवैतानृद्धौ भूतौ प्रतिष्ठापयति ॥ ८ ॥

अत्र सूते शाखान्तरीयं पञ्चमुत्क्षा स्वयमप्युक्तं इन्द्रेति द्यौताने निधनं निराकुर्वस्तस्य प्रतिषेधो यथाम्नायमेवोपेयुरिति अयमर्थः निरुक्तं इन्द्रेति निष्कृष्यैकदेवताप्रतिपादकं निधनं शाखान्तरीयं यद्यदि उपेयुः प्राप्नुयुः प्रयुञ्जीरन् तथाच प्रधानभूतस्यैवेन्द्रस्य निष्कृष्य कथनात् एतेषाम्मध्ये प्रधानभूतो गृहपतिरेव ऋध्नुयात्

सम्बन्धोऽभवत् इतरे त्वपगतसम्बन्धा भवेयुः अथानिरुक्तं निर्व्वारितदैवतं अध्ययनसिद्धं ओत्यहो २३४५ इत्येवं रूपं द्युतानस्य निधनं यत् यद्युपयन्ति प्रयुञ्जते तर्हि उद्गाता सर्व्वानेवैतान् व्रात्यान् ज्यष्ठौ समष्ठौ भूतावैश्वर्य्ये च प्रतिष्ठापयति तस्मानिर्व्वारितदेवतात्वेन सर्व्वदेवतासाधारण्यात् सर्व्वेषां समृद्धिः ॥८॥

अथैतस्मिन् व्रात्ययज्ञे चतुर्षु स्तोत्रेषु षोडशः स्तोमः प्रयोक्तव्य इति तत् प्रशंसितुमाह ।

गरगिरो वा एते ये ब्रह्माद्यञ्जन्यमन्नमदन्त्यदुरुक्तवाक्यन्दुरुक्तमाहुरदण्ड्यन्दण्डेन घ्नन्तश्चरन्त्यदीक्षिता दीक्षितवाचं वदन्ति षोडशो वा एतेषाᳬ स्तोमः पाप्मानन्निर्हन्तुमर्हति यदेते चत्वारः षोडशा भवन्ति तेन पाप्मनोऽधिनिर्मुच्यन्ते ॥ ९ ॥

एते वक्ष्यमाणा गरगिरो वै गरलस्य विषस्य भक्षयितारः ये व्रात्याः ब्रह्माद्यं ब्राह्मणैर्भोज्यं जन्यजनपदसम्बन्धि अन्नमदन्ति ब्राह्मणार्थं परिकल्पितमन्नं बलात्कारेण भुञ्जत इत्यर्थः येच अदुरुक्तवाक्यं शोभनार्थप्रतिपादकं वाक्यं दुरुक्तं दुष्टमाहुः तथा अदण्ड्यं दण्डानर्हं जनन्दण्डेन घ्नन्तो हिंसन्तश्चरन्ति तथा स्वयमदीक्षिताः अकृतदीक्षाः दीक्षितैः प्रयोज्यां वाचं वदन्ति एवं ये बहुविधान् विपरीताचारानाचरन्ति एते विषभक्षकाः नरकहेतोर्भूयसः पापसञ्चयस्य निषिध्यमानत्वादित्यर्थः तस्मा-

देतेषां व्रात्यानां पाप्मानं पापं निर्हन्तुं निर्दग्धुं षोड़शस्तोम एवार्हतीति तथाच यदेते चत्वारः षोड़शाः षोड़शस्तोमा भवन्ति अच्छावाकस्याज्यपृष्ठयोर्माध्यन्दिनार्भवयोश्च पवमानयोः तेन षोड़शस्तोमचतुष्टयेन पाप्मनः सकाशात् अधि उपरि निर्मुच्यन्ते प्रक्षीणपापाः शुद्धा भवन्तीत्यर्थः ॥ ८ ॥

अथाग्निष्टोमसाम्नः स्तोत्रीयामनूद्य स्तौति।

देवोवो द्रविणोदा इत्यग्निष्टोमसाम कार्य्यं देवताखेवैनान् प्रतिष्ठापयति ॥ १० ॥

देवो वो द्रविणोदा इत्यस्मिन् प्रगाथे यज्ञायज्ञीयमग्निष्टोम साम कार्य्यं तथाच देवशब्दस्य श्रूयमाणत्वात् देवताखेवैनान् व्रात्याञ्छुद्धान् कृत्वा प्रतिष्ठापयति ॥ १० ॥

अथ शाखान्तरीयमतमुपन्यस्यति।

अथो खल्वाहुरदर्शि गातुवित्तम इत्येव सतोबृतीषु कार्य्यं विषमइव वै व्रातः सर्व्वानेवैनान् सतोबृहतः करोति ॥ ११ ॥

अथो खल्विति पक्षान्तरपरिग्रहे अन्ये ब्रह्मवादिनः आहुः कथयन्ति किमित्यदर्शि गातुवित्तम इत्याद्यास्वेव सतोबृहतीषु प्रग्रथनैरपेक्षणस्वभावत एव बृहतीच्छन्दस्कासु ऋक्षु अग्निष्टोमसाम कार्य्यमिति उपपत्तिश्चाहुः व्रातो व्रात्यसमुदायः

विषम इव वै विविध आचार एव खलु तथाच नानाविधान् सर्वानेवैनान् सतोबृहत: स्वभावतो महत: करोति ॥ ११ ॥

अथैतन्मतं दूषयित्वा स्वपक्षन्निगमयति।

तदाहु: शिथिलमिव वा एतत् छन्दश्चराचरं यत् सतोबृहती देवो वो द्रविणोदा इत्येव कार्य्यं ॥ १२ ॥

तत्तत्र विषये अन्ये पुनर्ब्रह्मवादिन आहु: यत् सतोबृहत्याख्यं छन्द: एतत् शिथिलमिव वै अदृढमेव यत एतच्चराचरं चरणशीलं स्थाणु न भवति चरते: पदाद्यचि चरिचलिपतिवदीनामव्याभ्यासस्येति द्विर्वचनमागागमश्च यस्मादेवं तस्माद्देवो वो द्रविणोदा इत्येतास्वेव कार्य्यं ॥ १२ ॥

अथैतास्वुक्तदोषवैलक्षण्यमाह।

एषा वै प्रतिष्ठिता बृहती या पुन: पदा तद्यत्पदं पुनरारभते तस्मात्पुनो मातरमध्येति ॥ १३ ॥

या बृहती पुन:पदा सकृदाम्नातं पादं पुनरभ्यस्य या बृहती सम्पद्यते एषा पुन:पदा प्रतिष्ठिता बृहती तत्तथा सति यद्यस्मात्सकृदाम्नातं पदं पादं अविस्मारणेन पुन: पुनरारभते तस्मात् कारणात्पुत्र: स्तनन्धयो मातरमध्येति पुन: पुन: स्मरति इक्स्मरण इति धातु: ॥ १३ ॥

द्युतानो मारुतस्तेषां गृहपतिरासीदित्याम्नानात् गृहपतिप्रमुखाबहवो व्रात्या अनेन यजेरन्निति प्रतीयते तत्र गृह-

पतिना सम्पाद्यानि दक्षिणाद्रव्याणि दर्शयति ।

उष्णीषञ्च प्रतोदश्च ज्याह्णोडश्च विपथश्च फलकास्तीर्णः कृष्णशं वासः कृष्णवलक्षे अजिने रजतो निष्कस्तद् गृहपतेः ॥ १४ ॥

उष्णीषं शिरोवेष्टनं वस्त्रं अयःशलाकाग्रदण्डः प्रतोदः येन कर्णुकैर्बलीवर्दा निष्पीड्यन्तेऽह्णोडतिर्मात्यर्थः ज्याह्णोडा वाता यस्य चापस्य सज्याह्णोडः इषुरहितः केवलो धनुर्दण्ड इत्यर्थः तदुक्तं सूत्रकारेण धनुष्केणानिपुणा व्रात्याः प्रवेषमाना यन्ति स ज्याह्णोड इति तथा फलकास्तीर्णः फलकाभिरास्तीर्णो विस्तारितो रथः स च विपथः विविधं कुटिलं पथो गच्छतीति विविधगासिभ्यामश्वाश्वतराभ्यां युक्तः कार्य्य इत्यर्थः कृष्णशं कृष्णदशं कृष्णा दशा यस्य तादृशं वासः दकारलोपश्छान्दसः यद्वा लोमश इति मत्वर्थः शप्रत्ययः कार्ष्णयुक्तमित्यर्थः वलक्षः शुक्लवर्णः शुक्लकृष्णवर्णे अजिने आविके चर्मणी पार्श्वतस्तन्तुभिः स्यूते भवत इत्यर्थः रजतो रजतनिर्मितो निष्कोऽलङ्कारः भूषा एतान्यूष्णीषादीनि द्रव्याणि गृहपतेः स्वभूतानि सम्पाद्यानि दक्षिणार्थं गृहपतिना आनेतव्यानीत्यर्थः तदुक्तं सूत्रकारेण एतत्सर्व्वं गृहपतिराहरेदिति अतः स्वगुह्नातुरिव तद्गृहपतेः षष्ठ्या निर्दिष्टस्य संप्रदानशङ्का न कार्य्येत्यर्थः ॥ १४ ॥

अथान्यैः सम्पादनीयानि द्रव्याणि दर्शयति ।

वलूकान्तानि दामतूषाणीतरेषां द्वे द्वे दामनी द्वे द्वे उपानहौ द्विषंहितान्यजिनानि ॥ १५.॥

वलूकेति लोहितवर्णस्याख्या लोहितवर्णान्तो येषां वाससां तानि तथोक्तानि तूषमिति वस्त्रस्य दशोच्यते दामतूषाणि रज्जुरूपदशानीत्यर्थः प्रतिवस्त्रं द्वे द्वे दामनी उभयोरपि प्रान्तयो: एकैकं दाम रज्जुर्यथा भवति तथा कर्त्तव्यमित्यर्थः तथा एकैकस्य व्रात्यस्य द्वे द्वे उपानहौ वर्मसदृशे पादाङ्गुष्ठवेष्ठने चर्मणी भवत इत्यर्थः तदुक्तं सूत्रकारेण द्वे द्वे उपानहाविविधकृष्णाः कर्णिन्य इति शाण्डिल्यो याः काश्चेति धानञ्जप्य इति पूर्ववत् शुक्लकृष्णान्यजिनानि द्विषंहितानि एकैकस्य द्वे द्वे अजिने शुक्लकृष्णे पूर्ववत् सहिते भवत इत्यर्थः एतानि द्रव्याणि गृहपतिव्यतिरिक्तैर्व्रात्यैः सम्पाद्यानि ॥ १५ ॥

अथैतस्य दानं व्रात्यतानिर्हरणहेतुरित्याह।

एतद् वै व्रात्यधनं यस्मा एतद्ददति तस्मिन्नेव मृजाना यन्ति ॥ १६ ॥

एतदुष्णीषप्रतोदादिकं द्रव्यजातं खलु व्रात्येनाविनाभूतं धनं अतो यस्मै पुरुषाय एतद्धनं ददति प्रयच्छन्ति तस्मिन्नेव पुरुषे मृजाना: व्रात्यत्वापादकं पापन्निर्मृज्य शुद्धाः सन्तो गच्छन्ति त्रैविद्यवृत्तिं प्राप्नुवन्ति अस्य च व्रात्यधनस्य प्रतिगृहीतृविशेष: सूत्रकारेणोक्तः व्रात्येभ्यो व्रात्यधनानि ये व्रात्यचर्य्याया अविरता: स्युर्ब्रह्मबन्धवे मागधदेशीयायेति ॥ १६ ॥

अथैतेषां प्रत्येकं त्रयस्त्रिंशत्सङ्ख्याका गावोऽपि दक्षिणार्थं सम्पाद्या इत्याह ।

त्रयस्त्रिꣳशता त्रयस्त्रिꣳशता गृहपतिमभिसमायन्ति त्रयस्त्रिꣳशद्धि दैवा आर्ध्नुवन् ऋध्या एव ॥ १७ ॥

त्रयस्त्रिंशता त्रयस्त्रिंशत्संख्याभिर्गोभिर्गृहपतिमभिसमायन्ति समागच्छन्ति सर्वेषां प्रत्येकं त्रयस्त्रिंशत्सम्पादनार्थं वीप्सा अतो गृहपतिरपि गवां त्रयस्त्रिंशतं सम्पादयेदित्यर्थः इमा गावोऽपि मागधदेशीयेभ्यो व्रात्येभ्यो देयाः यस्मा एतद्ददति तस्मिन्नेव मृजाना यन्तीति साधारणोक्तेः कुत एतत् त्रयस्त्रिंशत्संख्यायाः सम्पादनमिति तत्रोच्यते त्रयस्त्रिंशत्संख्याकाः खलु दैवाः देवसम्बन्धिनो व्रात्या आर्ध्नुवन् अनेन व्रात्यस्तोमेन समृद्धा अभवन् अतस्तत्सम्बन्धद्वारा ऋध्यै समृद्ध्यर्थमेव त्रयस्त्रिंशता गोभिः समागमनमिति ॥ १७ ॥

इति ताण्ड्यमहाब्राह्मणे सप्तदशाध्यायस्य

प्रथमः खण्डः ।

---

अथ द्वितीयः खण्डः ।

अथाभिशस्तैर्निन्दितैरनुष्ठेयो व्रात्यस्तोमः प्रस्तूयते ।

अथैष षट्षोडशी ये नृशꣳसा निन्दिताः सन्तो व्रात्यां प्रवसेयुस्त एतेन यजेरन् ॥ १ ॥

अथानन्तरं एष वक्ष्यमाणो यज्ञः षट्षोडशी षट्षोडशः स्तोमा यस्य स तथोक्तः नृशंसा निन्दिताः मनुष्यैरभिशंसनेन पापाध्यारोपेण गर्हिताः सन्तो ये पुरुषाः व्रात्यां व्रात्यत्वं प्राप्य प्रवसेयुः तएतेन षट्षोडशिना यजेरन् ॥ १ ॥

षट् षोडशित्वं पाप्मनो निर्हरणहेतुरिति प्रतिपिपादयिषया प्रथममेषां पापसद्भावमाह ।

अभिपूर्व्वेण वा एते पाप्मना गृहीता ये नृशꣳसा निन्दिताः सन्तो व्रात्यां प्रवसन्ति यत् षट् षोडशानि स्तोत्राणि भवन्ति तेन पाप्मनोऽधि निर्मुच्यन्ते ॥२॥

अभिपूर्व्वेण क्रमेण खल्वेते पाप्मना पापेन गृहीताः ये नृशंसा निन्दिताः अभिशंसनेन गर्हिताः सन्तो व्रात्यां प्रवसन्ति तथा च यत् षट् स्तोत्राणि षोडशानि षोडशस्तोमानि भवन्ति तेन षोडशेन पाप्मनोऽधि पापान्निर्मुच्यन्ते उक्थसंस्थो ह्ययं व्रात्यस्तोमः तथा त्रिषु पवमानस्तोत्रेषु अच्छावाकस्याज्यपृष्ठ-उक्थेषु षट् स्तोत्रेषु षोडशस्तोमो भवति तदुक्तं कल्पकारेण षोडशाः पवमाना अच्छावाकसामानि चेति ॥ २ ॥

अथास्याग्निष्टोमसाम्नः स्तोमं विधाय स्तौति ।

यदेकविꣳशोऽग्निष्टोमो भवति प्रतिष्ठा वा एक-विꣳशोमध्यत एव यज्ञस्य प्रतितिष्ठन्ति ॥ ३ ॥

उक्थसंस्थत्वादग्निष्टोमसाम्नो यज्ञस्य मध्यत्वं सिद्धमन्वत् ॥३॥

तथास्तोक्थसंस्थां विधास्तौति।

उक्थो भवति पशवो वा उक्थानि पशवो नृशꣳसमग्र्यं परिणयन्ति पशुभिरेवैनानग्र्यं परिणयति॥ ४॥

पशवो हि गवादयो हि नृशंसनैरभिशस्यमानं पुरुषं अग्रं श्रेष्ठं परिणयन्ति तत्पालनदानादिभिः पापं क्षीयते उक्थस्तोत्राणि च पशुसंस्तुतानि अतः पशुभिरेवैनान् व्रात्यान् अग्रं श्रेष्ठं परिणयति प्रापयत्युद्गाता॥ ४॥

इति ताण्ड्यमहाब्राह्मणे सप्तदशाध्यायस्य

द्वितीयः खण्डः।

---

अथ तृतीयः खण्डः।

अथ वयसा कनीयांसो ये व्रात्यास्तैरनुष्ठेयो यागो विधीयते।

अथैष द्विषोडशी ये कनिष्ठाः सन्तो व्रात्यां प्रवसेयुस्तएतेन यजेरन्॥ १॥

अथानन्तरं एष द्विषोडशी षोडशस्तोमके द्वे स्तोते यस्य स तथोक्तः ये कनिष्ठाः युवतमाः सन्तो व्रात्यतां प्राप्य प्रवसेयुः बहिःकृताः प्रवासं कुर्य्युः त एतेन द्विषोडशिना व्रात्यस्तोमेन यजेरन्॥ १॥

अथैतस्मिन् त्रिषु पवमानस्तोत्रेषु त्रिवृत्स्तोमः कार्य्य इति विधित्सुराह।

हीना वा एते हीयन्ते ये कनिष्ठाः सन्तो व्रात्यां प्रवसन्ति यत्त्रिवृतः पवमाना भवन्ति मुखं वै त्रिवृत् स्तोमानाम्मुखत एवैनान् यज्ञस्य परिणयति ॥ २ ॥

वयसातिहीनाः खलु इमे हीयन्ते पुनरहीना हीना भवन्ति तथाच तेषां हीनत्वपरिहाराय त्रिवृतः पवमाना भवन्ति बहिष्पवमानादिषु त्रिषु पवमानस्तोत्रेषु त्रिवृत् स्तोमः कार्य्य इत्यर्थः स्तोमानाम्मध्ये त्रिवृत्स्तोमो मुखं वै मुख्यः प्रथमः यदेवं विधस्य त्रिवृतः पवमानेषु करणं तेन यज्ञस्य मुखतः सवनत्रयप्रारम्भ एव एनान् परिणयति ब्राह्मणत्वं प्रापयति ॥ २ ॥

अथास्याच्छावाकसम्बन्धिनोराज्यपृष्ठस्तोत्रयोः षोडशः स्तोमः कार्य्य इति स्तुतिमुखेन दर्शयति।

यद् वै षोडशे स्तोत्रे भवतस्तेन पाप्मनोऽधिनिर्मुच्यन्ते ॥ ३ ॥

सिद्धमायस्तेतत् ॥ ३ ॥

अथाग्निष्टोमसाम्न एकविंशस्तोमं विधाय स्तौति।

एकविꣳशोऽग्निष्टोमो भवति प्रतिष्ठा वा एकविꣳशोऽन्तत एव यज्ञस्य प्रतितिष्ठन्ति ॥ ४ ॥

अग्निष्टोमसंस्थत्वादेतस्य व्रात्यस्तोमस्य अग्निष्टोमसाम्नो ऽन्तत्वं ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सप्तदशाध्यायस्य

तृतीयः खण्डः ।

---

अथ चतुर्थः खण्डः ।

अथ ये स्थविरा व्रात्यास्तैरनुष्ठेयं व्रात्ययज्ञं दर्शयति ।

अथैष शमनीचामेढ्राणाᳫं स्तोमो ये ज्येष्ठाः सन्तो व्रात्यां प्रवसेयुस्त एतेन यजेरन् ॥ १ ॥

अथानन्तरं एष वक्ष्यमाणो यज्ञः शमनीचामेढ्राणां स्तोमः शमेन यौवनोपरमेण नीचमनुन्नतं मेढ्रं येषां ते शमनीचामेढ्राः स्थाविर्य्याद्विनष्टवीर्य्या इत्यर्थः तेषां सम्बन्धी स्तोमः अतो ये ज्येष्ठाः वृद्धतमाः सन्तो व्रात्यतां प्राप्य प्रवसेयुरेतेन व्रात्यस्तोमेन यजेरन् ॥ १ ॥

अथास्योर्द्ध्वनस्तोमतां विधत्ते ।

अग्रादग्रᳫं रोहन्त्यूर्द्ध्वाः स्तोमा यन्त्यनपभ्रᳫंशाय ॥ २ ॥

अनपभ्रंशाय अनधःपतनाय अधिकसंख्याकं स्तोमं कृत्वा यदि न्यूनसंख्याकं स्तोमं प्रयुञ्जीरन् तदा अवेदधःपातः नैवमूर्द्ध्व-

स्तोमत्वमित्यर्थः तथाच एवं कुर्व्वाणो यजमानाः अग्रात् श्रैष्ठ्यात् अग्रं श्रैष्ठ्यं रोहन्ति आरूढा भवन्ति उत्तरोत्तरमुन्नतं पदं प्राप्नुवन्तीत्यर्थः एतच्चोर्द्ध्वस्तोमत्वं कल्पकारेण दर्शितं द्वे त्रिवृती स्तोत्रे द्वे पञ्चदशसप्तदशे द्वे एकविंशचतुर्विंशे इत्यादिना एवञ्च पूर्व्वस्मात् स्तोत्रादुत्तरमुत्तरं स्तोत्रमधिकस्तोमकं भवतीत्युक्तं भवति ॥ २ ॥

अथैतस्य शमनीचामेढ्राणां स्तोमत्वं दर्शयन् ऊर्द्ध्वस्तोमत्व-व्यतिरिक्तेन प्रकारान्तरेण स्तोमकल्पने दोषन्दर्शयति।

एतेन वै शमनीचामेढ्रा अयजन्त तेषां कुषीतकः सामश्रवसो गृहपतिरासीत्तान् लुशाकपिः खार्गलि-रनुव्याहरदवाकीर्षत कनीयाꣳसौ स्तोमावुपागुरिति तस्मात्कौषीतकीनान्नकश्चनातीव जिहीते यज्ञाव-कीर्णा हि ॥ ३ ॥

एतेन खलु स्तोमेन पुरा शमनीचामेढ्रा अपगतयौवनत्वेन निर्व्वीर्य्यप्रजननाः देवसम्बन्धिनो व्रात्या अयजन्त तस्मादेषः शमनीचामेढ्राणां स्तोम इत्याख्यायते तदानीन्तनानां व्रात्यानां समश्रवसः पुत्रः कुषीतको नाम ऋषिः गृहपतिर्मुख्यः आसीत् तान् कुषीतकगृहपतिसहितान् लुशाकपिर्नामा खार्गलिः खर्गल-पुत्रो अनुव्याहरदशपत् ततस्ते अवाकीर्षत अवकीर्णिनः भ्रष्टा-चारा अभवन् अनुव्याहरतोऽयमभिप्रायः एते कुषीतकगृह-

मतयः कनीयांसौ अल्पसंख्यावेव द्वौ स्तोमावुपागुः प्राप्नुवन्निति पूर्वंदर्शितमुत्तरोत्तराधिकसंख्यं स्तोमं परित्यज्य न्यूनसंख्यस्तोमद्वयं प्रायुञ्जतेति तस्मादेतैरयथानुष्ठानात् यथार्थदर्शिना लुशाकपिना शापः कृत इत्यर्थः यस्मादेते कुषीतकमुख्याः प्राप्ता आसन् तस्मादेव कारणात् कौषीतकीनां कौषीतकशाखाध्येतॄणां वा मध्ये कश्चन कोऽपि पुरुषः नातीव जिहीते अतीव आश्रयो न गच्छति ओहाङ् गताविति धातुः हि यस्मात् एते यज्ञावकीर्णा अन्यथानुष्ठितेन यज्ञेन निमित्तेनावकीर्णा अवकीर्णिनः विभ्रष्टब्रह्मचर्य्याः तस्मादित्यर्थः ॥ २ ॥

इति ताण्ड्यमहाब्राह्मणे सप्तदशाध्यायस्य
चतुर्थः खण्डः ।

---

अथ पञ्चमः खण्डः ।

अथ पञ्चभिरग्निष्टुतोविधिस्तत्र केचित् प्रथमेन खण्डेन द्वावग्निष्टुतौ विधीयेते अपरौ चतुर्भिश्चत्वार इति षडग्निष्टुत इति मन्यन्ते अपरे तु तदाक्षर्य्यंत् त्रिवृत्त्वत्येकस्मादेवाङ्गात् पाप्मानमपहन्तीत्यादिना प्रथमस्याग्निष्टुतो निन्दापुरःसरं अन्यस्यैव विधानात् प्रथमस्याननुष्ठेयत्वात् पञ्चैवाग्निष्टुत इति वर्णयन्ति कल्पकारस्य तु चत्वारोऽग्निष्टुत इति मतं चतुर्णामेव स्तोमस्तोत्रीयाकल्पनात् एतत् पक्षत्रयं सूत्रकारेणोक्तं षडग्निष्टुतः त्रिवृज्ज्योतिष्टोमस्साद्यौ स्वर्गं वारवन्तीयाविलादिना

एतेषु त्रिषु पक्षेषु षडग्निष्टुत इति पक्षः साधीयान् यथा द्वितीयादिषु खण्डेषु पृथक् पृथगग्निष्टुतो विधानं फलञ्च दृश्यते तथाच निदानकारेणोक्तं ते इमे पञ्चानुवाकाश्चत्वारः कल्पाः स एष प्रथमोऽनुवाकः सर्व्वेषां साष्टस्यादित्युक्तं पुनरित्युक्तं अपि वा प्रथमस्य द्वौ स्याताभिति अथ तेषु प्रथमस्य त्रिष्टदग्निष्टुतो ब्रह्महत्यानिर्हरणार्थत्वं प्रतिपादयिष्यन् तदर्थं प्रथमं तावदाख्यायिकामाह।

इन्द्रो वै त्रिशिरसं त्वाष्ट्रमहंस्तमश्लीला वागभ्यवदत् सोऽग्निमुपाधावत् स एतदग्निस्तोत्रमपश्यत्तदात्मन्यधिविधाय तेनैनमयाजयत्तेनास्याश्लीलां वाचमपाहन्॥ १॥

त्रिशिरसं त्रीणि शिरांसि यस्य तादृशं त्वाष्ट्रन्त्वष्टुः पुत्रं विश्वरूपाख्यं देवानां पुरोहितं असुरहिताचरणे प्रयतमानं इन्द्रः पुरा हतवान् ततस्तमिन्द्रं अश्लीला पापरूपा वागभ्यवदत् हे ब्रह्महन् ब्रह्महन्निति ततः स इन्द्रोऽग्निमुपाधावदुपागच्छत् स चाग्निरेतदग्निस्तोत्रं अग्नेरेव स्तोत्रं नान्येषां देवानां यस्मिन् तमग्निष्टुतमपश्यत् अदर्शत् तदग्निस्तोत्रमात्मन्यधिविधाय आत्मना धृतं कृत्वा तेनाग्निष्टुता एनमिन्द्रं अयाजयत् तेन चेष्टेन यज्ञेन अस्येन्द्रस्य अश्लीलां ब्रह्महन्नित्येवंरूपां पापां वाचं अपाहन् व्यनाशयन्॥ १॥

अथैतद्वेदितुः फलमाह।

अपास्मीलां वाचꣳ हते य एवं वेद ॥ २ ॥

स्पष्टोऽर्थः ॥ २ ॥

अथैतमग्निष्टुतं विधत्ते ।

योऽपूतइव स्यादग्निष्टुता यजेताग्निनैवास्य पाप्मान-मपहत्य त्रिवृता तेजो ब्रह्मवर्चसं दधाति ॥ ३ ॥

यस्मादेवमुक्तप्रकारेण त्रिवृदग्निष्टुता यो यजमानः अपूतोऽशुद्ध इव स्यात् ब्रह्महत्यादिदोषाशङ्कितो भवेत् सोऽग्निष्टुता त्रिवृत्स्तोमकेन यजेत तथाच स्तूयमानेन क्रतुस्वयज्ञभाजाग्निना अस्यात्मनः पापं अपहत्य दग्ध्वा निष्पापेऽस्मिन् त्रिवृता स्तोमेन तेजो ब्रह्मवर्चसञ्च दधाति निदधाति स्थापयति अग्निना ब्राह्मणजात्या च सहोत्पन्नत्वात् त्रिवृत्स्तोमस्योभयहेतुता एवं पूतत्वं ब्रह्मवर्चसञ्च कामयमानस्य त्रिवृदग्निष्टुद्विहितः ॥ ३ ॥

अथ चतुष्टोमाग्निष्टुतं विधातुं भक्तो कञ्चिद्दोषं दर्शयति ।

तदाहुर्य्यत्त्रिवृद्भवत्येकस्मादेवाङ्गात् पाप्मानमपहन्ति मुखादेवेति ॥ ४ ॥

तत्र अग्निष्टुद्विषये आहुस्मोदयन्ति ब्रह्मवादिनः यद्यदि त्रिवृदेक एव स्तोमो भवति तर्ह्येकस्मादेवाङ्गात् पाप्मानमपहन्ति किं तदेकमङ्गमिति मुखादेवेति त्रिवृत्स्तोमस्य प्रजा-

पतेर्मुखादुत्पन्नत्वात् अग्निष्टुतः सर्व्वस्तोत्रेषु प्रयुज्यमानः स-स्तोमः मुखादेव सकाशात् पापन्निवारयति नान्यस्मादवयवा-दिति ॥ ४ ॥

कतमस्तर्हि प्रशस्तस्तमाह ।

ज्योतिष्टोम एव कार्य्यः ॥ ५ ॥

त्रिवृत्पञ्चदशसप्तदशैकविंशाः स्तोमाः ज्योतिःशब्देनो-च्यन्ते त्रिवृतादयश्चत्वारः स्तोमा यस्य तथाविधोऽग्निः कार्य्यो-ऽनुष्ठेयः ॥ ५ ॥

एवमनुष्ठितः सर्व्वेभ्योऽवयवेभ्यः पाप्मनो निवारणकारणमि-त्याह ।

यत्त्रिवृद्भवति यदेवास्य मुखतोऽपूतं तत्तेनापहन्ति यत् पञ्चदशो यदेवास्योरस्तो बाह्वोरपूतं तत्तेनाप-हन्ति यत् सप्तदशो यदेवास्य मध्यतोऽपूतं तत्तेनाप-हन्ति यदेकविंशो यदेवास्य पदोरष्ठीवतोरपूतं तत्तेनापयन्ति ॥ ६ ॥

यत् यस्मात् अस्मिन्नग्निष्टुति त्रिवृत्स्तोमो भवति अस्य यजमानस्य मुखत आस्यदेशे यदपूतं अशुद्धिकरं पापं तदपूतं तत् त्रिवृत्स्तोमेनापहन्ति त्रिवृतः प्रजापतिमुखादुत्पत्तेर्मुख-सम्बन्धः यद्यस्मादग्निष्टुति पञ्चदशस्तोमो भवति यदेवास्योरसः उरसि वक्षसि बाह्वोश्चापूतं पापं तत्तेन पञ्चदशेनापहन्ति स हि

प्रजापतेरुरस्तोवाङ्कश्याञ्चोत्पन्नः यत् सप्तदशस्तोमो भवति यदेवास्य यजमानस्य मध्यतो देहमध्ये अपूतं तत्तेन सप्तदशेनापहन्ति मध्यतः सप्तदशन्निरमिमीतेति प्रजापतेर्मध्यदेशात्तस्योत्पत्तेः प्रतिपादनात् यदेकविंशस्तोमो भवति यदेवास्य यजमानस्य पदोः पादतलयोरष्ठीवतोरूर्व्वोश्चापूतं तेनैकविंशेन तदपूतमपहन्ति ॥ ६ ॥

अथास्मिन् वारवन्तीयमग्निष्टोमसामत्वेन विधत्ते ।

वैश्वानरं वा एष प्रविशतीत्याहुर्योऽग्निष्टुता यजत इति वारवन्तीयमग्निष्टोमसाम कार्य्यन्तस्य यदपूतं तदग्निः क्षापयत्यथेतरः शुचिः पूत उदेति ॥७॥

यो यजमानोऽग्निष्टुता यजते एष वैश्वानरमग्निं प्रविशतीत्याहुर्ब्रह्मवादिनः तस्याग्निष्टुतः केवलाग्नेयत्वात् तस्यानुष्ठाताग्निमेव प्रविशतीत्युच्यते कः पुनरस्य प्रतिकारः तदाह वारवन्तीयमिति वारवन्तीयं स्वकीयास्वृक्षु अग्निष्टोमसामत्वेन कार्य्यं यतः अग्निप्रविष्टस्य यजमानस्य यदपूतमपूतत्वं अशुद्धिरस्ति तदग्निः क्षापयति दहति अथानन्तरं अपां सारभूतेन वारवन्तीयेन सिक्तत्वात् इतरो यजमानः शुचिः शुद्धः पापरहितः पूतः कर्म्मयोग्यश्च सन् उदेति उद्गच्छति प्रकाशते ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे सप्तदशाध्यायस्य

पञ्चमः खण्डः ।

---

अथ षष्ठः खण्डः ।

अथ तृतीयमग्निष्टुतं विधत्ते ।

**त्रिवृदग्निष्टोमस्तस्य वायव्यास्वग्निष्टोमसाम ॥१॥**

अग्निष्टोमसंस्थस्त्रिवृत्स्तोमकस्तृतीयोऽग्निष्टुत् तस्य वायव्यास्वृत्तु गीयमानं वारवन्तीयमग्निष्टोमसाम कार्य्यं उपत्वाजामयोगिर इत्याद्या वायव्या ऋचः कल्पकारोक्ताः उपत्वाजामयो गिर इति वायव्यासु वारवन्तीयमग्निष्टोमसामेति ॥ १ ॥

अथास्मिन्नधिकारिणमाह ।

**ब्रह्मवर्चसकामो यजेत ॥ २ ॥**

स्पष्टं ॥ २ ॥

अथैतस्य त्रिवृत्स्तोमत्वं वायव्यास्वग्निष्टोमसाम्नः करणञ्च स्तौति ।

**तेजो वै त्रिवृद् ब्रह्मवर्चसं यद्वायव्यास्वग्निष्टोमसाम भवत्युपैवैनन्तद्धमति ॥ ३ ॥**

त्रिवृतस्तेजोब्रह्मवर्चसरूपत्वमुक्तं तस्मात्तत्स्तोमद्वारेणास्य ब्रह्मवर्चसहेतुत्वं अपि च वायव्यासु वायुदेवताकास्वृत्तु यदग्निष्टोमसाम भवति तदेनं यजमानमुपधमत्येव यथा लोहकारो लोहतः कीटमपनेतुं अग्नौ प्रास्यत इति तत्सम्बन्धिना वायुना

धमति एवं वायव्यास्तृचु करणं यजमानस्य पापधमनाय भवतीत्यर्थः ॥ ३ ॥

एतदेवाह ।

**यथा हिरण्यन्निष्टपेदेवमेनमग्निष्टुन्निष्टपति ॥ ४ ॥**

यथा येन खलु प्रकारेण हिरण्यं स्वर्णकारो निष्टपेत् मालिन्यापनयनार्थं एवमयमग्निष्टुद्यागो यजमानन्निष्टपति निष्टप्तं पापहीनं करोतीत्यर्थः ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सप्तदशाध्यायस्य

षष्ठः खण्डः ।

---

अथ सप्तमः खण्डः ।

अथ पशुकामस्यान्यमग्निष्टुतं विधत्ते ।

**एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो यजेत ॥ १ ॥**

एतस्यैवाग्निष्टुतो रेवतीषु रेवतीर्नः सधमाद इत्याद्यासु तृचु वारवन्तीयमग्निष्टोमसाम कृत्वा अनेनाग्निष्टुता पशुकामो यजेत ॥ १ ॥

अथास्य पशुसाधनत्वमुपपादयति ।

**जरत्कक्षो वा एष योऽपशुर्यथा वै जरत्कक्षे पशवो न रमन्त एवमेतस्मिन् पशवो न रमन्ते यो**

ऽपशुर्यदा वै जरत्कक्षमग्निर्दहत्यथैनमभिवर्षत्यथा-स्मिन्नोषधयो जायन्तेऽथ वै तस्मिन् पशवोरमन्ते ॥२॥

यो यजमानोऽपशुः पशुरहितः स जरत्कक्षो वै जीर्णतृणगुल्मसदृशः तदेव सादृश्यं दर्शयति यथा खलु जरत्कक्षे जीर्णतृणेऽरण्ये पशवो न रमन्ते खाद्यस्य बालतृणस्याभावान्नावतिष्ठन्ते एवमेव एतस्मिन् पुरुषे पशवो न रमन्ते योऽपशुः पशुरहितः तस्माज्जरत्कक्षसदृशोऽयं यजमानः यदा खलु एनं जरत्कक्षमग्निर्दहति भस्मसात्करोति अथानन्तरमेनं दग्धं जरत्कक्षं पर्ज्जन्यो वर्षति अथानन्तरमस्मिन्नोषधयस्तृणादयो जायन्ते अथानन्तरमेव तस्मिन् स्थाने पशवो रमन्ते एवमेवाग्निष्टुता दग्धपापः रेवतीषु गीयमानेन वारवन्तीयेन अपां रसात्मना संस्तुतेन संसिक्ते यजमाने पशवो रमन्त इत्यर्थः ॥ २ ॥

अथैतद्वेदनं प्रशंसति ।

रमन्तेऽस्मिन् पशवो य एवं वेद ॥ ३ ॥

स्पष्टोऽर्थः ॥ ३ ॥

अपशोर्यजमानस्य जरत्कक्षसाम्यमुक्तं अथास्यापशुत्वदाहकः कोऽग्निः केन जलेन सिच्यत इति तद्द्वयमाह ।

यदेवास्यापशव्यन्तदग्निष्टुन्निर्दहति यदग्निष्टुन्निर्दहति तदद्भीरेवतीभिः शमयति ॥ ४ ॥

रेवतीभिश्च वर्षणात् कोमलत्वयुक्तो नूतनत्वयुक्तश्च इव यजमानः पशूनामाश्रयो भवतीत्यर्थः ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सप्तदशाध्यायस्य

सप्तमः खण्डः।

---

अथ अष्टमः खण्डः।

यद्यग्निष्टोमादियज्ञं प्रारब्धवतो यजमानस्य कुतश्चिन्निमित्तात्समाप्त्यभावेन यज्ञो विच्छिन्नः स्यात् तदा यजमानो यज्ञाद्विभ्रष्टो भवेत् तस्य प्रायश्चित्तत्वेन ज्योतिष्टोमोऽग्निष्टुदनुष्ठेय इत्याह।

## ज्योतिष्टोमेनाग्निष्टुता यज्ञविभ्रष्टो यजेत ॥ १ ॥

स्पष्टोऽर्थः ॥ १ ॥

प्रारब्धेऽसमाप्यमाने च सोमयागे अनुष्ठेयानां प्रधानयागानां ऐन्द्रवायवादीनां बहिष्पवमानादीनां स्तोत्राणाञ्च मध्ये यदि किञ्चित्प्रमादाद्विस्मृतं स्यात् तदाप्ययं प्रायश्चित्तत्वेनानुष्ठेय इत्याह।

## यस्मिन् वा यज्ञक्रतौ विभ्रंशेत ॥ २ ॥

अथ वा यस्मिन् यज्ञक्रतौ सोमयागे प्रधानैकदेशविस्मरणात् विभ्रंशेत अनुष्ठेयाद्विभ्रष्टो भवेत् तत्राप्यनेन यजमानो ज्योतिरग्निष्टुता यजेतेति ॥ २ ॥

अथ केवलाग्नेयस्याग्निष्टुतोऽनुष्ठानं यज्ञविभ्रष्टस्योपपादयति ।

अग्निर्वा एतस्य हव्यमत्ति यो यज्ञे विभ्रꣳशते न देवता हव्यं गमयत्यग्निमेवैकधर्धोति ॥ ३ ॥

एतस्य यजमानस्य हव्यं हविश्च पुरोडाशसोमादिकं अग्नि-रेवात्ति भक्षयति यष्टव्या अन्या इन्द्राद्या देवता हव्यं न गमयति यो यजमानो यज्ञेऽनुष्ठीयमाने विभ्रंशते विभ्रष्टो भवेत् एतस्येति सम्बन्धः तथा चाग्निष्टुता एकधा एकप्रकारेण अग्निमेवर्ध्नोति हविर्भिः समर्द्धयति एवमग्निष्टुति कृते सति पश्चादन्या देवता हवींषि प्रापयतीत्यर्थः ॥ ३ ॥

अथ विभ्रष्टस्य यज्ञस्यासमाधाने फलप्राप्त्यभावं प्रायश्चि-त्तेन समाधाने तत्सद्भावञ्च सदृष्टान्तं दर्शयति ।

यद्वै सꣳशीर्य्यतेऽथान्यन्निष्कुर्वन्ति न तेन तद्याति यदा वाव तन्निष्कुर्वन्त्यथ तद्याति येष्वेव स्तोमेषु विभ्रꣳशेत यस्मिन् यज्ञक्रतौ तैरेव यजेत येष्वेव स्तोमेषु विभ्रꣳशते यस्मिन् यज्ञक्रतौ तेष्वेव प्रतिति-ष्ठति ॥ ४ ॥

यद्वै यत् खलु रथादिकं वाहनं संशीर्य्यते संशीर्णं भग्नं भवेत् अथानन्तरं तस्मात् संशीर्णात् अन्यद्वाहनं निष्कुर्वन्ति संस्कुर्वन्ति तत्तदानीं तेन पूर्व्वगामिना संशीर्णेन वाहनेन न याति न गच्छति यदा खलु तदेव संशीर्णं निष्कुर्वन्ति समा-

दधते तत्तदा तेनैव याति गच्छति यस्मादेवं लोके तस्माद् यस्मिन् सोमयागे येष्वेव स्तोमेषु प्रयोज्येषु त्रिवृदादिषु विस्रंसेत न्यूनाधिकसंख्यया स्वरूपविस्मरणादिना च विभ्रष्टो भवेत् तैरेव स्तोमैः साधनैः पुनर्यजेत तथाच विलुप्तानां प्रायश्चित्त-पूर्व्वकं पुनर्य्यागेन समाधानात् येष्वेव स्तोमेषु पूर्व्वं यजमानो विस्रंशते यस्मिन् सोमयागे तत्र तेष्वेव स्तोमेषु पुनः प्रतिष्ठितो भवति सम्पूर्णावयवोऽस्य यज्ञः फलसाधनाय समर्थो भवती-त्यर्थः ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सप्तदशाध्यायस्य

अष्टमः खण्डः ।

---

अथ नवमः खण्डः ।

अथान्यमग्निष्टुतमाह ।

**सप्तदशेनाग्निष्टुतान्नाद्यकामो यजेत ॥ १ ॥**

अत्तुमर्हमन्नं तत्कामयमानः सप्तदशेन सप्तदशस्तोमकेना-ग्निष्टुता यजेत ॥ १ ॥

अथैतस्यान्नसाधनत्वमुपपादयति ।

**अन्नं वै सप्तदशोऽग्निरन्नाद्यस्य प्रदाताग्निरे-वास्मा अन्नाद्यं प्रयच्छति ॥ २ ॥**

सप्तदशस्तोमोऽन्नं वै अन्नमेव अन्नाधारात् प्रजापतेर्म्मध्य-

देहादुत्पत्तेः अग्निश्चान्नाद्यस्य अदनीयस्यान्नस्य आहुतिद्वारा प्रदाता तथाच स्मर्य्यते अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते आदित्याज्जायते वृष्टिर्वृष्टेरन्नन्ततः प्रजा इति एवञ्चाग्नेः सप्तदशस्य चाग्निष्टुतिं संहत्य प्रयुक्तत्वात् अस्मै यजमानाय अग्निरेवान्नाद्यं प्रयच्छति दिशति ॥ २ ॥

अथैतद्वेदितुः फलमाह।

अन्नादो भवति य एवं वेद ॥ ३ ॥

स्पष्टोऽर्थः ॥ ३ ॥

अथोक्तसप्तदशस्तोमकत्वमनूद्य स्तौति।

सर्व्वः सप्तदशो भवति प्रजापतिर्वै सप्तदशः प्रजापतिमेवाप्नोति ॥ ४ ॥

सर्वेषु स्तोत्रेषु योयः स्तोमः स सर्व्वः सप्तदशो भवति स च सप्तदशः प्रजापतिर्व्वै प्रजापतिरेव द्वादशमासाः पञ्चर्त्तवः स संवत्सरः संवत्सरः प्रजापतिरिति श्रुतेः संवत्सरावयवमासर्त्तुसंख्यासाम्यात् सप्तदशस्य संवत्सरात्मकत्वं स च संवत्सरः प्राजापत्यात्मक इति सप्तदश एव प्रजापतिरिति व्यपदिश्यते तथा च सप्तदशस्तोमेनानेन प्रजापतिमेवाप्नोति ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सप्तदशाध्यायस्य
नवमः खण्डः।

---

अथ दशमः खण्डः ।

अग्निष्टुतो यज्ञाः, पञ्च षट् वा एकाहा इति, अथ त्रयस्त्रिंशत एकाहाः प्रजापतेरपूर्व्वौ बृहस्पतिसवः सर्व्वस्वार इति तत्र प्रथमं दर्शयति ।

त्रिवृदग्निष्टोमस्तस्यानिरुक्तं प्रातःसवनं ॥ १ ॥

त्रिवृत्स्तोमकोऽग्निष्टोमसंस्थोऽयमेकाहस्तस्य प्रातःसवनं सर्व्वमनिरुक्तं बहिष्पवमानादिषु प्रातःसवनेषु पञ्चसु स्तोत्रेषु गायत्रं सामानिरुक्तं गेयमित्यर्थः उद्गाता स्वभक्तिमुद्गीथमुपद्रवञ्च मनसा प्रयुञ्जानः स्वभक्तिसदृशं ओङ्कारं कृत्वा तं वाचा ब्रूयादिति अनिरुक्त इत्यस्य लक्षणं तथा च सूत्रकारेणोक्तं मनसा तु स्वभक्तिमोङ्कारं तथा स्वरं वाचा गायेदिति ॥ १ ॥

अथैतदनिरुक्तं स्तोतुमाह ।

प्रजापतिः प्रजा असृजत ता अस्मात्सृष्टा अपाक्रामन् स एतदनिरुक्तं प्रातस्सवनमपश्यत्तेनासां मध्यं व्यवैत्ता एनमुपावर्त्तन्त पर्य्यैनमाविशन् ॥ २ ॥

पुरा प्रजापतिः प्रजानामधिपतिः स्रष्टा प्रजा असृजत सृष्टवान् ताश्च सृष्टा अस्मात्प्रजापतिसकाशात् अपाक्रामन् अपगता आसन् ततः स प्रजापतिः एतदनिरुक्तं उक्तप्रकारेण प्रयोज्यं प्रातःसवनमपश्यत् तेन च प्रातःसवनेनासां प्रजानां मध्यदेशं व्यवैत् विशेषेणागच्छत् ताश्च प्रजाः एनं प्रजापतिमुपावर्त्तन्त

उपागच्छन् उपागत्य च एनं पर्य्यविशन् परितो निषणा आसन् ॥ २ ॥

यस्मादेवं तस्मात् एतदनिरुक्तं प्रातःसवनं प्रशस्तमिति दर्शयन् अस्मिन्नधिकारिणमाह।

ग्रामकामो यजेत यदेतदनिरुक्तं प्रातःसवनं भवति मध्यमेवासां व्यवैत्युपैनमावर्त्तन्ते पर्य्येनं विशन्ति ॥३॥

ग्रामकामो यजमानोऽनेनैकाहेन यजेत तस्य चैतत् प्रातःसवनं यद्यस्मादनिरुक्तं भवति तेन आसां प्रजानां मध्यमेव व्यवैति प्राप्नोति एनं यजमानं ताश्च प्रजा उपावर्त्तन्ते उपगच्छन्ति उपगत्य च एनं परितो निषीदन्ति ॥ ३ ॥

अथास्य संज्ञां प्रदर्श्य तद्वेदितुः फलमाह।

स एष प्रजापतेरपूर्वो नास्मात् पूर्वो भवति य एवं वेद ॥ ४ ॥

स एष यज्ञः प्रजापतेरपूर्व्वोनाम प्रजापतेरनेनापूर्व्वता तस्मात् पूर्व्वभाविना पुरुषान्तरेण राहित्यं प्राप्तवानिति व्युत्पत्त्या प्रजापतेरपूर्व्व इत्यस्य संज्ञा जाता अतो यएतां संज्ञां वेद जानाति अस्मात् पूर्व्वः कोऽपि न भवति सर्व्वेषां स्वयं ज्येष्ठो भवतीत्यर्थः ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सप्तदशाध्यायस्य

दशमः खण्डः।

अथ एकादशः खण्डः ।

अथ बृहस्पतिसवाख्यमेकाहं प्रस्तौति ।

## त्रिवृदग्निष्टोमः ॥ १ ॥

त्रिवृत्स्तोमकोऽग्निष्टोमसंस्थो बृहस्पतिसवाख्य एकाहः ॥१॥

अथास्य त्रयस्त्रिंशद्गावश्चतुस्त्रिंशएकोऽश्व इति दक्षिणा विधिस्तु तासां सवनत्रये विभज्य दानप्रकारमाह ।

**तस्य प्रातस्सवने सन्नेषु नाराशꣳसेष्वेकादश-दक्षिणाव्यादिशत्यश्वद्वादशा माध्यन्दिने ता उभयो-रपाकरोत्येकादश तृतीयसवने ता वशायामपाक-रोति ॥ २ ॥**

तस्य सोमयागस्य प्रातःसवने नाराशंसेषु कृतशिष्टा भक्षिता आप्यायितास्वमसा नाराशंसाः तत्र प्रातःसवनमाध्यन्दिनसवने द्विनाराशंसे तृतीयसवनं त्वेकनाराशंसं तत्र प्रथमेषु नाराशं-सेषु सन्नेषु सादितेषु सत्सु एकादशसङ्ख्या दक्षिणा गावो दिशति युष्मदर्थमेता गाव इति ऋत्विग्भ्यो निर्दिशेदित्यर्थः तथा माध्य-न्दिनसवने सन्नेषु नाराशंसेषु अश्वद्वादशाः अश्वो द्वादशसङ्ख्या-पूरको यासां ता अश्वद्वादशा एकादशदक्षिणा व्यादिशति उभयोः उभयविधाः प्रातःसवने माध्यन्दिनसवने च व्यादिष्टा-स्ताः गा अपाकरोति पृथक्करोति ऋत्विग्भ्यो दद्यादित्यर्थः एवञ्च प्रातःसवने व्यादेशमात्रमेव न तु दानमित्युक्तं भवति तथा

तृतीयसवने सन्नेषु नाराशंसेष्वेकादशदक्षिणा गाः व्यादिशति ऋत्विग्भ्यो युष्मदर्थं एतदिति निर्दिशेदित्यर्थः ता एकादशसंख्याका वशायां मैत्रावरुणीवशा ह्यनूबन्ध्या तस्यां वशायां कृतायां अपाकरोति पृथक्करोति ऋत्विग्भ्यो दद्यादित्यर्थः ॥ २ ॥

अथैताः संहत्य विधाय स्तौति ।

त्रयस्त्रिꣳशदेता दक्षिणा भवन्ति त्रयस्त्रिꣳशद्देवता देवता एवाप्नोत्यश्वश्चतुस्त्रिꣳशो दक्षिणानां प्रजापतिश्चतुस्त्रिꣳशो देवतानां प्रजापतिमेवाप्नोति ॥ ३ ॥

एतास्त्रयस्त्रिंशद्गावो अस्य क्रतोर्दक्षिणा भवन्ति त्रयस्त्रिंशत् संख्या हि देवताः अष्टौ वसव इत्याद्यास्तथा च दक्षिणार्थं त्रयस्त्रिंशत्संख्या देवता यजमानः प्राप्नोति तथा तासां दक्षिणानां चतुस्त्रिंशश्चतुस्त्रिंशत्संख्यापूरको अश्वो देयः देवतानां वस्वादीनां प्रजापतिश्चतुस्त्रिंशश्चतुस्त्रिंशत्संख्यापूरकः तथा च चतुस्त्रिंशेनाश्वेन चतुस्त्रिंशं प्रजापतिमेवाप्नोति ॥ ३ ॥

अथैतस्य बृहस्पतिसव इति संज्ञां विधाय तं निर्वक्तुमाह।

स एष बृहस्पतिसवो बृहस्पतिरकामयत देवानां पुरोधां गच्छेयमिति स एतेनायजत स देवानां पुरोधामगच्छत् ॥ ४ ॥

स एष एकाहो बृहस्पतिसव इत्याख्यायते पुरा खलु बृह-

स्पतिरकामयत किमिति देवानामिन्द्रादीनां पुरोधां पौरोहित्यं गच्छेयं प्राप्नुयामिति एवं कामयित्वा सोऽनन्तरं एतेन यज्ञेनेष्टवान् सचैतस्य माहात्म्येन देवानां पुरोधां प्राप्नोत् तस्मादस्य बृहस्पतिसव इति संज्ञा जाता ॥ ४ ॥

अथैतद्वेदनफलमाह ।

गच्छति पुरोधां य एवं वेद ॥ ५ ॥

स्पष्टं ॥ ५ ॥

राज्ञा सह ब्राह्मणाः यं ब्राह्मणं धर्म्मस्थापकत्वेन वृणीरन् सस्थपतिरित्युच्यते तेन प्राप्तस्थापत्येन पुंसा नैमित्तिकत्वेनायमनुष्ठेय इत्याह ।

स एष स्थपतिसवो यꣳ स्थापत्यायाभिषिञ्चेरन् स एतेन यजेत ॥ ६ ॥

स एष यज्ञः स्थपतिसवः स्थपतिनानुष्ठेयः अतो यं ब्राह्मणं स्थापत्याय स्थपतित्वाय अभिषिञ्चेरन् राजपुरःसरा ब्राह्मणा वृणीरन् सोऽयमेतेन बृहस्पतिसवेन यजेत यथा लब्धहिरण्यस्य नैमित्तिकेष्टिः तद्वत्प्राप्तस्थापत्यस्यायं निमित्तको यज्ञश्चोदित इत्यर्थः ॥ ६ ॥

अथैतद्वेदनं प्रशंसति ।

गच्छति स्थापत्यं य एवं वेद ॥ ७ ॥

स्पष्टोऽर्थः ॥ ७ ॥

येषु सोमयागेषु यजमानोऽभिषिक्तोऽस्ति तेषां सव इत्याख्या अस्यापि बृहस्पतिसव इति सवशब्दाभिधेयत्वादभिषेकः कार्य्य इत्याह ।

**कृष्णाजिनेऽध्यभिषिच्यत एतद् वै प्रत्यक्षं ब्रह्म-वर्च्चसं ब्रह्मवर्चस एवाध्यभिषिच्यते ॥ ८ ॥**

कृष्णाजिनं कृष्णमृगत्वक् तस्यां समासीनो यजमानोऽभि-षेक्तव्यः एतत् खलु कृष्णाजिनं प्रत्यक्षं साक्षाद् ब्रह्मवर्च्चसं ऋक्-सामे हि पुरा देवेभ्यः कुतश्चिन्निमित्तादपक्रान्ते कृष्णमृगरूप-मास्थाय पर्य्यचरतां तथा च तैत्तिरीयके ऋक्सामे वै देवस्य इत्यादिना कृष्णाजिनस्य ब्रह्मवर्च्चसरूपत्वं विस्पष्टमाम्नातं तथा तत्रैव बृहस्पतिसववाक्यशेष एवमाम्नायते ब्रह्मणो वा एष ऋक्-सामयोरूपं यत् कृष्णाजिनमिति एवञ्च कृष्णाजिनस्य ब्रह्म-वर्च्चसरूपत्वात् ब्रह्मवर्चस एवोपविष्टोऽभिषिच्यते ॥ ८ ॥

अथाभिषेकसाधनद्रव्यं दर्शयति ।

**आज्येनाभिषिच्यते तेज आज्यन्तेज आत्म-न्धत्ते ॥ ९ ॥**

आज्येन घृतेनाभिषिच्यते तच्चाज्यं तेजस्तेजोरूपं आग्ने-यस्य तेजसः शारीरस्य चाग्निरूपत्वात् तथा च आत्मन् आत्मनि तेजोधत्ते यजमानो धारयति एवञ्च ब्रह्मवर्च्चसकाम-

स्तेजस्कामो वा अनेन यजेतेति अधिकारविधिर्ज्ञेयः ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे सप्तदशाध्यायस्य
एकादशः खण्डः ।

---

अथ द्वादशः खण्डः ।

अथान्यं त्रिवृदग्निष्टुतमेकाहमाह ।

त्रिवृदग्निष्टोमः स सर्व्वस्वारो यः कामयेतानामयतामुं लोकमियामिति स एतेन यजेत ॥ १ ॥

त्रिवृत्स्तोमकोऽग्निष्टोमसंस्थोऽपर एकाहः स च सर्व्वस्वारः स्वरनिधनान्येव सर्व्वाणि सामानि यस्य स तथोक्तः योऽयं यजमानः कामयेत किमिति अनामयता आमयरहितेनैव देहेन व्याध्यादिराहित्येन सुखेनावस्थितादेव देहान्निष्क्रम्य अहं स्वर्गं लोकं इयां प्राप्नुयामिति स यजमान एतेन यज्ञेन यजेत स्वर्गकामोऽस्मिन्नधिकारीत्यर्थः ॥ १ ॥

अथ स्तोमनिधनद्वारेणास्योत्पत्तिफलानुगुण्यं दर्शयति ।

प्राणो वै त्रिवृत्प्राणाः स्वरः प्राणानेवास्य बहिर्णिराद्धाति ताजक् प्रमीयते ॥ २ ॥

योऽयं त्रिवृत्स्तोमः स प्राणो वै प्राणात्मकः प्राणवायुर्मुखदेशे वर्त्तते त्रिवृच्च प्रजापतिमुखादुत्पन्न इति मुखसम्बन्धसाम्यात् ताच्छन्द्यं स्वरः स्वर्य्यमाणो यो यः सामान्तः सोऽपि

प्राणस्तुतः एवं प्राणात्मनोस्त्रिवृत्स्वरयोः सर्व्वस्तोत्रेषु प्रयोगात् अस्य यजमानस्य प्राणान्मुख्यप्राणसहितांश्चक्षुरादीन्द्रियात्मकान् बहिर्णिरादधाति शरीरान्निष्क्रम्य बहिरेव स्थापयति तथा च ताजक् तस्मिन्नेव काले प्रमीयते स यजमानोम्रियते ॥ २ ॥

अथैतौ स्तोमस्वरौ वियुज्य स्तौति ।

त्रिवृद्वै स्तोमानां क्षेपिष्ठो यत्त्रिवृद्भवत्याशीयः सङ्गच्छाता इत्यनन्तो वै स्वरोऽनन्तोऽसौ लोकोऽनन्तमेवैनꣳ स्वर्गं लोकं गमयति ॥ ३ ॥

स्तोमानाम्मध्ये त्रिवृत्स्तोमः खलु क्षेपिष्ठः क्षेप्तृतमः वज्रो वै त्रिवृदित्यादि श्रुत्या वज्रात्मना संस्तुतत्वात् तथा च त्रिवृत्-स्तोमः अस्मिन् यज्ञे सर्व्वस्तोत्रेषु भवति तत आशीयः आशुतरं अतिशीघ्रेण संगच्छातौ स्वर्गं लोकं प्राप्नोतु यजमान इत्येतदर्थं तथा स्वरोऽनन्तो वै अन्तरहितः अवसानरहितः असौ स्वर्गो-लोक अनन्तोऽन्तरहितः एवञ्चानन्तेन स्वरेण अनन्तं स्वर्गं लोकमेव गमयति प्रापयति ॥ ३ ॥

अथास्मिन् यज्ञे स्तोत्रीया विधाय स्तौति ।

अभिवत्यः प्रवत्यो भवन्त्यस्मादेवैनं लोकात् स्वर्गं लोकं गमयन्ति ॥ ४ ॥

अभिवत्यो अभिशब्दयुक्ताः प्रवत्यः प्रशब्दयुक्ताश्च स्तोत्रीया भवेयुः ताश्च कल्पकारेण प्रसोमासो अधन्विषुः प्रस्थानासो-

रथाद्वीपप्रयन्तो अच्छ्र प्रवोमित्राय गायत अभिद्युम्नं बृहद्यश इत्याद्याः कृताः तौ चोपसर्गौ गमनप्रकर्षेण गमनाभिमुख्यं द्योतयतः तथा चास्मादेव भूलोकात् एनं यजमानं स्वर्गं लोकं गमयन्ति अभिवतीभिः प्रवतीभिश्च प्रापयन्ति ॥ ४ ॥

अथ यजमानस्य मरणार्थं सङ्गमनं विधत्ते।

आर्भवपवमाने स्तूयमान औदुम्बर्य्यां दक्षिणा प्रावृतो निपद्यते तदेव सङ्गच्छते ॥ ५ ॥

तृतीयसवन आर्भवपवमान उद्गातृभिः स्तूयमाने सदोमध्ये निखातायाः औदुम्बर्य्याः दक्षिणा दक्षिणतः दक्षिणादेशे आहतेन वाससा प्रावृतः वेष्टितसर्व्वदेहः दक्षिणाभिमुखो निपद्यते शयीत तदानीमेव सङ्गच्छते म्रियते ॥ ५ ॥

अथैतस्य यागस्य व्यवहारार्थन्नाम दर्शयति।

स एष शुनस्कर्णस्तोम एतेन वै शुनस्कर्णो बाष्किहोऽयजत तस्माच्छुनस्कर्णस्तोम इत्याख्यायते ॥ ६ ॥

स एष यागः शुनस्कर्णस्तोमसंज्ञकः एतदेव निब्रियते एतेन वा इत्यादिना एतेन खलु यागेन बाष्किहः वष्किहस्य पुत्रः शुनस्कर्णोनाम ऋषिः अयजत इष्टवान् तस्मात् शुनस्कर्णसम्बन्धात् अयं यागः शुनस्कर्णस्तोम इत्याख्यायते ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे सप्तदशाध्यायस्य द्वादशः खण्डः।

अथ त्रयोदशः खण्डः ।

अथ शाखान्तरोक्तानि सन्ति चातुर्मास्यानि वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाणि चत्वारि पर्व्वाणि, तानि च द्विविधानि ऐष्टिकानि सौमिकानि चेति, तत्र सौमिकानामतः परं विधिः, तत्र प्रथमस्य वैश्वदेवाख्यस्य पर्व्वणः स्थाने कर्त्तव्यं सोमयागन्दर्शयति ।

त्रिवृदग्निष्टोमो वैश्वदेवस्य लोकः ॥ १ ॥

त्रिवृत्स्तोमकोऽग्निष्टोमसंस्थः सोमयागः वैश्वदेवस्य वसन्तेऽनुष्ठेयस्य ऐष्टिकस्य वैश्वदेवाख्यस्य प्रथमपर्व्वणः स्थाने कर्त्तव्यः ॥ १ ॥

अथ तत्प्रतिपदृचं सवनीयानुबन्ध्यापशोर्देवताविशेषं दर्शयति ।

आग्नेयी प्रतिपद् वैश्वदेवः पशुर्बार्हस्पत्यानूबन्ध्या ॥ २ ॥

आग्नेयी अग्निदेवत्या अग्न आयूंषि पवस इत्येषा बहिष्पवमानस्य प्रतिपत् प्रथमा स्तोत्रीया भवति योऽयमतिदेशतः प्राप्तः सवनीयः पशुः स वैश्वदेवः विश्वेभ्यो देवेभ्यः कार्य्यः योऽयमनूबन्ध्या वशा चोदकतः प्राप्ता सा बार्हस्पत्या बृहस्पतिदेवत्या कार्य्या ॥ २ ॥

अथ चोदकप्राप्तं किञ्चिन्निषेधयति ।

न यूपं मिन्वन्ति नोत्तरवेदिन्निवपन्ति ॥ ३ ॥

न यूपम्मिन्वन्ति प्रक्षिपन्ति न खनेयुर्न्नोहर्त्तव्यो यूप इत्यर्थः तथा उत्तरवेदिमपि न निवपन्ति सापि चात्वालपांशुभिर्वेदिकारूपेण न कार्य्येत्यर्थः ॥ ३ ॥

कथं तर्हि यूपाभावे पशुनियोजनमित्यत आह ।

परिधौ पशुन्नियुञ्जन्ति ॥ ४ ॥

पशुनियोजनक्षमं स्थूलं यज्ञीयकाष्ठं परिधित्वेन कृत्वा तस्मिन्नञ्जनादिसंस्कृते पशुर्नियोक्तव्य इत्यर्थः ॥ ४ ॥

अथ दक्षिणापरिमाणं विधत्ते ।

पञ्चाशद्दक्षिणा ॥ ५ ॥

पञ्चाशत्सङ्ख्याका गावोऽस्मिन्नहनि दक्षिणात्वेन देया इत्यर्थः ॥ ५ ॥

अथ यजमानेनानुष्ठेयं व्रतं दर्शयति ।

अहतं वसानोऽवभृथादुदैति चतुरोमासो न मांसमश्नाति न स्त्रियमुपैति ॥ ६ ॥

अहतमप्रहतं नूतनं वासोवसान आच्छादनमवभृथात् अवभृथस्नानानन्तरं जलमध्यादुदैति उद्गच्छति तदनन्तरं चतुरोमासो न मांसं चतुष्टयमासपर्य्यन्तं मांसाशनन्न कार्य्यं तथा स्त्रीसङ्गतिश्च वर्जनीया ॥ ६ ॥

अथ द्वितीयस्य वरुणप्रघासाख्यस्य पर्व्वणः स्थाने कर्त्तव्यं सोमयागमाह ।

ततश्चतुर्षु मासेषु वरुणप्रघासानां लोके द्विदिवः ॥ ७

ततो वैश्वदेवस्थानिकात् त्रिवृदग्निष्टोमादनन्तरं मासचतुष्टये सम्पूर्णे वरुणप्रघासानां स्थाने द्विदिवः द्वयोर्दिवसयोरह्नोः समाहारः द्विरात्रः सोमयागोऽनुष्ठेय इत्यर्थः ॥ ७ ॥

तत्र प्रथमेऽहनि प्रतिपद्विशेषं सवनीयपशुदेवताञ्च दर्शयति ।

वारुणी प्रतिपन्मारुतः पशुः ॥ ८ ॥

वारुणी वरुणदेवत्या इमम्मे वरुणेत्येषा वहिष्पवमानस्य प्रथमा भवति योऽयमग्नीदकप्राप्तः सवनीयः पशुः स मारुतो मरुद्देवत्यः कार्य्यः ॥ ८ ॥

अथ द्वितीयेऽहनि प्रतिपत्पशुदेवते दर्शयति ।

कवती प्रतिपद्वारुणः पशुः ॥ ६ ॥

कया त्वन्न ऊत्येति कशब्दवती अन्यत् पूर्व्ववद्योज्यं ॥ ६ ॥

पूर्व्वं हि वैश्वदेवस्थानिके त्रिवृदग्निष्टोमे अनूबन्ध्यस्य पशोर्दैवतान्तरं यूपराहित्यं उत्तरवेदिनिवपनराहित्यञ्च दृष्टं तद्वदत्रापि स्यादित्यादिशङ्कां निरसितुमाह ।

मैत्रावरुण्यनूबन्ध्या मिन्वन्ति यूपं न्युत्तरवेदिं वपन्ति यपे पशून् नियुञ्जन्ति ॥ १० ॥

अनूबन्ध्या वशा प्रकृतिवदेव मैत्रावरुणदेवत्या कार्य्या तथा प्रकृतिवदेव यूपकारणमुत्तरवेदिनिवपनं कार्य्यं अतो यूपसद्भावात् यूपे एव द्वयोरङ्गोः सवनीयपशू नियोक्तव्यौ न पूर्ववत् परिधौ ॥ १० ॥

अथ दक्षिणासंख्यां प्रागुक्तानि व्रतानि च एतदनुष्ठानानन्तरमपि कार्य्याणीति दर्शयति ।

शतं दक्षिणा अह्नतं वसानोऽवभृथादुदैति चतुरोमासो न माꣳसमश्नाति न स्त्रियमुपैति ॥ ११ ॥

शतसंख्यागावो दक्षिणाः प्रत्यहं पञ्चाशत् पञ्चाशदित्यर्थः अन्यत् पूर्व्ववद्योज्यं ॥ ११ ॥

अथ साकमेधाख्यस्य तृतीयस्य पर्व्वणः स्थानेऽनुष्ठेयं सोमयागमाह ।

ततश्चतुर्षु मासेषु साकमेधानां लोके त्रिरात्रः॥१२॥

ततो वरुणप्रघासस्थाने द्विरात्रः अनन्तरं चतुर्षु मासेषु संपूर्णेषु अनुष्ठेयसाकमेधानां स्थाने त्रिरात्रः सोमयागः कार्य्यः ॥ १२ ॥

अथ तेषु त्रिष्वहःसु प्रतिपत्पशुदेवतादिकं दर्शयति ।

अनीकवती प्रतिपदाग्नेयः पशुर्न्मरुत्वती प्रतिपदैन्द्राग्नः पशुर्वैश्वकर्म्मणी प्रतिपदेकादशिनीपशवः

सौर्य्यानूबन्ध्या मिन्वन्ति यूपं न्युत्तरवेदिं वपन्ति यूपे पशून् नियुञ्जन्ति पञ्चाशच्छतं दक्षिणा ॥ १२ ॥

अनीकवती वायोरनीके अस्थिरन्निति अनीकशब्दप्रयुक्ता उपत्वा जामयोगिर इत्येषा त्रिरात्रस्य प्रथमेऽहनि बहिष्पवमानस्य प्रतिपत् प्रथमा स्तोत्रीया भवति सवनीयः पशुः प्रकृतिवदाग्नेयोऽग्निदेवत्यः कार्य्यः द्वितीयेऽहनि तु इन्द्रायेन्दो मरुत्वत इति मरुच्छब्दयुक्ता प्रतिपद्भवति तत्र सवनीयः पशुः ऐन्द्राग्नः इन्द्राग्निदेवताकः कार्य्यः तृतीयेऽहनि विश्वकर्मन् हविषा वावृधान इत्येषा वैश्वकर्मणी विश्वकर्मदेवत्या बहिष्पवमानस्य प्रतिपत् सवनीयपशोः स्थाने एकादशिनीपशवः कार्य्याः ते चाग्नेयः कृष्णग्रीवः सारस्वती मेषीत्यादिना तैत्तिरीयके समाम्नाताः अनूबन्ध्या वशा सौरी सूर्य्यदेवत्याः कार्य्याः अस्मिन् त्रिरात्रे पूर्ववद् यूपकरणं उत्तरवेदिनिवपनं कार्य्यं तथा यूपे एव प्रागनुक्रान्ताः पशवो नियोक्तव्याः अस्य च त्रिरात्रस्य पञ्चाशदधिकं शतङ्गावो दक्षिणा प्रत्यहं पञ्चाशत् पञ्चाशत् दक्षिणा इत्यर्थः ॥ १२ ॥

अथ पूर्ववद्यजमानस्य व्रतानि दर्शयति ।

अहतं वसानोऽवभृथादुदैति चतुरोमासो न मांसमश्नाति न स्त्रियमुपैति ॥ १४ ॥

पूर्ववद्योज्यं ॥ १४ ॥

अथ शुनासीरीयाख्यस्य चतुर्थपर्व्वणः स्थानेऽनुष्ठेयं सोमयागमाह।

ततश्चतुर्षु मासेषु शुनासीर्य्यस्य लोके ज्योतिष्टोमोऽग्निष्टोमः॥ १५॥

ततः साकमेधस्थानीयत्रिरात्रानुष्ठानानन्तरं चतुर्षु मासेषु सम्पूर्णेषु सुनासीरीयस्य पर्व्वणः स्थाने ज्योतिष्टोमोऽग्निष्टोमः सोमयागः कार्य्यः त्रिवृत्पञ्चदशसप्तदशैकविंशस्तोमकोऽग्निष्टोमसंस्थः प्रकृताग्निष्टोमसदृशोऽन्यः सोमयागः कार्य्य इत्यर्थः॥१५॥

अत्र पूर्व्ववत् प्रतिपत्पशुदेवतादिकं दर्शयति।

उपवती प्रतिपद्वायव्यः पशुराश्विन्यनूबन्ध्या मिन्वन्ति यूपं न्युत्तरवेदिं वपन्ति यूपे पशून् नियुञ्जन्ति द्वादशं शतं दक्षिणाः॥ १६॥

उपास्मै गायतानर इत्येषा उपवती उपशब्दयुक्ता प्रतिपद्भवति वायव्यो वायुदेवत्यः सवनीयः पशुः अश्विदेवत्या अनूबन्ध्यापशोर्द्वादशाधिकं शतङ्गावो दक्षिणाः शिष्टं पूर्व्ववत्॥१६॥

अथैतेन चातुर्म्मास्येनेष्टवतः फलमाह।

अग्निः संवत्सरः सूर्य्यः परिवत्सरश्चन्द्रमा इदावत्सरो वायुरनुवत्सरोऽग्निं संवत्सरं वैश्वदेवेनाप्नोति

सूर्य्यं परिवत्सरं वरुणप्रघासैश्चन्द्रमसमिदावत्सरᳫ साकमेधैर्वायुमनुवत्सरᳫ शुनासीर्य्येण ॥ १७ ॥

अयमर्थः प्रभवविभवद्दूत्यारभ्य पञ्चशः पञ्चशो विभक्ता ये वत्सरा स्तेषां क्रमेण संवत्सरपरिवत्सरेदावत्सरानुवत्सरोदावत्सर-शब्दा वाचकाः, तथा चोक्तं चान्द्रायणैः प्रभवादीनां पञ्चके युगे संपरोदान्विदेत्येतच्छब्दपूर्वास्तु वत्सरा इति तत्र यः संवत्सरः प्रथमः सोऽग्निः अग्न्यात्मकः परिवत्सराख्यो द्वितीयः सूर्य्यात्मक इदावत्सरस्तृतीयश्चन्द्रात्मकः अनुवत्सराख्यश्चतुर्थो वाय्वात्मकः तथा चाग्न्यात्मकं संवत्सरं वैश्वदेवेन वैश्वदेवस्थाने सोमयागेनाप्नोति सूर्य्यात्मकं परिवत्सरं वरुणप्रघासैः वरुणप्रघासस्थानीयेन द्विरात्रेणाप्नोति चन्द्रात्मकमिदावत्सरं शुनासीर्य्येण तत्स्थानेऽनुष्ठेयेन सोमयागेनाप्नोति ॥ १७ ॥

अथ लोकत्रयप्राप्तिफलतया स्तौति ।

हविर्य्यज्ञैर्वै देवा इमं लोकमभ्यजयन्नन्तरिक्षं पशुमद्भिः सामैरमुमिमानेवैतेन लोकानाप्नोत्येषु लोकेषु प्रतितिष्ठति य एवं वेद ॥ १८ ॥

यज्ञास्त्रिविधाः चरुपुरोडाशादिलक्षणेनौषधेन हविषा साध्याः पशुसाध्याः सोमसाध्याश्चेति तत्र हविर्य्यज्ञैः केवलचरुपुरोडाशादिसाध्यैर्य्यज्ञैः पुरा देवा इमं भूलोकमभ्यजयन् अन्तरीक्षलोकं पशुमद्भिः पशुसाध्यैर्य्यागैः तथा सोमैः सोम-

यागैः अमुं स्वर्गलोकमभ्यजयन् एवञ्च उक्तत्रिविधयज्ञसङ्घात्मकत्वात् उक्तानाञ्चातुर्म्मास्यानान्तैरिमानेव पृथिव्यादिकान् तीन् लोकानाप्नोति एषु लोकेषु प्रतिष्ठितो भवति य एवं ब्राह्मणार्थं वेद जानाति ज्ञात्वा चानुतिष्ठतीत्यर्थः ॥ १८ ॥

इति ताण्ड्यमहाब्राह्मणे सप्तदशाध्यायस्य

त्रयोदशः खण्डः ।

---

अथ चतुर्द्दशः खण्डः ।

अथैषां चातुर्म्मास्यानान्निरतिशयफलसाधनत्वं वक्तुमग्निहोत्रादिकर्म्मणां सातिशयफलत्वमाह ।

यदाग्निहोत्रञ्जुहोत्यथ दशगृहमेधिन आप्नोत्येकया रात्र्या, यदा दशसंवत्सरानग्निहोत्रञ्जुहोत्यथ दर्शपूर्णमासयाजिनमाप्नोति, यदा दशसंवत्सरान् दर्शपूर्णमासाभ्यां यजतेऽथाग्निष्टोमयाजिनमाप्नोति ॥१॥

अथ खण्डसमाप्तेः पाठोज्ञातव्यः, यदा यस्मिन् काले अग्निहोत्रं जुहोति अग्निहोत्रहोमङ्करोति अथानन्तरं दशगृहमेधिनः गार्हस्थ्यकर्म्मानुष्ठायिनो ये ब्राह्मणास्तैर्दशसंख्याकैर्यत् सुकृतमुपार्ज्यते तदेकया रात्र्या एकस्मिन्दिनेऽनुष्ठितेनाग्निहोत्रेण प्राप्नोति लभते यदा दशसंवत्सरपर्य्यन्तं अग्निहोत्रं जुहोति अथानन्तरं दर्शपूर्णमासयाजिनं सक्तदर्शपूर्णमा-

साभ्यामिष्टवतो यत् फलन्तत् प्राप्नोति यदा दशसंवत्सरपर्यन्तन्दर्शपूर्णमासाभ्यां यजते अथानन्तरं अग्निष्टोमयाजिनं अग्निष्टोमेन सोमयागेनेष्टवतो यत् फलं तत् प्राप्नोति ॥ १ ॥

यदा दशभिरग्निष्टोमैर्य्यजतेऽथ सहस्रयाजिनमाप्नोति यदा दशभिः सहस्रैर्य्यजतेऽथायुतयाजिनमाप्नोति यदा दशभिरयुतैर्य्यजतेऽथ प्रयुतयाजिनमाप्नोति यदा दशभिः प्रयुतैर्य्यजतेऽथ नियुतयाजिनमाप्नोति यदा दशभिर्न्नियुतैर्य्यजतेऽथार्बुदयाजिनमाप्नोति यदा दशभिरर्बुदैर्य्यजतेऽथ न्यर्बुदयाजिनमाप्नोति यदा दशभिर्न्यर्बुदैर्य्यजतेऽथ निखर्वकयाजिनमाप्नोति यदा दशभिर्न्निखर्वकैर्य्यजतेऽथ बद्वयाजिनमाप्नोति यदा दशभिर्बद्वैर्य्यजतेऽथाक्षितयाजिनमाप्नोति यदा दशभिरक्षितैर्य्यजतेऽथ गौर्भवति यदा गौर्भवत्यथाग्निर्भवति यदाग्निर्भवत्यऽथ संवत्सरस्य गृहपतिमाप्नोति ॥ २ ॥

यदा खलु दशसंख्यैरग्निष्टोमैर्यजते अथानन्तरं सहस्रयाजिनं सहस्रदक्षिणक्रतुनेष्टवन्तं यजमानमाप्नोति यदा खलु दशसंख्याकैः सहस्रदक्षिणैर्य्यजते सहस्रः कथितः अयुतः कथितः अथानन्तरं अयुतयाजिनं अयुत दक्षिणेन पौण्डरी-

कादिनेष्टवन्तं यजमानमाप्नोति यदा पुनर्दशभिर्दशसंख्याकैर-युतदक्षिणैर्यजते अथानन्तरं अयुतयाजिनमाप्नोति दशगुणित-मयुतं अयुतं एवं नियुतार्बुदादिषु उत्तरोत्तरं दशगुणिता संख्या द्रष्टव्या यदा दशभिः अयुतदक्षिणैः क्रतुभिर्यजते अथनियुतद-क्षिणेनेष्टवन्तं प्राप्नोति यदा खलु दशसंख्याकैर्नियुतदक्षिणैर्यजते अथानन्तरं अर्बुददक्षिणेनेष्टवतः फलमाप्नोति यदा खलु दश-संख्याकैरर्बुददक्षिणैर्यजतेऽथानन्तरं न्यर्बुदयाजिनं न्यर्बुदद-क्षिणेनेष्टवन्तमाप्नोति यदा पुनर्दशसंख्याकैर्न्यर्बुददक्षिणैर्यजते अथ निखर्वकयाजिनं निखर्वकदक्षिणेनेष्टवन्तं यजमानमा-प्नोति यदा खलु दशभिर्निखर्वकसंख्यदक्षिणैर्यजते अथान-न्तरं बद्वयाजिनं बद्वसंख्यदक्षिणेन यागेनेष्टवन्तमाप्नोति यदा दशभिर्बद्वसंख्याकदक्षिणैर्यजेते अथानन्तरं अक्षितयाजिनं स न क्षीणः सर्वेभ्योऽधिका संख्या यस्याः परं संख्यान्तर-न्नास्ति अक्षितशब्देन सा संख्योच्यते अक्षितदक्षिणेन यज्ञेन इष्टवन्तं यजमानमाप्नोति तादृशैर्दशसंख्याकैरक्षितदक्षिणैर्य-जते अथानन्तरं स यजमानो गौः आदित्यो भवति गमयति रसानागच्छत्यन्तरिक्ष इति वा गोशब्दव्युत्पत्तिः यदा चायङ्गौ-र्भवति अथानन्तरं अग्न्यात्मको भवति यदा चाग्निर्भवति अथा-नन्तरं संवत्सरसत्रस्य गृहपतिः गृहपतित्वमाप्नोति अग्निना वै तेन गृहपतिरेव भूयादिति हि ब्राह्मणान्तरं ॥ २ ॥

एवमग्निहोत्रादिकर्म्मणामुत्तरोत्तरं सातिशयफलसाधनत्व-मुक्तं अथ प्रकृतानां वैश्वदेवादीनामक्षयफलसाधनत्वमाह ।

यदा संवत्सरस्य गृहपतिर्भवत्यथ वैश्वदेवस्य मात्रामाप्नोत्यतो वा इतरे परस्परां परस्परामेव सर्व्वः ॥ ३ ॥

यदा यस्मिन् काले उक्तप्रकारेण संवत्सरसत्रस्य गृहपतिर्भवति अथानन्तरं वैश्वदेवस्य चातुर्म्मास्येषु प्रथमपर्व्वणोमात्रां एकदेशसदृशमाप्नोति संवत्सरसत्रमपि वैश्वदेवफलस्य एकादशसमं भवतीत्यर्थः तस्मान्निरतिशयवैश्वदेवस्य फलं इतरे सर्व्वे वरुणप्रघासादय अतो अस्माद्वैश्वदेवात्परस्परां परस्परामेव उत्तरोत्तरन्निरतिशयफलमित्यर्थः वैश्वदेवाद्वरुणप्रघासोऽधिकफलः ततोऽप्यधिकफलः साकमेधः ततोऽप्यधिकः शुनासीर्य्यः अस्यार्थं द्योतयितुं परस्परां परस्परामिति वीप्सा एवं चातुर्म्मास्यानामक्षय्यफलत्वमुक्तं तथा च श्रुत्यन्तरं अक्षय्यं वै चातुर्म्मास्ययाजिनः सुकृतं भवतीति ॥ ३ ॥

अथैतद्वेदितुः फलमाह ।

एतानेव लोकानाप्नोत्येतान् लोकाञ्जयति य एवं वेद ॥ ४ ॥

एवमुक्तं ब्राह्मणार्थं यो वेद जानाति स एतान् अग्निहोत्रादिफलत्वेनोक्तानिमान् लोकान् प्राप्नोति प्राप्य च तान् सर्व्वान् लोकान् जयति स्वायत्तान् करोति ।

वेदार्थस्य प्रकाशेन तमोहार्दन्निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ४ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे सप्तदशाध्यायस्य चतुर्दशः खण्डः।

सप्तदशाध्यायः समाप्तिमगमत् ।

---

# अष्टादशोऽध्यायः ।

अथ प्रथमः खण्डः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अस्मिन्नष्टादशेऽध्याये उपहव्यस्ततः परं । ऋतपेये शुनाशीर्य्यवैश्वस्तोमोऽथ तीव्रसुत् । वाजपेयोराजसूय इति सप्त प्रकीर्त्तिताः । तत्र आदौ उपहव्यानामेकाहमाह ।

सप्तदशोऽग्निष्टोमः ॥ १ ॥

अयलेकाहः सर्वोऽपि सप्तदशस्तोमकोऽग्निष्टोमसंस्थः ॥ १ ॥

अस्याह्नोऽनिरुक्तधर्मकत्वं प्रतिपादयितुमाख्यायिकामाह ।

देवाश्च वा असुराश्च प्रजापतेर्द्वयाः पुत्रा आसꣳस्तेऽसुराभूयाꣳसो बलीयाꣳस आसन् कनीयाꣳसो देवास्ते देवाः प्रजापतिमुपाधावन् स एतमुपहव्यमपश्यत् ॥ २ ॥

पूर्वं प्रजापतेः पुत्राणां देवासुराणाम्मध्ये देवा बहून् प्रचुरतरान् जघन्यानसुनान्मत्वा स्वप्राबल्याय प्रजापतिमुपाधावन् स च विचिन्त्योपायं एतमुपहव्य मपश्यत् ॥ २ ॥

इदानीन्तमुपहव्यमनिरुक्तं प्रायुङ्क्त इत्याह ।

स ऐक्षत यन्निरुक्तमाहरिष्याम्यसुरा मे यज्ञं हनिष्यन्तीति सोऽनिरुक्तमाहरत् ॥ ३ ॥

आहरत् कात्स्न्र्येन प्रयोगः अनिरुक्तत्वं सूत्रवचनेनैव स्पष्टी क्रियते उपहव्ये देवतानामधेयानि परोक्षं ब्रूयुः स्वस्थाना-स्विति उपहव्यग्रहणमनिरुक्तोपलक्षणं अनिरुक्तेषु क्रतुषु स्वस्था-नस्थासु देवतासु तन्नामधेयं परोक्षं ब्रूयुः पर्य्यायेणेत्यर्थः परोक्ष-मेवानिरुक्तत्वमिति प्रत्यक्षमस्वस्थानास्विति स्वस्थानात् स्थाना-न्तरङ्गतासु प्रत्यक्षमेव वचनं तत्र तावत् सर्वे पवमानाः सोमस्य स्वस्थानं तेषां सोमदेवत्वात् सर्वाणि पृष्ठानीन्द्रस्य स्वस्थानम-ग्नेरग्निष्टोमस्तोत्रमित्यादि द्रष्टव्यमिति देवशब्दं सर्वत्र वर्ज-येयुरिति सर्वेष्वपि स्तोत्रेषु देवशब्दं वर्जयेयुः देवं सोम इत्यादौ होता देवोमहीमित्रस्येत्येते होता यक्षो महीयज्ञस्येति ब्रूयु-रिति प्रथमद्वितीययोराज्ययोर्देवमित्रशब्दस्थाने यज्ञमित्र-शब्दं ब्रूयुरित्यर्थः तत्र केनचित् पर्य्यायेण निर्देशे प्राप्ते नियम-माह इन्दुरिति सोममिति सुषाव सोममद्रिभिरित्यादौ सुषा-वेन्दुमिति ब्रूयुः अत्राग्नेरिन्द्रस्य च सोऽनिरुक्तमाहरदिति ब्राह्मणानुरोधेन प्रत्यक्षं नामाहरेत्ता एव स्तोत्रीयाः कल्पका-रेण क्लृप्ताः तेन तत्र प्रत्यक्षनामधेयाभावादेव तत्पर्य्यायेनोक्तः उत्तमे तु स्तोत्रे यज्ञायज्ञा वा अग्नय इति प्रत्यक्षनामधेयं ब्राह्मणेनानुज्ञातं स उत्तमे स्तोत्रे देवानभिपर्य्यावर्त्ततेत्या-

दिना तेन न किञ्चिद्व्यसनमस्ति अतएवाग्निशब्दपर्य्यायः सूत्र-
कारेणोक्तः देवशब्दोऽपि तत्र प्रयोज्य एवेति ॥ ३ ॥

अथोपहव्यप्रयोगान्तरेण प्रजापतेर्दैवताभिमुख्यं दर्शयति ।

स उत्तमे स्तोत्रे देवो वो द्रविणोदा इति देवान-
भिपर्य्यावर्त्तत ॥ ४ ॥

उत्तमे स्तोत्रे अग्निष्टोमसामनी इत्यर्थः ॥ ४ ॥

अस्तु पर्य्यावृत्तिः किं ततः स्यादित्यत आह ।

ततो देवा अभवन् परासुराः ॥ ५ ॥

देवाः प्रबला आसन् असुराः पराभवन्नित्यर्थः ॥ ५ ॥

अथोक्तार्थवेदनं प्रशंसति ।

भवत्यात्मना परास्य भ्रातृव्यो भवति य एवं
वेद ॥ ६ ॥

उत्तमस्तोत्रार्थं पूर्व्वोदाहृतं ॥ ६ ॥

देवो व इति तृचमपोद्य प्राकृतं यज्ञायज्ञीयमेव कार्य्यमिति
ब्रह्मवादिनां वचनमाह ।

अथो खल्वाहुर्य्यज्ञायज्ञावो अग्नय इत्येव
कार्य्यं ॥ ७ ॥

अथोशब्दः पक्षान्तरद्योतनार्थः आहुः ब्रूयुः ब्रह्मवा-
दिनः ॥ ७ ॥

तत्रोपपत्तिरुच्यते ।

**अग्निर्वै सर्वा देवतास्तेन न देवतानां काञ्चना-न्तरेति ॥ ८ ॥**

ते देवा बिभ्यतोऽग्निं प्राविशन् तस्मादाहुः अग्निः सर्व्वा देवता इति हि श्रुतिः अथ तद्देवताकमन्त्रकरणेन देवतानाम्मध्ये न कामपि देवतामन्तरितवान् भवति ॥ ८ ॥

अथोपहव्यशब्दस्य प्रवृत्तिनिमित्तं दर्शयितुमाह ।

**इन्द्रो यतीन् सालावृकेयेभ्यः प्रायच्छत्तमश्लीला वागभ्यवदत् स प्रजापतिमुपाधावत्तस्मा एतमुपहव्यं प्रायच्छत्तं विश्वे देवा उपाह्वयन्त यदुपाह्वयन्त तस्मा-दुपहव्यः ॥ ९ ॥**

पूर्व्वमिन्द्रः यतीन् ज्योतिष्टोमाद्यकर्त्ता प्रकारान्तरेण वर्त्तमानान् ब्राह्मणान् सालावृकेयेभ्य आरण्यश्वभ्यः प्रायच्छत् तं ब्राह्मणहन्तारं इन्द्रं अश्लीला निन्दिता वाक् अभ्यवदत् सर्व एनं निर्बिन्दुरित्यर्थः स इन्द्रस्तत् प्रमार्ष्टुं प्रजापतिमुपागच्छ-त्तस्मै एतमुपहव्यं एकाहं प्रायच्छत् स इन्द्रस्तमन्वतिष्ठदित्यर्थः तेन विश्वे देवा एनमिन्द्रमुपाह्वयन्त एहि निर्हृष्टस्त्वमसीत्य-ब्रुवन् यस्मादनेनोपाह्वयन्त अत उपाह्वानसाधनत्वादस्योपह-व्यमिति नाम ॥ ९ ॥

अथेन्द्रस्याभिशंसनपरिहारप्रसङ्गेनात्राधिकारिणमाह ।

अभिशस्यमानं याजयेत् ॥ १० ॥

अभिशस्यमानं अन्यैर्दोषारोपणेन निन्द्यमानं ॥ १० ॥

अभिशस्यायायमुपहव्य उचित इत्याह ।

देवता वा एतं परिवृञ्जन्ति यमनृतमभिशꣳसन्ति देवता एवास्यान्नमादयन्ति ॥ ११ ॥

यं यजमानं अनृतमभिशंसन्ति जनाः एतं देवताः परिवृञ्जन्ति वर्ज्जयन्ति न तस्य हविरादद्त इत्यर्थः अत एतदनुष्ठानेन देवता एवास्य अन्नमादयन्ति याजका एनं यजमानं देवतार्हहविष्कं कारयन्तीत्यर्थः ॥ ११ ॥

न केवलं देवार्ह एवासौ किन्तु मनुष्यैरपि संव्यवहार्य्य इत्यत आह ।

तस्य पूतस्य स्वदितस्य मनुष्या अन्नमदन्ति ॥ १२॥

स्वदितस्य स्वशब्दितस्य अनिन्दित इति सर्वैर्व्यवहृतस्य अथवा भाव्यपेक्षायां निर्द्देशः स्वर्गप्राप्तियोग्यस्येत्यर्थः ॥ १२ ॥

अथात्राधिकार्य्यन्तरमाह ।

ग्रामकामो यजेत ॥ १३ ॥

स्पष्टोऽर्थः ॥ १३ ॥

उक्तकामनावतोऽयमुचित इत्याह ।

मारुतो भवति मरुतो वै देवानां विशो विशमे-

वात्सा अनुनियुनक्त्यनपक्रामुकास्माद्दिड्भवति ॥ १४

यतोऽत्र मारुती भवति अतोऽयमुचित इत्यर्थः ग्रामानस्य वानर इति मारुती, मरुतां ग्रामस्य च कः सम्बन्ध इति तत् समर्थनं मरुतो वा इत्यादि ॥ १४ ॥

अथाधिकार्थ्यन्तरमाह।

पशुकामो यजेत पौष्णी भवति ॥ १५ ॥

स्पष्टोऽर्थः ॥ १५ ॥

उत नो गोविदश्वविदिति पूष्णः पशोश्च कः सम्बन्ध इति तदाह।

पशवो वै पूषा पशूनेवावरुन्धे ॥ १६ ॥

पूषा पशून् प्रजनयतीति श्रुत्यन्तरं ॥ १६ ॥

अथातत्यां वैश्वदेवीं प्रशंसति।

वैश्वदेवी भवति विश्वे ह्येनन्देवा उपाह्वयन्त ॥१७॥

यत एनमद्रुष्टमिन्द्रं विश्वे देवा उपाह्वयन्त अतस्तद्देवत्या युक्ता उपनः सूनवोगिर इत्येषा वैश्वदेवी ॥ १७ ॥

अथैतस्य होतुः पृष्ठे बृहत्सामतामाह।

बृहत्सामा भवति ॥ १८ ॥

एकाहापेक्षया बृहत्सामेति पुंलिङ्गता ॥ १८ ॥

कथमेवमिति तत्राह।

प्रजापतिर्ह्येनमिन्द्राय प्रायच्छत् ॥ १९ ॥

स्पष्टोऽर्थः ॥१९ ॥

अथात्र दक्षिणायां विशेषमाह ।

अश्वः श्यावो दक्षिणा ॥ २० ॥

श्यावाश्वो दक्षिणा ॥ २० ॥

कथमनिरुक्तस्याश्वस्यान्वय इति तत्राह ।

स ह्यनिरुक्तः ॥ २१ ॥

सोऽश्वः प्रजापतिसम्बन्धित्वात्तस्य चानिरुक्तत्वादश्वोऽप्यनिरुक्तः ॥ २१ ॥

कस्मायमश्वस्तमाह ।

स ब्रह्मणे देयः ॥ २२ ॥

स्पष्टोऽर्थः ॥ २२ ॥

सत्स्वन्येषु ऋत्विक्षु कथन्तस्येति तत्राह ।

ब्रह्मा वा ऋत्विजामनिरुक्तः स्वेनैवैनन्तद्रूपेण समर्द्धयति ॥ २३ ॥

अध्वर्य्वादिवत् प्रतिनियतशाखोक्तव्यापाराभावादनिरुक्तत्वमस्य तत्तथा सति ब्रह्मणेऽश्वदाने सत्येनमनिरुक्तमेकाहं स्वेनैवानिरुक्तेन रूपेण समर्द्धयति ॥ २३ ॥

अथोक्तार्थं प्रशंसति ।

यावद्ध व कुमारे सद्योजात एनो नास्मिंस्ता-
वन्न नैनो भवति य एवं वेद ॥ २४ ॥

सद्यस्तदानीमेव जाते उत्पन्नेऽस्मिन् कुमारे कारणाभावा-
देनः पापन्नास्ति तावत्तस्मिन्नेव काले एनो न भवति य उक्तमर्थ-
मधिगच्छति तस्य उक्तार्थज्ञानानन्तरमेव निर्दोषो भवतीत्यर्थः
अत्र पवस्वेन्दो वृषासुत एते असृग्रमिन्दव उत नोगोषणिन्धियं
शशमानस्य वानर इत्यादिकः कल्पो द्रष्टव्यः अत्र दक्षिणा-
विषये सूत्रकारैः आदिष्टा दक्षिणा ब्राह्मणेनेतरेभ्यश्च किञ्चि-
द्द्यादिति अश्वः श्यावो दक्षिणा तं ब्रह्मणे दद्यादित्यादिष्टा तत्र
ब्रह्मव्यतिरिक्तेभ्योऽप्यानत्यर्थं किञ्चिद्दद्यादित्यर्थः अत्र श्यावद-
क्षिणाविचारो बाधलक्षणस्य तृतीयपादे चिन्तितः श्यावाश्वो
ब्रह्मभागस्य बाधको निखिलस्य वा आद्यः प्रकाशवत् सैवन्धेनुः
वत्सोऽपि नान्यगः अस्युपहव्यनामक एकाहविशेषस्तत्र श्रूयते
अश्वः श्यावोरुक्मललाटो दक्षिणा स ब्रह्मणे देय इति प्रकाश-
न्यायेन ब्रह्मभागस्यैव बाधक इति पूर्व्वः पक्षः दक्षिणाशब्दसंयो-
गाद्धेनुन्यायेन कृत्स्नस्य बाधक उपरितनेन तु स ब्रह्मणे देय
इति वाक्यान्तरेण तस्याश्वस्य ब्रह्मव्यतिरिक्तपुरुषान्तरसम्बन्धो
बाध्यते तथा सति पुरुषान्तरस्यातिदिष्टोपदिष्टदक्षिणाद्वयबाधा-
ल्लौकिकदानादिना केनचिदुपायेनानतिः सिध्यति ॥ २४ ॥

इति ताण्ड्यमहाब्राह्मणे अष्टादशाध्यायस्य
प्रथमः खण्डः ।

---

अथ द्वितीयः खण्डः ।

अथाप्तोर्यामेकाहमाह ।

सप्तदशोऽग्निष्टोमः ॥ १ ॥

स्पष्टोऽर्थः ॥ १ ॥

अत्र दीक्षोपसदोर्विशेषमाह ।

तस्य द्वादश दीक्षोपसदः ॥ २ ॥

अथास्य सूत्रकार एवाह ऋतपेये तस्य द्वादश दीक्षोपसद इति अयमर्थः नव दीक्षास्तिस्रश्चोपसद इत्यभिप्रेत्य द्वादशोऽतिवादः कुतस्तिस्र एव साह्नस्योपसद इति प्रकृतौ वचनादिहापि चोदकतः प्राप्तत्वात् अथ वा षट् दीक्षाः षडुपसदः समविभागस्य श्रवणादिति भरद्वाजस्तु प्रत्येकं द्वादशेति व्याख्यातवान् ॥ २ ॥

अथात्राधिकारिणमाह ।

स्वर्गकामो यजेत ॥ ३ ॥

स्पष्टोऽर्थः ॥ ३ ॥

कथं द्वादशदीक्षादिमत्यस्मिन् स्वर्गार्थिनः सम्बन्ध इति तत्राह ।

द्वादशमासाः संवत्सरः संवत्सरः स्वर्गोलोकः स्वर्गमेवैतेन लोकमाप्नोति ॥ ४ ॥

संवत्सरस्यादित्यात्मकत्वादादित्यस्य च स्वर्गस्थानत्वात् संवत्सरः स्वर्गोलोक इत्युच्यते ॥ ४ ॥

अस्य दीक्षादिवसे व्रतविशेषमाह।

घृतव्रतो भवति ॥ ५ ॥

अत्र सूत्रकारः घृतव्रतो भवतीति यथोत्साहन्दीक्षा प्राश्नीयादिति अयमर्थः घृतव्रतो भवतीति ब्राह्मणं प्रकृतस्य पयोव्रतस्य प्रत्याम्नायोऽयन्तत्र दीक्षादिवसेषु यथावलं घृतप्राशननियम इति ॥ ५ ॥

अथोक्तं घृतव्रतं प्रशंसति।

देवव्रतं वै घृतन्देवव्रतेनैव देवता अप्येति ॥ ६ ॥

स्पष्टोऽर्थः ॥ ६ ॥

अथोपसद्दिवसे घृतप्राशने उत्तरोत्तराङ्गलिपर्व्वणा कर्त्तव्यत्वं सस्तुतिकमाह।

उत्तरेणोत्तरेण काण्डेनोपैत्युत्तर उत्तर एषां लोकानाञ्ज्यायान् स्वर्गस्य लोकस्य समष्ट्यै ॥ ७ ॥

एषां भूरादीनाम्मध्ये पूर्व्वापेक्षयोत्तरोत्तरतो ज्यायान् प्रशस्यः अत्र सूत्रं उत्तरोत्तरेण काण्डेनोपैतीति पृथगुपसत्स्वङ्गुलिपर्व्वभिः प्रतिलोमैः प्राश्नीयादिति उत्तरेणोत्तरेण काण्डेनोपैतीति ब्राह्मणमुपसत्सु नियमविधायकं अङ्गुलेः उत्तमेन काण्डेन घृतमादाय प्रथमायामुपसदि तावन्मात्रं घृतं प्राश्नीयात्

ततो मध्यमेन ततः प्रथमेनेत्येवं प्रतिलोमैः पर्व्वभिः प्राश्नीयादित्यर्थः कुतः उत्तरोत्तर एषां लोकानामुपायानिति वाक्यशेषात् प्रातिलोम्य एव पर्व्वणामुत्तरोत्तरभूयस्त्वादानुलोम्यवैपरीत्याच्चेति अत्र प्राशने अङ्गुलिपर्व्वविधानात् प्राकृतचमसानां निवृत्तिरिति, अथ मतान्तरमाह एकाङ्गुल्याः पृथक्पर्वभिः सर्वान् देशांश्चमसामिता: स्युरैरनुलोमैरिति शौचिवृक्षिः प्रतिलोमैः प्राश्नीयादिति शाण्डिल्य इति अयमर्थः प्राकृतचमसबाधो न कार्य्यः अबाधेनापि शास्त्रसम्भवात् कथं चमसस्यैव पृथक्परिमाणविधिरयं चमसप्रान्ताः सर्व्वत ऊर्द्ध्वप्रमाणेन पृथक्पृथगङ्गुलिकाण्डदघ्नाः स्युः तेनार्थाच्चमसत्रयं सम्पद्यते तत्र प्रथमाङ्गुलिकाण्डदघ्नचमसं घृतेन पूरयित्वा प्रथमोपसदि प्राश्नीयात् एवमुत्तरोत्तरकाण्डदघ्नौ चमसावुत्तरयोरुपसदोः कुतः उत्तरेणोत्तरेणेति वचनादानुलोम्यप्रतीतेरिति ॥ ७ ॥

अथात्र बृहत्साम सार्थवादं विधत्ते।

बृहत् साम भवति बृहता वै देवाः स्वर्गं लोकमायन् स्वर्गमेवैतेन लोकमाप्नोति ॥ ८ ॥

स्पष्टोऽर्थः ॥ ८ ॥

ऋत्विजां सदःप्रसर्पणसमये विशेषमाह।

ऋतमुक्त्वा प्रसर्पन्त्यृतेनैवैनꣳ स्वर्गं लोकं गमयन्ति ॥ ९ ॥

एतत् प्रसर्पणवाक्यं शाखान्तरीयं ऋतं वदतो भक्षयन्तीति भक्षणवाक्यञ्च विषयीकृत्य ऋतवदनविषये सूत्रकारः ऋतमुक्त्वा प्रसर्पन्तीति प्रसर्प्स्यन्तः सद्दो भक्षयिष्यन्तश्च देवसत्या निर्ब्रूयु-रियं भूमिरसावादित्य इतीति उद्गेता प्रातरादित्ये इति पीतवद् भक्षमन्त्रानूहेयुरित्यर्थः अयमर्थः सदःप्रसर्पणं सोमभक्षणञ्च करिष्यन्तो देवसत्या निर्ब्रूयुरियं भूमिरित्येकं सत्यमसावादित्य इत्यपरं उद्गेता उद्गेष्यतीत्यर्थः नीष्यपेतानि देवताश्रितानि अन्यानि परमार्थभूतानीति भक्षणसमये ऋतवदने च धानञ्जय-स्त्वन्यथा ब्रूते तथाच सूत्रं या देवतास्तस्मैरिज्येरंस्तत्पीतवद्भक्ष-मन्त्रान् ब्रूयुरिति शाण्डिल्यो विकारेण तु नाराशंसानामिति इन्द्रपीतस्येत्यन्तमुक्त्वा अग्निपीतस्य मित्रावरुणपीतस्येन्द्रियावत इत्यादिना या देवता इज्यन्ते ता एवोहेयुरित्यर्थः ॥ ८ ॥

अथ ऋतपेयदक्षिणायां विशेषमाह।

**सोमचमसो दक्षिणा देवतयैव देवता अप्येति॥१०**

सोमस्यापि देवतात्वात् इज्यमानदेवता तु फलत्वेन प्राप्तान् देवानप्येति प्राप्नोति ॥ १० ॥

अस्य चमसस्यौदुम्बरत्वं सार्थवादं विधत्ते।

**औदुम्बरो भवत्यूर्गुदुम्बर ऊर्ज्जमेवावरुन्धे ॥ ११ ॥**

देवा ऊर्ज्जं व्यभजन्त तत उदुम्बर उदतिष्ठदिति श्रुतेः औदुम्बरस्य ऊर्ग्रूपत्वं सोमचमसो दक्षिणाविषये सूत्रकारः सोमचमसो दक्षिणेत्यभिषुतः स्यादिति क्रत्वर्थतयाभिषुतस्य सोम-

रसस्य पूर्णः सोमचमसः न तु लौकिकस्येत्यर्थः कुत इत्याह तस्मिन् हि चमसप्रमाणमिति शास्त्रीये सोमरसे झटिति चमस-प्रतीतिः स तु प्राकृतेभ्यो दशभ्योऽतिरिक्तः सम्पादनीय इत्यर्थः तन्माध्यन्दिने सवनमुखीयैः सहोन्नयेयुरिति सवनमुखीयानां दशचमसानामुन्नयनकाले तमप्युन्नयेयुरिति जुहुयुस्तस्य हुते देय इति हि ब्राह्मणमिति होमकाले तस्य चमसस्यैकदेशं जुहुयुः हुतोदेय इति शाखान्तरीयब्राह्मणादित्यर्थः तं दक्षि-णावेलायां पूर्व्वेणाहवनीयमनिर्हरन्तो वेदेर्दक्षिणेन सदोह-विर्द्धानानि हारयित्वा पूर्व्वया द्वारा सदः प्रविशेयुरिति वेदे-र्वहिरन्त इत्यर्थः ॥ ११ ॥

विहितश्चमसः कस्मै कीदृशाय देय इति बुभुत्सयामाह।

सगोत्राय ब्रह्मणे देयः सोमपीथस्याविदोहाय॥१२

अविदोहाय अविनाशाय विपरीतफलप्रशमनत्वायेत्यर्थः अत्र दक्षिणाविषय एव सूत्रकारः संस्थितेऽहन्यृत्विग्भ्यः किञ्चि-द्दद्यादिति सोमचमस एव क्रतौ दक्षिणा तथाप्यृत्विगानामा-नत्यर्थं किञ्चिद्दद्यादित्यर्थः ॥ १२ ॥

अथ स्तोमे नियममाह।

सर्वः सप्तदशो भवति ॥ १३ ॥

पवमानाज्यपृष्ठादिकाः सर्व्वे इत्यर्थः ॥ १३ ॥

सप्तदशत्वं स्तौति।

द्वादशमासाः पञ्चर्त्तवः स वै संवत्सरः संवत्सरः स्वर्गो लोकः स्वर्गमेवैतेन लोकमाप्नोति ॥ १४ ॥

एष सोमचमसो दक्षिणा ब्रह्मभागस्यैव बाधकः उत कृत्स्नस्येति बाधाध्याये तृतीयपादे चिन्तितं किं सोमचमसो ब्रह्मभागस्याहोऽस्युत कृत्स्नस्युत् पशूनां निन्दया सर्व्वप्रसक्तेर्ब्रह्मभागवत् निन्द्येयं निषेधाय चमसः सूयते त्वसौ श्वावाश्ववत्सर्व्वोद्देयः पुरुषान्तरबाधकः ऋतपेये सूयते सर्व्वस्य दक्षिणाद्रव्यस्यात्र पुनः प्रसञ्जनात् तथा हि ऋतं वै सोमोऽनृतं पशवो यः पशून् दद्यात्सोऽनृतं कुर्य्यात् इति पशुरूपा दक्षिणा भागनिषेधाय निन्द्यन्ते तौ च निन्दानिषेधौ सर्व्वदेयप्रसक्तिं गमयतः तस्मात्र सर्व्वबाधक इति प्राप्ते ब्रूमः नात्र निषेधाय पशुनिन्दोच्यते किन्तु विधित्सितसोमचमसस्तुत्यर्थोऽयमर्थवादः तेन निन्दायाः सर्व्वप्रसञ्जकत्वन्नास्ति तस्मात् सर्व्वप्रसक्तिरूपाया अभ्यधिकाशङ्काया निराकृतत्वात् पूर्व्वाधिकरणेनात्र निर्णयो द्रष्टव्यः अथास्य क्लृप्तः द्वितीयस्वरसाम्न आज्यबहिष्पवमानं वार्हद्गिरस्य लोक आष्टादंष्ट्रमौक्षस्य हाविष्मतं अभ्यस्य सुज्ञानं उद्वरत्युक्थानि समानमितरत्त्वैकाहिकेनेति ॥ १४ ॥

इति ताण्ड्यमहाब्राह्मणेऽष्टादशाध्यायस्य

द्वितीयः खण्डः ।

अथ तृतीयः खण्डः ।

अथान्यं सप्तदशस्तोमकमग्निष्टोमसंस्थमेकाहमाह ।

सप्तदशोऽग्निष्टोमः ॥ १ ॥

स्पष्टोऽर्थः ॥ १ ॥

तत्र दीक्षणीयप्रायणीयातिथ्योपसदाद्यनुष्ठेयमुख्यपदार्थेषु द्वादशमानप्रभृत्युत्तरोत्तरद्वैगुण्यदक्षिणा माध्यन्दिनपवमाने होतुर्दाने रुक्मस्रगूपदक्षिणाश्चाह ।

तस्य दीक्षणीयायामिष्टौ द्वादशमानꣳ हिरण्यं ददाति चतुर्विꣳशतिमानं प्रायणीयायां द्वे चतुस्त्रिꣳशतिमाने आतिथ्यायां चत्वारि चतुर्विꣳशतिमानानि प्रातः प्रथमायामुपसद्यष्टौ चतुर्विꣳशतिमानान्यपराह्णे प्रथमायामुपसदि षोडश चतुर्विꣳशतिमानानि प्रातर्मध्यमायामुपसदि द्वात्रिꣳशतं चतुर्विꣳशतिमानान्यपराह्णे मध्यमायामुपसदि चतुःषष्टिं चतुर्विꣳशतिमानानि प्रातरुत्तमायामुपसद्यष्टाविꣳशतिशतं चतुर्विꣳशतिमानान्यपराह्ण उत्तमायामुपसदि द्वे अष्टाविꣳशतिशतमाने अग्नीषोमीयस्य पशोर्वपायां चत्वार्य्यष्टाविꣳशतिशतमानानि प्रातःपशोर्वपायामष्टावष्टाविꣳशतिशतमानानि प्रातः

सवने सन्नेषु नाराशꣳसेषु षोडशाष्टाविꣳशतिशतमानानि माध्यन्दिने सवनेऽनडुच्छतञ्च रुक्मो होतुः स्रगुद्गातुर्द्वात्रिꣳशतमष्टाविꣳशतिशतमानानि तृतीयसवने सन्नेषु नाराशꣳसेषु चतुःषष्टिमष्टाविꣳशतिशतमानान्युदयनीयायामिष्टावष्टाविꣳशतिशतमष्टाविꣳशतिशतमानानि वशाया वपायां ॥ २ ॥

वशा अनूबन्ध्या अतोपसदन्ते अष्टावष्टाविंशतिशतं चतुर्व्विंशतिमानानीत्युक्तं ब्राह्मणे तावत्पर्य्यन्तं चतुर्व्विंशतिमानमारभ्योत्तरोत्तरं द्वे चतुर्व्विंशतिमाने इत्यादिद्वैगुण्यनिर्द्देशः स्पष्टः तत ऊर्द्ध्वं अग्नीषोमीयप्रभृति द्वे अष्टाविंशतिशतमाने चत्वार्य्यष्टाविंशतिशतमानानीत्येवं द्विगुणाभ्यासः अतः तत्र मानशब्दश्चतुर्व्विंशतिमानं लक्षयाह यथाभामेत्येकदेशोक्तावपि सत्यभामा गम्यते तद्वत् द्वे अष्टाविंशतिशतमाने इत्यादौ तत्संख्याविशिष्टानि चतुर्व्विंशतिमानान्येव देयानीत्यर्थः कुत एतत् पूर्व्वेषु स्थानेषु द्विगुणाभ्यासस्य प्रक्रान्तत्वात् यथाश्रुतमानमात्रग्रहणे कनीयस्त्वप्रसङ्गाच्च तेनाग्नीषोमीयप्रभृतिषु मानशब्दश्चतुर्व्विंशतिमानलक्षणार्थं इति सिद्धं अनडुच्छतस्य रुक्मेण सह समुच्चयः अधिकदानरूपायाः रुक्मस्रजार्थमाह सूत्रकारः रुक्मोहोतुरिति निष्कोनामालङ्कारस्तं दद्यात् स्रगुद्गातुरिति हिरण्मयी स्रगिति तत्र दीक्षणीयादौ द्वादश-

मानमित्यादिर्दक्षिणादानं दक्षिणायामेव कालोत्कर्षादवेक्ष्यैव च न पृथगिति वेदितव्यं ॥ २ ॥

अथोक्तार्थज्ञानपूर्व्वकानुष्ठानवतः फलमाह ।

एष वा अनडुहो लोकमाप्नोति य एवं वेद ॥ ३ ॥

अत्र वेदनमुपलक्षणं एवं ज्ञात्वा योऽनुतिष्ठति स इत्यर्थः अनडुह इति जात्यपेक्षयैकत्वं लोकशब्दः समूहवाची अनडुहां समूहं प्राप्नोति अनडुहो लोकप्राप्त्यर्थमादित्यलोकप्राप्त्यर्थमिति वा सङ्कल्प इत्यापस्तम्बसूतिव्याचक्षाणेन फलत्वेनानडुहोलोकस्य निर्द्दिष्टत्वात् केवलं वेदितुः फलश्रवणेऽपि तत्पूर्व्वकानुष्ठातुरेव फलत्वकल्पनं यद्वा श्रुतत्वात् ज्ञातुरेव तत्फलं भवेत् किमु वक्तव्यमनुष्ठातुरिति कैमुतिकेन सिध्यति ॥ ३ ॥

अथ फलान्तरमाह ।

एष वै ज्योतिष्मन्तं पुण्यं लोकञ्जयति य एवं विद्वानेतेन यजते ॥ ४ ॥

ज्योतिष्मन्तमादित्यलोकमित्यर्थः अथास्य कल्पः एते अहरग्निमिन्द्व उक्ते शुष्मास ईरत इति पुरस्तात्पर्य्यासस्य तृचपञ्चर्चेंखासु श्यैतं समानमितरत्प्रथमेन साहस्रेणेति ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे अष्टादशाध्यायस्य
तृतीयः खण्डः ।

अथ चतुर्थः खण्डः ।

अथ वैश्वस्तोमाख्यमग्निष्टोमसंस्थमेकाहमाह ।

सप्तदशोऽग्निष्टोमः ॥ १ ॥

स्पष्टोऽर्थः ॥ १ ॥

तत्र सवनत्रयगतेषु सोमेषु श्रीणने विशेषमाह ।

तस्य प्रातःसवनीयान् सोमान् प्रतिदुहा श्रीणा-
ति शृतेन मध्यन्दिने दध्ना तृतीयसवने ॥ २ ॥

अस्यार्थमाह द्राह्यायणः वैश्वस्तोमे सद्योदुग्धेन पयसा सोममभिश्रं कुर्युः प्रातःसवने शृतेन मध्यन्दिने दध्ना तृतीयसवन इति सद्योदुग्धं पयःप्रतिधुगित्युक्तं शृतं पक्वं पयइत्यर्थः ॥ २ ॥

अत्राधिकारिणमाह ।

पशुकामो यजेत ॥ ३ ॥

स्पष्टं ॥ ३ ॥

अथ सवनभेदेनोक्तां श्रपणद्रव्यव्यवस्थां पक्षान्तराशङ्कानि-
राकरणेन स्थापयति ।

यत् सर्वाणि सवनान्याशीर्व्वन्ति भवन्त्यनुसवन-
मेवैनं पशुभिः समर्द्धयति प्रजा त्वस्य मीलितेव भवति
शुक्रिये हि सवने पयसा श्रीणाति ॥ ४ ॥

यद्यदि त्रीख्यपि सवनानि दध्याशीर्युक्तानि भवन्ति तदा अस्य यजमानस्य प्रतिसवनं पशुसमृद्धिः कृता भवति किन्तु अस्य प्रजा मीलितेव सङ्कुचितेव भवति ततः शुक्रिये हि सवने प्रातर्मध्यन्दिने तु पयसा श्रीणाति तत उक्तदोषो न भवति। यद्वा इदं वाक्यं केवलदोषपरतया व्याख्येयं अस्मिन् पक्षे आशीः-पदेन श्रपणसाधनं पयोदधि वोच्यते यदि सर्वाणि सवनानि उक्तप्रतिधुगादिद्रव्याशीर्वन्ति भवन्ति तर्हि यजमानस्य पशु-समृद्धिः स्यादेव किन्तु प्रजाहानिर्भवति तत्र हेतुरुच्यते हि यस्मात् शुक्रिये शुक्रः ऋजीषाभावेनागतसारः सोमः एतर्हि एतद्वती दीप्तिः प्रातर्मध्यन्दिने अपि सवने अयं पयसा श्रीणाति सोमं अतो युक्तं प्रजामीलनं तृतीयसवने ऋजीषत्वादाशीः-श्रपणं युक्तं स्वतएव दीप्तायाः सवनयोराशीःश्रपणेन सोमस्य स्वाभाविकदीप्तेः सङ्कुचितत्वादित्यभिप्रायः ॥ ४ ॥

अथोक्तश्रपणत्वेन पशव्यत्वाद्वैश्यस्यात्राधिकार इत्याह ।

वैश्यं याजयेत् ॥ ५ ॥

स्पष्टं ॥ ५ ॥

अत्र वैश्यस्यान्वयमाह ।

एतद्वै वैश्यस्य समृद्धं यत्पशवः पशुभिरेवैनꣳ समर्द्धयति ॥ ६ ॥

समृद्धं समृद्धिरित्यर्थः ॥ ६ ॥

अत हेतुः पृष्ठे विशेषमाह।

तस्य कण्वरथन्तरं पृष्ठं ॥ ७ ॥

अभित्वा शूरेत्यत्र कण्वरथन्तरं ॥ ७ ॥

अथ ब्राह्मणाच्छंसिपृष्ठे विशेषमाह।

सदो विशीयं ब्रह्मसाम ॥ ८ ॥

आनो विश्वास्वित्यत्र सदोविशीयं ॥ ८ ॥

उक्तद्वययोगं प्रशंसति।

पशवो वै कण्वरथन्तरं पशवः सदोविशीयमभि-
पूर्वानेवास्मिन् पशून् दधाति ॥ ९ ॥

स्पष्टं ॥ ९ ॥

अथात्र बहिष्पवमानाद्यादेः सर्व्वत्रापि सप्तदशस्तोमत्व-
माह।

सर्व्वः सप्तदशो भवति ॥ १० ॥

स्पष्टं ॥ १० ॥

अथ साप्तदश्यं प्रशंसति।

द्वादशमासाः पञ्चर्त्तवः स वै संवत्सरः संवत्सरं
पशवोऽनुप्रजायन्ते तानेवाप्नावरुन्धे ॥ ११ ॥

अथास्य कल्पः पवमानस्य विश्वविद्दविद्युतत्याश्चेति एते अष्टग्र-

मिन्द्रवस्त्वान्त्वामृणानि विभ्रतं पवमानस्य ते कवे विश्वेभिरग्ने अग्निभिर्मितं वयं हवामह इन्द्रं वो विश्वतस्परि ताङ्कवे ययोरिदमभित्वा शूरनोनुम इति कण्वरथन्तरं पृष्ठमानो विश्वासु हव्यमिति सदोविशीयं ब्रह्मसाम जनुपैकर्चेयोः सफपौष्कले परित्यं हर्य्यतं हरिमित्यनुष्टुप् पवित्वन्त इति कावमन्त्यमुक्थरत्युक्थानि समानमितरमायुषैकाहिके वेति ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणे अष्टादशाध्यायस्य

चतुर्थः खण्डः ।

---

अथ पञ्चमः खण्डः।

अथ तीव्रसोमाख्यं सप्तदशस्तोमकमुक्थसंस्थमेकाहमाह ।

सप्तदश उक्थ्यः ॥ १ ॥

स्पष्टोऽर्थः ॥ १ ॥

अथ सोमातिपवितस्यात्राधिकार इति वक्तुमाह ।

इन्द्रो वृत्रमहन् स विष्वङ्वीर्य्येण व्यार्छत्तस्मै देवाः प्रायश्चित्तिमैच्छंस्तान्न किञ्चनाभिनोत्तन्तीव्रसोम एवाभिनोत् ॥ २ ॥

पूर्व्वं वृत्रं हतवत इन्द्रस्य सर्व्वतोवीर्य्येऽपगते सति देवाः पुनः

प्राप्युपायं विचिन्त्य बहून्यज्ञान् प्रायुङ्क्त किञ्चनाधिनोत् न प्रीणयन् तं तीव्रसोमस्त्वधिनोत् ॥ २ ॥

एवं प्रशस्येदानीं सोमातिपवितस्यात्राधिकार इत्याह ।

सोमातिपवितं याजयेत् ॥ ३ ॥

स्पष्टोऽर्थः ॥ ३ ॥

तत्कुत इति तत्राह ।

छिद्र इव वा एष यꣳ सोमोऽतिपवते यत्तीव्रसोमेन यजते पिहित्या एवाछिद्रतायै ॥ ४ ॥

यं यजमानं सोमोऽतिपवते एष छिद्रमिव वै असम्पूर्ण एव खलु यत्तीव्रसोमेन यजते तत्पिहित्या एव सोमातिपवनविरोधायैव सोऽस्याच्छिद्रतायै सम्पूर्णसामर्थ्यायैव तीव्रश्चासौ सोमश्चेति तीव्रसोम तीव्रसोमत्वं शृतमाशिरं दुहन्ति तीव्रयन्त्येवैनमित्यादिना स्पष्टीकरिष्यते सोमातिपवितस्य लक्षणं सूत्रकारो मतभेदेन बहुधा दर्शयति तीव्रसुति सोमातिपवितं याजयेदिति यद्दृष्ट्वा पापीयान् स्यात् स सोमातिपवित इति शाण्डिल्य इति यं सोमोऽतिपवते स सोमातिपवितः सोमयागोत्तरकालः सोऽनष्टश्रीकः स एवमुक्तः इति यः सोमं पीत्वा छर्दयेत विरिच्येत वेति धानञ्जप्य इतीति वमनं विरेको वा अतिपवनमित्यर्थः ज्येष्ठेवाऽनिष्ठिनि कनीयसी ष्ठिनीतीति अथवा यः कनीयसि भ्रातरि इष्टवति सति स्वयं सोमेन नेष्टवान् स सोमातिपवितः ॥ ४ ॥

अथाधिकार्य्यान्तरमाह ।

राजानमपरुद्धं याजयेत् ॥ ५ ॥

स्पष्टोऽर्थः ॥ ५ ॥

अस्मिन्नधिकारनिमित्तमतिपवनं योजयति ।

विड्वा एतमतिपवते यो राजावरुध्यते यत्तीव्र-सोमेन यजते पिहित्या एवाच्छिद्रतायै ॥ ६ ॥

यो राजावरुध्यते राष्ट्रेण परित्यज्यते एनं राजानं विट् प्रजा खल्वतिपवते अत्यन्तं परित्यजति शिष्टं पूर्ववत् ॥ ६ ॥

पुनरन्यमधिकारिणमाह ।

ग्रामकामो यजेत ॥ ७ ॥

स्पष्टोऽर्थः ॥ ७ ॥

उक्तक्रतावस्यानुकूल्यमाह ।

ग्रामो वा एतमतिपवते योऽलङ्ग्रामाय सन् ग्रा-मन्न विन्दते यत्तीव्रसोमेन यजते पिहित्या एवाच्छि-द्रतायै ॥ ८ ॥

जनसमूहो ग्रामः शिष्टमुक्तप्रायं ॥ ८ ॥

पुनरप्यधिकार्य्यन्तरमाह ।

प्रजाकामो यजेत प्रजा वा एतमतिपवते योऽलं

प्रजाया: सन् प्रजान्न विन्दते यस्तीव्रसोमेन यजते पिहित्या एवाछिद्रतायै ॥ ९ ॥

स्पष्टोऽर्थः ॥ ९ ॥

पुनरप्यधिकार्य्यन्तरमाह ।

पशुकामो यजेत पशवो वा एतमतिपवन्ते योऽलं पशुभ्यः सन् पशून्न विन्दते यस्तीव्रसोमेन यजते पिहित्या एवाछिद्रतायै ॥ १० ॥

स्पष्टोऽर्थः ॥ १० ॥

पुनरप्यधिकार्य्यन्तरमाह ।

आमयाविनं याजयेत् प्राणा वा एतमतिपवन्ते य आमयावी यस्तीव्रसोमेन यजते पिहित्या एवाछिद्रतायै ॥ ११ ॥

स्पष्टोऽर्थः ॥ ११ ॥

सोमस्य तीव्रप्रकारमाह ।

शतमाशिरं दुहन्ति तीव्रयन्त्येवैनं ॥ १२ ॥

अस्यार्थमाह सूत्रकारः शतमाशिरं दुहन्तीति धेनुशतन्दोहयित्वा त्रेधं विभज्य सोममिश्रं कुर्य्युर्य्यथा वैश्वस्तोम इति सोममिश्रार्थं दध्यादिकमाशिरमित्युच्यते स्पष्टमन्यत् ॥ १२ ॥

अत्र क्रतौ प्राकृतदक्षिणामापाद्याशीरर्थं शतं दक्षिणेत्याह।

तत्ता उ एव दक्षिणाः ॥ १३ ॥

तत्तस्य क्रतोः उशब्दोऽवधारणे तथैवकारः अतो अवधारण-द्वयेनोक्तव्यतिरिक्तदक्षिणा निवर्त्यते तस्य क्रतोः तदेव धेनुगतं दक्षिणाख्यात उ एव दक्षिणा इति व्याहेति स्पष्टं ॥ १३ ॥

प्रकारान्तरेण सोमस्य तीव्रत्वमाह।

अध्यभिसोमानुन्नयन्ति तीव्र एतद्भिनवदित्यु-न्नावध्वर्य्यूं सर्व्वे चमसाध्वर्य्यवोऽच्छावाकाय प्रतिगृणन्ति तीव्रयन्त्येवैनं ॥ १४ ॥

अस्यार्थं सूत्रकार एवमाह अध्यभिसोमानुन्नयन्तीति यान्य-मसानवजिघ्रेयुस्तेष्वेवाभ्युन्नयेयुरिति यान्यमसानवजिघ्रेयुस्तान् परित्यज्यैव तेषामुपर्य्युत्तरयागेभ्यः सोमानुन्नयेयुः अवजिघ्र-तोऽपि भक्षित एवेति सत्ता न त्याज्य इत्यर्थः ॥ १४ ॥

पुनः प्रकारान्तरेण तीव्रत्वमाह।

तद्भक्षयन्त ऋत्विजश्चमसानवजिघ्रन्ति तीव्र-यन्त्येवैनं तत्तानच्छावाकस्य स्तोत्रे भवन्ति तीव्रय-न्त्येवैनं ॥ १५ ॥

अस्यार्थं सूत्रकार एवाह तत्र भक्षाहृताचमसानवजिघ्रेयु-रिति तत्र तीव्रसुति भक्षणस्थाहृताधर्म्मेणावघ्राणं कुर्य्युः कुत इत्याह अभक्षयन्त ऋत्विजश्चमसानवजिघ्रन्तीत्याहेति अभक्ष-

यन्तोऽवजिघ्रेयुरिति भक्षणप्रत्याम्नायत्वेनावघ्राणविधानात् तद्-
र्थापत्तिरिति अथ प्रातान् सोमशेषानाच्छस्तोत्रेषु भक्षयन्ति
तदपि सोमस्य तीव्रत्वकरणमित्याह तन्नानच्छावाकस्य स्तोत्रे
भक्षयन्ति तीव्रयन्त्येवैनन्तदिति अत्र सूत्रं तानच्छावाकस्तोत्रेण
स्तुत्वा भक्षयन्तीति ह्याहैवं सर्वेषु सवनेष्विति ॥ १५ ॥

अथ सवनान्तेष्वेव यज्ञक्षणमुक्तं तदेतद्व्यतिरेकेन निन्दासं-
कीर्त्तनेन द्रढयति ।

तद्यत् सवनानि व्यवभक्षयेयुरपक्रामुका यजमा-
नाच्छ्रीः स्यात् सकृत्सकृत्सवनानामन्ततो भक्षयन्ति
सवनानामसंभेदाय ॥ १६ ॥

यद्यपि सवनानि सवनगतान् हुतशिष्टान् ग्रहचमसगतान्
सोमान् व्यवभक्षयेयुः विभज्य विभज्य तत्तद्धोमावसाने भक्षयेयुः
सवनत्रयेष्वपि मध्ये मध्ये विच्छेदेन यज्ञविच्छेदादस्माच्छ्रीरप-
क्रमणशीला स्यात् तदकृत्वा सवनान्तेष्वेव यदि सकृत् सकृद्भक्ष-
येयुः तत्सवनेषु त्रिष्वपि मध्ये अविच्छेदाय भवति ॥ १६ ॥

होतुःपृष्ठस्य रथन्तरत्वमाह ।

रथन्तरꣳ साम भवति ॥ १७ ॥

स्पष्टोऽर्थः ॥ १७ ॥

अथ सोमस्यातिपवितावेव रथन्तरं युक्तमिति प्रशंसति ।

इयं वै रथन्तरमस्यां वा एष न प्रतितिष्ठति यो न प्रतितिष्ठत्यस्यामेवैनं प्रतिष्ठापयति॥ १८॥

स्पष्टं॥ १८॥

अथ ब्राह्मणाच्छंसिपृष्ठं आयन्तीयं विधत्ते।

आयन्तीयं ब्रह्मसाम भवत्येतदेवाभिश्रीणाति॥ १९॥

अस्मिन् सोमातिपवितादौ एतदेव आयन्तीयं सामैव श्रीणाति मिश्रयत्यपगतं तेजःप्रभृतिकं अस्य श्रीणनसामर्थ्यमिन्द्रो वृत्रमहन् स विश्वं वीर्य्येण व्यभ्रंशत स एतच्छायन्तीयमपश्यत्तेनात्मानं समश्रीणादित्युक्तं सिद्धं॥ १९॥

अथार्भवपवमाने अनुष्टुभि तृचे अन्त्यस्य यज्ञायज्ञीयस्याप-कर्षमाह।

यज्ञायज्ञीयमनुष्टुभि भवति॥ २०॥

स्पष्टोऽर्थः॥ २०॥

एतत् प्रशंसति।

वागनुष्टुप् वाचो रसो यज्ञायज्ञीयं वाच्येवास्य रसं दधाति॥ २१॥

वाचोऽनुष्टुप्त्वमितरेषां छन्दसामनुष्टुभ्यनुप्रवेशात् सिद्धं देवा वै ब्रह्म व्यभजन्त तस्य यो रसोऽत्यरिच्यत तत् यज्ञायज्ञीय-

मभवदिति श्रुतेः वाग्रसत्वमस्य वागात्मकयज्ञायज्ञीयस्य रसं सारमनुष्टुबात्मिकायां वाच्येव दधाति तथा कुर्व्वन्नुद्गाता ॥२१॥

अस्याग्निष्टोमसामनि यज्ञायज्ञीयस्थानीयं सामान्तरमाह।

**विशोविशीयमग्निष्टोमसाम भवत्येतद्वैवास्मिन् सर्वं प्रतिष्ठापयति ॥ २२ ॥**

विशोविशीयमग्निष्टोमं कुर्व्वन्नुद्गाता अग्निष्टोमस्य सर्व्वस्तोमान्तत्वात् एतत्सर्व्वमेव सकलस्तोमसाध्यं क्रत्स्नफलमेवास्मिन् सोमातिपवितादौ प्रतिष्ठापयति स्थापयति ॥ २२ ॥

अथ तृतीयोक्थे उद्वंशीयमनूद्य प्रशंसति।

**उद्वꣳशीयमुक्थानामन्ततो भवति सर्वेषां वा एतत्पृष्ठानाꣳ रूपꣳ सर्वेष्वेव रूपेषु प्रतितिष्ठति ॥२३॥**

सर्व्वाणि वैरूपाण्युद्वंशीयं गायन्ति त्वा गायन्निति इति रथन्तरस्य रूपमित्यादिना सर्व्वपृष्ठत्वरूपत्वप्रतिपादनात् सर्व्वपृष्ठत्वरूपत्वमस्य ॥ २३ ॥

अस्य तीव्रसोमस्य उक्थसंस्थतां सार्थवादमाह।

**उक्थो भवति पशवो वा उक्थानि पशुष्वेव प्रतितिष्ठति ॥ २४ ॥**

अथास्य कल्पः एते असृग्रमिन्दवस्त्वन्त्वा त्वष्ठा विभ्रतमिति पुरस्तात्पर्य्यासस्य तृचं पञ्चमे आयन्तीयं ब्रह्मसाम

संहितस्य लोके मौचं पौष्कलस्य लोके श्रुध्यं श्यावाश्वस्य यज्ञायज्ञीयं यज्ञायज्ञीयस्यर्चु विशोविशीयमग्निष्टोमसाम समानमितरमायुषैकाहिकेनेति ॥ २४ ॥

इति ताण्ड्यमहाब्राह्मणे अष्टादशाध्यायस्य

पञ्चमः खण्डः ।

---

अथ षष्ठः खण्डः ।

वाजपेयाख्यमेकाहमाह ।

## सप्तदश उक्था षोडशिमान् सप्तदशी ॥ १॥

अयं सप्तदशस्तोमकः उक्थसंस्थः सचोक्थ्यः षोडशिमान् षोडशिस्तोत्रयुक्तः एवं सति स षोडशिक उक्थ्यः षोडशस्तोत्रवान् अतिरिक्तोक्थ्येन सह सप्तदशी सप्तदशस्तोत्रवान् कर्त्तव्यः ॥ १ ॥

अथास्य प्रतिस्तोत्रं सप्तदशस्तोमत्वं स्तोत्राणां साप्तदश्यञ्च प्रजापत्यात्मना प्रतिपादयति ।

## यावान्वै प्रजापतिरूर्द्ध्वस्तावाꣳस्तिर्य्यङ् ॥ २॥

यावत्प्रमाणः प्रजापतिरूर्द्ध्वः उपर्य्युपर्य्युच्छ्रितः तावान् तावत्प्रमाणेव तिर्य्यङ् अत उच्छ्रितेन स्तोत्रसप्तदशकेन आत्मत्वात्मकत्वेन तिर्य्यग्भूतेन सप्तदशेन स्तोमेन चोपेतो वाजपेयः प्रजापत्यात्मकः उभयत्वायामविस्तारसाम्यात् ॥ २ ॥

प्रजापतेरायामविस्तारसाम्यं लोकसाम्येन समर्थ्यते ।

**यावन्त इमे लोका ऊर्द्ध्वास्तावन्तस्तीर्य्यञ्चः ॥३॥**

यथेमे दृश्यमाना भूरादयो लोका यावन्तः यावत्प्रमाणाः ऊर्द्ध्वाः स्युस्तावन्तस्तिर्य्यञ्चः तद्वत् प्रजापतिरपीति ॥ ३ ॥

अस्त्वेवं किमत इत्यत आह ।

**वाजपेययाजी वाव प्रजापतिमाप्नोति ॥ ४ ॥**

वाजपेयस्योक्तप्रकारेण प्रजापतिसाम्यादनुष्ठातापि प्रजापतिमेवाप्नोति ॥ ४ ॥

प्राजापत्यस्तोममेव विभज्य दर्शयति ।

**यत् सप्तदशस्तोत्राणि तेनोर्द्धमाप्नोति यत्सर्वः सप्तदशस्तेन तिर्य्यञ्चं ॥ ५ ॥**

स्तोत्राणामेकद्व्यादिक्रमेणोपर्य्युपर्य्यनुष्ठानात् प्रजापतेरूर्द्धाकारप्राप्तिः सप्तदशस्तोमस्यावृत्तिसाध्यत्वेन तिर्य्यक्त्वात् प्रजापतेस्तिर्य्यग्रूपावाप्तिः ॥ ५ ॥

अस्य सवनानां वैचित्र्यं प्रशंसितुमनुभाषते ।

**तस्य नानावीर्य्याणि सवनानि ॥ ६ ॥**

स्पष्टोऽर्थः ॥ ६ ॥

कथन्नानावीर्य्यत्वमिति तद्दर्शयति ।

अनिरुक्तं प्रातःसवनं वाजवन् माध्यन्दिनꣳ सवनञ्चित्रवत् तृतीयसवनं ॥ ७ ॥

प्रातःसवनस्य गायत्रत्वात् तस्य च कृत्स्नेनानिरुक्तगानात् प्रातःसवनमनिरुक्तं माध्यन्दिनसवने होतुः पृष्ठे रथन्तरविधानात् अत्र मघवन्निन्द्र वाजिन इति वाजशब्दश्रवणात् माध्यन्दिनस्य वाजवत्त्वं तृतीयसवनत्वं तृतीयसवने अग्निष्टोमसाम्नि वारवन्तीये त्वन्नश्चित्रउत्येति चित्रशब्दश्रवणात् चित्रवत्त्वं ॥७॥

अस्तु नानावीर्य्यत्वं किन्तत इत्यत आह।

यदनिरुक्तम् प्रातःसवनम्भवत्यनिरुक्तो वै प्रजापतिः प्रजापतिमेवाप्नोति यद्वाजवन् माध्यन्दिनꣳ सवनमन्नं वै वाजोऽन्नाद्यस्यावरुध्यै यच्चित्रवत् तृतीयसवनꣳ स्वर्गस्य लोकस्य समष्ट्यै॥ ८ ॥

स्वर्गस्यापि चित्याद्यपेक्षया तृतीयत्वात् तृतीयसवनं स्वर्गः स च नानाविधभोगसाधनत्वाच्चित्रः अतश्चित्रवत् तृतीयसवनानुष्ठानं स्वर्गस्य संप्राप्त्यै कल्पते स्पष्टमन्यत् ॥ ८ ॥

अथोक्तस्य प्रातःसवनस्यानिरुक्तत्वं क्रतुद्वयतन्त्रस्यानिरुक्तस्यानीयमिति प्रशंसति।

वियोनिर्व्वाजपेयइत्याहुः प्राजापत्यस्य निरुक्तस्यासेति यदनिरुक्तं प्रातःसवनन्तेन सयोनिः॥ ९ ॥

यस्मात् वाजपेयः पूर्व्वोक्तरीत्या प्राजापत्योऽपि निरुक्तसामा अस्य सामानि निरुक्तानि अतोऽनिरुक्तप्रजापतिरूपस्य वाजपेयस्य साम्नामनिरुक्तत्वाभावात् वाजपेयो वियोनिर्विलक्षणाश्रय इत्याकूरभिप्रा: तत्रेदमुत्तरं यत् प्रातःसवनमनिरुक्तं अतोऽयं सयोनिः प्राजापत्यानुकूलः प्रातःसवनस्य प्राथम्येन मुख्यत्वात्तदनिरुक्तकरणेन सर्व्वो यज्ञोऽनिरुक्तः कृतो भवतीत्यभिप्रायः ॥ ६ ॥

अथास्य होतुः पृष्ठस्य रथन्तरत्वं विदधाति ।

**रथन्तरꣳ साम भवत्याश्रीय उज्जित्यै ॥ १० ॥**

इयं वै रथन्तरमिति श्रुतेः रथन्तरकरणं अस्य लोकस्याश्रीय आशुतरं क्षिप्रतरं उज्जित्यै भवति ॥ १० ॥

अथ विहितरथन्तरत्वमेव तद्गानकालाभिषेकस्तुतिद्वारा प्रशंसति ।

**इयं वै रथन्तरमस्यामेवाध्यभिषिच्यते ॥ ११ ॥**

अस्यां पृथिव्यामधीश्वरभावेनाभिषिच्यते अतः पृथिवीस्थानीयं रथन्तरं प्रसिद्धमित्यर्थः अर्थात्तत्राभिषेकः कर्त्तव्यमित्युक्तं भवति यस्मिन्नासीनोऽभिषिच्येत तत्सरुक्मं होत्रे दद्यात् अभिषिक्तस्य यामासन्दीमास्थितस्तामुद्गात्रे तथा च सूत्रं वस्तचर्म्मं सरुक्मं होत्रे यस्मिन्नासीनोऽभिषिच्येतेति तथोद्गात्र इति प्रकृत्यासन्दी च स्तरणं याममिषिक्त आरोहेदिति ॥ ११ ॥

अथाभिषेकप्रसङ्गाद्वाजपेययाजिनः किञ्चिद्व्रतमाह ।

**तस्माद्वाजपेययाज्यप्रत्यवरोहीति ॥ १२ ॥**

तस्मादधिकमपि नान्दोलिकादिभ्योऽवरोहेदित्यर्थः अपूर्व्वत्वाद्विधिरियं ॥ १२ ॥

तस्मादित्युक्तं विवृणोति ।

**अस्याꣳ हि सोऽध्यभिषिच्यते ॥ १३ ॥**

यथाऽभिषिक्तो राजा राजान्तरन्न प्रत्यवरोहति अथासावप्यत्रैवाभिषिक्तत्वादित्यर्थः एतद्व्रतं यावज्जीविकमित्येके यावत् प्रत्यवरोहणीययागमित्यपरे प्रत्यवरोहणीयस्तु ज्योतिष्टोम इत्यार्षेयकल्पेनोक्तं वृहस्पतिसवः प्रत्यवरोहणीय इति वह्वृचाः वाजपेययाजिनो व्रतान्याह सूत्रकारः तस्य व्रतानि चतरृत्तिं वर्त्तयेदिति तामेव दर्शयति प्रत्यवरोहणाभिवादने जघन्यव्रज्यां समानशय्यतामिति वर्ज्जयेदवाजपेययाजिभिरिति आत्मन उत्कृष्टेरप्यवाजपेययाजिभिः सह प्रत्यवरोहणादिकं न कुर्य्यात् पृष्ठतोऽनुगमनं जघन्यव्रज्यां स्पष्टमन्यत् ॥ १३ ॥

अथ ब्राह्मणाच्छंसिपृष्ठे विशेषमाह ।

**अभीवर्त्तो ब्रह्मसाम भवति ब्रह्मणो वा एष ऋषभ ऋषभतामेवैनं गमयति ॥ १४ ॥**

ऋषभः श्रेष्ठः स्पष्टमन्यत् ॥ १४ ॥

अथाग्निष्टोमसामगीतं यज्ञायज्ञीयसामैवेऽपकर्षति।

यज्ञायज्ञीयमनुष्टुभि भवति वागनुष्टुब् वाचोरसो यज्ञायज्ञीयं वाच्येवास्य रसं दधाति ॥ १५ ॥

गतमिदं ॥ १५ ॥

अथाग्निष्टोमसाम्नि किं सामेति तद्दर्शयति।

वारवन्तीयमग्निष्टोमसाम भवतीन्द्रियस्य वीर्य्यस्य परिगृहीत्यै ॥ १६ ॥

इन्द्रियस्येत्यस्य व्याख्यानं वीर्य्यस्येति त्वन्नश्चिव उत्येति वारवन्तीयमग्निष्टोमसाम कार्य्यमग्निर्वा इदं वैश्वानरो दह-न्नैदित्यत्र रचाहेतुत्वेन श्रुतत्वात् सुज्ञानमन्यत् ॥ १६ ॥

अथान्यस्योक्थस्योद्वंशीयतां सार्थवादमाह।

उद्वंशीयमुक्थानामन्ततो भवति सर्वेषां वा एतत् पृष्ठानाꣳ रूपꣳ सर्वेष्वेव रूपेषु प्रतितिष्ठति ॥ १७ ॥

एतदपि पूर्व्वखण्डे गतं ॥ १७ ॥

अथास्य षोडशिसामाह।

गौरीवितꣳ षोडशिसाम भवति ॥ १८ ॥

स्पष्टोऽर्थः ॥ १८ ॥

एतत् स्तौति।

**अतिरिक्तं गौरीवितमतिरिक्तः षोडश्यतिरिक्त एवातिरिक्तं दधाति ॥ १९ ॥**

देवा वै वाचं व्यभजन्त तस्या योरसोऽत्यरिच्यत तद्गौरीवितमभवदिति श्रुतेरतिरिक्तं गौरीवितं षोडशी च नाह्नो न रात्रेरिति श्रुतेरतिरिक्तः अतस्तयोः सम्बन्धः समृद्धिहेतुः ॥ १९ ॥

अथोक्तयोरद्दंष्ट्रीयगौरीवितयोरुभयोरपि स्वारत्वाज्जामित्वमाशङ्कते।

**तदाहुर्जामि वा एतद्यज्ञे क्रियते यद्दंष्ट्रीयाद् गौरीवितेन स्तुवते स्वारात् स्वारेणेति ॥ २० ॥**

स्पष्टं ॥ २० ॥

तस्य परिहारमाह।

**न जाम्यस्ति सवनꣳ सन्तिष्ठते ॥ २१ ॥**

उक्थस्य समाप्तेर्न्न जामि ॥ २१ ॥

परिहारान्तरमाह।

**उक्थꣳ शस्यते वषट्कारोऽन्तरा तेनाजामि ॥२२**

स्तुतमनुशंसतीति वचनादुक्थस्तोत्रानन्तरमुक्थं शस्यते उक्थ्यग्रहहोमे वषट्कारः सोऽन्तरा मध्ये भवति तेनापि न जामिदोषः ॥ २२ ॥

अथान्यतः परिहरति ।

**अपछिद्दिव वा एतद्यज्ञकाण्डं यत् षोडशी ते-नाजामि ॥ २३ ॥**

यज्ञपर्व्वापच्छिद्दिव वै अपच्छिन्नमिव खलु अयमेवाप-च्छेदो यद्धोतकाणामभावः होतृणाम हि षोडशी नातः परं होतृकाणां सामानि सन्ति अतः चुद्रमिदं सर्व्वं विजातीयानां हि क्षतं करणे जामिता स्यात् ॥ २३ ॥

अथ षोडशिन ऊर्द्धं वाजपेयस्तोत्रं सप्तदशं भवति तच्च क्लृप्त-यज्ञकाण्डेष्वनन्तर्भूतं अतएव यज्ञारण्येऽखिलें स्थाने सन्तिष्ठत इति दोषमाशङ्कते ।

**यज्ञारण्ये सन्तिष्ठत इत्याङ्गरत्युक्थान्येत्यति-षोडशिनन्न रात्रिं प्राप्नोतीति ॥ २४ ॥**

उक्थानि षोडशिश्चातिक्रम्येतदेति रात्रिपर्य्यायान्न प्राप्नो-तीति अतो यज्ञारण्ये सन्तिष्ठते इति समाप्यते इतिशब्दो-वचनसमाप्तिद्योतनार्थः ॥ २४ ॥

उक्तदोषं परिहरति ।

**विष्णोः शिपिविष्टवतीषु बृहदुत्तमं भवति॥ २५॥**

स्पष्टोऽर्थः ॥ २५ ॥

कथन्तेन परिहृतो भवतीति तदाह ।

एषा वै प्रजापतेः पशुष्ठा तनूर्यच्छिपिविष्टः प्राणो बृहत् प्राण एव पशुषु प्रतितिष्ठति ॥ २६ ॥

यज्ञो विष्णुः पशवः शिपिरितिश्रुत्यन्तरात् विष्णोः प्रजापतित्वात् शिपिविष्ट इति यत् एषा प्रजापतेर्यज्ञात्मकस्य विष्णोः पशुष्ठा तनूः किञ्च प्राणबृहत्साम्नोरुभयोरपि बृहत्त्वात् बृहत्साम प्राणः अतः वाजपेयस्तोत्रेण यज्ञसमापकः प्राणे पशुषु च यज्ञं प्रतिष्ठापयति ॥ २६ ॥

अथ पृथक् बृहत्साम्ना समाप्तिद्वारापि परिहरति।

बृहता स्तुवन्ति बृहदमुं लोकमाप्तुमर्हति तमेवाप्नोति ॥ २७ ॥

असौ बृहदिति श्रुतेः बृहत्साम स्वर्गं लोकमाप्तुमर्हति अतस्तेन समापयितापि स्वर्गमेवाप्नोति अत ऐहिकपशुलाभादामुष्मिकस्वर्गलाभाच्च यज्ञारण्यसंस्थापनदोषोऽस्ति ॥ २७ ॥

इति ताण्ड्यमहाब्राह्मणे अष्टादशाध्यायस्य

षष्ठः खण्डः।

---

अथ सप्तमः खण्डः।

उक्तो वाजपेयः, अथास्योक्तानामनुक्तानाञ्च केषाञ्चिदङ्गानां विधिपूर्व्विका स्तुतिः क्रियते, तत्रादौ वाजपेयशब्दनिर्व्वचनप्रदर्शनप्रसङ्गेनास्याधिकारिणं दर्शयति।

प्रजापतिरकामयत वाजमाप्नुयाꣳ स्वर्गं लोक-मिति स एतं वाजपेयमपश्यद्वाजपेयो वा एष वाज-मेवैतेन स्वर्गं पल्लोकमाप्नोति॥ १॥

पूर्व्वं पेयद्रव्यात्मकवाजाख्यं स्वर्गं कामयमानः प्रजापतिः तत्साधनत्वेन वाजपेयमनुष्ठाय तल्लाभवान् एष यज्ञोवाजपेयः खलु वाजोऽन्नं पेयद्रव्यात्मकं यस्मिन् स वाजपेयः सुराग्रहस्यात सम्भवात्तदाप्तिहेतुत्वाच्च वाजपेयः अत एतदनुष्ठातापि तत्-फलमाप्नोति वाजपेयशब्दो गुणविधायकः कर्म्म वेति विचार्य्य प्रमाणाध्याये नामधेयपाद एतत्समानार्थं वाजपेयेन स्वाराज्य-कामो यजेतेत्येतद्वाक्यं विषयीकृत्य गुणविधित्वं पूर्व्वपक्षीकृत्या-ग्निहोत्रशब्दवत् कर्मनामधेयमिति सिद्धान्तितं ॥ १ ॥

अथास्य प्रातःसवनगतस्तोत्रीयाणां शुक्रवत्यत्वमनूद्य प्रशं-सति।

शुक्रवत्यो ज्योतिष्मत्यः प्रातःसवने भवन्ति तेजो ब्रह्मवर्चसन्ताभिरवरुन्धे॥ २॥

सोमाः शुक्रा गवाशिर इति शुक्रवत्यः ता एव ज्योतिष्मत्यः ताभिः स्तोत्रीयाभिस्तेजोविशेषं ब्रह्मवर्चसमवरुन्धेऽनुष्ठाता पूर्व्वत्राविहितत्वाच्छुक्रवत्यः कर्त्तव्या इति विधिः ॥ २ ॥

अथ माध्यन्दिने विहितवाजवत्त्वमनूद्य प्रशंसति।

वाजवत्योमध्यन्दिने भवन्ति स्वर्गस्य लोकस्य समष्ट्यै ॥ ३ ॥

स्पष्टं ॥ ३ ॥

अन्नवत्योगणवत्यः पशुमत्यस्तृतीयसवने भवन्ति भूमानन्ताभिरवरुन्धे ॥ ४ ॥

पुरोजितीव इत्यन्धःशब्दादन्नवत्यः भरन्तो वस्रव: एभिर्वद्वास इन्दुभिः गायन्ति त्वा गायत्रिण इति बहुकीर्त्तनैर्गणवत्यः गोपातिरन्धसा अमीति गोमत्यः ताभिस्तृतीयसवनगताभिर्भूमानं बहुभावं यजमानः अवरुन्धे एतदन्नादेरुपलक्षणं ॥ ४ ॥

अथास्य पवमानादीनां सर्व्वेषां सप्तदशस्तोममनूद्य प्रशंसति।

सर्वः सप्तदशोभवति प्रजापतिर्वै सप्तदशः प्रजापतिमेवाप्नोति ॥ ५ ॥

ओं श्रावयेति चतुरक्षरमतिक्रम्य एष वै सप्तदशः प्रजापतिरिति श्रुतेः तस्य सप्तदशत्वं ॥ ५ ॥

अथ ऋत्विजां हिरण्यमालित्वमाह ।

हिरण्यस्रज ऋत्विजो भवन्ति महसएव तद्रूपं क्रियते ॥ ६ ॥

ऋत्विजामपि हिरण्यस्रक्त्वं महसो महत्त्वस्य रूपं क्रियते ॥ ६ ॥

केनाभिप्रायेण क्रियते तदाह।

**एषमेऽमुष्मिन् लोके प्रकाशोऽसदिति ॥ ७ ॥**

एष मे मह्यं अमुष्मिन् लोके महसोरूपकरणात् प्रकाशो ऽसद्भूयादिति बुद्ध्या देवसन्निधौ प्रकाशं करोति ॥ ७ ॥

तत् पुनर्हेममालित्वं हिरण्यद्वारा प्रशंसति।

**ज्योतिर्वै हिरण्यञ्ज्योतिरेवास्मिन् दधाति ॥८॥**

स्पष्टं ॥ ८ ॥

अथात्र सर्व्वेषामाजिधावनं तत्र यजमानस्यैतज्जयञ्च विधाय प्रशंसति।

**आजिन्धावन्ति यजमानमुज्जापयन्ति स्वर्गमेवै-नन्तल्लोकमुज्जापयन्ति ॥ ९ ॥**

सुगमं, आजिधावनसाधनं रथमुद्गात्रे दद्यात् तथाच सूत्रं येन रथेनाजिन्धावेत्तमुद्गात्रे दद्यादिति ॥ ९ ॥

अथ स्वर्गप्रतिनिधिरूपं काष्ठाग्रे रथचक्रादिना कृतं तत्र यजमानारोहणमाह।

**नाकꣳ रोहति स्वर्गमेव तल्लोकꣳ रोहति ॥१०॥**

स्पष्टं ॥ १० ॥

अथास्य नाकस्याजीवत्प्रदेशकृतारोहणमाह।

स रजसे रोहति मनुष्यलोकादेवैनमन्तर्दधाति ॥ ११

स्पष्टं ॥ ११ ॥

अथ रथचक्रावस्थितस्य ब्रह्मणो वाजिनां सामगानमाह ।

वाजिनाꣳ साम ब्रह्मा रथचक्रेऽभिगायति वाजो वै स्वर्गो लोकः स्वर्गमेवैनन्तल्लोकमुज्जापयति ॥ १२ ॥

ब्रह्माणं प्रति गानमुक्तं वाजिनां साम आर्षेयकल्पे उक्तं वाजिनाश्चैव सामादित्यानांश्च पवित्रं आविर्मर्य्या इति अनु-हित्वा सुतं इदमपि वाजिनां साम ॥ १२ ॥

शिपिविष्टवतीषु बृहद्गानं प्रशंसति ।

विष्णोः शिपिविष्टवतीषु बृहदुत्तमं भवति स्वर्ग-मेव तल्लोकꣳ रुद्ध्वा ब्रध्नस्य विष्टपमभ्यतिक्रामति॥१३॥

किमित्ते विष्णो इति शिपिविष्टवतीषु बृहदुत्तमं षोड-शिनः परं भवति त्रयं तमस्य रजसः पराक इति विष्णोर्दिव उपरि निवासस्य श्रूयमाणत्वात् स्वर्गं लोकं रुद्ध्वा ब्रध्नस्यादित्यस्य विष्णुरूपस्य विष्टपं स्थानं अभि उद्दिश्याभिक्रामति अथास्य कल्पः पूर्वस्य बहिष्पवमानं व्रात्यानि नीथाज्यानि वैश्वजितमुत्तरं बार्हद्गुक्थस्य लोके देवस्थानं रथन्तरं पृष्ठमभीवर्त्तो ब्रह्मसाम-मौचस्य लोके स्वाशिरामर्कः श्यावाश्वस्य यज्ञायज्ञीयन्त्वन्नश्चित्त उत्येति वारवन्तीयमग्निष्टोमसाम समानमितरं गवैकाह्निकेन गौरीवितं षोडशिसाम विष्णोः शिपिविष्टवतीषु बृहत्सर्वे सप्त-

दृशा इति पूर्व्वस्य तीव्रसुतस्येत्यर्थः महाव्रतसम्बन्धीन्यन्यानि त्रीणि होतादेवो अमर्त्यः तानः शक्तं पार्थिवस्येत्याद्युक्तानि॥१३॥

इति ताण्ड्यमहाब्राह्मणे अष्टादशाध्यायस्य

सप्तमः खण्डः।

---

अथ अष्टमः खण्डः।

अथ राजसूयोऽभिधीयते, तत्स्वरूपं बौधायनापस्तम्बाभ्यां आध्वर्य्यवं सूत्रद्वयाभ्यामुदीरितं, तत्र बौधायनः राजसूयेन यक्ष्यमाणो भवति पुरस्तात् फाल्गुन्यै पूर्णमास्यै चैत्र्यां वा पूर्णमास्यां आमावस्येन हविषेष्ट्वा दीक्षते तस्य तिस्रो दीक्षास्तिस्र उपसदः सप्तम्यां प्रसुतः सन्तिष्ठते एष प्रायणीयोऽग्निष्टोमः सहस्रदक्षिण उदवसानीयान्त इति। आपस्तम्बोऽपि राजा स्वर्गकामो राजसूयेन यजेत शतसहस्रं दक्षिणोऽग्निष्टोमपञ्चापवर्गः प्रथममहः पञ्चसहस्राणि पवित्रे ददाति त्रिंशतमभिषेचनीये त्रिंशतं दशपेये केशवपनीये विंशतिः व्युष्टिद्विरात्रे पञ्चचत्रस्य धृताविति। आश्वलायनोऽपि सूत्रं सूत्रयन्नित्यमाह, अथ राजसूयाः पुरस्तात् फाल्गुन्याः पौर्णमास्याः पवित्रेणाग्निष्टोमेनाभ्यारोहणीयेन यजेत पौर्णमास्यां चातुर्मास्यानि प्रयुङ्क्ते इति। ब्राह्मणभाष्यकृद्भिरपि पूर्वाचार्य्यैरित्थं संगृहीतं, वक्ष्यते राजयज्ञोऽयं राजसूयाह्वयोऽस्य च। प्रयोगसंग्रहः पूर्व्वं फाल्गुन्याः सोममाहरेत्। अग्निष्टोमः पवित्राख्यः सोऽभ्यारोहणसाधनः। फाल्गुन्यां पूर्ण-

मास्यान्तु चातुर्मास्यान्युपक्रमेत्। तानि संवत्सरे कृत्वा द्वौ सोमौ तत आहरेत्। आद्योऽभिषेचनीयः स्याद्दशपेयस्ततःपरं। पञ्चिष्टयस्तु बहवः कर्त्तव्यास्तु तदा तदा। स्यात्केशवपनीयस्य सोऽतिरात्रस्ततः परं। व्युष्टिद्विरात्रः कर्त्तव्यस्तत्राग्निष्टोम आदिमं। अहः स्यादतिरात्रोऽन्त्यं चत्रस्य धृतिरन्तिमः। अग्निष्टोमो भवेदित्यं राजसूयाह्वयः क्रतुः। सोमेष्टिपशुबन्धानां समाहारो भवत्ययं। तत्रेष्टिपशुबन्धेषु सतः साम्नामनन्वयाः। सामा एव प्रकीर्त्यन्ते इत्येते अनुगम्यतामिति, तत्रादौ पवित्राख्यमग्निष्टोमं विधत्ते।

अग्निष्टोमं प्रथममाहरति यज्ञमुखं वा अग्निष्टोमो यज्ञमुखमेवारभ्य सवमाक्रमते॥ १॥

द्वादशस्तोत्रयुक्तोयोऽग्निष्टोमस्तमेतं राजसूयोपक्रमे सम्पादयेत् सोमयागानाम्मध्ये ज्योतिष्टोम आद्यः एष वाव प्रथमो यज्ञोयज्ञानां यत् ज्योतिष्टोम इति श्रुतेः तस्य ज्योतिष्टोमस्य सम्बन्धिन्यो याः सप्तसंस्थाः सन्ति तासाम्मध्येऽग्निष्टोमसंस्थायाः प्रकृतत्वेन यज्ञमुखत्वं तस्मादादावग्निष्टोमेऽनुष्ठिते सति यज्ञस्य राजसूयाख्यस्य महाक्रतोर्मुखमेवारभ्य सवमाक्रमते महाक्रतुमनुतिष्ठति सूयतेऽभिषिच्यते यजमानो यस्मिन् महाक्रतौ सोऽयमभिषेकयुक्तो महाक्रतुः सव इत्युच्यते यथोक्तविधिं तैत्तिरीया अप्येवमामनन्ति अग्निष्टोममग्रमाहरति यज्ञमुखं वा अग्निष्टोमः यज्ञमुखमेवारभ्य सवमाक्रमत इति॥ १॥

राजसूयगतेषु सप्तसु सोमयागेषु प्रथमो विहितः द्वितीयं विधत्ते ।

अथैषोऽभिषेचनीयः ॥ २ ॥

अथशब्दोनानन्तर्य्यार्थः चातुर्मास्यादिभिर्व्यवहितत्वेनाग्निष्टोमाभिषेचनीययोरानन्तर्य्यस्य दुःसम्पादनीयत्वात् अधिकारार्थस्तु भवेत् एष वक्तुमिष्टोऽभिषेचनीयोऽधिकृतः प्रारब्ध इत्यर्थः ॥ २ ॥

बहिष्पवमानमाध्यन्दिनपवमानार्भवपवमानाख्येषु त्रिषु स्तोत्रेषु स्तोमविशेषं विधत्ते ।

तस्य द्वात्रिंशाः पवमाना द्वात्रिंशदक्षरानुष्टुब्वागनुष्टुब्वावती वाक्ययैव सूयते ॥ ३ ॥

प्रसिद्धेवानुष्टुभोऽक्षरसंख्या सा वानुष्टुब्वाग्रूपा वाग्देवतायाः प्रियत्वात् तच्चाविसम्वादेन सर्ववेदेषु तथा व्यवहारात् अवगम्यते ततोद्वात्रिंशस्तोमे पवमानेषु प्रयुक्ते सति संख्याद्वारायं यजमानः कृत्स्नमन्त्ररूपया वाचाऽभिषिक्तो भवति यद्यपि विष्टुत्यध्याहारयोरयं स्तोमोनाम्नातः तथापि शाखान्तरानुसारिसूत्रकाराद्युपदेशादवगन्तव्यः तैत्तिरीयास्तु स्तोमान्तरमामनन्ति अथैषोऽभिषेचनीयश्चतुस्त्रिंशः पवमानो भवति त्रयस्त्रिंशद्वै देवताः एतावाप्नोति प्रजापतेश्चतुस्त्रिंशस्तमेवाप्नोति ॥ ३ ॥

अथ ब्रह्मवादिभिर्यो दोष उद्भाव्यते तं दर्शयति ।

तदाहुः सꣳशरद्व वा एष छन्दसां यद्विषमा-

स्तोमा अयथापूर्वमिति ॥ ४ ॥

अभिषेचनीयस्योक्थसंस्थारूपत्वात्तत्र पञ्चदशस्तोत्राणि तेषु प्रथमषष्ठैकादशानि सवनत्रयगतानि पवमानस्तोत्राणि तेष्वधिकसंख्योपेतोद्वात्रिंशस्तोमः प्रयुज्यते तेभ्यः उपरितनेषु सवनत्रयगतेषु स्तोत्रेषु पञ्चदशसप्तदशैकविंशस्तोमा न्यूनसंख्योपेताः प्रयुज्यन्ते तदेतदयथापूर्वं भवेत् अल्पेनोपक्रम्याधिकेन समाप्तौ तु यथापूर्वं भवति तस्मात्र नास्ति तदेतद्वैषम्यन्तच्च प्रयुज्यमानमन्त्रगतच्छन्दसामवक्राशरूपत्वात् संशर इव सम्यग्वध इव भवति ॥ ४ ॥

तमेतन्दोषं ब्रह्मवादी कश्चिदभिज्ञः समाधत्ते ।

यत्समाः पवमानास्तेनासंशरस्तेन यथापूर्वं ॥५॥

यदा पवमानस्तोत्राण्यन्यस्तोत्राणि चैकीकृत्य परीक्ष्यन्ते तदानीं अर्वाचीनसंख्या उपरितनत्वे सत्ययथापूर्वत्वरूपेण स्तोमवैषम्येन छन्दोवधः शङ्क्यते पृथक् परीक्षायान्तु नासौ शङ्कास्ति न तावत् परस्तोत्रेषु अयथापूर्वत्वमस्ति पञ्चदशसप्तदशैकविंशानामनुक्रमेणैवानुष्ठितत्वात् नापि पवमानेष्वसौ शङ्का यद्यस्मात् कारणात् पवमानास्त्रयोऽपि द्वात्रिंशस्तोमवत्त्वात् समास्तेन कारणेन वैषम्यप्रयुक्तः संशरोनास्ति तेनोभयविधेषु स्तोत्रेषु यथापूर्व्वत्वमेव नतु वै परीत्यं अतोक्तदोषोद्भावनतत्परिहारः तैत्तिरीया अप्येवमामनन्ति संशरएषः स्तोमानामयथापूर्वं यद्विषमाः स्तोमाः एतावान्वै यज्ञः यावत् पवमानाः अन्तः-

स्तोत्रा वा अन्यत् यस्मात् पवमानास्ते संग्रहत्वेन यथापूर्वमिति त्रयः पवमाना इति यावानस्ति एतानेव मुख्यो यज्ञभागः अन्यत्तु सर्वमन्तःस्तोत्रं वै यज्ञमवधेः सम्बन्धमित्येताव देव यस्मात् पवमानसाम्येन सर्वोदोषः परिहृत इत्यर्थः॥ ५॥

अभिषेचनीयस्योक्थसंस्थारूपत्वं विधत्ते।

आत्मना वा अग्निष्टोमेनर्ध्नोत्यात्मना पुण्योभवत्यथ यदुक्थानि पशवो वा उक्थानि विडुक्थानि यदुक्थानि भवन्त्यनुसन्तत्या एव॥ ६॥

अभिषेचनीयस्य यः पूर्वभागोऽग्निष्टोमाख्योद्वादशस्तोत्रयुक्तः सोऽयं सर्वेषां सोमयागानां प्रकृतित्वादात्मा देहस्थानीयः तेनैवेह लोके यजमानः समृद्धो भवति परलोके पुण्यफलोपेतो भवति अथ द्वादशस्तोत्रानन्तरं यदुक्थानि यानि त्रीण्युक्थाख्यस्तोत्राणि सन्ति तान्युक्थानि यज्ञशरीरस्थानीयादग्निष्टोमात् ब्रह्मत्वेन गवाश्वादिपशुस्थानीयानि तथा विट्प्रजापुत्रभृत्यादि प्रजास्थानीयानि च अतस्तानि स्तोत्राणि पशूनां प्रजाया अवच्छेदायैव तस्मादभिषेचनीय उक्थसंस्थ इत्यभिप्रायः शाखान्तरे चायमर्थो विस्पष्टमाम्नायते आत्मनैवाग्निष्टोमेनर्ध्नोति आत्मना पुण्यो भवति प्रजा वा उक्थानि पशव उक्थानि यदुक्थो भवत्यनुसन्तत्यै इति॥ ६॥

वहिष्पवमानस्यादावतिदेशप्राप्तप्राकृतमन्त्रबन्धनाय मन्त्रान्तरं विधत्ते।

वायो शुक्रो अयामित इति वायव्या प्रतिपद्भवति वाग्वै वायुर्वाचमेवास्य यज्ञमुखे युनक्ति तयाभिषिच्यते सर्वस्याएव वाचः सूयते सर्वाएनं वाचो राजेति वदन्ति ॥ ७ ॥

वायो शुक्र इत्यादि पादस्तृचस्य प्रतीकभूतः सोऽयं तृचो वहिष्पवमानस्य प्रतिपत्प्रारम्भसाधनं प्रतिपद्यते प्रारभ्यते अनया तृचरूपया चेति व्युत्पत्तेर्वायुर्देवता यस्याः प्रतिपदः सा वायव्या कौष्ठ्येन वायुना वागुच्चार्य्यत इति वायोर्वाग्रूपत्वोपचारः तथा सति वायव्यमन्त्रेण प्रारभमाण उद्गाता यजमानस्य यज्ञारम्भे वाग्देवतामेव संयोजयति तत्संयोजने तया वाग्देवतया अस्मिन्नभिषेचनीयक्रतावभिषिक्तो भवति तद्देवतानुग्रहात् सर्वप्राण्युच्चारितायाः सर्वस्याः मन्त्ररूपाया वाचः सम्बन्धी सन्नेवायं सूयतेऽभिषिच्यते अयमर्थः प्रत्यच्च एव यतः सर्वप्राणिमुखोद्गताः सर्वा वाचः एनं राजेत्येव व्यवहरन्ति शाखान्तरे त्वन्य एव तृचो वायुदेवताक एवमाम्नायते उपत्वाजामयोगिर इति प्रतिपद्भवतीति वाग्वै वायुर्वाच एवैषोऽभिषेकः सर्व्वासामेव प्रजानां सूयते सर्व्वाएनं प्रजा राजेति वदन्ति ॥ ७ ॥

वायो शुक्र इत्येतस्मात् तृचादूर्द्धं सम्भार्य्याख्या एकैकश आम्नाता ऋचो विधत्ते।

सम्भार्य्या भवन्ति पृष्ठान्येव ताभिर्य्युनक्ति यन्ना-

नादेवत्यास्तेन युनक्ति वीर्य्यं वै पृष्ठानि वीर्य्य एवा-ध्यभिषिच्यते ॥ ८ ॥

संभियन्ते स्वयमेकैका: सत्यस्तृचस्थाने सम्यक्प्रयुज्यन्ते ता: सम्भार्य्या: उपत्वाजामयोगिर इत्याद्या अग्न आयूंषीत्यन्ता: षट्संख्याका ऋचस्ताभि: षड्भिर्ऋग्भिरनुष्ठिताभिरयमुद्गाता पृष्ठस्तोत्रसामान्ये च योजितवान् भवति षट्संख्यासामान्यात् वृहद्रथन्तरवैरूपवैराजशाक्वररैवताख्यानि षट् पृष्ठसामानि यद्यनेन कारणेन सम्भार्य्या नानादेवताका: पृष्ठानि च तथा विदधाति एतेन कारणेन पृष्ठत्वयोजनं सम्भवति पृष्ठानाञ्च सामर्थ्यहेतुत्वात् वीर्य्यत्वं अत: सम्भार्य्यापाठेन यजमानो वीर्य्ये-ऽधिश्रित्याभिषिच्यते ॥ ८ ॥

ब्रह्मवादिनां दोषोद्भावनं दर्शयति।

यन्ति वा एते यज्ञमुखादित्याहुर्य्ये सम्भार्य्या: कुर्व्वत इति ॥ ९ ॥

य उद्गातार: सम्भार्य्या: स्तोत्रमध्येऽकुर्व्वत एते यज्ञमुख-रूपाद् वहिष्पवमानाद्यन्ति विभ्रष्टा भवन्ति एकैकामृचमाश्रित्य तृचपरित्यागएव भ्रंश: इतिशब्दो दोषसमाप्त्यर्थ: ॥ ९ ॥

तं दोषं परिहरति।

यत्पवस्व वाचो अग्रिय इति तेन यज्ञमुखान्न-यन्ति ॥ १० ॥

यद्येन कारणेन सम्भाव्यांश्च ऊर्ध्वं पवस्वेत्येतं तृचं पठन्ति तेन कारणेन यज्ञमुखादुभ्रंशोनास्ति तस्मादयं तृचः पठ्यत इत्यर्थः एतौ दोषपरिहारौ शाखान्तरेऽप्युक्तौ यन्ति वा एते यज्ञ-मुखात् ये सम्भाव्यां अब्रुवन् यदाह पवस्व वाचो अग्रिय इति तेनैव यज्ञमुखान्नयन्तीति ॥ १० ॥

अन्यं तृचं विधत्ते ।

**दविद्युतत्यारुचेति छन्दसाꣳ रूपं छन्दाꣳस्येवास्य यज्ञमुखे युनक्ति तैरभिषिच्यते ॥ ११ ॥**

दवीत्यस्य मन्त्रस्य छन्दोरूपत्वं षष्ठाध्यायस्य नवमखण्डे एव पठितं दविद्युतत्यारुचेति वै गायत्र्या रूपं परिष्टोभन्त्येति त्रिष्टुभः क्षपेत्यनुष्टुभः सोमाः शुक्रागवाशिर इति जगत्याः सर्वेषां वा एषां छन्दसां रूपमिति स्पष्टमन्यत् ॥ ११ ॥

तृचान्तरं विधत्ते ।

**एतमुत्यं दशक्षिप इत्यादित्या आदित्या वा इमाः प्रजास्तासामेव मध्यतः स्तूयते ॥ १२ ॥**

तासु ऋक्षु सनोअगाय पूष्णो पवस्वेत्येवमादित्यनाम्नः श्रव-णादादित्या आदित्यदेवताका एताः तथा प्रजा अप्यदिते-रुत्पन्नत्वादादित्याः तत आदित्यदेवताकस्य तृचस्य पाठादा-दित्यरूपाणां प्रजानाम्मध्ये एवाभिषिच्यते एतदपि शाखान्त-रेऽभिहितं एतमुत्यं दशक्षिप इत्याह आदित्या वै प्रजाः प्रजानामेवैतेन स्तूयत इति ॥ १२ ॥

तृचान्तरं विधत्ते।

पवस्वेन्द्रो वृषासुत इति वृषण्वत्यो भवन्ति त्रिष्टुभोरूपं वीर्य्यं वै त्रिष्टुप् वीर्य्य एवाध्यभिषिच्यते ॥१३॥

वृषन्शब्दस्य विद्यमानत्वादेता ऋचो वृषण्वत्यः यद्यप्येता गायत्र्यः तथापि वीर्य्यसम्पादकत्वात् फलतस्त्रिष्टुभोरूपं भवन्ति त्रिष्टुभश्चेन्द्रियवीर्य्यहेतुत्वं सर्ववेदप्रसिद्धं ॥ १३ ॥

पञ्चमं सूक्तं विधत्ते।

उत्ते शुष्मास ईरत इत्युद्वत्यो भवन्त्युद्वद्वा अनुष्टुभो रूपमानुष्टुभो राजन्यस्तस्मादुद्वत्यो भवन्ति ॥ १४ ॥

आदावुच्छब्दश्रवणात्ता उद्वत्यः अनुष्टुभ्यप्यन्यत्र क्वचिदुत्शब्दः श्रुतः उद्यन्नद्यमितमह इति तत्सामान्यादेतासामनुष्टुप्रूपत्वं अनुष्टुप् छन्दसां प्रतिष्ठेति श्रुतेः यथा छन्दसां मध्येऽनुष्टुभ उत्तमत्वं तथा राज्ञः सर्वपालकत्वेनोत्तमत्वादानुष्टुभत्वं तस्मादनुष्टुप्द्वारकात् सम्बन्धाद्राजयज्ञ उद्वत्यः कार्य्याः शाखान्तरेऽप्येतदाम्ना तं उद्वतीर्भवन्ति उद्वद्वा अनुष्टुभो रूपमानुष्टुभो राजन्यस्तस्मादुद्वत्यो भवन्तीति ॥ १४ ॥

तृचान्तरं विधत्ते।

पवमानस्य ते कव इति प्राणानां क्लृप्त्यै ॥१५॥

मन्त्रे पवमानस्येति शुद्धिहेतुत्वं प्रतीयते प्राणाश्च शरीरे

शुद्धिहेतवः तदभावे शरीरस्याशुचिता अनेन साम्येनायं तृचः शरीरे प्राणानां सम्पादनाय भवति ॥ १५ ॥

तृचान्तरं विधत्ते ।

अघत्वपापरिष्कृत इत्यनुष्टुप् प्रथमानुष्टुबुत्तमा वाग्वा अनुष्टुब् वाचैव प्रयन्ति वाचमभ्युद्यन्ति ॥ १६ ॥

अघत्वपेत्यस्मिन् तृचे क्रियमाणे बहिष्पवमानस्यादावन्ते चानुष्टुप् सम्पद्यते वायो शुक्रोइत्यादि अघत्वपेत्यन्तः तयोरुभयोरनुष्टुवेव छन्दः वाचोऽनुष्टुप्त्वं पूर्व्वमेव प्रतिपादितं तस्मादाद्यन्तयोरीदृशौ तृचौ कुर्वाणा उद्गातारो वाचैव प्रयन्ति वाचमभिलक्ष्य उद्यन्ति समापयन्तीत्यर्थः अयमर्थः शाखान्तरेऽप्याम्नातः अनुष्टुप् प्रथमा भवति अनुष्टुबुत्तमा वाग्वा अनुष्टुब्वाचैव प्रयन्ति वाचोद्यन्तीति ॥ १६ ॥

तावेतौ तृचौ प्रकारान्तरेण प्रशंसति ।

छिन्नमिव वा एतद्यदेकर्च्चौ यदेतावानुष्टुभौ तृचावभितो भवतो बह्वः पुरएतारो भवन्ति बह्वः पश्चापिनः ॥ १७ ॥

बहिष्पवमानस्य मध्ये सम्भार्य्यौ एकर्च्चाविति यदस्ति एतदेतेन स्तोत्रं विच्छिन्नमिव भवत्येव पूर्वोत्तरभाविनां तृचानां मध्ये व्यवधानात् तद्विच्छेदपरिहारार्थं स्तोत्रस्याभित आद्यन्तयोरेतावनुष्टुभौ तृचौ यदि भवतः तदा विच्छेददोषस्य परिहृत-

त्वाद्यजमानस्य पुरएतारः पुरस्तोगन्तारः सेवका बहवः सम्पद्यन्ते पश्चापिनः पृष्ठतः आप्नुवन्तो भृत्या बहवोऽपि भवन्ति ॥१७

अन्तिमं तृचं प्रकारान्तरेण प्रशंसति।

**सौर्य्यानुष्टुबुत्तमा भवति स्वर्गस्य लोकस्य समष्ट्यै ॥ १८ ॥**

उत्तमा अधच्यपेत्येषा सौरी सूर्य्यदेवताका सूर्य्यस्य स्वर्गे तिष्ठति तस्मादयं तृचः स्वर्गप्राप्त्यै सम्पद्यते तद्दचि विवस्ततोधियेति श्रुतत्वादिति शाखान्तरेऽप्येतदुक्तं सूर्य्यस्यानुष्टुबुत्तमा भवतीत्यादिना ॥ १८ ॥

इति ताण्ड्यमहाब्राह्मणे अष्टादशाध्यायस्य

अष्टमः खण्डः।

---

अथ नवमः खण्डः।

अभिषेचनीये वक्तव्या विशेषा उक्ताः अथ दशपेये वक्तव्यान् विशेषान् विधातुं तद्विधिस्तावकमर्थवादमाह।

**वरुणस्य वै सुषुवाणस्य भर्गोऽपाक्रामत्स त्रेधापतद्भृगुस्तृतीयमभवच्छ्रायन्तीयं तृतीयमपस्तृतीयं प्राविशत् ॥ १ ॥**

सुषुवाणस्याभिषेचनीयस्य क्रतावभिषिक्तस्य वरुणस्य भर्गः इन्द्रियसामर्थ्यं तस्माद्वरुणादपगतं त्रेधापतितमभूत् तस्य पति-

तस्य भर्गस्य यत्तृतीयमंशरूपं तद्भृगुनामकः ऋषिरभवत् अत एव भृगोर्वरुणपुत्रत्वमन्यत्र श्रूयते भृगुर्वै वारुणिः वरुणं पितर-मुपससारेति अन्यत्तृतीयमंशस्वरूपं आयन्तीयनामकं सामा-भवत् आयन्तइव सूर्य्यमित्यस्यामृच्युत्पन्नं साम आयन्तीयं अतः-परं तृतीयमंशरूपमपः प्राविशत् ॥ १ ॥

अथ विवक्षितान् विशेषान् विधत्ते ।

यद्भार्गवो होता भवति तेनैव तदिन्द्रियं वीर्य्य-माप्त्वावरुन्धे यत् आयन्तीयं ब्रह्मसाम भवति तेनैव तदिन्द्रियं वीर्य्यमाप्त्वावरुन्धे यत् पुष्करस्रजं प्रति-मुञ्चते तेनैव तदिन्द्रियं वीर्य्यमाप्त्वावरुन्धे ॥ २ ॥

भृगुगोत्रसमुत्पन्नः पुरुषो दशपेयक्रतौ होता भवेदिति यद-स्ति तेनैव भृगुगोत्रसम्बन्धेनैव तत्पतितं वरुणस्येन्द्रियं तत्साम-र्थ्यञ्च प्राप्य अवरुन्धे स्वाधीनं कुरुते ब्रह्माणमभिलक्ष्य गातव्यं साम ब्रह्मसाम तच्चात्र आयन्तीयं भवेत् पुष्करस्रजं तामरस-पुष्पाणां मालां यजमानः प्रतिमुञ्चत एतेन त्रितयेन तत्सम-पीन्द्रियसामर्थ्यं अवरुद्धं भवति अताध्वर्य्युर्ब्राह्मणमेवमाम्ना-यते जामि वा एतत् कुर्व्वन्ति यत्सद्यो दीक्षयन्ति सद्यः सोमं क्रीणन्ति पुण्डरीकस्रजं प्रयच्छन्त्यजामितायाः अङ्गिरसः स्वर्गं लोकं यन्तः अप्सु दीक्षातपसी प्रावेशयन् तत् पुण्डरीकम-भवत् यत्पुण्डरीकस्रजं प्रयच्छति साक्षादेव दीक्षातपसी अव-

स्त्र इति अध्वर्य्युसूत्रमप्येवं पठ्यते दीक्षायास्थाने द्वादश-पुण्डरीकां स्रजं प्रतिमुञ्चत इति ॥ २ ॥

तस्याः स्रजः कालविशेषं विधत्ते ।

दशमी भवति ॥ ३ ॥

अभिषेचनीयादुत्तरमारभ्य दशसु दिनेषु क्रमेण दशसं-ख्याकानि संसृप्संज्ञकानि हवींषि दशसु दिनेष्वनुष्ठेयानि तस्मिन् दशमेऽहन्यपराह्णे पुष्करस्रजःप्रतिमोकः ततः स्रगेषा दिनगताया दशसंख्यायाः पूरकत्वात् दशमीत्युच्यते उक्तं हि सूत्रकृता तद्दीक्षित एव दशाहे ततो दशपेयेन यजेतेति ॥ ३ ॥

अपरं विशेषं विधत्ते ।

दश चमसा दश चमसाध्वर्य्यवो दशदश चमसमभि-यन्त्यादशमात् पुरुषादन्वाख्याय प्रसर्पन्ति दशसङ्गो ह्येष यज्ञ एनं वाव ते तद्यज्ञमन्वैच्छन्य एतेन यजत एतदेवेन्द्रियं वीर्य्यमाप्त्वास्मिन् दधाति ॥ ४ ॥

यजमानचमसव्यतिरिक्ताः दशसङ्ख्याका अत्र सोमचमसाः स्युस्तेषाञ्च सोमचमसानां हर्त्तारो दशसंख्याकाश्चमसाध्वर्य्यवो भवन्ति एकैकं यच्चमसं दशदशब्राह्मणाः पानार्थमभियन्ति तत्रैकैकः पुरुषः स्वकीयान् पित्रादीन् दशपुरुषपर्य्यन्तानन्वाख्याय पानार्थं प्रसर्पेत् तदुक्तं सूत्रकृता ते दशमात्दर्दशपितॄनित्यन्वा-ख्याय प्रसर्पेयुरिति अध्वर्य्युसूत्रमपि श्वोभूते पात्रसादनकाले

दशचमसानधिकान् प्रयुनक्ति तानुन्नयनकाले उन्नयति भक्षण-
काले दशदशैकस्मिंश्च सोमे ब्राह्मणाः सोमपाः सोमं भक्षयन्त्या-
दशमात् पुरुषादविच्छिन्नसोमपीथा इति तैत्तिरीयब्राह्मण-
मपि दशपेयो भवति शतं ब्राह्मणाः पिबन्तीति तदीयमनुब्रा-
ह्मणमप्येवमाम्नातं दशपेयो भवति अन्नाद्यस्यावरुध्यै शतब्रा-
ह्मणाः पिबन्ति शतायुः पुरुषः शतेन्द्रिय आयुषा एवेन्द्रिये प्रति-
तिष्ठतीति हि यस्मादेष दशपेयाख्यो यज्ञोदशसङ्ख्यैः दशभिस्त्व-
मसैर्युक्तत्वात् समृद्धो भवति तत्तस्मात् कारणात्ते सत्त्रिकामा-
एतमेव यज्ञमन्वैच्छन् अन्विष्यादनुष्ठितवन्त इत्यर्थः यः पुमाने-
तेन दशपेयेन यजते अस्मिन् यजमाने स उद्गाता एतदेव लोक-
प्रसिद्धं चक्षुरादीन्द्रियं तद्गतवीर्य्यञ्च प्राप्य स्थापयति ॥ ४ ॥

विशेषान्तरं विधत्ते ।

सर्वः सप्तदशो भवति द्वादशमासाः पञ्चर्त्तवः स वै संवत्सरः संवत्सरादेवेन्द्रियं वीर्य्यमाप्त्वावरुन्धे ॥ ५ ॥

अस्मिन्दशपेयक्रतौ यानि स्तोत्राणि सन्ति तेषु सर्व्वेषु
स्तोत्रेषु सर्वोऽपि स्तोमः सप्तदशाख्यो भवेत् कार्त्तिकाद्याः द्वाद-
शमासा वसन्ताद्याः पञ्चर्त्तवः हेमन्तशिशिरयोः समासेनेति
श्रुत्यन्तरादृतुषु पञ्चसंख्या स वै स एव द्वादशमासात्मकः पञ्चर्त्तु-
रूपः सप्तदशसंख्योपेतः संवत्सरो भवति अतः संख्यासाम्येना-
स्मात् संवत्सररूपात् सप्तदशस्तोमादेव इन्द्रियञ्च तद्गतवीर्य्यं प्राप्य
स्वाधीनं करोति ॥ ५ ॥

पूर्वोक्तां यजमानेन स्वकण्ठे प्रतिमुक्तां पुष्करस्रजमर्थवादेन स्तौति ।

इन्द्रोवृत्रमहंस्तस्येयं चित्राण्युपैद्रूपाण्यसौ नक्षत्राणामवकाशेन पुण्डरीकञ्जायते यत् पुष्करस्रजं प्रतिमुञ्चते वृत्रस्यैव तद्रूपं क्षत्रम् प्रतिमुञ्चते ॥ ६ ॥

त्वाष्ट्रनामकेन केनचिद्विशिष्टब्राह्मणेनोत्पादित इन्द्रस्य शत्रुः कश्चिद्वृत्रनामकः तं कदाचिदिन्द्रो हतवान् यस्य हतस्य वृत्रस्य शरीरगतानि यानि नीलपीतस्थूलसूक्ष्माद्यवयवरूपाणि सन्ति इयं पृथिवी तानि सर्वाणि रूपाणि उपैत् प्राप्नोत् असौ द्यौर्नक्षत्राणां सम्बधीनि दृश्यमानानि वृत्रस्य चित्ररूपाण्याप्नोत् अवकाशेन द्यावापृथिव्योर्मध्यगतेनान्तरीक्षेण वृत्ररूपात्मकमेव पुण्डरीकं जायते एवं सति यद्यदा यजमानः पुष्करस्रजं प्रतिमुञ्चते तदानीं वृत्रस्यैव सम्बन्धि तत्सर्वं रूपं क्षत्रियजातिर्यजमानः प्रतिमुञ्चते ॥ ६ ॥

तस्यां स्रजि पुष्कराणां संख्यां विधत्ते ।

द्वादशपुष्करा भवति द्वादशमासाः संवत्सरः संवत्सरेऽन्तर्भूतञ्च भव्यञ्च भूतेन चैवैनं भव्येन च समर्द्धयति ॥ ७ ॥

द्वादशभिः पुष्करैः स्रगियन्निष्पाद्या तथा सति संवत्सरगतया माससंख्यया साम्यं भवति संवत्सरमध्ये वर्त्तमानादस्मा-

द्दिवसात् अतीतकालसम्बन्धि भविष्यकालसम्बन्धि च वस्तुजातञ्च भूतेन तेन चोभयेन वस्तुजातेन यजमानं समृद्धं करोति ॥७॥

अथ सर्वेषामृत्विजां सम्बन्धीनि द्रव्याणि विधित्सुरादौ सुवर्णमयीं स्रजं विधत्ते ।

स्रगुद्गातुस्सौर्य्यं उद्गाता न वै तस्मै व्यौच्छदथो-व्येवास्मै वासयति ॥ ८ ॥

सौवर्णी स्रगुद्गातुर्देया यथा सूर्य्यः सर्वं जगद्व्यनक्ति तथा सामवेदार्थं सर्वमुद्गाता व्यनक्ति तस्मात्सौर्य्य उद्गाता सौवर्ण-स्रजोधारणात्पूर्वं तस्मादुद्गात्रे न वै व्यौच्छत् प्रकाशाभावादुषः-कालो नाभूत् अथ सौवर्णस्रजधारणानन्तरं अस्मा उद्गात्रे विवासयत्येव प्रकाशसद्भावादुषःकालं सूर्य्यो विशेषेणास्मा-उद्गात्रे सम्पादयत्येव ॥ ८ ॥

सुवर्णफलकरूपं रुक्मनामकमाभरणं विधत्ते ।

रुक्मो होतुराग्नेयो होताथो अमुमेवास्मा आ-दित्यमुन्नयति ॥ ९ ॥

होतुरुपरिधारणयोग्यो रुक्मो भवेत् अग्निर्वै देवानां हो-तेति श्रुत्यन्तरादाग्नेयोहोता भवति अतः प्रकाशरूपो रुक्मस्तस्य योग्यः अथो अपि च अस्मै होत्रर्थममुमेव रुक्मरूपमादित्यमुन्न-यति ऊर्द्धदेशं प्रापयति ॥ ९ ॥

अथ द्रव्यान्तरं विधत्ते ।

प्राकाशावध्वर्य्योर्य्यमाविव ह्यध्वर्य्यू अथो चक्षुषी एवास्मिन् दधाति ॥ १० ॥

प्राकाशौ आभरणविशेषाविति केचित् सौवर्णदर्पणावित्यन्ये अध्वर्य्युप्रतिप्रस्थातारावुभौ भवेतां एकस्मिन्नुदरे युगपदुत्पन्नौ भ्रातरौ यमौ तद्वदेता उभावध्वर्य्युविशेषौ तस्मात्तयोः साम्येन प्राकाशदानं युक्तं प्राकाशयोर्द्दानेनास्मिन् यजमाने प्रतिग्रहीतरि वा दृष्टिपाटवं भवति ॥ १० ॥

अश्वदानं विधत्ते ।

अश्वः प्रस्तोतुः प्राजापत्योऽश्वः प्राजापत्यः प्रस्तोताथो प्रेव ह्यश्वः प्रोथति प्रेव प्रस्तोता स्तौति ॥११॥

प्रजापतिसम्बन्धिचक्षुर्जन्यत्वादश्वः प्राजापत्यः तथा च श्रुत्यन्तरं प्रजापतेरक्ष्यश्वः यत्तत्परापतत्तदश्वोऽभवदिति प्रस्तोता प्रथमतो गायति प्रजापतिश्च प्रथमतः सृजति ततः प्रस्तोता प्राजापत्यः अथो अपिच भूमौ विलुठन्नश्वः सहसाभ्युत्थाय प्रेव प्रकर्षेणैव प्रोथयति प्रशब्दं गात्रचालनं करोति प्रस्तोतापि प्रकर्षेणैव स्तुतिं करोति तत्तस्याश्वो योग्यः ॥ ११ ॥

धेनुदानं विधत्ते ।

धेनुः प्रतिहर्त्तुः पय एवास्मिन् दधाति ॥ १२ ॥

धेनोर्हि क्षीरसम्पादनं प्रसिद्धं ॥ १२ ॥

वन्ध्यायागोर्द्दानं विधत्ते ।

वशा मैत्रावरुणस्य वशम्मा नयादिति ॥ १३ ॥

मां यजमानं प्रति समस्तं वस्तुजातं वशं स्वाधीनं नयात् नयतु इत्यनेनाभिप्रायेण वन्ध्यादेया देयवस्तुफलयोर्वशशब्द-साम्यं द्रष्टव्यं ॥ १३ ॥

ऋषभो ब्राह्मणाच्छंसिनोवीर्य्यं वा ऋषभो वीर्य्यमेवास्मिन् दधाति ॥ १४ ॥

सेचनसमर्थः पुङ्गव ऋषभः तस्य शक्त्याधिक्येन वीर्य्यरूपत्वं ॥१४

वस्त्रदानं विधत्ते।

वासः पोतुः पवित्रत्वाय ॥ १५ ॥

वस्त्रेण हि जलादीनि पूयन्त इति तस्य पवित्रत्वं ॥ १५ ॥

स्थूलशाटीदानं विधत्ते।

वरासी नेष्टुरनुलम्बेव ह्येषा होत्रा ॥ १६ ॥

कार्प्पासापेक्षया हीना दृढत्वचा निर्म्मिता सेयम्वरासी अस्थितयाज्या प्रभृतिषु प्रयोगविशेषेषु नेष्टुरनुलम्बेव पश्चालम्बन इव भाषते हि यस्मादेषा वरासी होत्रा होतुर्न्नेष्टुः सम्बन्धिनी अत सूत्रकारः वासः पोतुरिति कार्प्पासं स्याद्वरासी नेष्टुरिति क्षौमी स्यादिति ॥ १६ ॥

स्थूलस्य यवपूर्णस्य शकटस्य दानं विधत्ते।

स्थूरियवाचितमच्छावाकस्य स्थूरिरिव ह्येषा

होत्राथोनिर्व्वरुणत्वायैव यवा न वै तर्हि सदस्यां दक्षिणा अभ्यभवन्नथो अस्य त एव तेनाभीष्टाः प्रीता भवन्ति ॥ १७ ॥

होत्रा होमहेतोरच्छावाकस्य सम्बन्धिनी एषा शकटप्रतिग्रहक्रिया स्थूरिरिव हि पूर्व्वोक्तवस्त्रप्रतिग्रहाद्यपेक्षया स्थूलेव दृश्यते हि शकटस्य प्रौढत्वात् अथोऽपि च शकटस्थिता यवाः निर्व्वरुणत्वाय वरुणकृतबाधपरिहाराय सम्पद्यन्ते कथमिति चेत्तदुच्यते तर्हि तस्मिन् काले दशपेयक्रतुप्रवृत्तेः पुरा तत्तेयवाः अस्यामच्छावाकाय प्रतिग्रहक्रियायां दक्षिणा अभिलक्ष्य न वै अभवन् क्रत्वन्तरेषु यवानां दक्षिणायोग्यत्वन्नासीदित्यर्थः अथो अनन्तरमेतत् क्रत्वनुष्ठानवेलायामस्य यजमानस्य तएव यवाः तेन दानेन अभीष्टाः अभिगताः इषु-गताविति धातुः प्रीताः वरुणस्य प्रीतिहेतवो भवन्ति यवानां वरुणप्रियत्वं मन्त्रब्राह्मणयोरवगम्यते यवोसि धान्यराजस्त्वं वारुणोमधुसंयुतः इति मन्त्रः वारुणं यवमयञ्चरुमिति ब्राह्मणं तस्माद्यवदानेन वरुणकृतोपद्रवपरिहारोयुक्तः ॥ १७ ॥

बलीवर्द्दानं विधत्ते ।

अनड्वानग्नीधोयुक्तौ ॥ १८ ॥

अनडान् बलीवर्द्दौ द्वानः शकटं वहति अग्नीधइत्येव नामक

ऋत्विगपि यज्ञं वहति अतः साहस्राद्यज्ञस्य युक्त्यै योगायान-डुहोदानं ॥ १८ ॥

अजदानं विधत्ते ।

अजः सुब्रह्मण्यायै ॥ १९ ॥

सुब्रह्मण्यायै सुब्रह्मण्यस्य छागोयोग्यः ॥ १९ ॥

स्त्रीपुरुषयोगयोर्गवोदानं विधत्ते ।

वत्सतर्य्युन्नेतुः साण्डः त्रिवत्सो ग्रावस्तुतोमिथु-नत्वाय ॥ २० ॥

अत्यन्ततरुणीगौर्वत्सतरी साण्डोलम्बमानाण्डयुक्तः त्रि-वत्सः संवत्सरत्रयवयोयुक्तः ॥ २० ॥

गर्भिणीनां गवां दानं विधत्ते ।

द्वादशपष्ठौह्यो गर्भिण्यो ब्रह्मणो द्वादशमासाः संवत्सरः संवत्सर एव प्रतितिष्ठत्यथ यद्गर्भिण्यो वाग्वै धेनुरन्नं गर्भो वाच्येवास्य मन्नं दधात्यामन्न-वीयो भवत्यथ यद्धेनुभव्या द्वादश पयाꣳसि तान्येवा-स्मिन् दधाति तस्माद्राज्ञः पयस्वी राजा पुण्य इति ॥ २१ ॥

पष्ठौह्यः प्रथमगर्भोपेता तस्यैवार्थस्य वैराज्याय गर्भिण्य इत्यनुवादः द्वादशसंख्यया ऋत्वोऽपि संवत्सरे यजमानः प्रति-

तिष्ठति अथानन्तरं यद्‌ यदपि गर्भिणीत्वमस्ति तद्वते यजमानस्य प्रतिग्रहीतुर्वा वाचि मन्त्रं स्थापयति धेनोर्वाग्रूपत्वाद्गर्भस्य मन्त्ररूपत्वात्‌ आमन्त्रणीयः पूजार्थं सर्वैरन्वेषणीयो भवति अथानन्तरं यद्धेनुभव्यान्या एताधेनुश्रेष्ठाः द्वादशसंख्याकाः सन्ति ताभिर्द्वादशविधानि तान्येव पयांसि तत्तन्मांसभेदादीषद्भिन्नरसानि चीराण्येव यजमाने सम्पादितानि भवन्ति तस्मादेवम्विधफलोपेतत्वाद्यजमानं प्रति लौकिका एवमाहुः राजसूययाजी राजा पयस्वी प्रशस्तपयाः पुण्यः पावन इति तदेतद्दानजातं शाखान्तरेष्वाम्नातं प्राकाशावध्वर्यवे ददाति स्रजमुद्गात्रे रुक्मं होत्रेऽश्वं प्रस्तोतृप्रतिहर्तृभ्यां द्वादश पष्ठौह्यो ब्रह्मणे वशां मैत्रावरुणाय ऋषभं ब्राह्मणाच्छंसिने वाससी नेष्टृपोतृभ्यां स्थूरियवाचितमच्छावाकायानडाहमग्नीध इति ॥ २१ ॥

इति ताण्ड्यमहाब्राह्मणे अष्टादशाध्यायस्य

नवमः खण्डः ।

---

अथ दशमः खण्डः ।

उक्तावभिषेचनीयदशपेयौ, तत ऊर्द्धं केशवपनीयः, कर्त्तव्यः पञ्चस्वह्निन्नेव, केशवपनीयेन यजेतेति अभिषेचनीयदशपेयकेशवपनीयानां केचिद्धर्म्मा अस्मिन्‌ खण्डे सूयन्ते, तत्राभिषेचनीया-

गतानां सम्भार्य्याणां साम्नाञ्च स्तुतिं वक्तुमादौ तावद्दोषमुपन्यस्यति ।

यो वै सवादेति नैनꣳ सव उपनमत्यथ यः सामभ्य एति पापीयान् सुषुवाणो भवति ॥ १ ॥

सवशब्दोऽभिषेकं तद्युक्तं क्रतुं व्याचष्टे सवनमभिषेचनं सवः सूयते अभिषिच्यते यत्र स सव इति द्वेधा व्युत्पन्नत्वात् योवै पुमान् स वादेति अभिषेकादपगच्छति एनमभिषेकरहितं पुमांसं सवोऽभिषेकयुक्तः क्रतुर्नोपनयति न प्राप्नोति पूर्व्ववैपरीत्येन सत्यभिषेके यद्यपि सामभ्योऽपगच्छति तदा सुषुवाणोऽभिषेकं कुर्व्वन्नपि सामराहित्येन शास्त्रीयात् न्यूनभावादसौ पापीयान् भवति ॥ १ ॥

उपन्यस्तदोषं परिहर्त्तुं पूर्व्वोक्तं सम्भार्याणां विधिमनुवदति ।

सम्भार्य्या भवन्ति पृष्ठान्येव ताभिर्य्युनक्ति ॥ २॥

पूर्व्ववद्व्याख्येयं ॥ २ ॥

सम्भार्य्याणां पृष्ठरूपत्वे सम्पादिते सति पृष्ठस्तोत्रेषु सामसद्भावात् सामान्यपि सम्पादितानि स्युरित्येतदाह ।

एतानि वाव सामानि यत् पृष्ठानि ॥ ३ ॥

स्पष्टोऽर्थः ॥ ३ ॥

दोषपरिहारं दर्शयति ।

यत् संभार्य्या भवन्ति तदेव सामभ्यो नैति ॥ ४ ॥

सम्भार्य्याणामनुष्ठानं यदस्ति तदेव तेनैवायं सामभ्यो नाप-गच्छति साम्नां सम्पादितत्वात् ततः शास्त्रीयएवाभिषेक इत्यर्थः ॥ ४ ॥

सामविशेषं प्रशंसति ।

यानि देवराज्ञाꣳ सामानि तैरमुष्मिन् लोक ऋध्नोति यानि मनुष्यराज्ञान्तैरस्मिन्नुभयोरनयोर्ल्लोकयोर्ऋध्नोति देवलोके च मनुष्यलोके च ॥ ५ ॥

देवेषु मध्ये ये राजसूयेनेष्टवन्तस्ते देवराजानः तैर्य्यानि दृष्टानि तानि देवराज्ञां सामानि सैन्धुचितं दैर्घश्रवसम्पार्थं काक्षीवतमित्यादीनि तैः स्वर्गसमृद्धिर्भवति मनुष्येषु मध्ये ये राजसूयेनेष्टवन्तः क्षत्रियर्षयस्ते मनुष्यराजानस्तैर्दृष्टानि मनुष्यराज्ञां सामानि दैवोदासं वाध्र्यश्वं वैतहव्यमित्यादीनि तैर्म्मनुष्यलोके समृद्धिः उभयोरित्यादिरुक्तस्यैवोपसंहारः यो वै सवादेतीत्यादिकं शाखान्तरेऽप्येवमेवाम्नातं ॥ ५ ॥

साम्नां संख्यां तदुपयुक्तमुपोद्घातमाह ।

साम त्रिष्टुब्ध्यभिषिच्यते वीर्य्यं वै सामत्रिष्टुप् वीर्यं एवाध्यभिषिच्यते ॥ ६ ॥

सामरूपा त्रिष्टुप् सामत्रिष्टुप् तत्राधिश्रितो राजाभिषि-

च्यते सामत्रिष्टुभः प्रयोगे सत्यभिषिञ्चेदित्यर्थः त्रिष्टुभो वीर्य्यत्वं सर्व्ववेदप्रसिद्धं अतो वीर्य्ये एवाभिषिक्तो भवति ॥ ६ ॥

संख्यासामान्येन साम्नां त्रिष्टुप्त्वोपचारं दर्शयति।

एकादश राजसामानि भवन्त्येकादशाक्षरा त्रिष्टु-बोजोवीर्य्यं त्रिष्टुबोजस्येव वीर्य्येऽध्यभिषिच्यते ॥ ७ ॥

वीर्य्यशब्दस्यैवौजइति व्याख्यानं स्पष्टमन्यत् ॥ ७ ॥

अभिषेचनीये त्रिवृत्स्तोमराहित्यं प्रशंसति।

यत् त्रिवृतमभिषेचनीये कुर्युर्ब्रह्म क्षत्रायापि दध्युर्य्यत्त्रिवृतमुद्धरन्ति ब्रह्म तत् क्षत्रादुद्धरन्ति तस्मा-द्भरतां प्रतिदण्डा ब्राह्मणा नहि तं त्रिवृतमभिषेच-नीये कुर्वन्ति ॥ ८ ॥

यद्यपि त्रिवृत्स्तोममुद्गातारोऽभिषेचनीये क्रतौ कुर्य्युः तदानीं क्षत्राय राज्ञोत्कर्षार्थं ब्रह्म ब्राह्मणजातिं अपि दध्युः आच्छा-दयेयुः त्रिवृत्स्तोमो ब्राह्मणजातिस्वरूपः तयोः प्रजापतिमुख-जत्वसाम्यात् तथा सति राजक्रतौ प्रधानभूते त्रिवृत्स्तोमस्या-ङ्गत्वेन ब्राह्मणजातेरवज्ञा स्यात् यद्यपि त्रिवृत्स्तोममभिषेच-नीयादुद्धरन्ति तत्र न प्रयुञ्जते तत्तेन प्रयोगाभावेन ब्रह्म ब्राह्मणजातिं क्षत्रादुद्धरन्ति क्षत्रियजातावनन्तर्भाव्य तदवज्ञां परिहरन्ति यस्माद्ब्राह्मणजातेर्नीचत्वं परिहृतं तस्माल्लोके भरतां भरणं कुर्व्वतां क्षत्रियाणां प्रतिदण्डा भवन्ति धनापहा-

रादिना राजभिर्दण्ड्यमाना निन्दाशापादिना राजसु प्रतिकूल-दण्डयुक्ता भवन्ति न खलु तेभ्यो बिभ्यति हि यस्मात्कारणात्ते ब्राह्मणा अभिषेचनीये त्रिवृत्स्तोमन्न कुर्व्वन्ति तस्माद्भयराहित्य-मुपपन्नं ॥ ८ ॥

त्रिषु क्रतुषु स्तोमव्यवस्थां दर्शयति।

एकविꣳशोऽभिषेचनीयस्योत्तमः सप्तदशो दश-पेय एकविꣳशः केशवपनीयस्य प्रथमः क्षत्रं वा एक-विꣳशो विट् सप्तदशः क्षत्रेणैवास्मै विशमुभयतः परिगृह्णात्यनपक्रामुकास्माद्विट् भवति ॥ ९ ॥

अभिषेचनीयस्य द्वात्रिंशाः पवमानाः पञ्चदशान्याज्यानि सप्तदशानि पृष्ठान्येकविंशोऽग्निष्टोमः सोक्थः एवं सत्येकविंश-स्तोम उत्तमो भवति दशपेयेतु स्तोमाः सर्व्वेऽपि सप्तदशा एव केशवपनीये त्वेकविंशं प्रातःसवनं सप्तदशं माध्यन्दिनं सवनं पञ्चदशं तृतीयसवनं सोक्थं सरात्रिकं त्रिवृत्सन्धिकं एवं सत्येक-विंशः प्रथमो भवति सोऽयमेकविंशस्तोमः क्षत्रं वै वीर्य्याधिक्येन क्षत्रियजातिस्वरूप एव सप्तदशस्तोमस्तु विट्स्वरूपा क्षत्रियेण रक्षणीयायाः प्रजायाः स्वरूपं तत्र पूर्व्वोत्तरभाविनोरभिषेच-नीयकेशवपनीययोः क्रमेणावसान उपक्रमे चैकविंशस्तोमोयोऽस्ति यश्च मध्यभाविनि दशपेये सप्तदशस्तोमोऽस्ति तेषामेकविंशद्वय-सप्तविंशस्तोमानुष्ठानेनास्मै यजमानार्थं मध्यवर्त्तिनीं सप्तदश-स्तोमरूपां विशं प्रजां उभयतः पूर्व्वोत्तरक्रत्वोरवस्थितेनैक-

विंशस्तोमरूपेण चालेणैव परिगृह्णाति परिपालयतीत्यर्थः तथा सति विट् प्रजा अस्माद्यजमानादनपक्रामुका कदाचिदप्यपक्रमशीला न भवति ॥ ९ ॥

इदानीं केशवपनं विधत्ते ।

यद्वै राजसूयेनाभिषिच्यते तत् स्वर्गं लोकमारोहति स यदिमं लोकन्नोपावरोहेदति जनं वा गच्छेदुद्वा माद्येद्यदेषोऽर्वाचीनः स्तोमः केशवपनीयो भवत्यस्य लोकस्यानुख्यानाय यथा शाखायाः शाखामालम्भमुपावरोहेदेवमेतेनेमं लोकमुपावरोहति प्रतिष्ठायै ॥ १० ॥

यद्वै यस्मिन्नेव काले यजमानो राजसूयगतेनाभिषेचनीयक्रतोरभिषेकेण युक्तो भवति तत्तस्मिन्नेव काले स्वर्गं लोकमारोहति प्राप्त इव भवति स यजमानो यद्यदि भूलोकं प्रति स्वर्गादवरोहणन्न कुर्यात् तदानीञ्जनं वातिगच्छेत् स्वकीयं बन्धुवर्गम्परित्यज्य यत्र क्वापि पलायिता वा भवेत् उन्माद्येद्वा बन्धुवर्गे स्थित एव सन् भ्रान्तिं वा प्राप्नुयात् तस्मात् स दोषः परिहर्त्तव्यः कथं परिहार इति चेत् तदुच्यते यद्यदि एषोऽनन्तरं करिष्यमाणः केशवपनीयः क्रतुरर्वाचीनः स्तोमो भवति एकविंशमारभ्य त्रिवृति समाप्यमानत्वादर्वाचीनस्तोमत्वं एतदीयानुष्ठानं स्वर्गात् प्रत्यवरोहणमिव वर्त्तत इति भूलोकस्यानुख्यानाय अत्यन्तं परित्याग उद्धानन्तद्राहित्यार्थम्भवति

यथा लोके वृक्षमारूढ्योपरितनवर्त्तिन्याः शाखायाः काञ्चिदधोवर्त्तिनीं शाखामालम्बमाधारं कृत्वा अथ वा एमुलन्तोऽयं शब्दः आलम्ब्यालम्ब्य भूमावुपावरोहेत् एवमेतेन केशवपनीयेन प्रतिकूलस्तोमयुक्तेन भूलोकमुपारूढो भवति अतोऽयं केशवपनीयः प्रतिष्ठार्थं सम्पद्यते ॥ १० ॥

इति ताण्ड्यमहाब्राह्मणे अष्टादशाध्यायस्य

दशमः खण्डः।

---

अथ एकादशः खण्डः।

अथ पूर्व्वोक्तक्रतुगतसामविशेषस्तुतिर्व्युष्टिद्विरात्रविधिश्चोच्यते, तत्रादौ आयन्तीयं साम स्तौति।

इन्द्रो वृत्रमहन् स विष्वङ्वीर्य्येण व्यार्च्छत स एतच्छ्रायन्तीयमपश्यत्तेनात्मानꣳ समश्रीणादिन्द्रियेण वा एष वीर्य्येण व्यृध्यते यो राजसूयेनाभिषिच्यते वृत्रꣳ हि हन्ति यच्छ्रायन्तीयं ब्रह्मसाम भवति पुनरेवात्मानꣳ सꣳश्रीणाति ॥ १ ॥

इन्द्रः त्वाष्ट्रं वृत्रं हत्वा भ्रष्टवीर्य्यमात्मानं श्रायन्तीयेन साम्ना समश्रीणात् समस्करोत् सर्व्वतोभ्रष्टं वीर्य्यं समाहितवान् तद्वदन्योऽपि राजसूययाजी पुमानिन्द्रियगतसामर्थ्येन वियुज्यते

हि यस्मात् कारणात् वृत्रस्वरूपभूतं पापं हन्ति तस्माद्वीर्य्य-वियोगः सम्भावितः यदि ब्रह्माणमुद्दिश्य श्रायन्तीयनामकं साम भवेत् तदानीं पुनरेवात्मानं राजसूययाजी संश्रीणाति समादधाति इन्द्रियवीर्य्यसमृद्धिं लभत इत्यर्थः ॥ १ ॥

यज्ञायज्ञीयं साम स्तौति ।

यज्ञायज्ञीयमनुष्टुभि भवति वाचा वा एष व्यृध्यते यो राजसूयेनाभिषिच्यते वृत्रꣳ हि हन्ति वागनुष्टुब्वाचो रसो यज्ञायज्ञीयं वाच्येवास्य रसं दधाति ॥२॥

अनुष्टुभि पुरोजितीव इत्यस्यामृचि यज्ञायज्ञीयाख्यं साम गातव्यं कुत इति चेत्तदुच्यते राजसूयेनाभिषिक्तः पुमान्मन्त्र-रूपया वाचा वियुज्यते वृत्रवधस्य सद्भावात्तस्य पापस्यायं परि-हारः अनुष्टुभो वाग्विशेषत्वाद्वाग्रूपत्वं तस्या वाचो यज्ञा-यज्ञीयाख्यं साम रसः सारं तेनाधिकफलजननात् तस्मादेतत्-सामगानेनास्य यजमानस्य वाचि सारं स्थापयत्येव ॥ २ ॥

वारवन्तीयं साम प्रशंसति ।

वारवन्तीयमग्निष्टोम साम भवतीन्द्रियेण वा एष वीर्य्येण व्यृध्यते यो राजसूयेनाभिषिच्यते वृत्रꣳ हि हन्ति यद्वारवन्तीयमग्निष्टोम साम भवतीन्द्रियस्य वीर्य्यस्य परिगृहीत्यै ॥ ३ ॥

अरुन्धता वारवन्तमित्यस्यामुत्पन्नं साम वारवन्तीयं तत्सामगानेन विमुक्तस्येन्द्रियसामर्थ्यस्य परिग्रहो भवति ॥ ३ ॥

सामस्तुतिमुपसंहरति।

**अप्सयन्वाव आयन्तीयेनावारयन्त वारवन्तीयेनेन्द्रियस्य वा एषा वीर्य्यस्य परिगृहीतिः ॥ ४ ॥**

आयन्तीयसाम्ना नष्टं वीर्य्यं पुनरप्सयन् प्राप्नुवन् वीर्य्यवियोगं वारवन्तीयसाम्ना निवारितवन्तः तस्मादेषा सामद्वयस्यानुष्ठितिरेवेन्द्रियसामर्थ्यस्य परिगृहीतिर्भवति एतदेवाभिप्रेत्य शाखान्तरे शब्दद्वयनिर्व्वचनं कृतं यदप्सयन् तच्चायन्तीयस्य आयन्तीयत्वं यद्वारयन् तद्वारवन्तीयस्य वारवन्तीयत्वमिति ॥ ४ ॥

अथ व्युष्टिद्विरात्रं विधत्ते।

**अप्रतिष्ठितो वा एष यो राजसूयेनाभिषिच्यते यदा वा एतेन द्विरात्रेण यजतेऽथैव प्रतिष्ठा ॥ ५ ॥**

अभिषेकेण केवलं पाप्मानं हन्ति न पुनः प्रतिष्ठां लभते कदास्य प्रतिष्ठेति चेत् उच्यते यदा वै यस्मिन्नेव काले एतेन पुरतोवक्ष्यमाणेन द्विरात्राख्येन क्रतुना यजते अथैव तदानीमेव प्रतिष्ठा भवति यथा पादद्वयेन पुरुषस्य प्रतिष्ठा तथा द्विरात्रेणेत्यर्थः ॥ ५ ॥

तामेतां प्रतिष्ठामुपपादयति।

यावन्ति संवत्सरस्याहोरात्राणि तावत्य एताः स्तोत्रीयाः संवत्सरएव प्रतितिष्ठति ॥ ६ ॥

एकसंवत्सरस्य षष्ट्यधिकशतत्रयमहानि रात्र्यस्च तावत्यस्त-दुभयम्मिलित्वा विंशत्यधिकसप्तशतानि भवन्ति द्विरात्रक्रतौ स्तोत्रीया ऋचोऽपि संख्यया तावत्यएव सम्पद्यन्ते अतः संवत्सरसाम्यात् द्विरात्रानुष्ठानेन संवत्सररूपे काले प्रतितिष्ठ-त्येव स्तोत्रीयाणामृचां संख्या कथमिति चेत् सेयं द्विरात्रकल्पे पर्य्यालोच्य प्रथमेऽहन्यग्निष्टोमरूपे यानि द्वादशस्तोत्राणि द्विती-येऽहन्यतिरात्ररूपे यान्येकोनत्रिंशस्तोत्राणि तेषु सर्व्वेषु विहि-तान् स्तोमविशेषानालोच्य द्रष्टव्या, शाखान्तरेऽप्ययमर्थः सर्व्वो-ऽप्येवमेवाम्नातः अप्रतिष्ठितो वा एष इत्याहुः यो राजसूयेन यजत इति यद्वा वा एतेन द्विरात्रेण यजतेऽथैव प्रतिष्ठा अथ संवत्सरमाप्नोति यावन्ति संवत्सरस्याहोरात्राणि तावत्य एताः स्तोत्रीयाः अहोरात्रेष्वेव प्रतितिष्ठतीति ॥ ६ ॥

द्विरात्रावयवाहर्विशेषौ विधत्ते ।

अग्निष्टोमः पूर्वमहरतिरात्र उत्तरन्नानैवाहो-रात्रयोः प्रतितिष्ठति ॥ ७ ॥

एकेनाह्ना निष्पाद्यः सोमयागोऽहःशब्देनोपलक्ष्यते तत्र प्रथममहरग्निष्टोमरूपं उत्तरन्त्वहरतिरात्ररूपं एतयोर्द्विविध-योरह्नोरनुष्ठितत्वादहनि रात्रौ च तत्तदुचितभागेन विविध-प्रतिष्ठोपपद्यते ॥ ७ ॥

अस्य द्विरात्रस्य विकल्पेन त्रीन् कालान् विधत्ते।

**अमावास्यायां पूर्व्वमहरुदृष्ट उत्तरन्नानैवार्द्धमासयोः प्रतितिष्ठति पौर्णमास्यां पूर्व्वमहर्व्यष्टकायामुत्तरन्नानैवमासोः प्रतितिष्ठति तदाहुर्य्यै एव समानपक्षे पुण्याहनी स्यातां तयोरेव कार्य्यं सम्ब्ध्यै ॥८॥**

उदृष्टशब्देन शुक्लप्रतिपदुच्यते उत्तरोत्तरोत्कर्षेण चन्द्रदर्शनस्य तत्रोपक्रमात् अमावास्यायामग्निष्टोमः अनन्तरभाविन्यां शुक्लप्रतिपद्यतिरात्रः सोऽयमेककालः अत्र पौर्णमास्यन्तोमास इत्यमुं पक्षमाश्रित्याभिधीयमानत्वादमावास्याशुक्लप्रतिपदोर्भिन्नयोरर्द्धमासयोर्व्वर्त्तमानौ द्वौ दिवसौ तयोरनुष्ठायार्द्धमासद्वये प्रतितिष्ठति व्यष्टका कृष्णप्रतिपत् तदाह सूत्रकारः व्यष्टकायामुत्तरमिति तामिस्रप्रथमास्तिस्रो व्यष्टका इति पौर्णमासी कृष्णप्रतिपदादौ तन्मासगतौ दिवसौ तयोरनुष्ठाय मासद्वये प्रतितिष्ठति सोऽयं द्वितीयः कालः तत्र व्यूढिद्विरात्रविषये केचिद्ब्रह्मवादिनः आहुः एकस्मिन्नेव शुक्लपक्षे ये द्वे निरन्तरे ज्योतिःशास्त्रप्रसिद्धे पुण्यदिने स्यातान्तयोरेव द्विरात्राख्यं कर्म्म कार्य्यं एकस्य कर्म्मणः एकस्मिन्नेव मास एकस्मिन्नेव पक्षेऽनुष्ठानमुचितं ततस्तत्सम्ब्ध्यै सम्पद्यते सोऽयं तृतीयः कालः ॥ ८ ॥

अथास्मिन् कर्मणि शङ्कितदोषपरिहाराय सामद्वयं विधातुमादौ दोषशङ्कामुद्भावयति।

अपशव्यो द्विरात्र इत्याहुर्द्वे ह्येते छन्दसी गायत्रञ्च त्रैष्टुभञ्च जगतीमन्तर्यन्तीति न तेन जगती कृता यत्तृतीयसवने क्रियते ॥ ९ ॥

अहर्गणेषु प्रथममहर्गायत्रं द्वितीयं त्रैष्टुभं तृतीयञ्जागतमिति स्थितिः तथाच तैत्तिरीयाः सप्तमकाण्डे गायत्रो वा ऐन्द्रवायव इति अस्मिन्ननुवाके समामनन्ति गायत्रं प्रायणीयमहस्त्रैष्टुभं द्वितीयमहर्ज्जागतं तृतीयमहरिति एवञ्च सति द्विरात्रक्रतौ तृतीयस्याह्नोऽसम्भवाद्दिनद्वये गायत्रञ्च त्रैष्टुभञ्चेति एते द्वे एव छन्दसी सम्पन्ने जगतीमन्तर्यन्तीति अन्तरितां परित्यक्तां कुर्वन्ति सा च जगती पशुसाधनभूता अत एव शाखान्तरे सोमहरणविषय उपाख्याने जगत्याः पशव्यत्वमामनन्ति सा पशुभिश्च दीक्षया चागच्छत् तस्माज्जगतीच्छन्दसां पशव्यतमेति ईदृश्या जगत्या राहित्येन द्विरात्रोऽयमपशव्य इत्येवं दोषं ब्रह्मवादिन आहुः, ननु तृतीयसवने जगती विद्यते आर्भवान्त्यस्य जागतत्वादिति चेत् नैवं यद्यप्यह्न एकदेशे तृतीयसवने जगती क्रियते तथापि तावन्मात्रेण कृत्स्नेऽप्यहनि जगती कृता न भवेत् तृतीयस्याह्न एव कार्त्स्न्येन जागतत्वं तच्चाहर्द्विरात्रे नास्ति तस्माज्जगत्या अन्तरायस्तदवस्थ एव ॥ ९ ॥

अस्य दोषस्य परिहारं दर्शयति।

यदा वा एषाह्नोनस्याहर्भजते साह्नस्य वा सवन-

मथैव जगती कृता वैश्योकमुत्तरस्याह्नो ब्रह्मसाम भवति वैखानसमच्छावाकसाम यच्छुक्रिये सवने क्रियेते तेनैव जगती कृता तेन पशव्यः ॥ १० ॥

यदा वै यस्मिन्नेव काले एषा जगती अहीनसंज्ञकस्य द्विरात्रादेः सम्बन्धि कृत्स्नमहर्भजते तदानीमहनि जगती कृतेति वक्तुं शक्यते नान्यथा एकेनाह्ना सह वर्त्तत इति साह्न एकाहः तस्य वा प्रातःसवनमाध्यन्दिनसवनयोरन्यतरत्सवनं जगती भजते तदापि जगती कृतेति वक्तुं शक्यते साह्नत्वन्तु द्विरात्रस्य नास्ति तस्मात् केनचित् प्रतिनिधिना जगतीकरणं सम्पादनीयं कोऽसौ प्रतिनिधिरिति चेत् उच्यते द्विरात्रगतस्योत्तरस्याह्नो ब्रह्मसाम लैशोकं भवति ब्रह्माणमुद्दिश्य गीयमानं ब्रह्मसाम विश्वाः पृतना इत्यस्यां जगत्यामुत्पन्नं साम लैशोकं तथैवाच्छावाकमुद्दिश्य गीयमानमच्छावाकसाम वैखानसनामकं भवति न किंष्टं कर्म्मणानशदित्यस्यां बृहत्यामुत्पन्नं साम वैखानसं सा च बृहती प्रथमपादव्यतिरिक्तेषु पादेषु चतुर्णामचराणामभ्यासाज्जगती सम्पद्यते एते उभे सामनी यदि शुक्रिये सवने ऋजीपव्यतिरिक्तैः सोमांशुभिरभिनिष्पन्ने शुक्रशब्दवाच्यसोमरसोपेते माध्यन्दिने सवने क्रियेते तेनैव सामद्वयकरणेन द्विरात्रे जगती कृता स्यात् तेन जगतीकरणेन द्विरात्रः पशव्यो भवति सोऽयं दोषपरिहारः ॥ १० ॥

अथास्य द्विरात्रस्य संज्ञानुगुणं फलं दर्शयति।

व्युष्टिर्वा एष द्विरात्रो व्येवास्मै वासयति ॥ ११ ॥

अस्य द्विरात्रस्य व्युष्टिरिति संज्ञा ततोऽस्मै यजमानायायं द्विरात्रः स्वकीयसंज्ञानुसारेण विवासयति तमसः पाप्मनोऽपनयनेन प्रकाशं करोति व्युष्टिद्विरात्रादूर्द्ध्वं क्षत्रस्य धृतिरग्निष्टोमः कार्य्यः तत्र सूत्रं तस्मिन्नेव पूर्व्वपक्षे क्षत्रस्य धृतिना यजेतेति ॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ११ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे अष्टादशाध्यायस्य एकादशः खण्डः।

अष्टादशाध्यायः समाप्तिमगमत्।

---

# ऊनविंशोऽध्याय: ।

अथ प्रथम: खण्ड: ।

यस्य नि:श्वसितं वेदा योवेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

उक्ता राजसूयसम्बन्धिन: सर्व्वे यज्ञा: पवित्राख्याग्निष्टोमाभिषेचनीयदशपेयकेशवपनीयव्युष्टिद्विरात्रचत्रस्य इत्यादय: ।

एकोनविंशे इन्द्रानां क्रतूनामुपदर्शिता: ।
इन्द्राश्च केचिद्देवानां न इन्द्रा: सकला अपि ॥

अत्र निदानं अथैते इन्द्रा इत्याचचते न ते सर्व्वे इन्द्रा: इन्द्रमिश्रास्तु भवन्ति यौ यावेषां समानकर्तृत्वमुपजतौ तौ इन्द्रौ भवत इति, आदौ तावद्राडित्येव नामकं क्रतुमाह ।

अथैषराट् ॥ १ ॥

उच्यत इति शेष:, राज्यहेतुत्वाद्राडित्येतत्तस्य नाम भवति ॥ १

तस्य फलमाह ।

योराज्य आशछ्समानोराज्यन्न प्राप्नुयात् स एतेन यजेत राजैवैनछ्राजानं करोति तन्नु वैरा-

जेति वदेयुर्य्यꣳ राजा राजानꣳ कुर्य्याद्राजैवैनꣳ राजानꣳ करोति ॥ २ ॥

यः पुमान् राज्ये विषयभूते सन्यासं समानाभिलाषं कुर्व्वन् केनचित् प्रतिबन्धेन राज्यन्न प्राप्नुयात् स पुमान् राज्यप्राप्त्यर्थ-मेतेन राट्शब्दाभिधेन क्रतुना यजेत तदानीं राजैव क्षत्त्र-राणां राजभूत एवायं क्रतुरेनं राजानं करोति यद्वा राजैव राडित्येतन्नामकेन क्रतुनैवैनमृत्विक्संघः राजानं करोति यं क्रतुना राजानं कुर्य्यात् तमेवैनमविवादेन सर्व्वजना विवदेयुः इतरेष्वपि राज्यं कुर्व्वत्स्वपि राजत्वव्यवहारं न कुर्व्वन्ति तेषा-मेतदीयस्तुत्यत्वात् युक्तञ्चैतत् क्रतुनैव राजत्वस्य प्राप्तत्वात् ॥ २ ॥

इतरक्रतुभ्योऽस्मिन् राजि क्रतौ को विशेष इत्याशङ्क्याह।

छन्दोऽन्ये यज्ञाः सम्पद्यन्ते स्तोममेषवीर्य्यं वै स्तोमोवीर्य्य एवाध्यभिषिच्यते ॥ ३ ॥

अन्ये यज्ञाः सहस्रादयः छन्दोमातं बृहत्यादिकं प्राप्नुवन्ति एष तु राट् छन्दसां सङ्घं प्राप्नोति सङ्घस्य चैकैकस्मादधिकं वीर्य्यं प्रसिद्धं ॥ ३ ॥

अस्य राजः क्रतोः स्तोमप्राप्तिं दर्शयति।

अष्टावेकविꣳशाः सꣳस्तुतो भवत्यष्टौ वै वीरा-राष्ट्रꣳ समुद्यच्छन्ति राजभ्राता च राजपुत्रश्च पुरो-हितश्च महिषी च सूतश्च ग्रामणी च क्षत्ता च संग्र-

ह्रीता चैते वै वीरा राष्ट्रꣳ समुद्यच्छन्त्येतेष्वेवाध्यभि-षिच्यते ॥ ४ ॥

एकविंशतिसंख्याकाभिः स्तोत्रीयाभिर्निष्पन्नाः स्तोमा एक-विंशाः ते चाष्टसंख्याका अस्मिन्नाजि विद्यन्ते तैरष्टभीराट् सम्यक् स्तुतो भवति तथा हि त्रयः पवमानाः सप्तदशस्तोमोपेता-स्तैकपञ्चाशत्स्तोत्रीया भवन्ति ५१ आज्यस्तोत्राणि चत्वारि त्रिवृत्स्तोमयुक्तानि त्रिवृत्स्तोमस्य चैकस्य नवस्तोत्रीयात्मत्वा-दाज्येषु षट्त्रिंशत्संख्याकाः स्तोत्रीया भवन्ति ३६ चत्वारि पृष्ठ-स्तोत्राणि पञ्चदशस्तोमयुक्तानि तस्य स्तोमस्य चैकस्य पञ्चदश-स्तोत्रीयाः तस्मात् तत्पृष्ठेषु षष्टिसंख्याकाः स्तोत्रीया भवन्ति ६० ताः सर्वा मिलित्वा सप्तचत्वारिंशदधिकं शतं स्तोत्रीयाः सम्प-द्यन्ते १४७ तास्चैकविंशतिसंख्यया विच्छेदिताः सप्तसंख्याकाः एकविंशस्तोमाः सम्पद्यन्ते चरमस्तोत्रे स्वतएवैकविंशः स्तोमो विहितः एवमस्मिन्नाजि सर्वे पृष्ठसंख्याका एकविंशस्तोमा भवन्ति यथा वीराः पुरुषाः अष्टसंख्याका राष्ट्रं सम्यक् निर्व-हन्ति एवमेते ऽष्टसंख्याका एकविंशस्तोमा राडित्येतन्नामकं क्रतुं सम्यक् निर्वहन्ति राजभ्रातादयस्तेऽष्टौ वीरपुरुषाः तत्र भ्रातृपुत्रपुरोहितमहिष्यादयस्त्वारः प्रसिद्धाः सूतो रथपालः ग्रामणी ग्रामेषु योगक्षेमविचारकः क्षत्ता याष्टीको द्वारपालः संग्रहीता भाण्डागारस्य पालकः एतेषां राष्ट्रनिर्वाहकत्वं प्रसिद्धं अष्टसंख्याकैरेकविंशस्तोमैर्युक्तं राजक्रतुमनुतिष्ठन् तेष्वष्टसु वीरपुरुषेष्वभिषिक्तो भवति ॥ ४ ॥

एकविंशस्तोमप्रयुक्तं फलमाह।

क्षत्रं वा एकविꣳशः प्रतिष्ठा क्षत्रस्येवास्य प्रकाशो भवति प्रतितिष्ठति य एवं वेद ॥ ५ ॥

योऽयमेकविंशस्तोमः सोऽयं प्रतिष्ठा प्रकृतस्य क्रतोः समाप्तिस्थानं अतोऽयमन्येषु स्तोमेषु क्षत्रं वै क्षत्रियजातिवत् स्तोमः राजएव तस्माद्यथा लोके क्षत्रस्य विप्रवैश्यजातिषु प्रकाशः शौर्य्यप्रसिद्धिरधिका एवमेवास्यैकविंशस्तोमस्यान्येषु त्रिवृदादिषु स्तोमेषु प्रकाशः प्रतिष्ठात्वप्रसिद्धिरस्ति यः पुमानेवं वेद सोऽयं धनधान्यादिभिः प्रतिष्ठां लभते ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे एकोनविंशाध्यायस्य

प्रथमः खण्डः।

---

अथ द्वितीयः खण्डः।

विराट्संज्ञकं क्रत्वन्तरं विधत्ते।

अथैष विराडन्नाद्यकामो यजेत ॥ १ ॥

राट्संज्ञस्य क्रतोः कथनादनन्तरमेष वक्ष्यमाणविशेषो विराट्संज्ञकः क्रतुरुच्यते दशाक्षरोपेतेन विराट्छन्दसा सह संख्यासाम्यादेष क्रतुर्विराट्संज्ञकः तच्च साम्यमुत्तरत्र स्पष्टीभविष्यति तस्मिन् अन्नाद्यकामोऽधिकारी नतु सोमयागेषु प्रकृति-

भूतस्य ज्योतिष्टोमस्यापि संख्यासाम्याद्विराट्छन्दोरूपत्वमस्ति तथाच तैत्तिरीया आमनन्ति विराजमभिसम्पद्यते तस्मात्तज्ज्योतिरुच्यते इति एवमन्येष्वपि यज्ञेषु विराट्सम्पत्तिस्तत्र तत्र श्रूयते नच तेषां यज्ञानां विराडिति संज्ञास्ति ॥ १ ॥

अस्य तु यज्ञस्य तेभ्योऽन्यः कोविशेषोविद्यते येन विराडिति संज्ञा स्यादित्याशङ्क्याह ।

परोक्षमन्ये यज्ञाविराजꣳ सम्पद्यन्ते प्रत्यक्षमेष-विराजꣳ सम्पन्नः ॥ २ ॥

ज्योतिष्टोमे द्वादशस्तोत्राणि तेष्वाद्यस्य बहिष्पवमानस्तोत्रस्य त्रिवृदाख्यस्तोमो भवति तस्मिंश्च स्तोमे नव स्तोत्रीयाः सन्ति चत्वार्य्याज्यस्तोत्राणि माध्यन्दिनपवमानस्तोत्रमेकं तेषु पञ्चसु प्रत्येकं पञ्चदशस्तोमार्थमावर्त्यमानेषु पञ्चसप्ततिस्तोत्रीया भवन्ति चत्वारि पृष्ठस्तोत्राणि आर्भवपवमानस्तोत्रमेकं तेषु प्रत्येकं सप्तदशस्तोमार्थमावर्त्यमानेषु पञ्चाशीतिसंख्याः स्तोत्रीया भवन्ति एकस्मिन् यज्ञायज्ञीयस्तोत्रे एकविंशस्तोमार्थमावर्त्यमाने सत्येकविंशसंख्याकाः स्तोत्रीया भवन्ति ताः सर्व्वा मिलित्वा नवत्यधिकं शतं सम्पद्यते तासु दशभिर्दशभिरेकैकसङ्घे सम्पादिते सति दशसंख्यया विराट्छन्दःसारूप्यं भवेत् तस्य साम्यं बुद्धिविशेषेण सम्पादनीयत्वात् परोक्षं अस्मिंस्तु क्रतौ प्रतिस्तोत्रमाम्नातानामेव दशात्मत्र स्तोत्रीयाणां व्यवस्थितत्वाद्विराट्सम्पत्तिः प्रत्यक्षा सोऽयमन्येभ्यो यज्ञेभ्योऽस्य विशेषः ॥ २ ॥

एतद्वेदनं प्रशंसति ।

प्रत्यक्षमेतेनान्नाद्यमवरुन्धेऽन्नादो भवति य एवं वेद ॥ ३ ॥

एतेन स्वतःसिद्धायाः विराट्सम्पत्तेर्वेदनेन प्रत्यक्षं यथा भवति तथास्मिन्नेव जन्मनि फलं भवति ॥ ३ ॥

प्रत्यक्षविराट्सम्पत्त्यर्थं प्रतिस्तोत्रं दशसंख्यां विधत्ते ।

सर्व्वोदशदशी भवति दशाक्षरा विराड् वैराज-मन्नमन्नाद्यस्यावरुध्यै ॥ ४ ॥

तत्तदीयेषु स्तोत्रेषु योयः स्तोमो विद्यते स सर्व्वोदशदशी भवति प्रतिस्तोत्रं निर्वर्त्तितत्वाद्दशदशतिः सा प्रयुज्यते तादृशी दशसंख्या यस्मिन् सर्व्वस्मिन् स्तोमे विद्यते स सर्व्वोदशदशी-त्युच्यते स प्रकारः सूत्रे द्रष्टव्यः विराडाख्ये छन्दसि दशाक्षरत्वं प्रसिद्धं तेन छन्दसा साध्यत्वादन्नं वैराजं तस्मादियं संख्या भक्षितुं योग्यस्यान्नस्य प्राप्त्यै भवति ॥ ४ ॥

तामेतां दशसंख्यां समभागेन विभज्य प्रशंसति ।

ताउ पञ्च पञ्च भवन्ति पाङ्क्तोयज्ञः पाङ्क्ताः पशवो यज्ञ एव पशुषु प्रतितिष्ठति ॥ ५ ॥

दशत्वसंख्यायां साम्येन विभक्तायां पञ्चकद्वयं भवतीत्यभि-प्रेत्य ता उ ता एव स्तोत्रीयाः पञ्चपञ्चेत्युच्यते पङ्क्तिछन्दसः पञ्च-

पादोपेतत्वाद्यजमानपञ्चमैश्चतुर्भिर्ऋग्भिरुपेतत्वात् पशूनाञ्च पुच्छसहितैश्चतुर्भिः पादैरुपेतत्वात्सङ्ख्यया पङ्क्तिसम्बन्धे सति तादृशे यज्ञे तादृशेषु पशुषु चायं यजमानः प्रतितिष्ठति अस्मिन् क्रतावन्नाद्यकामोऽधिकारी वर्णितः ॥ ५ ॥

इदानीं प्रतिष्ठाकाममधिकारिणमाह ।

एतेनैव प्रतिष्ठाकामो यजेत दशभिर्वा इदं पुरुषः प्रतिष्ठितोऽस्यामेव प्रतितिष्ठति ॥ ६ ॥

इदमस्मत्प्रत्यक्षं यथा भवति दशभिरेवाङ्गुलीभिः प्रतिष्ठितः पुरुषोऽस्मिन्नेव लोके धनधान्यादिभिः प्रतिष्ठितो भवति ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे एकोनविंशाध्यायस्य

द्वितीयः खण्डः ।

---

अथ तृतीयः खण्डः ।

औपशदाख्यं क्रतुं विधत्ते ।

अथैष औपशदः ॥ १ ॥

हविर्द्वारेतुर्विनाशार्थे वर्त्तते उपसंप्राप्तस्य प्रजोत्पत्तिप्रतिबन्धस्य विनाश उपशदः स यस्मिन् क्रतावस्ति सोऽयमौपशदः ॥ १ ॥

तस्य प्रजोत्पत्तिप्रतिबन्धविनाशात्तेन प्रजोत्पादनलक्षणं फलं दर्शयति ।

गन्धर्वाप्सरसाᳬ स्तोमः प्रजाकामो यजेत गन्धर्वाप्सरसो वै मनुष्यस्य प्रजाया वा प्रजस्ताया वेशते तेषामेव सोमपीथस्तान् स्वेन भागधेयेन प्रीणाति तेऽस्मै तृप्ताः प्रीताः प्रजां प्रयच्छन्ति ॥ २ ॥

ये गन्धर्वा देवानां गायका याश्चाप्सरसो देवानान्नर्त्तक्यस्तेषां तासाञ्च स्तोमो यज्ञोऽयमौपशदाख्यः कुतः तेन स्वार्थेन दृष्टत्वात्तद्रूपत्वोपचारः एतेन क्रतुना प्रजाकामो यजेत अन्तरिक्षायतना गन्धर्वाप्सरस एव मनुष्यसम्बन्धिन्या उत्पाद्यायाः पुत्रपौत्रादिरूपायाः प्रजाया ईशते स्वामित्वेन वर्त्तते या च मनुष्याणामप्रजस्ता प्रजोत्पादनसामर्थ्यराहित्यं तस्यापीशते वा शब्दौ समुच्चयार्थौ तेषां तेषां गन्धर्वाप्सरसरूपाणां देवानामत्रास्मिन्नौपशदाख्ये क्रतौ सोमपीथः सोमपानं भवति ते हि तद्दृष्टे क्रतौ सोमं पिबन्ति तयोर्यजमानस्तान् देवान् स्वोचितेन भागेन तोषिते च देवाः सोमपाने तृप्ताः प्रीतिमापन्नाः प्रपिबन्ति वा अस्मै यजमानाय पुत्रपौत्रादिरूपां प्रजां प्रयच्छन्ति ॥ २ ॥

तस्मिन् क्रतौ किञ्चिद्विशेषं विधत्ते ।

एकैका स्तोत्रीयोपजायते प्रजामेवास्मा उपजनयति ॥३॥

विकृतरूपेऽस्मिन् क्रतौ यानि द्वादशस्तोत्राणि अतिदेशेन प्रकृतितः प्राप्तानि तेषु सर्व्वेषु स्तोत्रेषु एकैका नूतनस्तोत्रीया कर्त्तव्या सा चोपजाता स्तोत्रीया प्रजामेव यजमानार्थमुत्पादयति ॥ ३ ॥

विशेषान्तरं विधत्ते।

ककुभं प्राचीमुदूहति पुरुषो वै ककुब्गर्भ एव स मध्यतो धीयते ॥ ४ ॥

माध्यन्दिने पवमाने स्वतः प्राप्ताया गायत्र्याः प्राचीमुपरिवर्त्तिनीं पवस्व मधुमत्तमइत्येतां ककुभमुदूहति प्रयुञ्जीत ककुभः पुरुषोत्पादकत्वेन पुरुषरूपत्वात् स एव पुरुषरूपात्मकः ककुप्रूपो गर्भो मध्यतो माध्यन्दिनसवनाख्ये क्रतुदरस्थानीये मध्यभागे स्थाप्यते ॥ ४ ॥

अन्यं विशेषं विधत्ते।

अथ यदेषा द्विपदा ककुभो लोके क्रियते गर्भमेव तद्धितं प्रजनयति ॥५॥

तृतीयसवने आर्भवपवमाने स्वतः प्राप्तायाः पादत्रयोपेतायाः ककुभो लोके स्थाने द्विपदा क्रियते परिप्रधन्वेत्येषा द्विपदा ककुप् कर्त्तव्या तस्मि ककुप्करणं गर्भएव परिपक्वरूपो भवति तच्च गर्भमनेन द्विपदाकरणेन प्रजनयत्युत्पादयति ॥ ५ ॥

तस्यां द्विपदां ककुभि च्यावनं नाम साम विधत्ते।

च्यावनं भवति प्रजातिर्वै च्यावनं ॥६॥

पक्वो हि गर्भः उदरात् च्यवते बहिःपतति अतश्च्यावनाख्यं साम प्रसवहेतुत्वात् प्रजापतिः प्रजोत्पादनरूपं भवति ॥ ६ ॥

एतद्वेदन प्रशंसति।

प्रजायते बहुर्भवति य एवं वेद ॥ ७ ॥

स्पष्टोऽर्थः ॥ ७ ॥

पुरा स्वयमेकोऽपि प्रकर्षेण पुत्रादिस्वरूपेण जातः तत् स्वयं बहुविधो भवतीति प्रक्रम्य सामद्वयं विधत्ते।

वसिष्ठस्य जनित्रे भवतो वसिष्ठो वा एते पुत्र-हतः सामनी अपश्यत् स प्रजया पशुभिः प्राजायत यदेते सामनी भवतः प्रजात्यै ॥ ८ ॥

जनित्रनामके द्वे सामनी वसिष्ठसम्बन्धिनी विद्येते ते उभे अत्र भवतः प्रयोक्तव्ये इत्यर्थः नौधसस्यर्क्षु जनित्रमेकं ब्रह्मसाम भवति पुरोजिती वो अन्धस इत्यस्मिन्नार्भवे द्वितीयं जनित्रं इत्येते द्वे वसिष्ठस्य सम्बन्धिनी पुरा कदाचित् पुत्रहतो हत-पुत्रो वै वसिष्ठो वै प्रजार्थी यत् तत्साधनभूते एते द्वे सामनी अपश्यत्ततः स वसिष्ठः ताभ्यां सामभ्यां प्रजापशुयुक्तः प्रकृष्टो ऽभवत् अन्यस्याप्येते सामनी प्रजोत्पादनाय सम्पद्येते ॥ ८ ॥

अथ स्तोत्रीयाणां संख्यां प्रशंसति।

द्वे सꣳस्तुतानां विराजमतिरिच्येते द्वे स्त्रिया ऊने प्रजननाय प्रजननमेव तत्क्रियते प्रजात्यै ॥ ९ ॥

प्रकृतौ द्वादशसु स्तोत्रेषु नवत्यधिकं स्तोत्रीयाणां शतमिति पूर्व्वमेव परिगणितं अत्र तु ततोऽप्यधिका द्वादशस्तोत्रीया एवं सति प्रकृतिगताः स्तोत्रीयाः प्रत्येकं दशसंख्यया विभक्ताः संख्यासाम्यादेकोनविंशतिसंख्याका विराजः सम्पद्यन्ते अधिकास्वपि द्वादशसु स्तोत्रीयासु दशसंख्यया विराडेका सम्पन्ना ततोऽत्र संस्तुतानां स्तोत्रीयाणाम्मध्ये द्वे स्तोत्रीये विराट्रूपत्वमतिक्रम्याधिके सम्पन्ने ते च द्वे पुरुषावयवभूताण्डलिङ्गस्थानीये लोकेऽपि स्त्रियास्ते द्वे अण्डलिङ्गे ऊने तच्चोनत्वं प्रजननाय प्रजोत्पादनाय अन्यथा ताभ्यां पिहिते छिद्रे कथं प्रजोत्पद्यते तस्मात्तत्तेनातिरिक्तकरणेन प्रजोत्पादनमेव कृतं भवति ततोऽयमतिरेकः प्रजात्यै भवति ॥ ९ ॥

इति ताण्ड्यमहाब्राह्मणे एकोनविंशाध्यायस्य

तृतीयः खण्डः ।

---

अथ चतुर्थः खण्डः ।

पुनःस्तोमाख्यं क्रतुं विधत्ते ।

अथैष पुनःस्तोमः ॥ १ ॥

स्तोमोपलक्षितात्सोमयागात् केनापि निमित्तेन प्रच्युतस्य पुनरप्यधिकारं सम्पादयतीत्यसौ क्रतुः पुनःस्तोमनामकः ॥१॥

तत्राधिकारिणं दर्शयति ।

**यो बहु प्रतिगृह्य गरगीरिव मन्येत स एतेन यजेत ॥ २ ॥**

यागस्योपनीयस्य वापरहितन्यायजित्वोपनीयो वा प्रकारान्तरेण वा यो निषिद्धं द्रव्यं बहु प्रतिगृह्य नरकाङ्क्षीतो विषभक्षीव नष्टोऽस्मीति यश्चिन्तयति स एतेन पुनःस्तोमेन यजेत अत्र सवनत्रयस्तोमप्रकारः कल्पे दर्शितः ॥ २ ॥

द्वादशस्माध्यन्दिनं सवनं त्रिवृता अभितइति माध्यन्दिनसवनगतेषु द्वादशस्तोत्रीयासु येयमेकादशी स्तोत्रीया तस्याः फलं दर्शयति ।

**यैकादशी यदेव पूर्ववयसे बहु प्रतिगृह्णाति यद्गरं गिरति यदनन्नमत्ति प्रातःसवनाय तन्निर्हरति ॥ ३॥**

येयं स्तोमसध्य एकादशी स्तोत्रीयाऽस्ति स तत्सर्व्वं दोषजातं निर्हरति नितरां नाशयति किमर्थं प्रातःसवनानुष्ठाने मुख्याधिकारसिध्यर्थं किं किं नाशयतीति चेत् तदुच्यते पूर्व्ववयसे पूर्व्वस्मिन्वयसि स्वकीयस्यायुषः पूर्व्वभागे यदेव निषिद्धं द्रव्यं बहु प्रतिगृह्णाति तथा क्षेत्रादिविक्रयविवादेषु कोपेन मर्त्तुं गरं विषं गिरति भक्षयति यदस्ति नातिद्विषमन्नमत्तीति यदस्ति तत्सर्व्वन्नाशयति ॥ ३ ॥

उत्तरस्याः द्वादश्याः स्तोत्रीयायाः फलमाह ।

**अथ या द्वादशी यदेवोत्तरवयसे बहु प्रतिगृह्णाति**

यद्गरं गिरति यदनन्नमत्ति तृतीयसवनाय तन्निह-रति ॥ ४ ॥

पूर्व्ववद्व्याख्येयं ॥ ४ ॥

यास्तु दशसङ्ख्याकाः स्तोत्रीया अवशिष्टास्तासां फलमाह ।

वैराजो वै पुरुषः स मध्यतोऽशुद्धो मध्यत एवैनं पाप्मनो मुञ्चति ॥ ५ ॥

पुरुषस्य हस्ताङ्गुलीषु पादाङ्गुलीषु च विराट्छन्दसश्च दश-सङ्ख्यासद्भावाद्वैराजत्वञ्च स पुरुषो मध्यमे वयस्यशुद्धः पूर्व्वोक्त-योर्व्वयसोरुक्तप्रकारेण प्रतिग्रहाद्यशुद्धिपरिहारेऽपि मध्यगता-शुद्धेरपि परिहृतत्वात् एनं शुद्धिरहितं पुरुषमयं दशसंख्या सङ्ख्योयुक्तः स्तोत्रीयसङ्घो मध्यमे वयसि पापान्मोचयति ॥ ५ ॥

अथ सामद्वयं विधत्ते ।

शुद्धाशुद्धीये भवतः ॥ ६ ॥

नौधसस्यर्चु पदेत्यनेन निधनेनोपेतं यच्छुद्धाशुद्धीयन्नामकं साम तद्ब्रह्मसाम भवेत् ऊर्ड्‌ष्विडेत्यनेन निधनेनोपेतं यदपरं शुद्धाशुद्धीयन्नामकं साम तत् स्वकीयास्वृचु भवेत् तदेतदुभयं कल्पकारेणोक्तं ॥ ६ ॥

नौधसस्यर्चु शुद्धाशुद्धीयं ब्रह्मसाम पदनिधनमिति तथा शुद्धीयं स्वासु यदैडमिति सामद्वयं प्रशंसितुमाख्यायिकामाह ।

इन्द्रो यतीन् सालावृकेयेभ्यः प्रायच्छत्तमश्लीला वागभ्यवदत्सोऽशुद्धोऽमन्यत स एते शुद्धाशुद्धीये अपश्यत्ताभ्यामशुध्यत् ॥ ७ ॥

केचन यतयः सर्व्वकर्म्मसंन्यासं कृत्वा कदाचिदपि स्वमुखे वेदान्तशब्दोच्चारणरहिताः काष्ठदण्डमात्रधारिणो विवेकज्ञानरहिता यत्र तत्रान्नं भक्षयन्तो नरकयोग्या वर्त्तन्ते तथा चान्यत् श्रूयते ज्ञानदण्डो धृतो येन एकदण्डी स उच्यते । काष्ठदण्डो धृतो येन संन्यासी ज्ञानवर्ज्जितः । स याति नरकान् घोरान् महारौरवसंज्ञकानिति । सालावृका अरण्यश्वानः तेषामपत्यभूता बालकाः श्वानः सालावृकेयास्तेभ्यस्तान्यतीनिन्द्रोमारणार्थं प्रायच्छत् ते च यतयो वेदान्तशब्दरहिता इत्येतदर्थमिन्द्रवाक्यरूपेण कौषीतकिनस्त्वामनन्ति अत्यन्मुखान् यतीन् सालावृकेयेभ्यः प्रायच्छदिति तथादत्तवन्तं तमिन्द्रं अश्लीला निन्दारूपा काचिद्वागभ्यवदत् इन्द्रो ब्रह्महत्यां कृतवानित्येवं निन्दा लोके सर्वत्र प्रसृता ततः स इन्द्रः स्वयमशुद्धोऽस्मीत्यमन्यत सोऽशुद्धिपरिहारोपायं वेदेष्वपि स्थिते शुद्धाशुद्धीयनामके द्वे सामनी अपश्यत् ताभ्यां सामभ्यां सर्व्वः शुद्धोभूतः ॥ ७ ॥

प्रकारान्तरेण सामद्वयं प्रशंसति ।

यदेव बहु प्रतिगृह्णाति यदनन्नमत्ति यदशुद्धोमन्यते तदेताभ्याᳶ शुध्यति ॥ ८ ॥

प्रतिग्रहे वा निषिद्धान्नभक्षणे वा निमित्तान्तरेण वा यद्-
शुद्ध्यापादकं पापमस्ति तत्सर्व्वमेताभ्यां शुध्यति विनश्यति ॥ ८ ॥

अन्यत् सामद्वयं विधत्ते।

गौषूक्तञ्चाश्वसूक्तञ्च भवतः ॥ ९ ॥

स्वादिष्ठयेत्यत्र गौषूक्तनामकं साम भवति इन्द्रमच्छेत्यत्राश्व-
सूक्तनामकं साम भवति ॥ ९ ॥

तदेतत्सामद्वयं प्रशंसितुमाख्यायिकामाह।

गौषूक्तिश्चाश्वसूक्तिश्च बहु प्रतिगृह्य गरगिरा-
वमन्येतां तावेते सामनी अपश्यतां ताभ्यां गरन्निर-
म्रातां यदेव बहु प्रति गृह्णाति यद्गरं गिरति यदन-
न्नमत्ति तदेताभ्यां निर्हते ॥ १० ॥

गोषूक्तस्यापत्यं गौषूक्तिः अश्वसूक्तस्यापत्यमाश्वसूक्तिः तावुभौ
बहु प्रतिग्रहरूपं विषं भक्षितवन्तावावामिति तत्परिहारोपायं
वेदेष्वन्विष्यैते उभे सामनी दृष्ट्वा ताभ्यां सामभ्यां प्रतिग्रहरूपं
निरम्रातां निःशेषेण नाशयतीत्यर्थः ॥ १० ॥

पुनःस्तोमाख्यक्रतोरुक्थसंस्थारूपं विधत्ते।

पञ्चदशस्तोत्राणि भवन्त्योजो वीर्य्यं पञ्चदशः
पाप्मनएवैनं मुक्त्वौजसा वीर्य्येण समर्द्धयति ॥ ११ ॥

यद्यस्मिन् पुनःस्तोमे माध्यन्दिनसवनस्य द्वादशस्तोमोपेतत्वात्प्रातःसवनतृतीयसवनयोश्च त्रिवृत्स्तोमोपेतत्वान्नास्त्यत्र पञ्चदशस्तोमस्य प्रसङ्गः तथापि स्तोत्रगतसंख्यया तं स्तोमं सम्पाद्य वीर्य्यरूपेण प्रशंसा क्रियते पञ्चदशस्तोमस्य प्रजापतिबाहुभ्यामुत्पन्नत्वात् क्षत्रियवीर्य्यहेतुत्वं वीर्य्यस्यैव व्याख्यानमोजइति तेन वीर्य्येण यजमानं पाप्मनोमोचयित्वा सेयं स्तोत्रसंख्या धनधान्यादिसमृद्धं करोति ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणे एकोनविंशाध्यायस्य
चतुर्थः खण्डः।

---

अथ पञ्चमः खण्डः।

चतुष्टोमाख्यं क्रतुं विधत्ते।

**अथैष चतुष्टोमः ॥ १ ॥**

पूर्वस्मात्पूर्वस्मादुत्तर उत्तर स्तोमश्चतसृभिस्तसृभिः स्तोत्रीयाभिरस्मिन् क्रतौ अधिको भवति अतोऽयं क्रतुश्चतुष्टोमः ॥ १ ॥

अत्राधिकारिणमाह।

**पशुकामो यजेत ॥ २ ॥**

स्पष्टोऽर्थः ॥ २ ॥

प्रथमस्तोत्रगतां स्तोमसंख्यां प्रशंसति।

यच्चतसृभिर्बहिष्पवमानं भवति चतुष्पादाः पशवः पशूनेवावरुन्धे ॥ ३ ॥

अयं पूषा रयिर्भग इत्येतास्तिस्रोऽनुष्टुभस्ताश्चतस्रः संख्याः चतस्रो गायत्रीः सम्पाद्य ताभिर्निष्पन्ने बहिष्पवमाने स्तोत्रे चतुःसंख्यया पशुप्राप्तिरुच्यते ॥ ३ ॥

आज्यः स्तोत्रगतां स्तोमे पूर्व्वस्मादधिकत्वेन वर्द्धमानया चतुःसंख्यया सम्पन्नामष्टसंख्यां प्रशंसति ।

यदष्टाभिराज्यान्यष्टाशफाः पशवः शफशस्तत् पशूनाप्नोति ॥ ४ ॥

अष्टाभिः स्तोत्रीयाभिराज्यानि निष्पाद्यन्त इति यदस्ति तेन पशूनाप्नोति पशुषु शफानामष्टत्वात् शफशः शफद्वारा साम्यसम्भवात् ॥ ४ ॥

तत ऊर्द्ध्वं चतुःसंख्यया वर्द्धमानां स्तोमसंख्यां प्रशंसति ।

यत् द्वादशो माध्यन्दिनः पवमानो द्वादशमासाः संवत्सरः संवत्सरं पशवोऽनु प्रजायन्ते तानेवावरुन्धे ॥ ५ ॥

संवत्सरमनु प्रतिसंवत्सरं गवादिपशूनां वत्सोत्पादकत्वं प्रसिद्धं ॥ ५ ॥

ततोऽपि चतुःसंख्ययाधिकं स्तोमान्तरं प्रशंसति ।

यत् षोडशानि पृष्ठानि षोडशकलाः पशवः कला-शस्तत्पशूनाप्नोति ॥ ६ ॥

गोमहिष्यादीनां पशूनां शिरो ग्रीवा मध्यदेहः पुच्छमिति चत्वार्यङ्गानि चत्वारः पादाः अष्टौ शफाः इत्येवं षोडशसंख्याका अवयवाः कला इत्युच्यन्ते चत्वारः कलाद्वारा संख्यासामान्यात् षोडशस्तोमः पशुप्राप्तिर्भवति ॥ ६ ॥

ततोऽपि चतुःसंख्ययाधिकं स्तोमान्तरं प्रशंसति ।

यद्विंशआर्भवः पाङ्क्तत्वमेषां तदाप्नोति ॥७॥

आर्भवपवमाने विंशः स्तोम इति यदस्ति तत्तेनैवैषां पशूनां यत् पाङ्क्तत्वमस्ति तदाप्नोति विंशतिसंख्यावयवेषु चतुर्षु भागेषु प्रत्येकं पञ्चसंख्योपेतत्वात् पाङ्क्तत्वमस्ति पशूनां पाङ्क्तत्वं पुरैवोक्तं अतः तत्प्राप्तिर्युक्ता ॥ ७ ॥

ततोऽपि चतुःसंख्याधिकं स्तोमान्तरं प्रशंसति ।

यच्चतुर्विंशोऽग्निष्टोमश्चतुर्विंशत्यक्षरा गायत्री तेजो ब्रह्मवर्चसं गायत्री तेजएव ब्रह्मवर्चसमव-रुन्धे॥ ८ ॥

अग्निष्टोमो द्वादशस्तोत्रस्य स्पष्टमन्यत् ॥ ८ ॥

चतुर्विंशसंख्या द्वारा स्तोमस्य यज्ञायज्ञीयत्वं तत्प्रकारान्तरेण प्रशंसति ।

प्राणो गायत्री प्रजननं प्राणादेव गायत्र्याः प्रजायत ॥ ९ ॥

रेचकपूरककुम्भकैः प्राणस्त्रिधा भिद्यते गायत्री च त्रिभिः पादैरुपेता तस्माद्गायत्री प्राणत्वेन हि गर्भाधानकाले वीर्य्यमाधीयते तस्मात्प्राणः प्रजननं तथाविधप्राणरूपाया गायत्र्याः प्रजोत्पादकत्वं यजमानस्य भवति ॥ ९ ॥

तदेतदुक्तमग्निष्टोमसाम प्रकारान्तरेण प्रशंसति ।

एकꣳ साम बह्वनि छन्दाꣳसि तस्मादेको बह्वन् पोषान् पुष्यति ॥ १० ॥

अत्र वारवन्तीयाख्यमेकमग्निष्टोमसाम तस्य वारवन्तीयस्याधारभूतान्युग्गतानि छन्दांसि बह्वनि भवन्ति तद्यथा यज्ञायज्ञीयस्यर्चः साकमश्वस्यर्चौहाविर्गीस्यर्क्षस्तैरश्वस्यर्चे इति तस्मात्कारणाद्वारवन्तीयसामस्थानीय एकः पुरुषो बह्वन् पोषान् पुत्रपौत्रादिरूपान् पोषणीयान् प्राणिनो बह्वन् पुष्यति ॥१०॥

पुनरपि प्रकारान्तरेण प्रशंसति ।

आत्मा वा अग्निष्टोमः पशवश्छन्दाꣳस्यात्मन्येव तत्पशून् प्रतिष्ठापयति नोक्थ्ये।नाग्निष्टोमो न हि ग्राम्याः पशवो नारण्याः ॥ ११ ॥

योऽयमग्निष्टोमान्तो द्वादशस्तोत्रयुक्तः क्रतुभागः सोऽयं सर्वेषु

सोमयागेष्वनुष्ठत्तत्वादात्मा सोमयागदेहः यान्यतिरिक्तान्युक्थ-स्तोत्रगतानि छन्दांसि तानि पशवो गवादिपशुस्थानीयानि तत्तेनोक्थच्छन्दोऽनुष्ठानेन पशून् प्रतिष्ठापयति सोमयुक्तस्त्रिवृत्स्तोमः क्रतुर्न्न तावदुक्थ इति वक्तुं शक्यते अग्निष्टोमसाम्ना समापयित्वात् नाप्यग्निष्टोम इति वक्तुं शक्यते उक्थस्तोत्रीयाणामनानुष्ठानात् पशवोऽपि गोमहिष्यादयो न तावद्ग्राम्या इति वक्तुं शक्या अहन्यरण्ये सञ्चरमाणत्वात् तथारण्या इति वक्तुं न शक्यते रात्रौ ग्रामे तन्निवासदर्शनात् तस्मादीदृशानां पशूनामीदृशेन क्रतुना प्राप्तिर्युक्तेत्यर्थः ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणे एकोनविंशाध्यायस्य

पञ्चमः खण्डः ।

---

अथ षष्ठः खण्डः ।

द्वितीयं चतुष्टोममाह ।

अथ यस्य चत्वारि स्तोत्राणि चतसृभिश्चत्वार्य्यष्टाभिश्चत्वारि द्वादशभिश्चत्वारि षोडशभिस्तुगान्नातिवर्त्तति ॥ १ ॥

पूर्व्वोक्तश्चतुष्टोमोऽग्निष्टोमरूपत्वात् द्वादशस्तोत्रैरुपेतः तत्रैकेन प्रकारेणोत्तरोत्तरं चतुःसंख्या वृद्धिर्युक्ता अयं चतुष्टोमः षोडशभीरूपत्वात् षोडशभिः स्तोत्रैरुपेतः अत्रान्येन प्रकारेणो-

त्तरोत्तरं चतुःसंख्याधिकमुच्यते तथा बहिष्पवमानस्तोत्राज्यानि चेत्येतानि चत्वारि स्तोत्राणि चतसृभिः स्तोत्रीयाभिर्न्निष्पाद्यन्ते अच्छावाकाख्यं माध्यन्दिनपवमानौ द्वौ पृष्ठञ्चेत्येतानि चत्वारि स्तोत्राणि अष्टस्तोत्रीयाभिर्न्निष्पाद्यन्ते उत्तरे द्वे पृष्ठे आर्भवपवमानाग्निष्टोमसाम चेत्येतानि चत्वारि स्तोत्राणि द्वादशभिः स्तोत्रीयाभिर्न्निष्पाद्यन्ते एवं त्रीण्युक्थानि षोडशिसाम चेत्येतानि चत्वारि स्तोत्राणि षोडशभिः स्तोत्रीयाभिर्न्निष्पाद्यन्ते एवं स्तोमेषु चतुःसंख्यावृद्धियुक्तत्वाच्चतुष्टोम इत्युच्यते यस्य चतुष्टोमाख्यस्य क्रतोरीदृशी चतुःसंख्यावृत्तिः सगान्नातिवदति ज्योतिर्गौरायुरित्युक्थेषु क्रतुषु यो गोनामकः क्रतुस्तमतिक्रम्य अधिकं न भवति तत्सफल इत्यर्थः यद्वा गां गोजातिं नातिवदति गोप्राप्तिफलं प्रयच्छतीत्यर्थः तस्मादनेन पशुकामो यजेतेत्युक्तं भवति एतदेव निदानेऽभिहितं पशुकामयज्ञ एवोत्तर इति ॥१॥

स्तोत्रगतां षोडषसंख्यां प्रशंसति ।

षोडशकलाः पशवः कलाशस्तत्पशूनाप्नोति ॥२॥

पूर्ववद्व्याख्येयं ॥ २ ॥

अग्निष्टोमसाम्न उपरितनानि प्रशंसति ।

उक्थः षोडशिमान् भवति पशवो वा उक्थानि वज्रः षोडशी वज्रेणैवास्मै पशून् परिगृह्णात्यनपक्रामुका अस्मात्पशवो भवन्ति नोक्थोनातिरात्रो न हि ग्राम्याः पशवो नारण्याः ॥३॥

त्रिभिरुक्थस्तोत्रैरुपेतत्वादयं क्रतुः उक्थः षोडशिस्तोत्रेणो-पेतत्वात् षोडशिमान् उक्थानां पशुप्राप्तिहेतुत्वात्पशुरूपत्वं षोडशिनः पशुविरोधिचौरव्याघ्रादिनिवारकत्वाद्वज्रत्वं तत्रो-क्थे परिगृहीताः पशवश्चौराद्यपहरणाद्वज्रेण रक्षिताः सन्तः कदाचिदप्यस्माद्यजमानादनपक्रामुका भवन्ति अयं क्रतुरुक्थ-संस्थो न भवति उक्थस्तोत्रयोरसमाप्तत्वात् अतिरात्रोऽपि न भवति षोडशिनि च समाप्य रात्रिपर्य्यायाणां सन्धेश्चाप्रयोगात् न हि प्रास्या इति पूर्ववद्व्याख्येयं ॥ २ ॥

इति ताण्ड्यमहाब्राह्मणे एकोनविंशाध्यायस्य
षष्ठः खण्डः ।

---

अथ सप्तमः खण्डः ।

उद्भिद्वलभिन्नामकौ द्वौ क्रतू विवचुस्तत्प्रशंसार्थमाख्यायिका-माह ।

असुराणां वै वलस्तमसा प्रावृतोऽश्मापिधान-आसीत्तस्मिन् गव्यं वस्वन्तरासीत्तं देवानाशक्नुवन् भेत्तुं ते बृहस्पतिमब्रुवन्निमान्न उत्सृजेति स उद्भिदैव वलं व्यच्यावयद्वलभिदाभिनत्तानुत्सेधेनैवोदसृजन्नि-षेधेन पर्य्यगृह्णात् ॥ १ ॥

असुराणामेव मध्ये वलनामकः कश्चिदसुरो यथा देवैर्ज्ञातुं

न शक्यते तथान्धकारेण प्रावृतः परितोऽश्मापिधानः प्राकाररूपेण स्थापितैः पाषाणैराच्छादितः कस्मिंश्चिद्बिलेऽतिष्ठत् तस्मिन्बिले अन्तर्मध्ये गव्यं गोसमूहरूपं वसुस्वासीत् देवानां सम्बन्धि गो जातमपहृत्य बिले गोपितत्वात् तं वलनामानमसुरं भेत्तुं शस्त्रैर्विदारितुं देवाः शक्तानाभवन् ततो बृहस्पतिं प्रार्थितवन्तः हे बृहस्पते अस्मदर्थं इमान् पशूनुत्सृज बिलान्निःसारयेति ततः बृहस्पतिरुद्भिद्यागमनुष्ठाय तत्सामर्थ्येनैव वलनामासुरं बिलाद्विसृज्य प्रच्यावितवान् बलभिन्नामानं क्रतुमनुष्ठाय तत्सामर्थ्येन वलनामानमसुरं अभिनत् शस्त्रैर्विदारयन् तान् बिलस्थितानपि पशूनुत्सेधाख्येन साम्ना एवोदसृजत् बिलात् उद्गतानकरोत् ततो निषेधेन साम्ना पशूनां पलायनं निषेधेन पर्य्यरुन्धात् परितः स्वाधीनानकरोत् ॥ १ ॥

तयोः क्रत्वोरधिकारिणमाह ।

**पशुकामो यजेत ॥ २ ॥**

उद्भिद्वलभिद्भ्यामिति शेषः सहानुष्ठानं सूत्रकारो दर्शयति उद्भिद्वलभिद्भ्यामविप्रयोगेण यजेतेति ॥ २ ॥

पशुफलप्राप्त्यर्थमुभयोरुपयोगमाह ।

**यदुद्भिदा यजते बलमेवास्मै विच्यावयति यद्बलभिदा बलमेवास्मै भिनत्ति ॥ ३ ॥**

स्पष्टोऽर्थः ॥ ३ ॥

अस्मै पशुलाभाय सामद्वयं विधत्ते ।

उत्सेधनिषेधौ ब्रह्मसामनी भवत उत्सेधेनैवास्मै पशूनुत्सिध्य निषेधेन परिगृह्णाति ॥ ४ ॥

पिबासु तस्य रसिन इत्यस्यामृचि उत्सेधनिषेधाख्ये द्वे सामनी तयोरुत्सेध उद्भिदि ब्रह्मसाम निषेधो बलभिदि ब्रह्मसाम तत्र तत्सेधेन पशुप्राप्तिप्रतिबन्धकात्पशूनुत्सिध्य निःसार्य निषेधेन पलायनं निषिध्य स्वाधीनान् करोतीति ॥४॥

अस्मै यजमानार्थं अन्यत्सामद्वयं विधत्ते ।

यज्ञइन्द्रमवर्द्धयदिति ब्रह्मणआज्यꣳ रूपेण समृद्धम् ॥ ५ ॥

पूर्वोक्तावुत्सेधनिषेधौ माध्यन्दिनसवने ब्रह्मसाम यज्ञ इन्द्रमित्यस्यामृचि सम्पन्नं साम तयोः क्रत्वोः प्रातःसवने ब्राह्मणं प्रति प्रयोक्तव्यमाज्यस्तोत्रं तस्यामृचीन्द्रो यद्भिनद्बलमिति बलभेदनलिङ्गसद्भावादिदमाज्यस्तोत्रमनुकूलेन रूपेण समृद्धं ॥५॥

अथ कश्चित्संख्याविशेषमुपायेन सम्पाद्य तमुपजीव्य प्रशंसति ।

सप्तसप्तदशौ भवतो यत्सप्तभिः स्तुवन्ति सप्त ग्राम्याः पशवः पशूनेवावरुन्धे सप्तपदा शक्वरी पशवः शक्वरी पशूनेवावरुन्धेऽथ यत्सप्तदशभिः प्रजापतिर्वै सप्तदशः प्रजापतिमेवाप्नोति ॥ ६ ॥

अत्रैवं कल्पो दर्शितं एकविंशं बहिष्पवमानं तिसृभिर्होतुराज्यं सप्तसप्तदशमिति अत्रैकविंशतिसंख्या त्रिसंख्या च मिलित्वा चतुर्विंशतिः सम्पद्यत इति संख्या सम्पद्यते तस्याश्च विच्छेदविशेषैका सप्तसंख्या अपरा तु सप्तदशसंख्या तयोर्मध्ये सप्तसंख्या यासां स्तोत्रीयाणां सङ्घे विद्यते सोऽयं सप्ती अवशिष्टः सप्तदशः तत्र सप्तिना संघेन संख्यासाम्यादश्वादीन् पशून् प्राप्नोति तथा शक्करीछन्दसः सप्तभिः पादैरुपेतत्वात् पशुसाधनत्वाच्च सप्तसंख्यया पशुप्राप्तिः अथावशिष्टाभिः सप्तदशभिः स्तुवन्तीति यदस्ति तेन प्रजापतिं प्राप्नोति प्रजापतेः सप्तदशाक्षररूपत्वं तैत्तिरीया आमनन्ति ओश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामहे इति पञ्चाक्षरं द्व्यक्षरो वषट्कारः एष वै सप्तदशः प्रजापतिरिति ॥६॥

पुनरपि संख्याद्वयं मिलित्वा प्रशंसति ।

गायत्रीꣳ सम्पद्यते तेजो ब्रह्मवर्च्चसं गायत्री तेज एव ब्रह्मवर्च्चसमवरुन्धे प्राणो गायत्री प्रजननं प्राणादेव गायत्र्याः प्रजायते ॥ ७ ॥

या सप्तसंख्यास्ति या चान्या सप्तदशसंख्या ते उभे मिलित्वा चतुर्विंशतित्वेन गायत्रीं प्राप्नुतः तेजो ब्रह्मवर्च्चसमित्यादि पूर्ववद्व्याख्येयं ॥७॥

इति ताण्ड्यमहाब्राह्मणे एकोनविंशाध्यायस्य

सप्तमः खण्डः ।

अथ अष्टमः खण्डः ।

अपचित्याख्यं क्रतुं विधत्ते ।

अथैषोऽपचितिरपचितिकामो यजेतापचित्यवा-
स्मा अपचितिं विन्दति ॥ १ ॥

अपचितिः पूजा तद्धेतुत्वात्क्रतुरप्यपचितिनामकः अपचित्यैव
अपचितिना क्रतुना अस्मै यजमानार्थमुद्गाता पूजां लभते ॥ १ ॥

तत्र बहिष्पवमानमाध्यन्दिनपवमानयोः स्तोमविशेषं विधत्ते ।

तस्य चतुर्विंशौ पवमानौ चतुर्विंशत्यक्षरा गाय-
त्री तेजो ब्रह्मवर्चसं गायत्री तेजसैवास्मै ब्रह्मवर्चसेना-
पचितिं विन्दति ॥ २ ॥

स्पष्टोऽर्थः ॥२॥

पृष्ठस्तोत्रे सामद्वयं विधत्ते ।

उभे बृहद्रथन्तरे भवत उभाभ्यामेवास्मै बृहद्र-
थन्तराभ्यामपचितिं विन्दति ॥ ३ ॥

स्पष्टोऽर्थः ॥ ३॥

अपरं सामद्वयं विधत्ते ।

भर्गयशसी भवतो भर्गेणैवास्मै भर्गो दधाति यश-
सा यशः ॥ ४ ॥

पुरोजिती वो अन्धस इत्यस्यामृचि यथा श्यावाश्वान्धी-
गवे सामनी तथा भर्गाख्यं साम त्वमिन्द्र यशसा असीत्यस्यामृचि
यशो नामकं साम भवति तत्र भर्गाख्येनैव साम्ना यस्मै यज-
मानार्थं भर्गों दधाति तेजः सम्पादयति यशोनामकेन साम्ना
कीर्त्तिं सम्पादयति ॥४

अत्र विद्यमानान् स्तोमान् प्रशंसति ।

उभये स्तोमा युग्मन्तश्चायुजश्चोभयैरेवास्मै स्तोमै-
रपचितिं विन्दति ॥ ५ ॥

युग्मन्तोयुग्मसंख्यया समसंख्ययोपेताः चतुर्विंशस्तोमाः
यद्यप्येक एव चतुर्विंशस्तथापि जात्यभिप्रायेण बहुवचनं अयुजो
विषमसङ्ख्योपेताः त्रिवृत्पञ्चदशादयः स्पष्टमन्यत् ॥५॥

अत्र ब्रह्मवादिनामाक्षेपं दर्शयति ।

तदाहुर्विलोमानस्तोमा ईश्वरा यजमानं विचे-
तोर्व्युं च्यतियन्तीति ॥ ६ ॥

त्रिवृदादिक्रमेण ह्यनुष्ठाने सत्यानुलोम्यं स्यात् अत्र चतु-
र्विंशमारभ्य तत ऊर्द्ध्वं अर्वाचीनानां पञ्चदशादीनामनुष्ठानाद्वि-
लोमत्वं प्रातिलोम्येन प्रवृत्ताः स्तोमा यजमानं विचेतोर्विचे-
पयितुमीश्वराः समर्थाः हि यस्मादेते स्तोमा व्यतियन्ति विप-
रीतक्रमाः सन्तः स्वोचितं क्रममतिलङ्घ्य प्रवर्त्तन्ते इतिशब्दो
ब्रह्मवाद्याक्षेपसमाप्त्यर्थः ॥ ६ ॥

समाधानं विधत्ते ।

एकविꣳशोऽग्निष्टोमो भवति प्रतिष्ठा वा एकविꣳशोऽन्ततएव यज्ञस्य प्रतितिष्ठति ॥ ७ ॥

स्पष्टोऽर्थः ॥७॥

इति ताण्ड्यमहाब्राह्मणे एकोनविंशाध्यायस्य

अष्टमः खण्डः ।

---

अथ नवमः खण्डः ।

द्वितीयमपचितिनामकं क्रतुं विधत्ते ।

अथैष सर्वस्तोमोऽपचितिरपचितिकामो यजेत सर्वैरेवास्मै स्तोमैरपचितिं विन्दति ॥ १ ॥

अतीतयोर्द्वितीयतृतीययोरध्याययोर्निरूपितास्त्रिवृदादिस्तोमा येऽष्टाचत्वारिंशान्ताः स्तोमास्ते सर्वेऽप्यत्र विद्यन्ते अतोऽयं सर्वस्तोमः तैः सर्वैरुद्गाता यजमानार्थं पूजां लभते ॥१॥

स्तोमगतस्तोत्रीयाणां सङ्ख्यामुपजीव्य प्रशंसति ।

विराजꣳ सम्पद्यत एष वा अपचितोयोऽन्नादोऽन्नं विराडन्नाद्यमेवास्मिन्दधाति ॥ २ ॥

अयमपचितिक्रतुर्दशसंख्यया स्तोत्रीयासु विच्छेदितासु संख्यासामान्याद्विराट्छन्दोरूपत्वं सम्पद्यते तथा हि त्रिवृद्-

बहिष्पवमानं पञ्चदशं होतुराज्यं सप्तदशे द्वे आज्ये एकविंश-मच्छावाकस्याज्यं त्रिणवो माध्यंदिनः पवमानः त्रीणि पृष्ठानि चतुर्विंशं चतुश्चत्वारिंशमष्टाचत्वारिंशरूपाणि चतुर्थं पृष्ठन्तु चतुर्विंशं आर्भवस्त्रयस्त्रिंशमग्निष्टोम एकविंशः अत्र स्थिताः सर्वाः स्तोत्रीयास्त्रीणि शतानि भवन्ति ३०० ततश्च दशकत्वेन विछिन्नाः सत्यस्त्रयस्त्रिंशद्विराजः सम्पद्यन्ते विराजश्चान्नरूपत्वं अन्नहेतुत्वात् लोके यः पुमानन्नादो भवति सोऽपचितो राडिति रोगरहितत्वात् पूजितो भवति तस्मादुद्गातास्मिन् यजमाने विराट्रूपेणान्नाद्यं सम्पादयति ॥२॥

द्वे सामयुग्मे द्विविधांश्च स्तोमान् विधाय प्रशंसति ।

**उभे बृहद्रथन्तरे भवतो भर्गयशसी भवत उभये स्तोमाश्छन्दोमाश्च पृष्ठ्याश्चोभयैरेवास्मै स्तोमैरप-चितिं विन्दति ॥ ३ ॥**

चतुर्विंशचतुश्चत्वारिंशाष्टाचत्वारिंशाः स्तोमा गायत्रीत्रिष्टुप्-जगत्याख्यैश्छन्दोभिर्गीयन्ते संख्ययोपमीयन्त इति छन्दोमाः त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशाख्याः स्तोमाः षडहे पृष्ठस्तोत्रसम्बन्धाः पृष्ठ्या इत्युच्यन्ते तैश्चतुर्भिः सामभिर्नवभिः स्तोमैश्च यजमानाय पूजां लभते ॥३॥

पुनरपि स्तोमान् प्रशंसति ।

**तस्य छन्दोमाः पृष्ठानि पशवो वै छन्दोमा अन्नं**

पृष्ठान्यभिपूर्वमेवास्मिन्नन्नाद्यं पशून्दधाति यच्छन्दोमवाꣳस्तेन द्वादशाहयाजिनमाप्नोति ॥ ४ ॥

तस्यापचितेः क्रतोर्यच्छन्दोमा विद्यन्ते यानि च त्रिवृदादीनि पृष्ठानि तेषाम्मध्ये छन्दोमानां पशुसाधनत्वात् पशुत्वं पृष्ठान्नहेतुत्वादन्नत्वं एवं सत्यन्नस्य प्रथममपेक्षितत्वादभिपूर्वमनुक्रमेणैवान्नमुत्कृष्टं सम्पाद्य ततः पशून् सम्पादयति किञ्च द्वादशाहे छन्दोमसद्भावात् द्वादशाहयाजिनं प्राप्नोति तस्य यत् फलं तदस्यापि भवतीत्यर्थः ॥ ४ ॥

अत्र ब्रह्मवादिनामाक्षेपं दर्शयति ।

तदाहुर्नानालोकाः स्तोमाश्छन्दोमाश्च पृष्ठाश्च यदेकस्मिन् यज्ञक्रतौ समवरुध्यन्त ईश्वरा यजमानोऽप्रतिष्ठातोरिति ॥५॥

उक्ताः स्तोमा लोका भिन्नाश्रयान त्वेकक्रतुवर्त्तिनः तथा सति यद्येकस्मिन्नेव क्रतौ स्वीक्रियेरन् यदा यजमानोऽप्रतिष्ठातोरप्रतिष्ठातुमीश्वरो भवति प्रतिष्ठान्न लभत इत्यर्थः ॥५॥

उक्ताक्षेपं परिहरति ।

एकविꣳशोऽग्निष्टोमो भवति प्रतिष्ठा वा एकविꣳशः प्रतिष्ठामेव तदभ्यायन्ति ॥ ६ ॥

ततोनैकविंशानुष्ठानेन यजमानस्य प्रतिष्ठामभिलक्ष्य सर्व्वे स्तोमा आयन्ति गच्छन्ति ॥६॥

इति ताण्ड्यमहाब्राह्मणे एकोनविंशाध्यायस्य नवमः खण्डः ।

---

अथ दशमः खण्डः ।

पक्ष्याख्यं क्रतुं विधत्ते ।

**पक्षी वा एष स्तोमः ॥ १ ॥**

स्तोमशब्देन तद्वान् क्रतुरुपलक्ष्यते स च पक्षिसादृश्यात् पक्षिनामकः तस्य पूर्वभागे त्रिवृदादिवयस्त्रिंशान्तः स्तोमसङ्घः एकः पक्षः उत्तरभागे त्रयस्त्रिंशादित्रिवृदन्तः स्तोमसङ्घोऽपरः पक्षः ॥ १ ॥

अस्य क्रतोः पक्षिनामानुकूलं सामविशेषं दर्शयति ।

**पक्ष्येषनिधीयते ॥ २ ॥**

सुपर्णेन दृष्टः सौपर्णाख्यः सामविशेषो नाम तस्य साम्यात् पक्षीत्युच्यते सोऽस्मिन् क्रतौ निधीयते तथा च कल्पेऽभिहितं स्यारस्य सौपर्णमग्नेस्य व्रतं योजयात् पूर्वमिति सामविशेषस्य क्रतोश्चोभयोरपि पक्षित्वात् सम्बन्धो युक्त इत्यर्थः ॥ २ ॥

तमेव सम्बन्धमन्वयव्यतिरेकाभ्यामुपपादयति ।

न वा अपक्षः पक्षिणमाप्नोत्यथ यदेष पक्षी पक्षिणि निधीयते तस्मात्पक्षिणः पक्षैः पतन्ति ॥३॥

लोके पक्षरहितो मनुष्यः पशुर्वा कश्चिदप्याकाशे गच्छन्तं पक्षिणमाप्तुं नैव शक्नोति अथ तद्विपर्य्ययेणान्वय उच्यते अपक्षिणि पक्षरहिते साम्नि सौपर्णनामवशादेषसामविशेषः पक्षी पक्षवान् भवति तथा भूत्वा क्रतौ निधीयते यद्यस्मादेवं तस्माल्लोके पक्षिणः पक्षैराकाशे पतन्ति यद्वा क्रतौ च पक्षिणि पक्षरहिते पक्षसाहित्यसिद्ध्यर्थमेव पक्षिपक्षकल्पना युक्ता सामविशेषो निधीयत इति क्रतोः पक्षित्वं सम्पन्नं यस्मादेवं तस्माल्लोके पक्षिणो वायसादयः पक्षैराकाशे पतन्ति ॥३॥

एतद्वेदनं प्रशंसति ।

पक्षी ज्योतिष्मान् पुण्यान् लोकान् सञ्चरति य एवं वेद ॥४॥

अस्य क्रतोर्वेदिता पक्षी स्वयं पक्षवानिव भूत्वाऽग्निसम्बन्धिनः क्रतोर्वेदनेन ज्योतिष्मान् भूत्वा स्वर्गादीनुत्तमलोकान् प्राप्नोति ॥ ४ ॥

अस्य क्रतोः स्तोमान् विधत्ते ।

त्रिवृतावभितो भवतस्तेजो ब्रह्मवर्चसं त्रिवृत्तेज एव ब्रह्मवर्चसमवरुन्धे ॥५॥

अभितः क्रतोराद्यन्तयोर्बहिष्पवमानाग्निष्टोमाख्ययोः प्रथम-

द्वादशयोस्त्रिवृत्स्तोमौ कर्त्तव्यौ तस्य च स्तोमस्य शरीरकान्ति-श्रुताध्ययनसम्पत्तिहेतुत्वात्तेजस्त्वं ब्रह्मवर्चसत्वञ्च अतस्तेनोभय-प्राप्तित्वाद्वीर्य्यत्वं ॥ ५ ॥

द्वितीयैकादशयोः स्तोत्रयोर्विशेषं विधत्ते ।

अथ पञ्चदशौ वीर्य्यं वै पञ्चदशो वीर्य्यमेवाव-रुन्धे ॥६॥

आज्यादयः ॥ ६ ॥

तृतीयदशमयोः स्तोमविशेषं विधत्ते ।

अथ सप्तदशौ पशवो वै सप्तदशः पशूनेवाव-रुन्धे ॥ ७ ॥

स्तोमस्य पशुप्राप्तिसाधनत्वात् पशुत्वं ॥ ७ ॥

चतुर्थनवमयोः स्तोत्रयोः स्तोमविशेषं विधत्ते ।

अथैकविंशौ प्रतिष्ठा वा एकविंशो मध्यतएव यज्ञस्य प्रतितिष्ठति ॥८॥

उक्थस्तोत्रयोर्य्यज्ञमध्यवर्त्तित्वात् यजमानोऽपि यज्ञमध्य-एव प्रतितिष्ठति तदनुष्ठानेन स्थिरो भवति ॥ ८ ॥

पञ्चमाष्टमयोः स्तोत्रयोः स्तोमविशेषं विधत्ते ।

अथ त्रिणवाविमे वै लोकास्त्रिणव एष्वेव लोकेषु प्रतितिष्ठति ॥९॥

त्रिणवस्तोमेन त्रयाणां भागानां लोकत्रयप्राप्तिहेतुत्वात्तद्रूपत्वं ॥६॥

षष्ठसप्तमयोः स्तोमविशेषं विधत्ते ।

अथ त्रयस्त्रिंशौ वर्ष्म वै त्रयस्त्रिंशः ॥१०॥

उक्तेषु स्तोमेषु त्रयस्त्रिंशस्य प्रौढत्वादयं यज्ञस्य वर्ष्म शरीरमेव इतरे त्ववयवसदृशाः ॥ १० ॥

एतद्वेदनं प्रशंसति ।

वर्ष्म स्वानां भवति य एवं वेद ॥ ११ ॥

स्वानां ज्ञातीनां वर्ष्म शरीरमिव मुख्यो भवति ॥११॥

उक्तौ त्रयस्त्रिंशौ प्रशंसति ।

एष वाव ब्रध्नस्य विष्टपो यदेतौ त्रयस्त्रिंशौ मध्यतः सन्धीयेते तेन ब्रध्नस्य विष्टपमारोहति ॥१२॥

क्रतोर्मध्यभागे क्रतुषु षष्ठसप्तमयोः स्तोत्रयोः त्रयस्त्रिंशाख्यौ स्तोत्रौ सन्धीयेते अनुष्ठीयेते इति यदस्ति एष एवानुष्ठानप्रकारो ब्रध्नस्यादित्यस्य विष्टपः स्थानविशेषः ब्रध्नशब्दार्थोऽन्यत्र श्रूयते असौ वा आदित्यो ब्रध्न इति आदित्यस्य च मध्यदेशवर्त्तित्वं मध्याह्नकाले प्रत्यचं अतस्तेन त्रयस्त्रिंशानुष्ठानादादित्यस्य स्थानमारोहति ॥ १२ ॥

प्रकारान्तरेण स्तोमान् प्रशंसति ।

मध्यतो वा अग्निर्वरिष्ठस्तस्मादेते स्तोमा मध्यतो वरिष्ठाः क्रियन्ते ॥१३॥

अग्निर्हि ज्वलनात् पूर्व्वोत्तरयोरल्पत्वान्न श्रेष्ठः ज्वलनदशायां प्रौढत्वात् श्रेष्ठः अग्निसम्बन्धिश्चायं क्रतुः अस्य च वक्ष्यमाणक्रतोश्च सूत्रकारेणाग्नेः स्तोमाविति संज्ञाया उक्तत्वात् ऐकाहिकेन व्रतेनोक्त उपायोऽग्नेः स्तोमयोरिति हि सूत्रं अतोऽग्निसादृश्यादस्य क्रतोर्मध्यप्रौढाः स्तोमाः क्रियन्ते ॥ १३ ॥

मध्यवर्त्तिनः स्तोमान् प्रशस्याद्यन्तौ स्तोमौ प्रशंसति ।

त्रिवृता प्रैति त्रिवृतोदेति प्राणो वै त्रिवृत्प्राणेनैव प्रैति प्राणमभ्युदेति ॥ १४ ॥

प्राणस्य रेचकपूरककुम्भकरूपेण वा प्राणापानव्यानवृत्तिरूपेण वा त्रिवृत्त्वं अयञ्च क्रतुस्त्रिवृता प्रैति समाप्यते त्रिवृतोदेति प्रारभ्यते तद्वदेव लोकेऽपि जीवत्पुरुषः प्राणेनैव देहान्निर्गतेन प्रैति म्रियते प्राणमेवाभिलक्ष्य तद्युक्तः सन् उदेत्युत्पद्यते ॥ १४ ॥

इति ताण्ड्यमहाब्राह्मणे एकोनविंशाध्यायस्य

दशमः खण्डः ।

---

अथ एकादशः खण्डः ।

सूत्रकारेणाग्नेः स्तोमाविति नाम्ना यौ क्रतू विहितौ तयोर्मध्ये पञ्चिनामकः प्रथमः क्रतुरुक्तः ज्योतिर्नामकं क्रतुं विधत्ते।

अथैष ज्योतिः ॥१॥

स्पष्टोऽर्थः ॥ १ ॥

स्तोमान्विधत्ते ।

तस्य त्रिवृद्बहिष्पवमानं पञ्चदशान्याज्यानि चतुर्विंशो माध्यन्दिनः पवमानः सप्तदशानि पृष्ठानि ॥ २ ॥

स्पष्टोऽर्थः ॥ २ ॥

तत्राद्यौ द्वौ स्तोमौ प्रशंसति ।

प्राणो वै त्रिवृदात्मा पञ्चदशः ॥३॥

पूर्व्वोक्तरीत्या प्राणस्य त्रिवृत्त्वं आत्मा देहः स च पञ्चदशभिरवयवैरुपेतः श्रुत्यन्तरे सप्त शीर्षण्याः द्वाववाञ्चौ नाभिर्दशमीत्युक्तत्वात् दश प्राणाः द्वौ हस्तौ द्वौ पादौ मध्यभागश्चेत्येते पञ्चावयवाः अतः सङ्ख्यासाम्यात् पञ्चदशस्तोमस्य देहरूपत्वं तस्मादेताभ्यां स्तोमाभ्यां देहे प्राणः स्थिरो भवतीत्यर्थः ॥ ३ ॥

उत्तरौ द्वौ स्तोमौ प्रशंसति ।

मुखं गायत्र्यन्नꣳ सप्तदशो मुखत एव तदन्नं धत्ते ॥४॥

चतुर्विंशस्तोमस्य संख्यासाम्याद्गायत्रीत्वं छन्दसाम्मध्ये प्रथमत्वाद्गायत्र्या मुख्यं सप्तदशस्तोमस्य प्रजापतिशरीरमध्यगतादन्न-

धारणस्थानादुदरादुत्पन्नत्वादन्नरूपत्वं तत्तेन स्तोमद्वयेन मुखेऽन्नं धत्त एव कदाचिदपि दरिद्रो न भवतीत्यर्थः ॥ ४ ॥

वेदनं प्रशंसति ।

अन्नमत्त्यन्नादो भवति य एवं वेद ॥५॥

अन्नादो रोगरहितः ॥ ५ ॥

माध्यन्दिनपवमानस्तोमप्रशंसां प्रपञ्चयति ।

माध्यन्दिनेन वै पवमानेन देवाः स्वर्गं लोकमायन्यदेष चतुर्विंश्शो माध्यन्दिनः पवमानो भवति स्वर्गस्य लोकस्याक्रान्त्यै चतुर्विंश्शत्यक्षरा गायत्री तेजो ब्रह्मवर्चसं गायत्री तेज एव ब्रह्मवर्चसमवरुन्धे प्राणो गायत्री प्रजननं प्राणादेव गायत्र्याः प्रजायते ॥ ६ ॥

व्याख्यातप्रायमेतत् अत्राभवपवमानाग्निष्टोमसाम्नोर्विशेषानभिधानात्तदुभयं प्रकृताविवानुष्ठेयं ॥ ६ ॥

सर्व्वान् स्तोमान् मेलयित्वा प्रशंसति ।

उभये स्तोमा युग्मन्तस्त्वायुजस्त्र तन्मिथुनं तस्मान्मिथुनात् प्रजायते ॥७॥

एकस्मिन्नपि चतुर्व्विंशस्तोमे युग्मत्वजात्यभिप्रायेण साम्यत्वाभिप्रायेण वा युग्मन्त इति बहुवचनं अथ वात वचनव्यत्ययः

स्त्रीपुरुषवदुभयविधत्वेन स्तोमानाम्मिथुनत्वं ॥ ७ ॥

पूर्व्वत्र सौपर्णाख्यसामसम्बन्धात् पक्षित्वमुक्तं अत्रापि तदेवाभिप्रेत्य प्रशंसति ।

**पक्षि वा एतच्छन्दः पक्षी ज्योतिष्मान् पुण्यान् लोकान् सञ्चरति य एवं वेद ॥८॥**

छन्दःशब्देनात्र तदाश्रितं सौपर्णाख्यं साम विवक्षितं माध्यन्दिने यस्त्रयस्त्रिंशस्तोमोऽस्ति सोऽयमितरौ पवमानगतौ ॥ ८ ॥

त्रिवृत्सप्तदशस्तोमावपेक्ष्य प्रौढ इत्यभिप्रेत्य प्रशंसति ।

**मध्यतो वा अग्निर्वरिष्ठस्तस्मादेते स्तोमा मध्यतो वरिष्ठाः क्रियन्ते ॥६॥**

अत्रापि स्तोमा इति वचनव्यत्ययः अन्यत् पूर्व्ववत् ॥ ६ ॥

अत्रैकायाः स्तोत्रीयायाः प्रकृतिगताश्च आधिक्यात्तां प्रशंसति ।

**एका सᳲस्तुतानां विराजमतिरिच्यत एकाकिनमेवैनमन्नाद्यस्याध्यक्षं करोति ॥१०॥**

संस्तुतानां स्तोत्रीयाणां दशसंख्यावच्छेदेन प्रकृताविव विराजं प्राप्तानां मध्ये एका स्तोत्रीया विराजमतिरिच्यते तद्यथा प्रकृतौ तावन्नवत्यधिकं शतं स्तोत्रीयाः याः सन्ति तास्वेकोनविंशतिसंख्या विराजः अत्रापि तद्वत्प्राप्तौ सत्यां मैत्रावरुणस्याज्य-

पृष्ठयोः पञ्चदशसप्तदशाववपोह्य त्रिवृच्चतुर्विंशौ कर्त्तव्यौ तथा च निदानेऽभिहितं त्रिवृच्चतुर्विंशावाज्यपृष्ठेषु सम्पत्द्वयेन कुर्य्यात् इति एकातिरिच्यत इति श्रुतेरर्थसम्पादनवशेनेत्यर्थः एकयातिरिक्तया स्तोत्रीयया यजमानमेव क्षत्रस्य शान्नाद्यस्याध्यक्षं स्वामिनमुद्गाता करोति ॥ १० ॥

अस्य क्रतोरग्निसम्बन्धिरूपत्वेन ज्योतिर्नामास्ति तत्प्रशंसति ।

ज्योतिर्वा एषोऽग्निष्टोमो ज्योतिष्मन्तं पुण्यं लोकञ्जयति य एवं विद्वानेतेन यजते ॥११॥

स्पष्टोऽर्थः ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणे एकोनविंशाध्यायस्य

एकादशः खण्डः ।

---

अथ द्वादशः खण्डः ।

ऋषभाख्यं क्रतुं विधत्ते ।

अथैष ऋषभः ॥१॥

स्पष्टोऽर्थः ॥ १ ॥

तदेतन्नाम प्रशंसति ।

ऋषभो वा एष स्तोमानामृषभतां गच्छति य एवं वेद ॥२॥

एष: क्रतु: सोमानामितरक्रतूनाम्मध्ये ऋषभतां श्रेष्ठतां प्रापयितुमस्ति ॥ २ ॥

तत्र अधिकारिणमाह ।

राजन्यं याजयेदृषभो वै पशूनामधिपती राजन्यो मनुष्याणां यो वा अस्ति सोऽधिपति: ॥ ३ ॥

ऋषभो वत्सोत्पादनसमर्थ: पुङ्गव: स यथा पशूनामधिपतिस्तद्वदृषभाख्यो यज्ञ: क्रत्वन्तराणामधिपतिरित्यभिप्राय: राजन्यस्याप्यधिपतित्वोक्ते: यज्ञेन सम्बन्धो युक्त: ॥ ३ ॥

उत्तमवर्णं विप्रं परित्यज्य राजन्ये कुत: पक्षपात इत्यतआह ।

अधिपति: समानानां भवति य एवं वेद ॥ ४ ॥

स्पष्टं ॥ ४ ॥

सामविशेषं विधत्ते ।

तस्य सदोविशीयं माध्यन्दिने पवमाने भवति विशमेवास्मै सवनाभ्यां परिगृह्णात्यनपक्रामुकास्माद्विड्भवति ॥ ५ ॥

पुनान: सोमधारयेत्यस्यामृचि सदोविशीयकन्नाम साम भवति नाम्नि विशीयशब्दस्य श्रुतत्वात्तन्नामकसामोपेतो माध्यन्दिनपवमानो विरूपतां विशमस्मै यजमानाय पार्श्वद्वय-

वर्त्तिभ्यां प्रातःसवनतृतीयसवनाभ्यां स्वाधीनां करोति सा च विड्स्मान्नापक्रामति ॥ ५ ॥

अन्यत्साम विधत्ते ।

समन्तं भवति समन्तामेवास्मै विशं करोत्यन-पक्रामुकास्माद्विड्भवति ॥ ६ ॥

दुहान ऊध इत्यस्यां विष्टारपङ्क्तौ समन्तनामकं साम विशं प्रतिजनरूपां प्रजां समन्तां परितोऽवस्थितां करोति ॥ ६ ॥

अपरं सामद्वयं विधत्ते ।

उभे बृहद्रथन्तरे भवत इयं वै रथन्तरं द्यौर्बृ-हदेवास्माल्लोकाद्गायत्येवामुष्मादुभयोरनयोर्लोकयोः प्रतितिष्ठति ॥ ७ ॥

पृष्ठस्तोत्रे रथन्तरं साम कुर्य्यात् बृहत्साम त्वनुष्टुभीति वच्यते अन्योः साम्नोरधरोत्तरसाम्नां भूर्लोकद्युलोकरूपत्वं एवम-स्माल्लोकात् भूर्लोकनिमित्तमेव रथन्तरं गायति तद्वदत्रापि योज्यं ॥ ७ ॥

बृहत्सामाश्रयं विधत्ते ।

अनुष्टुभि बृहद्भवत्यन्तो वा अनुष्टुप् छन्दसामन्तो बृहत्साम्नामन्तो राजन्यो मनुष्याणामन्त एव तदन्तं

प्रतिष्ठापयति तस्माद्यो राजन्यानाꣳ ह्रीयते न स पुनरग्रं पर्य्येति ॥ ८ ॥

इहानुष्टुभि बृहत्साम भवति अनुष्टुप्बृहतोरन्तरत्वसाम्यात् उक्थे षोडशिनश्च सवनछन्दःसामान्तेऽनुष्टुप् क्रियते वाजपेयस्यान्ते बृहत्साम क्रियते ऐश्वर्य्यवतां मनुष्याणाम्मध्ये राजन्यान्तः ऐश्वर्य्यसमाप्तिस्थानं अतस्तमन्तं राजन्यं तत्तेनानुष्टुभि बृहतः करणेनान्त एवोभयविधे प्रतिष्ठापयति यस्माद्राजन्यस्य ऐश्वर्य्यस्य सीमा तस्माद्राजन्यानाम्मध्ये यः पुमान् ह्रीयते ऐश्वर्य्याद्भ्रष्टो भवति स पुनः कदाचिदपि अग्रं राज्ञाम्मध्ये श्रेष्ठत्वं न प्राप्नोति ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे एकोनविंशाध्यायस्य
द्वादशः खण्डः।

---

अथ त्रयोदशः खण्डः।

गोसवाख्यं क्रतुं विधत्ते।

योवै वाजपेयः स राजसूयो यो राजसूयः स वरुणसवोऽथैष गोसवः स्वाराज्यो यज्ञः ॥ १ ॥

यएव वाजपेयः पूर्व्वाध्यायोक्तः सएव राजसूयः तयोरुभयोः स्वाराज्यप्राप्तिहेतुत्वसाम्यात् तथैव राजसूयवरुणसवयोरैक्यं योऽयं सूयतेऽभिषूयते सोमो यस्मिन्निति सवः सोमयागः स च पश्चाद्वरुणकर्त्तृकः वरुणस्य वै सुषुवाणस्येति श्रुतत्वात् अथानन्त-

रमेष पुरतो वक्ष्यते गोसवाख्यो यज्ञः सोऽपि यज्ञः स्वाराज्याय वाजपेयराजसूयवरुणसवा इव स्वाराज्यफलोपेतः ॥ १ ॥

एतद्वेदनं प्रशंसति ।

**स्वाराज्यं गच्छति य एवं वेद ॥ २ ॥**

स्पष्टोऽर्थः ॥ २ ॥

स्वाराज्यशब्दस्यार्थमाह ।

**प्रजापतिर्हि स्वाराज्यं परमेष्ठी स्वाराज्यं ॥ ३ ॥**

प्रजापतिर्हिरण्यगर्भो न तु कश्यपादिर्विवक्षितः तदेव विश-दीकर्त्तुं परमेष्ठीत्युक्तं तदीयमैश्वर्य्यं स्वाराज्यमिति ॥ ३ ॥

तयोरभेदोपचारवेदनं प्रशंसति ।

**परमेष्ठितां गच्छति य एवं वेद ॥४॥**

स्पष्टं ॥ ४ ॥

पृष्ठस्तोत्रे सामद्वयं तद्वेदनप्रशंसाञ्च दर्शयति ।

**उभे बृहद्रथन्तरे भवतस्तद्धि स्वाराज्यꣳ स्वा-राज्यं गच्छति य एवं वेद ॥५॥**

सामद्वयस्य स्वाराज्यहेतुः तथा तद्रूपत्वोपचारः ॥ ५ ॥

दक्षिणाविशेषं तद्वेदनप्रशंसाञ्च दर्शयति ।

अयुतं दक्षिणास्तद्धि स्वाराज्यꣳ स्वाराज्यं गच्छति य एवं वेद ॥६॥

अयुतं सहस्रदशकं तत्संख्याका गावोऽत्र दक्षिणाः ॥६॥

अभिषेकसाधनं द्रव्यं तद्वेदनप्रशंसाञ्च दर्शयति ।

प्रतिदुहाभिषिच्यते तद्धि स्वाराज्यꣳ स्वाराज्यं गच्छति य एवं वेद ॥७॥

सद्योदुग्धं पयः प्रतिधुगित्युच्यते तेन प्रतिदुहा पयसाऽत्राभिषेकः ॥ ७ ॥

तस्य कालं तद्वेदनप्रशंसाञ्च दर्शयति ।

बृहतः स्तोत्रं प्रत्यभिषिच्यते तद्धि स्वाराज्यꣳ स्वाराज्यं गच्छति य एवं वेद ॥८॥

पृष्ठेषु साम्नः सम्बन्धि यत् स्तोत्रमस्ति तत्प्रति ततः पूर्वं तद्योग्यत्वायेत्यर्थः ॥ ८ ॥

अभिषेकस्य देशविशेषं विधत्ते ।

अनुद्धते दक्षिणत आहवनीयस्याभिषिच्यतेऽस्यामेवानन्तर्हितेऽध्यभिषिच्यते ॥९॥

आहवनीयस्य दक्षिणभागे भूमावनुद्धते कम्बलपीठादिभिरनन्तर्हिते देशेऽभिषेकः तथा सति क्षत्रच्छायामपि भूमावन्तर्हितैरपि शत्रुभिरनवरुद्धे देशेऽभिषिक्तो भवति ॥ ९ ॥

स्तोमविशेषं विधत्ते।

सर्वः षट्त्रिंशस्तेन गोसवः ॥१०॥

अस्य क्रतोः स्तोत्रेषु यः स्तोमोऽस्ति सर्व्वोऽपि षट्त्रिंशएव कर्त्तव्यः षट्त्रिंशदक्षरा बृहती बार्हताः पशव इति श्रुत्यन्तरात् संख्याद्वारा पशुसम्बन्धोऽस्ति तेन सम्बन्धेनायं क्रतुः गोसवनामको भवति तैत्तिरीया अपि तथैवामनन्ति पशुस्तोमो वा एष तेन गोसव इति अन्यदपि सर्व्वं तैः संग्टह्याम्नातं एष गोसवः षट्त्रिंशउक्थ्यो बृहत्साम पवमाने कण्वरथन्तरं भवति यो वै वाजपेयः स सम्राट्सवः यो राजसूयः स वरुणसवः प्रजापतिः स्वाराज्यं परमेष्ठीति उभे बृहद्रथन्तरे भवतः तद्धि स्वाराज्यमयुतं दक्षिणास्तद्धि स्वाराज्यं प्रतिदुहाभिषिच्यते तद्धि स्वाराज्यं अनुज्ञते दक्षिणत आहवनीयस्य बृहतः स्तोत्रं प्रत्यभिषिञ्चतीति ॥ १० ॥

इति ताण्ड्यमहाब्राह्मणे एकोनविंशाध्यायस्य

त्रयोदशः खण्डः।

---

अथ चतुर्दशः खण्डः।

मरुत्स्तोमाख्यं क्रतुं विधत्ते।

अथैष मरुत्स्तोम एतेन वै मरुतोऽपरिमितां पुष्टिमपुष्यन्नपरिमितां पुष्टिं पुष्यति य एवं वेद ॥१॥

मरुद्भिर्दृष्टत्वाच्चायम्मरुत्स्तोमः अपरिमितामतिबहुलां धनधान्यादिपुष्टिमकुर्व्वन् ॥ १ ॥

स्तोमेषु किञ्चिद्विशेषं विधत्ते।

यद्गणशः स्तोमास्तेन मरुत्स्तोमो गणशो हि मरुतः ॥ २ ॥

गणशः सङ्घरूपेणात्र स्तोमाः प्रवर्त्तन्ते त्रिवृतां सङ्घः पञ्चदशानां सङ्घः सप्तदशानां सङ्घ एकविंशानां सङ्घ इति तत्सङ्ख्यत्ति-रेकोनपञ्चाशत् ४९ मरुतो विभक्ता अपि गणरूपेणैव वर्त्तन्ते सप्तगणा वै मरुत इति श्रुत्यन्तरात् यद्यस्मान्मरुत इव स्तोमा अत्र गणशो वर्त्तन्ते तेनायं क्रतुर्मरुत्स्तोमनामकः॥ २ ॥

अत्र यजमानसङ्घस्याधिकारित्वमाह।

एतेनैव त्रीन् याजयेत्॥ ३ ॥

अनेकं त्वेकमित्यर्थः तथा सूत्रं सखायो भ्रातरो वा ये सम्पादयेयुस्ते मरुत्स्तोमेन यजेरन्निति ॥ ३ ॥

प्रथमं स्तोमसङ्घं विधत्ते।

यत् त्रीणि त्रिवृन्ति स्तोत्राणि भवन्ति नाना ब्रह्मवर्चसे प्रतितिष्ठन्ति ॥ ४ ॥

बहुविधशास्त्ररूपे ब्रह्मवर्च्चसे यजमानास्त्रयः प्रतितिष्ठन्ति ॥ ४ ॥

द्वितीयं स्तोमसङ्घं विधत्ते ।

**यत् त्रीणि पञ्चदशानि नाना वीर्य्यं ॥ ५ ॥**

ब्रह्मण आज्यमच्छावाकस्याज्यं माध्यन्दिनः पवमान इत्येतानि पञ्चदशस्तोमोपेतानि तत्साध्यञ्च वीर्य्यं शारीरं वाचिकं मानसञ्चेति नानाविधं तस्मिन् प्रतितिष्ठतीति ॥ ५ ॥

तृतीयं स्तोमसङ्घं विधत्ते ।

**यत् त्रीणि सप्तदशानि नाना पशुषु ॥ ६ ॥**

होतुः पृष्ठं मैत्रावरुणस्य पृष्ठं ब्रह्मणः पृष्ठमित्येतानि त्रीणि सप्तदशस्तोमोपेतानि साध्याः पशवो गवाश्वमहिष्यादिरूपेण नानाविधाः ॥ ६ ॥

चतुर्थं स्तोमसङ्घं विधत्ते ।

**यत् त्रीण्येकविंशानि नाना प्रतितिष्ठन्ति ॥७॥**

अच्छावाक आर्भवः पवमानोऽग्निष्टोमसामेत्येतानि त्रीण्येकविंशस्तोमोपेतानि तत्साध्याः प्रतिष्ठिताः धनधान्यपुत्रभृत्यादिरूपेण नानाविधाः ॥ ७ ॥

वेदनं प्रशंसति ।

**प्रतितिष्ठति य एवं वेद ॥८॥**

स्पष्टं ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे एकोनविंशाध्यायस्य
चतुर्दशः खण्डः ।

---

अथ पञ्चदशः खण्डः।

कुलायाख्यं क्रतुं विधत्ते।

अथैष इन्द्राग्न्योः कुलायः प्रजाकामो वा पशुकामो वा यजेत प्रजा वै कुलायं पशवः कुलायं गृहाः कुलायं कुलायमेव भवति॥१॥

इन्द्राग्निभ्यां दृष्टत्वात्तदीयोऽयं क्रतुः स च कुलायप्राप्तिहेतुः प्रजापशुगृहाणां निवासनिमित्तत्वात् कुलायत्वं॥१॥

अत सङ्ख्याधिकारमाह।

एतेनैव द्वौ याजयेत्॥२॥

द्वावेव न त्वेकमित्यर्थः॥२॥

अथ स्तोमसङ्घान्विधत्ते।

यत् षट् त्रिष्टन्ति स्तोत्राणि भवन्ति नाना ब्रह्मवर्चसे प्रतितिष्ठतो यत् द्वे पञ्चदशे नानावीर्य्ये यत् द्वे सप्तदशे नाना पशुषु यत् द्वे एकविंशे नाना प्रतितिष्ठतः प्रतितिष्ठति य एवं वेद॥३॥

पूर्व्ववद्व्याख्येयं॥३॥

इति ताण्ड्यमहाब्राह्मणे एकोनविंशाध्यायस्य
पञ्चदशः खण्डः।

---

अथ षोड़शः खण्डः ।

इन्द्रस्तोमाख्यं क्रतुं विधत्ते ।

**अथैष पञ्चदश इन्द्रस्तोम उक्थ्यः ॥ १ ॥**

सोऽयं क्रतुः सर्व्वेष्वपि स्तोत्रेषु पञ्चदशस्तोमयुक्तः उक्थस्तोत्रैरुपेतत्वादुक्थसंस्थारूपस्येष्टत्वादिन्द्रस्तोमउक्थ्य इति नामकः स्तोमः क्रतुः ॥ १ ॥

तद्वेदनं प्रशंसति ।

**एतेन वा इन्द्रोऽत्यन्या देवता अभवदत्यन्याः प्रजा भवति य एवं वेद ॥ २ ॥**

एतेनैव क्रतुना इन्द्रः स्वयमन्या अग्निवरुणाद्या देवता अत्यभवत् अतिक्रम्य समर्थोऽभवत् वेदितुरपि तथैव फलं ॥ २ ॥

तत्राधिकारिणमाह ।

**राजन्यं याजयेत् ॥ ३ ॥**

इन्द्रस्य क्षत्रियाभिमानिदेवतात्वात्तदीये यज्ञे क्षत्रियस्याधिकारः ॥ ३ ॥

सर्व्वेषु स्तोत्रेषु विहितं पञ्चदशस्तोममनूद्य प्रशंसति ।

**सर्व्वः पञ्चदशो भवत्योजो वीर्य्यं पञ्चदश ओजसैवैनं वीर्य्येण समर्द्धयति ॥ ४ ॥**

स्पष्टोऽर्थः ॥ ४ ॥

ऋग्विशेषान्विधत्ते ।

ऐन्द्रीषु भवन्तीन्द्रियेणैवैनं वीर्य्येण समर्द्ध-यति ॥ ५ ॥

इन्द्रो देवता यासामृचां ता ऐन्द्र्यः ताश्च द्विविधाः प्रत्यक्षाः परोक्षाश्च इन्द्रायेन्दो मरुत्वत इत्याद्यास्विन्द्रशब्दश्रवणात् एताः प्रत्यक्षा ऐन्द्र्यः वृषा सोम द्युमां असीत्याद्यासु वृषत्वलिङ्गेन ऐन्द्रत्वानुमानादेव ऐन्द्र्यः तासु सर्वासु पञ्चदशस्तोमे सति इन्द्रियेण वीर्य्यसमृद्धिर्भवति ॥५॥

उक्थसंस्थारूपत्वं प्रशंसति ।

उक्थ्यो भवति पशवो वा उक्थानि विड्डुक्थानि विशमेवास्मै पशूननुनियुनक्त्यनपक्रामुकास्माद्विड् भवति ॥ ६ ॥

उक्थस्तोत्राणां पशुसाधनत्वेन पशुत्वं बहुत्वसाम्येन प्रजारूपत्वं अस्मै यजमानाय प्रजां पशूननुकूलान् कृत्वा सम्पा-दयति सा च पुत्रादिप्रजा कदाचिदप्यस्मान्नापक्रामति ॥६॥

स्तोत्रगतां स्तोमगतां च पञ्चदशसंख्यां प्रशंसति ।

पञ्चदशस्तोत्राणि पञ्चदशानि भवन्त्योजो वीर्य्यं पञ्चदशोऽभिपूर्वमेवास्मिन्नोजो वीर्य्यन्दधाति ॥७॥

अस्मिन् यजमाने अभिपूर्वं शरीरं वाङ्मनश्चेत् तेनानुपूर्व्येण प्रबलं सामर्थ्यं तेषु सम्पादयति ॥७॥

इति ताण्ड्यमहाब्राह्मणे एकोनविंशाध्यायस्य षोडशः खण्डः।

---

अथ सप्तदशः खण्डः।

इन्द्राग्निस्तोमनामकं क्रतुं विधत्ते।

अथैष इन्द्राग्न्योः स्तोम एतेन वा इन्द्राग्नी अत्यन्या देवता अभवतामत्यन्याः प्रजा भवति य एवं वेद ॥ १ ॥

पूर्ववद्व्याख्येयं ॥१॥

सर्वेषु स्तोत्रेषु पर्य्यायेण स्तोमद्वयं विधत्ते।

त्रिवृत् पञ्चदशो भवति ॥ २ ॥

प्रथमतृतीयपञ्चमसप्तमनवमैकादशस्तोत्रेषु त्रिवृत्स्तोमः द्वितीयचतुर्थषष्ठाष्टमदशमद्वादशस्तोत्रेषु पञ्चदशस्तोमो भवति एतदेवाभिप्रेत्य कल्पेऽभिहितं त्रिवृत्पञ्चदशौ स्तोमौ विपर्य्यासमिति ॥२॥

उक्तं स्तोमद्वयं तद्वेदनञ्च प्रशंसति।

ब्रह्म वै त्रिवृत् क्षत्रं पञ्चदशो ब्रह्मण एव चास्य

क्षत्रस्येव च प्रकाशो भवति य एवं वेद ॥ ३ ॥

त्रिवृत् स्तोमस्य ब्राह्मणस्य च प्रजापतिमुखजन्यत्वसाम्यात् एकत्वोपचारः पञ्चदशस्तोमस्य क्षत्रियस्य सोऽयं प्रसिद्धिः तथा वेदितुः प्रसिद्धिद्वयं भवति ॥३॥

तत्रोभयोर्ह्यधिकारमाह ।

राजा च पुरोहितश्च यजेयातां ॥ ४ ॥

स्पष्टोऽर्थः ॥४॥

अत्रोभयोर्ब्रह्मक्षत्रिययोराभिरूप्यकथने सम्पत्तिद्वयमिति चेत् तदुच्यते ।

गायत्रीञ्च जगतीञ्च सम्पद्यते ॥ ५ ॥

षट् त्रिवृन्ति स्तोत्राणि तैः चतुःपञ्चाशत् स्तोत्रीया षट् पञ्चदशानि स्तोत्राणि तैर्भवन्ति स्तोत्रीयाः वर्गद्वयं मिलित्वा चतुस्त्वारिंशदधिकं शतं स्तोत्रीया भवन्ति तासु चतुर्विंशति विभज्यमानाः षट् गायत्र्यो भवन्ति द्वाभ्यां गायत्रीभ्यामेका जगतीति तिस्रो जगत्यः तथा चोपग्रन्थेऽभिहितं उद्भिद्बलभित् ऐन्द्राग्नीषु चतुश्चत्वारिंशदधिकं शन्तताः षट् गायत्र्यस्तिस्रो जगत्य इति ॥५॥

उभयविधसम्प्रयुक्तं फलं दर्शयति ।

तेजो ब्रह्मवर्चसं गायत्र्या ब्राह्मणोऽवरुन्धे विशं राजा जगत्या प्रविशति ॥ ६ ॥

गायत्रीसम्पत्तिनिमित्तं ब्राह्मणस्य तेजोब्रह्मवर्चसप्राप्तिफलं जगतीसम्पत्तिनिमित्तं राज्ञः प्रजाप्राप्तिफलं ॥६॥

अस्मिन् क्रतावन्यमप्यधिकारिणमाह।

पुरोधाकामो यजेत ॥७॥

पुरोधा राजपौरोहित्यं ॥७॥

तमेतमधिकारिणं तद्वेदनञ्च प्रशंसति।

बृहस्पतिरकामयत देवानां पुरोधां गच्छेयमिति स एतेनायजत स देवानां पुरोधामगच्छद्गच्छति पुरोधां य एवं वेद ॥८॥

स्पष्टोऽर्थः ॥८॥

इति ताण्ड्यमहाब्राह्मणे एकोनविंशाध्यायस्य सप्तदशः खण्डः।

---

अथ अष्टादशः खण्डः।

विघनाख्यं क्रतुं विधत्ते।

अथैष विघनः ॥१॥

स्पष्टोऽर्थः ॥१॥

एतस्य नाम्नो निमित्तं सूचयति।

इन्द्रोऽकामयत पाप्मानं भ्रातृव्यं विहन्यामिति

स एतं विघनमपश्यत्तेन पाप्मानं भ्रातृव्यं व्यहन् वि-पाप्मानं भ्रातृव्यं हते य एवं वेद ॥२॥

पुरा कदाचिदिन्द्रं राजानं मरुदादिगणदेवताः प्रजा उद्दण्डा भूत्वा नापूजयन् तदानीं पूजाप्रतिबन्धहेतुं पापरूपं शत्रुमेतेन क्रतुना विशेषेण हतवान् अतो विहननहेतुत्वादस्य विघननामकत्वं सोऽयमर्थस्तैत्तिरीयैर्विशदीकृत्वाम्नायते इन्द्रं वैश्वानरो मरुतेनोपाचयेत् सोऽनुपचय्यमान एनं विघनमपश्यत् तमाहरत् तेनायजत् तेनैवासान्तं संस्तम्भं व्यहन् यद्व्यहन् तद्विघनस्य विघनत्वं विपाप्मानं भ्रातृव्यं हते य एतेन यजते य उ चैनमेवं वेदेति ॥ २ ॥

अस्मिन् क्रतौ विधित्सितान् स्तोमविशेषान् क्रमेण प्रशंसति ।

यत् त्रिवृद्भवति प्राणा९ स्तेनावरुन्धे यत् द्वादशः संवत्सरं तेन यत् पञ्चदशो वीर्य्यं तेन यत् सप्तदशो ऽन्नाद्यं तेन यदेकविंशः प्रतिष्ठा तेन यन्नवदशः प्रजननं तेन यच्चतुर्व्विंशो ब्रह्मवर्चसं तेन यत्त्रिणवो वज्रं भ्रातृव्याय प्रहरति ॥३॥

प्राणापानव्यानरूपेण प्राणानां त्रित्वात् त्रिवृता तत्प्राप्तिर्युक्ता संवत्सरस्य द्वादशमासात्मकत्वात् द्वादशस्तोमेन संवत्सरप्राप्तिः वीर्य्यहेतुना पञ्चदशेन वीर्य्यप्राप्तिः अन्नाद्यहेतुना सप्त-

दशेनान्नाद्यप्राप्तिः प्रतिष्ठाहेतुनैकविंशेन प्रतिष्ठाप्राप्तिः अस्मिन्नेकविंशस्तोमे द्वयोः स्तोत्रीययोरुपरितनयोः सत्योस्ताभ्यां न्यूने नवदशाख्यः स्तोमः सम्पद्यते तेन च न्यूनेन च प्रजोत्पत्तिर्लभ्यते तथाच श्रुत्यन्तरं न्यूनाद्धि प्रजापतिः प्रजा असृजतेति चतुर्विंशस्तोमस्य गायत्रीसाम्यात्तेन ब्रह्मवर्चसप्राप्तिः त्रिणवस्तोमस्य खड्गधारासमानत्वात् बहुधारोपेतवज्रत्वोपचारः तेन च वज्रेण वैरी प्रह्रियते ॥ ३ ॥

अस्मिन् क्रतावधिकारिणमाह ।

**पशुकामो यजेत बृहतीᳫं सम्पद्यते पशवो वै बृहती पशूनेवावरुन्धे ॥ ४ ॥**

अयं क्रतुः स्तोत्रीयासङ्ख्यायां पर्य्यालोच्यमानायां बृहती सम्पद्यते कथमिति चेत् उच्यते द्वाभ्यां त्रिवृद्भ्यामष्टादशस्तोत्रीया द्वाभ्यां द्वादशाभ्यां चतुर्विंशतिः द्वाभ्यां पञ्चदशसप्तदशाभ्यां द्वात्रिंशत् द्वाभ्यां एकविंशनवदशाभ्यां चत्वारिंशत् द्वाभ्यां चतुर्विंशाभ्यामष्टाचत्वारिंशत् द्वाभ्यां त्रिणवाभ्यां चतुःपञ्चाशत् इत्येवं द्वे शते षोडशाधिके स्तोत्रीयाणां भवतः तासु षट्त्रिंशदक्षरा बृहत्यः षट्सम्पद्यन्ते पशवश्च बृहतीसम्बद्धाश्छन्दसां पशुविषये मात्सर्य्ये सति मर्य्यादाधानं प्रतिज्ञाय बृहती विजयं प्राप्य पशून् स्वकीयानकरोत् तस्मात् बृहतीसम्पत्तिद्वारा पशुप्राप्तिर्युक्ता ॥ ४ ॥

बृहतीगतषट्संख्याद्वारापि पशुप्राप्तिमाह ।

षडेता बृहत्यो भवन्ति षडृतवः संवत्सरः संवत्सरं पशवोऽनु प्रजायन्ते तानेवाप्नावरुन्धे ॥ ५ ॥

षट्संख्यानामृतूनां संवत्सरवर्त्तित्वात्प्रतिसंवत्सरं गवादिपशूनां वत्सोत्पादनाच्च तद्द्वारा पशुप्राप्तिस्तु स्वाधीनताकरणञ्च सम्भवत्येव ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे एकोनविंशाध्यायस्य
अष्टादशः खण्डः ।

---

अथ ऊनविंशः खण्डः ।

द्वितीयं विघनाख्यं क्रतुं विधत्ते ।

इन्द्रमदेव्यो माया असचन्त स प्रजापतिमुपाधावत्तस्मा एतं विघनं प्रायच्छत्तेन सर्वांस्मृधो व्यहत यद्व्यहत तद्विघनस्य विघनत्वं ॥ १ ॥

अदेवा असुरास्तेषां सम्बन्धिन्यो यास्ता अदेव्यः माया वञ्चना असुरैः प्रयुक्ता इन्द्रमसचन्त इन्द्रेण संयुक्ता अभवन् सचेन्द्रोमायापरिहारोपायार्थं प्रजापतिं सेवित्वा विघनाख्यं क्रतुं लब्ध्वा तेन क्रतुना सर्वास्मृधः सर्वाञ्छत्रून् व्यहत विशेषेण हतवान् यस्मात् व्यहत अनेन व्युत्पत्त्या क्रतोर्विघननामकत्वं सम्पन्नं ॥ १ ॥

वेदनपूर्व्वकयोर्यजमानयोः फलसमानमाह ।

सर्वांस्तौ विहते य एवं विद्वान्विघनेन यजते यश्चैवं विद्वान्विघनेन याजयति ॥ २ ॥

स्पष्टोऽर्थः ॥ २ ॥

यथात्र शत्रुविघात: फलं तथा पशुषु प्रतिष्ठाप्यस्य फलमित्याह ।

पशुकामो यजेत पशवो वै बृहती पशुष्वेव प्रतितिष्ठति ॥ ३ ॥

अत्रापि पूर्ववत् स्तोत्रेषु बृहतीसम्पत्त्या पशुप्रतिष्ठामुपपादयेत् स्तोत्रेषु स्तोत्रस्तोमविशेषप्रवृत्तिप्रकार: कल्पे दर्शित: द्वे त्रिवृती स्तोत्रे द्वे द्वादशे द्वे पञ्चदशसप्तदशे द्वे चतुर्विंशे द्वे त्रिणवे इति पूर्वोत्तरयो: स्तोमकॢप्तिसाम्येऽपि ऋक्विशेषसामविशेषाभ्यामवान्तरभेद: कल्पादिषु द्रष्टव्य: एकैकस्य स्तोमस्य स्तोत्रद्वये प्रवृत्तिस्तैत्तिरीयब्राह्मणेऽपि सूचिता तस्य द्वे द्वादशे स्तोत्रे भवत: द्वे चतुर्विंशे इति अस्मिन्नध्याये विहितानां क्रतूनां आनुपूर्वीं संगृह्य पूर्वाचार्य्यैरेवमुक्तं ।

राट् विराजाख्यौपशद: पुन: स्तोमस्तत: पर: ।
प्रोक्तौ चतुष्टोमौ तु चतुष्टोम: प्रथमस्तयो: ।
उत्तरस्तु चतुष्टोम उद्भिद्वलभिदौ तत: ।
अथापचितिपद्याख्यौ ज्योतिराख्यस्तत:पर: ।
ऋषभो गोसव: पश्चान्मरुत् स्तोमस्तत: पर: ।

कुलाय इन्द्रस्तोमः स्यादिन्द्राग्निस्तोम इत्यपि।
विघनौ द्वाविहाध्याये यागा एकोनविंशतिः।
वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥ २॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीर-बुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे एकोनविंशाध्यायस्य एकोनविंशः खण्डः।

एकोनविंशोऽध्यायः समाप्तिमगमत्।

---

# अथ विंशोऽध्यायः ।

## अथ प्रथमः खण्डः ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ॥
विंशाद्यैस्त्रिभिरध्यायैरहीनानां प्रकल्पनं ।
त्र्यहः प्रकृतयोऽहीना द्वादशाहान्तिमाः सवाः ॥
अहान्ता अतिरात्रान्ता द्वितीयेऽह्नि समापनात् ।
त्रयोदशातिरात्रास्तु विंशाध्याये प्रकल्पिताः ॥
त्र्यहास्त्रयस्तथा गर्गत्रिरात्रस्यापि किञ्चन ।
ज्योतिष्टोमोऽतिरात्रोऽथ सर्वस्तोम उदीरितः ॥
आप्तोर्य्यामस्तृतीयोऽत्र नवसप्तदशस्ततः ।
पञ्चमोविषुवान् स्तोमो गोष्टोमस्य ततः परः ॥
आयुष्टोमस्ततः पश्चादभिजिद्विश्वजित्ततः ।
चत्वारस्त्रिवृदाद्या येऽत्यतिरात्रास्त्रयोदश: ।
त्र्यहेष्वङ्गिरसः पूर्व्वमुक्तश्चैतरथस्ततः ।
ततः कपिवनो गर्गत्रिरात्रं किञ्चिदीर्य्यते ॥

आदौ तावत् ज्योतिष्टोमस्यातिरात्रस्य स्तोमक्लृप्तिमाह ।

त्रिवृद्बहिष्पवमानं पञ्चदशान्याज्यानि पञ्च-

दशो माध्यन्दिनः पवमानः सप्तदशानि पृष्ठानि सप्तदश आर्भव एकविंशोऽग्निष्टोमः सोक्थः पञ्चदशी रात्रिस्त्रिवृत्सन्धिः ॥ १ ॥

अत्राग्निष्टोमान्तेषु स्तोमेषु प्रकृतवदेव स्तोमक्लृप्तिः त्रिषूक्तरस्तोत्रेष्वपि अग्निष्टोमवदेकविंशः स्तोमः त्रिषु पर्य्यायेषु यानि द्वादशस्तोत्राणि तैर्युक्ता रात्रिः पञ्चदशस्तोमोपेता सन्धिस्तोत्रे त्रिवृत् स्तोमः एतैर्युक्ते ज्योतिष्टोमेऽवान्तरभेदः ॥ १ ॥

ततस्त्वमतिरात्रं विधत्ते।

ज्योतिष्टोमेनातिरात्रेणर्द्धिकामो यजेताभिक्रमो वा एष स्तोमानामभिक्रान्त्या अभिक्रान्ते हि यज्ञस्यर्द्धोति ॥ २ ॥

एषोऽतिरात्रः स्तोमानां यज्ञानां मध्ये अभिक्रमो वै अभितः क्रमणमस्य फलप्राप्तेर्हेतुस्तस्मादेतदनुष्ठानमभिक्रान्त्यै फलप्राप्त्यै भवति तस्मादनुष्ठाताऽभिक्रान्तेन फलप्राप्तियुक्तेन यज्ञस्यानुष्ठानेन ऋध्नोति सर्व्वसमृद्धिं प्राप्नोति ॥ २ ॥

अस्य क्रतोरवयवद्वारकांस्त्रीन् प्रकारान् प्रशंसति।

एषोऽग्निष्टोम एष उक्थ एषोऽतिरात्रोऽग्निष्टोमेन वै देवा इमं लोकमभ्यजयन्नुक्थैरन्तरिक्षꣳरात्र्यामुं लोकमजयन्नहोरात्राभ्यामभ्यवर्त्तन्त ॥ ३ ॥

आद्यो द्वादशस्तोत्रगतो योऽग्निष्टोमरूपस्तेन भूर्लोकजयः मध्यम उक्थस्तोत्रभागः उक्थ्यक्रतुरूपस्तेनान्तरिक्षलोकजयः तृतीयोऽतिरात्रस्तोत्रभागोऽतिरात्रस्तेन स्वर्गलोकजयः एवमनुष्ठातारोऽहोरात्राभ्यां लोकत्रयमभिप्राप्यावस्थिताः ॥ ३ ॥

सन्धिस्तोत्रं प्रशंसति।

पराच्योवा अन्या व्युच्छन्ति प्रतीच्योऽन्या एषा वाव प्रतीची व्युच्छति याश्विनेन व्युच्छति प्रतीचीरेवास्मा उषसोविवासयति ॥ ४ ॥

अन्याः काश्चिदुषसः सूर्य्योदयप्राचीनकालावस्थाः पराच्यः पुनरागमनरहितेन पराङ्मुखत्वेन युक्ता वर्त्तन्ते पुनरावृत्तेरादित्यादायुःक्षयहेतवो भवन्ति ताभ्योऽन्याः काश्चिदुषसः प्रतीच्यः पुनरावृत्तिरूपेण प्रत्यङ्मुखत्वेन युक्ता आयुषः क्षयन्न कुर्व्वन्ति तादृगुषा कति चेत् उच्यते येयमुषा आश्विनशस्त्रेन सह व्युच्छति विशेषेणाविर्भवति एषा वाव एषा वोषा प्रतीची संमुखेत्युच्यते तस्मादाश्विनशस्त्रेण दिनद्वयसन्धिवर्त्तिना सर्वा उषसो यजमानार्थं प्रतीचीरेव प्रत्यङ्मुखा एव कृत्वा विवासयति प्रकटी करोति ॥ ४ ॥

अत स्तोत्रीयायां सङ्ख्यां प्रशंसति।

द्वे सꣳस्तुतानां विराजमतिरिच्येते एषा वै स्तनवती विराड् यं कामङ्कामयते तमेतां दुग्धे ॥ ५ ॥

अस्मिन् क्रतौ संस्तुतानां स्तोत्रीयाणां मध्ये स्तोत्रीये विराजमतिक्रम्य वर्त्तेते तद्यथा द्वादशस्तोत्रेषु प्रकृतिवन्नवत्यधिकशतमित्येकोनविंशतिविराजस्त्रिषूक्थस्तोत्रेष्वेकविंशस्तोमे सति त्रिषष्टिस्तोत्रीयाः तत्र षड्विराजस्तिस्रस्तोत्रीया अतिरिच्यन्ते द्वादशस्तोत्रेषु पञ्चदशस्तोमे सति अशीत्यधिकं शतं स्तोत्रीयास्तत्राष्टादशविराजः सन्धिस्तोत्रे त्रिवृत्स्तोमे सति नव स्तोत्रीयाः तत्र पूर्व्वोक्तानां तिसृणाम्मध्ये एकया स्तोत्रीयया सह विराट् भवति ततो द्वे स्तोत्रीये अवशिष्येते तेन विराड्रूपाया योषितस्तत्स्थानीयाः तस्मादेषा विराट् स्तनवती सम्पन्ना एतां विराजं कामधेनुसदृशीं यजमानस्यापेक्षितं सर्व्वं कामं दुग्ध ॥ ५ ॥

बहिष्पवमानस्य सन्धिस्तोत्रगतौ स्तोमौ प्रशंसति ।

त्रिवृता प्रैति त्रिवृतोदेति प्राणोवै त्रिवृत्प्राणेनैव प्रैति प्राणमभ्युदेति ॥ ६ ॥

त्रिवृत्स्तोमेनेमं क्रतुं प्रैति प्रारभते उदेति समापयति प्राणवृत्तित्रयसाम्ये त्रिवृता प्राणमेव प्रारम्भसमाप्ती सम्पद्येते ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे विंशाध्यायस्य

प्रथमः खण्डः ।

---

अथ द्वितीयः खण्डः ।

सर्व्वस्तोमाख्यस्यातिरात्रस्य स्तोमक्लृप्तिं दर्शयति ।

त्रिवृद्वहिष्पवमानं पञ्चदशान्याज्यानि सप्तदशो-माध्यन्दिनः पवमान एकविꣳशानि पृष्ठानि त्रिणव आर्भवस्त्रयस्त्रिꣳशोऽग्निष्टोमः प्रत्यवरोह्योऽयुक्थानि त्रिणवं प्रथमं द्वे एकविꣳशे सषोड़शिके पञ्चदशी रात्रिस्त्रिवृत्सन्धिः ॥ १ ॥

अत्र तीण्युक्थानि प्रत्यवरोहीणि विपरीतक्रमोपेतानि स एव क्रमस्त्रिणवमित्यादिना स्पष्टीक्रियते तेषु प्रथमं स्तोत्र-मधिकसंख्यायुक्तेन त्रिणवस्तोमेनोपेतं उत्तरे द्वे स्तोत्रे न्यून-संख्यायुक्तेनैकविंशस्तोमेनोपेते ते च द्वे स्तोत्रे सषोडशिके अतः षोडशिस्तोत्रेऽप्येकविंशस्तोमः पूर्व्वोक्तक्रतुः षोडशिरहितः अयं त्वतिरात्रः सषोडशिकः स्पष्टमन्यत् ॥ १ ॥

अत्राधिकारिणमाह ॥

सर्व्वस्तोमेनातिरात्रेण बुभूषन्यजेत सर्व्वस्याप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाप्नोति सर्वञ्जयति ॥ २ ॥

यः पुमानैश्वर्य्यमिच्छति सोऽत्राधिकारी अयञ्च क्रतुरैहि-कस्यामुष्मिकस्य प्रापणीयस्य सर्वस्य प्राप्त्यै समर्थः तथा जेतव्यस्य च सर्व्वस्य शत्रुसमूहस्य जयाय पर्य्याप्तः तस्मादेतेन क्रतुना प्रा-प्तव्यं सर्व्वमपि प्राप्नोति जेतव्यं सर्व्वं जयति ॥ २ ॥

अस्मिन् क्रतौ विद्यमानान् स्तोमान् विद्यमानानि छन्दांसि च प्रशंसति ।

यत्त्रिवृद्बहिष्पवमानं भवति तत्त्रिवृतꣳ स्तोममाप्नोति गायत्रीं छन्दो यत् पञ्चदशान्याज्यानि तत् पञ्चदशꣳ स्तोममाप्नोति त्रिष्टुभं छन्दो यत्सप्तदशो माध्यन्दिनः पवमानस्तत्सप्तदशꣳ स्तोममाप्नोति जगतीं छन्दो यदेकविꣳशानि पृष्ठानि तदेकविꣳशꣳ स्तोममाप्नोत्यनुष्टुभं छन्दो यत्त्रिणव आर्भवस्तत्त्रिणवꣳ स्तोममाप्नोति पङ्क्तिं छन्दो यत्त्रयस्त्रिꣳशोऽग्निष्टोमस्तत्त्रयस्त्रिꣳशꣳ स्तोममाप्नोति विराजं छन्दो यदुष्णिक्ककुभौ क्रियेते तदुष्णिक्ककुभावाप्नोति यद्बृहतीषु सन्धिना स्तुवन्ति तद्बृहतीमाप्नोति यद्दाक्षिणꣳ शस्यते तत्सर्वमेवैतेनाप्नोति सर्वं जयति ॥३॥

षष्ठे षडहे षट्सु दिनेषु क्रमेण त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशाख्याः सर्वे स्तोमा विद्यन्ते यथा गायत्र्यादीनि छन्दांसि भवन्ति गायत्रं प्रथममहस्त्रैष्टुभं द्वितीयञ्जागतं तृतीयमानुष्टुभं चतुर्थं पाङ्क्तं पञ्चमं सर्वछन्दस्कं षष्ठं तथा चातिरात्रबहिष्पवमानादिस्तोत्रैस्तद्गतत्रिवृदादिस्तोमाभिमानिदेवताः स्तोमसहभाविगायत्र्यादिछन्दोऽभिमानिदेवताश्च प्राप्नोति अत्र सर्वछन्दःसमष्टिरूपत्वेन विराजोऽभिप्रेत्य तत् प्राप्तिरुच्यते विशेषेण राजमानत्वात्तद्रूपत्वोपचारः ॥ ३ ॥

अथास्मिन् सर्वस्तोमेऽतिरात्रे पञ्चैकादशिनीं विधत्ते ।

प्राञ्चं वै त्रयस्त्रिꣳशोयज्ञं प्रभुजति तमध्वर्युरे-कादशिन्या पुरस्तात्प्रत्युद्यच्छत्येकादश रशना एका-दश पशव एकादश यूपा भवन्ति तत्त्रयस्त्रिꣳशे त्रय-स्त्रिꣳशं प्रतिष्ठापयति ॥ ४ ॥

योऽयं त्रयस्त्रिंशः स्तोमः सोऽन्त्यं सर्वेषां स्तोमानां समाप्ति-स्थानीयः त्रयस्त्रिंशो वै स्तोमानां प्रतिष्ठेति श्रुतेः स चास्य क्रतोर्मध्येऽग्निष्टोमसाम्नि प्रयुक्तः सन् प्राञ्चमृजुत्वेन गच्छन्त-मेतं यज्ञं प्रभुजति प्रकर्षेण कुटिलं यज्ञं अध्वर्युः पुरस्तात् प्रातःकाले कृतया पश्वेकादशिन्या प्रत्युद्यच्छति पुनः कौटिल्य-परिहारेणोद्यतं करोति एकोत्तराणां दशानां समाहार एकादशिनी यूपस्तम्भवेष्टनहेतवो रज्जवो रशनास्तासां रशना-नाञ्च प्रत्येकमेकादशसंख्योपेतत्वान्मिलित्वा त्रयस्त्रिंशत् संख्या सम्पद्यते तथास्मिंस्त्रयस्त्रिंशत्सङ्घे यज्ञकौटिल्यकारिणं त्रय-स्त्रिंशस्तोमं प्रतिष्ठापयति ॥ ४ ॥

उक्तक्रत्वनुष्ठायितद्वेदिनोः समानफलमाह ।

तया समुद्यतया राचत्रा यं यङ्कामं कामयते तं त-मभ्यश्नुते यं यङ्कामं कामयते तं तमभ्यश्नुते य एवं वेद ॥ ५ ॥

समुद्यतया सम्यगनुष्ठितेनानेनातिरात्रक्रतुना सष्टमन्यत् ॥ ५

इति ताण्ड्यमहाब्राह्मणे विंशाध्यायस्य
द्वितीयः खण्डः ।

---

अथ तृतीयः खण्डः ।

आप्तोर्य्यामाख्यं क्रतुं विवक्षुस्तत्र स्तोमक्लृप्तिं दर्शयति ।

त्रिवृद्बहिष्पवमानं पञ्चदशान्याज्यानि सप्तदशो माध्यन्दिनः पवमान एकविꣳशꣳ होतुः पृष्ठं छन्दोमा इतराणि त्रिणव आर्भवस्त्रयस्त्रिꣳशोऽग्निष्टोमः प्रत्यवरोहीण्युक्थानि त्रिणवं प्रथममथैकविꣳशमथ सप्तदशमेकविꣳशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिस्त्रिवृत् प्रथममतिरिक्तस्तोत्रमथ पञ्चदशमथ सप्तदशमथैकविꣳशं ॥ १ ॥

इयञ्च स्तोमक्लृप्तिः पूर्व्वाचार्य्यैरित्थं संगृहीता, आद्यस्तु त्रिवृत् पञ्चदशस्तोत्रचतुष्टयं। ततः सप्तदशश्चैकविंशं तस्मात्परस्त्रयः। छन्दोमास्त्रिणवश्चापि त्रयस्त्रिंशं ततः परं। त्रिणवश्चैकविंशश्च तथा सप्तदशः परः। एकविंशं पञ्चदशस्तोत्रेषु द्वादशस्त्रयः। द्वयोस्त्रिवृत् ततः पञ्चदशः सप्तदशस्ततः। एकविंश इति प्रोक्तमाप्तोर्य्यामे प्रकल्पनमिति पूर्व्वस्मिन् सर्व्वस्तोमातिरात्रे एतस्मिन्नाप्तोर्य्यामे च त्रयाणां प्रत्यवरोहीये साम्नि सत्यपि तत्र तृतीयस्योक्थस्यैकविंशस्तोमः अत्र तु सप्तदश इति विशेषः सन्धेरुपरि चत्वार्य्यतिरिक्तानि ततोऽत्र त्रयस्त्रिंशस्तोत्राणि ॥ १ ॥

यथोक्तकल्पनोपेतस्य क्रतोराप्तोर्य्यामनामनिर्व्वचनस्यानुकूलामाख्यायिकामाह ।

प्रजापतिः पशूनसृजत तेऽस्मात् सृष्टा अपाक्रामꣳ स्तानग्निष्टोमेन नाम्नोत्तानुक्थैर्नाम्नोत्तान् षोडशिना नाम्नात्तान्रात्र्या नाम्नोत्तान् सन्धिना नाम्नोत्तानाश्विनेन नाम्नोत्तानग्निमब्रवीदिमान्म ईप्सेति तानग्निस्त्रिवृता स्तोमेन जराबोधीयेन साम्ना नाम्नोत्तानिन्द्रमब्रवीदिमान्म ईप्सेति तानिन्द्रः पञ्चदशेन स्तोमेन सत्रासाहीयेन साम्ना नाम्नोत्तान् विश्वान् देवानब्रवीदिमान्म ईप्सतेति तान्विश्वे देवाः सप्तदशेन स्तोमेन मार्गीयवेण साम्ना नाप्नुवꣳस्तान्विष्णुमब्रवीदिमान्म ईप्सेति तान् विष्णुरेकविꣳशेन स्तोमेनाप्नोद्वारवन्तीयेनावारयतेदं विष्णुर्विचक्रम इति व्यक्रमत ॥२

अग्निष्टोमस्तोत्रादिकैराश्विनशस्त्रान्तैः प्रयोगविशेषैः पशुप्राप्त्यभावात्प्रजापतिरग्निमब्रवीत् हे अग्ने तानिमान् पशून् केनाप्युपायेन त्वमस्मदर्थमीप्स प्राप्तुमिच्छ एवमुक्तः स अग्निः जराबोधतद्विविड्ढीत्येतस्यामभ्युत्पन्नं जराबोधीयनामकं साम त्रिवृत् स्तोमयुक्तं प्रयुज्य पशून्न प्राप्नोत् तथैवेन्द्रो विश्वे देवाश्च नाप्नुवन् त्वमुवः सत्रासाहमित्यस्यामभ्युत्पन्नं साम सत्रासाहीयं तद्वोगायेत्यस्यामभ्युत्पन्नं साम मार्गीयवं अश्वन्नत्वा इत्यस्यामभ्युत्पन्नं साम वारवन्तीयं तेनैकविंशस्तोमयुक्तेन विष्णुः पशून् प्राप्यापक्रमणान्निवारितवान् प्राप्तौ स्तोमसाधननिवारणे साम

साधनं इदं विष्णुरित्येतया स्तोत्रीयया यथोचितसामोपेतया विष्णुर्व्यक्रमत विशेषेण पशूनामन्तः प्रविवेश ॥ २ ॥

उक्तक्रतावधिकारिणमाह ।

यस्मात्प्रैव पशवोऽभ्रंशेरन् स एतेन यजेत ॥३॥

पशवो गवाश्वादयो यस्मात् पुरुषात् प्रैवात्यन्तप्रकर्षेणैव भ्रष्टा अभवन् स एतेन क्रतुनेष्ट्वा भ्रंशान्निवार्य पशुसमृद्धिं प्राप्नुवन्निति ॥ ३ ॥

अस्य क्रतोः सर्वकामप्राप्तिहेतुत्वमाह ।

एतेन वै देवा जैत्वानि जित्वा यं यं काममकामयन्त तं तमाप्नुवन्यं कामङ्कामयते तमेतेनाप्नोति ॥ ४

जैत्वानि जेतव्यान्यसुरसैन्यानि देववदन्योऽपि कामितं फलमाप्नोति ॥ ४ ॥

क्रतुनाम्नो निर्व्वचनं दर्शयति ।

तदप्तोर्य्यामो ऽप्तोर्य्यामत्वं ॥ ५ ॥

तत्तस्मादेतेन सर्व्वमाप्नोतीति व्युत्पत्तेः सद्भावादित्यर्थः तैत्तिरीयाश्च प्रजापतिः पशूनसृजतेत्याख्यातं सर्व्वमाम्नायन्ते निर्व्वचनमेवमामनन्ति यदाप्नोत् तदाप्तोर्यामत्वमिति यामन्शब्दो

यामशब्दस्य नियमनार्थः अयं क्रतुराप्तव्यानां फलानां नियामक इत्यर्थः ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे विंशाध्यायस्य
तृतीयः खण्डः।

---

अथ चतुर्थः खण्डः।

नवसप्तदशाख्येऽतिरात्रक्रतौ स्तोमक्लृप्तिमाह।

त्रिवृद्बहिष्पवमानं पञ्चदशᳪ होतुराज्यन्नव सप्तदशानि स्तोत्राण्येकविᳪशोऽग्निष्टोमः सोक्थः पञ्चदशी रात्रिस्त्रिवृत्सन्धिः ॥ १ ॥

अत्र मैत्रावरुणस्याज्यमारभ्यार्भवपवमानपर्य्यन्तं नवसंख्याकानि स्तोत्राणि सप्तदशस्तोमोपेतानि अतएवायं क्रतुर्नवसप्तदशाख्यः ॥ १ ॥

तस्मिन्नधिकारिणमाह।

नवसप्तदशेनातिरात्रेण प्रजाकामो यजेत नव वै प्राणाः प्रजापतिः सप्तदशः प्राणेभ्य एव तदधि प्रजापतेः प्रजाः प्रजायन्ते ॥ २ ॥

नवच्छिद्रवर्त्तित्वान्नवसङ्ख्याकाः प्राणाः द्वादशमासपञ्चर्त्तु-

द्वादशसंवत्सरसप्तदशावयवोपेतः स एव कालात्मकः प्रजापति-स्तेन नवसप्तदशाख्यक्रत्वनुष्ठानेन प्राणेभ्य एव निमित्तभूतेभ्यः प्रजापतेः कालात्मकादधि वाङ्गल्येन पुत्रपौत्रादिरूपाः प्रजा उत्पद्यन्ते ॥ २ ॥

कस्याश्चित् स्तोत्रीयायाः स्थाने विशेषं विधत्ते।

ककुभं प्राचीमुदूहति पुरुषो वै ककुब्गर्भो वा एष मध्यतो धीयते ॥ ३ ॥

तृतीयसवने योऽयमार्भवः पवमानस्तत्र पवस्व मधुमत्तम इति या ककुबृक् तां प्राचीमुदूहति स्वस्थानादुद्धृत्य ततः पूर्व्वभाविनां माध्यन्दिनसवनगतां कृत्वा प्रयुञ्जीत ककुभः पुत्रोत्पत्तिहेतुत्वात् पुरुषत्वं स च ककुप् रूपः पुरुषो वै गर्भ एव भूत्वा यज्ञस्योदरस्थाने माध्यन्दिनसवनेऽवस्थाप्यते ॥ ३ ॥

ककुप्छन्दस्यायामुक्तायामृचि साकमश्वनामकं सामविशेषं विधत्ते।

तस्याᳪ साकमश्वं ॥ ४ ॥

भवतीति शेषः ॥ ४ ॥

तत्साम प्रशंसति।

प्रजापतिः प्रजा असृजत तान् प्राजायन्त स एतत् सामापश्यत्ता अश्वो भूत्वाभ्यजिघ्रत्ताः प्राजायन्त प्रजननं वा एतत् साम ॥ ५ ॥

प्रजापतिना सृष्टाः प्रजाः पुत्रपौत्रादिप्रकर्षेण प्राप्ताः प्रजापतिरिदं साम दृष्ट्वा तेन साम्नाऽयमश्वो भूत्वा ताः प्रजास्तेनेष्ट्वा अभ्यजिघ्नत् सर्वत आघ्राणात्तदाज्ञतवान् तेन प्रतिबन्धापाये सति ताः प्रजाः प्रकर्षेण पुत्रपौत्रादिरूपेणाभिवृद्धिं प्राप्ताः तस्मात् साकमश्वनामकं साम प्रजोत्पत्तिसाधनं भवत्येव अश्वरूपेण प्रजापतिना वर्त्तित इति साम्नः साकमश्वनाम सम्पन्नं ॥ ५ ॥

एतद्वेदनं प्रशंसति ।

प्रजायते बहुर्भवति य एवं वेद ॥ ६ ॥

पुत्रपौत्रादिरूपेण प्रजननाद्बहुभावः ॥ ६ ॥

परिप्रधन्वेत्येतां द्विपदामृचं विधत्ते ।

द्विपदां ककुभो लोके करोति गर्भमेव तद्वितं मध्यतः प्रजनयति ॥ ७ ॥

आर्भवपवमानाद्या ककुवुद्धृता तस्माल्लोके स्थाने द्विपदां कुर्य्यात् तत्तेन द्विपदायाः करणेन यज्ञस्य मध्यतो हितमुदरे स्थापितं पुरुषरूपं गर्भमुत्पादयत्येव ॥ ७ ॥

अस्य क्रतोरतिरात्रत्वं प्रशंसति ।

अतिरात्रो भवत्यहोरात्रे वा अनुप्रजाः प्रजायन्तेऽहोरात्रे एवानुप्रजया पशुभिः प्रजायते॥ ८ ॥

रात्रिमप्यतीत्य परदिनपर्य्यन्तं वर्त्तत इत्ययं क्रतुरतिरात्रः लोके हि जायमानाः प्रजाः अहश्च रात्रिश्चानुसृत्यैवोत्पद्यन्ते उभयातिरिक्तस्य कालस्याभावात् कालद्वयव्यापिक्रतोरनुष्ठाने सत्यहनि रात्रौ च सर्व्वदा पशुप्रजासम्बन्धो भवति ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे विंशाध्यायस्य
चतुर्थः खण्डः ।

---

अथ पञ्चमः खण्डः ।

विषुवदतिरात्राख्यक्रतोः स्तोमक्लृप्तिमाह ।

त्रिवृद् बहिष्पवमानं पञ्चदशान्याज्यानि पञ्चदशो माध्यन्दिनः पवमानः सप्तदशानि पृष्ठानि सप्तदश आर्भव एकविंशोऽग्निष्टोमः सप्तदशान्युक्थानि पञ्चदशो रात्रिस्त्रिवृत्सन्धिः ॥ १ ॥

स्पष्टोऽर्थः ॥ १ ॥

अस्मिन् क्रतावधिकारिणमाह ।

विषुवतातिरात्रेण ज्येष्ठं ज्यैष्ठिनेयं याजयेद्विषुवान् वा एष स्तोमानां विषुवानेव भवति ॥ २ ॥

विष्लृव्याप्ताविति धातोरुत्पन्नो विषुशब्दः सत्यन्तः मध्यवर्त्तिनमेकविंशमग्निष्टोममाचष्टे तस्यैकविंशस्योभयत आरोहावरोह-

रूपाभ्यामवस्थितैः स्तोमैर्व्याप्तत्वात् पूर्व्वत्र त्रिवृत्पञ्चदशाना-मनुक्रमादारोहः उत्तरत्र सप्तदशत्रिवृतान्तं व्युत्क्रमेणावस्था-नादवरोहः एवमुभयतो व्याप्तत्वाद्विषुनामकएकविंशोयस्मिन् क्रतावस्ति सोऽयं विषुवान् यस्या योषितो ज्येष्ठो भ्राता विद्यते सा ज्यैष्ठिनी तस्याः पुत्रो ज्यैष्ठिनेयः यः पुमान् भ्रातॄणां मध्ये ज्येष्ठः सोऽत्राधिकारी एष क्रतुः स्तोमानां यज्ञानां मध्ये पूर्व्वोक्तरीत्या विषुवानेव तदनुष्ठातापि विषुवानेव भवति अत्र पुरस्तात् पश्चाच्च बहुभिः सेवकैः व्याप्तः प्रभुः पुरुषो विषुरित्यु-च्यते तादृशस्य पुरुषस्य स्वामी विषुवान् प्रभुपुरुषैः सेव्यो भवती-त्यर्थः ॥ २ ॥

मध्यवर्त्तिनमेकविंशस्तोमं प्रशंसति ।

यदेक एकविꣳशो भवत्येकविꣳशो वा इतोऽसा-वादित्यो द्वादशमासाः पञ्चर्त्तवस्त्रय इमे लोका असावादित्य एकविꣳश आदित्यस्यैवैनम्मात्रां गम-यति ॥ ३ ॥

त्रिवृदादयः स्तोमाः आरोहावरोहाभ्यामावर्त्तितत्वात् प्रत्येकं द्वित्वमापन्नाः एकविंशस्त्वनावर्त्तितएकएवादित्यवदवति-ष्ठत इति यदस्ति तेनैनं यजमानं आदित्यस्यैव मात्रां गमयति यावानादित्यस्य महिमास्ति तावन्तं महिमानमाप्नोति कथमादि-त्यवदवस्थानमिति चेत् संख्यासाम्यादिति ब्रूमः मासर्त्तुलोका-

दित्यरूपेणावस्थिते जगति तदवयवेषु मासादिक्रमेण परिगणि-
तेष्वादित्य एकविंशो भवति ॥ ३ ॥

तदिदं संख्यासाम्यं आदित्यस्य महिमानं दर्शयति ।

एष वा उदेति न वा एनमन्यत् ज्योतिषां ज्योतिः
प्रत्युदेति ॥ ४ ॥

एष एवादित्योऽन्धकारं निवर्त्तयन् प्रतिदिनं प्राच्यां दिश्यु-
दयं गच्छति ज्योतिषामग्निचन्द्रनक्षत्रादीनां मध्ये यत्किमप्यन्य-
दादित्यव्यतिरिक्तं ज्योतिरेनं प्रत्येतस्यादित्य प्रतिनिधिरूपेण
न वा उदेति सर्व्वथा नोदेति ॥ ४ ॥

ईदृगादित्यमहिम्नो वेदनं प्रशंसति ।

नैवमन्यः स्वेषु प्रत्युदेति य एवं वेद ॥ ५ ॥

एनं वेदितारं स्वेषु ज्ञातिषु मध्ये कोऽन्यः पुरुषो न प्रत्युदेति
प्रतिकूलो भूत्वा नोद्गच्छति किन्तु सर्व्वोऽप्येनमनुवर्त्तत एव ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे विंशाध्यायस्य
पञ्चमः खण्डः ।

---

अथ षष्ठः खण्डः ।

गोष्टोमातिरात्राख्यस्य क्रतोः स्तोमक्लृप्तिमधिकारिणं फल-
ञ्चाह ।

पञ्चदशं बहिष्पवमानं त्रिवृन्त्याज्यानि सप्तदशं माध्यन्दिनꣳ सवनमेकविꣳशं तृतीयसवनꣳ सोक्थं पञ्चदशी रात्रिस्त्रिवृत्सन्धिर्गोष्टोमेनातिरात्रेण भ्रातृव्यवान्यजेत गवा वै देवा असुरानेभ्यो लोकेभ्यो नुदन्त रात्र्यानपजय्यमजयन्नेभ्यो लोकेभ्यो भ्रातृव्यं प्रणुद्य रात्र्यानपजय्यञ्जयति ॥ १ ॥

अस्य क्रतोरहनि प्रयुज्यमानो गोष्टोमभागोऽत्र गोशब्देनाभिधीयते तेन गोष्टोमेनासुरापनोदनं सम्पन्नं यदप्यन्यदनपजय्यञ्जेतुमशक्यमसुरसम्बन्धिनगरधनादिकमस्ति तत्सर्वं रात्रौ प्रयुज्यमानेनातिरात्रभागेन जितं देवानामिवानुष्ठातुरप्युभयं सिध्यति ॥ १ ॥

इति ताण्ड्यमहाब्राह्मणे विंशाध्यायस्य षष्ठः खण्डः ।

---

अथ सप्तमः खण्डः ।

आयुष्टोमातिरात्राख्यस्य क्रतोः स्तोमक्लृप्तिमधिकारिणं पूर्वोत्तरभागयोर्विभज्य फलञ्चाह ।

त्रिवृत् बहिष्पवमानं पञ्चदशान्याज्यानि सप्तदशम्माध्यन्दिनꣳ सवनमेकविꣳशं तृतीयसवनं सोक्थं

पञ्चदशी रात्रिर्त्रिवृत्प्रभृतिरायुष्टोमेनातिरात्रेण स्व-र्गकामो यजेतोर्ध्वाः स्तोमायन्त्यनपभ्रंशाय यदति-रात्रो भवत्यहोरात्राभ्यामेव स्वर्गं लोकमेति ॥ १ ॥

पूर्व्वभागेन त्रिवृदाद्या एकविंशान्ताः स्तोमा उर्द्ध्वा अनुक्रमेण प्रवृत्ता इति नास्त्यपभ्रंशः उत्तरभागेन सहाहोरात्रानुष्ठानं स्वर्गसाधनं ॥ १ ॥

इति ताण्ड्यमहाब्राह्मणे विंशाध्यायस्य
सप्तमः खण्डः।

---

अथ अष्टमः खण्डः।

अभिजिदतिरात्राख्यस्य क्रतोः स्तोमक्लृप्तिमधिकारिणं भागद्वयफलञ्चाह।

त्रिवृत् बहिष्पवमानं पञ्चदशꣳ होतुराज्यꣳ सप्तदशम्मैत्रावरुणस्य पञ्चदशं ब्राह्मणाच्छꣳसिनः सप्तदशमच्छावाकस्यैकविंशो माध्यन्दिनः पवमानः सप्तदशं होतुःपृष्ठमेकविꣳशम्मैत्रावरुणस्य त्रिणवं ब्राह्मणाच्छꣳसिन एकविꣳशमच्छावाकस्य त्रिणव आर्भवस्त्रयस्त्रिꣳशोऽग्निष्टोमः प्रत्यवरोहीण्युक्थानि त्रिणवं प्रथमं द्वे एकविंशे सषोडशिके पञ्चदशी

रात्रिस्त्रिवृत्सन्धिरभिजितातिरात्रेण भ्रातृव्यवान्य-जेताभिजिता वै देवा असुरानिमान् लोकानभ्य-जयन्नाच्चैनानपजय्यमजयन्नभिजितैव भ्रातृव्यमिमान् लोकानभिजित्य रात्र्यैनानपजय्यञ्जयति ॥ १ ॥

इमान् लोकान् पृथिव्यन्तरिक्षद्युलोकानभिलक्ष्यासुरानजयन् लोकेभ्योऽसुरान्निःसारितवन्तः स्पष्टमन्यत् ॥ १ ॥

इति ताण्ड्यमहाब्राह्मणे विंशाध्यायस्य

अष्टमः खण्डः ।

---

अथ नवमः खण्डः ।

विश्वजिदतिरात्राख्यस्य क्रतोः स्तोमक्लृप्तिमधिकारिणश्चाह ।

त्रिवृद्बहिष्पवमानं पञ्चदशꣳ होतुराज्यꣳ सप्तदशम्मैत्रावरुणस्यैकविꣳशं ब्राह्मणाच्छꣳसिनः पञ्चदशमच्छावाकस्य सप्तदशो माध्यन्दिनः पवमान एकविꣳशं होतुः पृष्ठं त्रिणवम्मैत्रावरुणस्य सप्तदशं ब्राह्मणाच्छꣳसिन एकविꣳशमच्छावाकस्य त्रिणव आर्भवस्त्रयस्त्रिꣳशोऽग्निष्टोमः प्रत्यवरोहीण्युक्थानि त्रिणवं प्रथमं द्वे एकविꣳशे सषोडशिके पञ्चदशी

रात्रिः त्रिष्टुप्स्तन्धिर्विश्वजितातिरात्रेण पशुकामो यजेत ॥ १ ॥

स्पष्टोऽर्थः ॥ १ ॥

अनेन पशुप्राप्तिः कथमित्याशङ्क्य शस्त्रद्वारेणेत्यभिप्रायेणाह ।

रेतो हि नाभानेदिष्ठीयं पशवो वालखिल्या यन्नाभानेदिष्ठीयं पूर्वं शस्यत उत्तरा वालखिल्या रेतस्तत्पशवः प्रजायन्ते रूपाणि विकरोति यद्वार्षाकपन्तेषु प्रतितिष्ठति यदेवयामरुत् ॥ २ ॥

विश्वजितस्तृतीयसवने शस्त्रिणां मध्ये होता नाभानेदिष्ठीयं शंसति इदमित्थारौद्रं गूर्त्तवता इत्येतत् सूक्तं नाभानेदिष्ठीयं नाभानेदिष्ठेन मुनिना दृष्टत्वान्मैत्रावरुणस्तु अभि प्र वः सुराधसमित्याद्याः वालखिल्याख्या ऋचः शंसति तत्र नाभानेदिष्ठीयं रेतोरूपं तल्लिङ्गस्य स्तूयमाणत्वात्तथा हि काचिदृगेवं पठ्यते मनानग्रे तोजहतुर्व्यियन्ता सानौ निषिक्तं सुकृतस्य योनौ पिता यत् स्वां दुहितरमधिष्कन्नचरेयौतः सञ्जग्मानो निषिञ्चदिति वालखिल्यास्तु पशुरूपाः तासां वृहतीछन्दस्त्वात् वार्हताः पशव इति श्रुत्यन्तरे श्रवणात् अतो नाभानेदिष्ठीयेन रेतसि सिक्ते सति तस्माद्रेतसो वालखिल्याभिः साध्याः पशवः प्रजायन्ते ब्राह्मणाच्छंसी तु विहितोरसा चतेति सूक्तं शंसति तच्च वार्षा-

कपं वृषाकपिना दृष्टत्वात् तेन वार्षाकपेन पशून् गोमहिषाश्व धेनुबलीवर्द्दादिरूपाणि विकरोति विशेषेण सम्पादयति अच्छावाकस्तु प्रवोसहेमतयोर्यं तु विषाव इत्येतत् सूक्तं शंसति तच्च सूक्तमेव यामरुन्नामकं केनचिदेव यामरुता मुनिना दृष्ट-त्वात् यदिदं सूक्तमस्ति तेन वसन्ताद्यृतुषु प्रतितिष्ठति ॥ २ ॥

इति ताण्ड्यमहाब्राह्मणे विंशाध्यायस्य

नवमः खण्डः।

---

अथ दशमः खण्डः।

अथैकस्तोमकाश्चतुरोऽतिरात्राः सन्ति तेषु त्रिवृदतिरात्रः प्रथमः पञ्चदशातिरात्रो द्वितीयः सप्तदशातिरात्रस्तृतीय एक-विंशातिरात्रश्चतुर्थः तानेतान् चतुरोऽतिरात्रान् तत्तदधिकारि-णस्तत्फलानि च क्रमेणाह।

त्रिवृतातिरात्रेण ब्रह्मवर्च्चसकामो यजेत तेजो वै त्रिवृत् ब्रह्मवर्च्चसं तेजएव ब्रह्मवर्च्चसमवरुन्धे तेजसि ब्रह्मवर्च्चसे प्रतितिष्ठति पञ्चदशेनातिरात्रेण वीर्य्य-कामो यजेतौजो वीर्य्यं पञ्चदश ओजएव वीर्य्यमव-रुन्धओजसि वीर्य्ये प्रतितिष्ठति सप्तदशेनातिरात्रेणा-न्नाद्यकामो यजेतान्नं वै सप्तदशोऽन्नाद्यमेवावरुन्धे एकविंशेनातिरात्रेण प्रतिष्ठाकामो यजेत प्रतिष्ठा

वा एकविंशो यदतिरात्रो भवत्यहोरात्रयोरेव प्रतितिष्ठति ॥ १ ॥

अत्र त्रिवृदादीनां ब्रह्मवर्च्चसादिफलहेतुत्वं यच्चोक्तं तत् पूर्व्वमसकृदुपपादितं स्पष्टमन्यत् ॥ १ ॥

इति ताण्ड्यमहाब्राह्मणे विंशाध्यायस्य

दशमः खण्डः।

---

अथ एकादशः खण्डः।

उक्तास्त्रयोदशप्रकारा अतिरात्राः अथाहीनेषु द्विरात्रा वक्तव्यास्तेष्वङ्गिरसां द्विरात्रं विधत्ते।

ज्योतिष्टोमोऽग्निष्टोमः पूर्वमहः सर्वस्तोमोऽतिरात्र उत्तरं ॥ १ ॥

पूर्वस्मिन्नहनि प्रकृतितो विशेषो नास्ति ॥ १ ॥

उत्तरस्याह्नः स्तोमक्लृप्तिमाह।

तस्य चतुर्विंशं बहिष्पवमानं पञ्चदशान्याज्यानि सप्तदशो माध्यन्दिनः पवमान एकविंशानि पृष्ठानि त्रिणव आर्भवस्त्रयस्त्रिंशोऽग्निष्टोमः प्रत्यवरोहोण्युक्थानि त्रिणवं प्रथममथैकविंशमथ

सप्तदशमेकविंशः षोडशी पञ्चदशी रात्रिस्त्रिवृत् सन्धिः ॥ २ ॥

अस्याध्यायस्य द्वितीयखण्डे यः सर्वस्तोमोऽतिरात्र उक्तः तस्मिंस्त्रिवृद्बहिष्पवमानं अत्र चतुर्विंशं तथा तृतीयमुक्थं तत्रैकविंशं अत्र तु सप्तदशमिति विशेषः ॥ २ ॥

अनयोरह्नोः क्रमेण सामद्वयविधिमभिप्रेत्योपाख्यानमाह ।

अङ्गिरसः स्वर्गं लोकमायꣳस्तेषाꣳ हविष्माꣳश्च हविष्कृच्चाङ्गिरसा वहीयेतान्तावागच्छतां यतोऽङ्गिरसः स्वर्गं लोकमायꣳस्तावतप्येतां तावेते सामनी अपश्यतां ताभ्यां द्विरात्रमतन्वातां तेन स्वर्गं लोकमैतां ॥ ३ ॥

अङ्गिरसो नामका ऋषयः सत्रमनुष्ठाय तेन सत्रेण स्वर्गं लोकं प्राप्नुवन् तथा च तैत्तिरीया आमनन्ति अङ्गिरसो वै सत्रमासत ते स्वर्गं लोकमायन्निति तेषामङ्गिरसां मध्ये हविष्मान्नामक एक ऋषिः हविष्कृन्नामकोऽपरस्तावुभावहीयेतां तयोरुभयोः सत्रानुष्ठानं स्वर्गप्राप्तिश्च नासीत् इतरेऽङ्गिरसो यतो यस्माद्देशात् स्वर्गं प्राप्नुवन् स देशः स्वर्गप्राप्तिहेतुरिति मन्वानावुभौ तं देशमागतौ तावेतौ स्वर्गप्राप्त्यभावे सति तत्प्राप्तिसाधनमिच्छन्तौ तपोऽकुरुतां तेन च तपोबलेन स्वर्गप्राप्तिके सामनी अपश्यतां ताभ्यां सामभ्यां द्विरात्रनामकं क्रतुमतन्वातां विस-

रेणानुष्ठितवन्तौ तयोः साम्नोर्म्मध्ये हविष्कृन्नामकं साम प्रथमेऽह्नि स्वादिष्ठयेत्यस्यां गेयं अथ द्वितीयं हविष्मन्नामकं यत्साम तदेतत् द्वितीयेऽहन्यस्य प्रत्नमनुद्युतमित्यस्यामृचि गातव्यं उक्तसामोपेतेन द्विरात्रेण तावुभौ स्वर्गं लोकं प्राप्नुतां तस्मात् द्विरात्रक्रतौ सामद्वयं गायेदित्यभिप्रायः ॥ ३ ॥

उक्तक्रतावधिकारिणमाह ।

यः पौण्योहीन इव स्यात् स एतेन यजेताप्नोति पूर्वेषां प्रहामाप्नुताᳬ हि तावङ्गिरसः ॥ ४ ॥

श्रौतस्मार्त्तेषु पुण्येषु कर्म्मसु साधुः पौण्यस्तादृशोऽपि मर्त्यः पुमान् हीन इव स्यात् पुण्यात्मनां सर्वैः पूज्यानां पुरुषाणां मध्ये हीन इव पूजारहित इव भवेत् स पुमानेतेन द्विरात्रेण यजेत इष्ट्वा पूर्व्वेषां पूज्यानाम्मध्ये प्रहां प्रकृष्टगतिं प्राप्नोति ओहाङ्गता-विति धातोरयं शब्दः हि यस्मात् कारणात् अङ्गिरसः वचन-व्यत्ययेनान्वयः अङ्गिरसां स्वर्गं प्राप्तानां गतिं द्विरात्रेणानेन तावुभौ हविष्मद्धविष्कृतौ प्राप्नुतां तस्मादेतेनोत्तमगतिर्युक्ता ॥४॥

अस्य क्रतोः फलान्तरमाह ।

प्रजाकामो यजेत द्वितीयं ह्येतद्यत्प्रजा ॥ ५ ॥

पुत्रपौत्रादिरूपाः प्रजा यदस्ति तदेतत् स्वापेक्षया द्वितीयं तस्मादनेन द्वितीयपरातिरात्रयुक्तेन क्रतुना प्रजासिद्धिरु-पपन्ना ॥ ५ ॥

पुनः फलान्तरमाह ।

स्वर्गकामो यजेत द्वितीयाद्धि लोकात्परो लोकोऽभिप्रक्रम्यो दुराधो द्विरात्र इत्याहुर्यदग्निष्टोमः पूर्वमहर्भवत्युक्थ्यमन्तर्यन्ति यद्युक्थोऽग्निष्टोमं ॥ ६ ॥

भूर्लोकः प्रथमः अन्तरिक्षलोको द्वितीयस्तस्मात्पर ऊर्द्ध्वभावी स्वर्गो लोकोऽभिप्रक्रम्योऽभिलक्ष्य प्रकर्षेण गन्तव्यः हि यस्मादेवं तस्मात् लोकद्वयस्थानीयेन द्विरात्रेण तृतीयलोकस्थानीयस्य स्वर्गस्य प्राप्तिर्युज्यते ब्रह्मवादिनां द्विरात्रक्रतुरस्तीति सोऽयं दुराधः दुःखेनाराधनीय इति ब्रह्मवादिन आहुः कथमिति चेत् तदुच्यते उत्तरमहस्त्वत्रातिरात्र इति स्थितं पूर्व्वमहः किमग्निष्टोमान्तः स्यादुक्थ्यो वा अग्निष्टोमश्चेदुक्थ्यमन्तर्यन्ति परित्यजन्ति उक्थ्यश्चेदग्निष्टोमं परित्यजन्ति सोऽयं दुःखो दुःखपरिहार इत्यभिप्रायः ॥ ६ ॥

तस्याक्षेपस्य परिहारमाह ।

यज्ज्योतिरुक्थ्यः पूर्वमहर्भवति नाग्निष्टोममन्तर्यन्ति नोक्थानि ॥ ७ ॥

तिष्ठतु तावत्पूर्व्वस्यादग्निष्टोमत्वपक्षः यद्यदि पूर्व्वमहरुक्थो ज्योतिरुक्थ्यः संस्थारूपो ज्योतिष्टोमो भवति तदानीं पञ्चदशस्तोत्रयुक्ते तस्मिन् द्वादशस्तोत्रयुक्तं अग्निष्टोमं न अन्तर्यन्ति न परित्यजन्ति उत्तराणि च त्रीण्युक्थस्तोत्राणि न परित्यजन्ति तस्मान्नोक्थघ्नेपोऽस्ति ॥ ७ ॥

ननु वक्ष्यमाणे द्विरात्रे चैत्ररथं पूर्वस्याह्न उक्थ्यत्वादयं दोषपरिहारः स्तुत्याङ्गिरसे, तु द्विरात्रे कथं दोषपरिहार इत्याशङ्क्याह।

तदाङ्गरैषा वाव यज्ञस्य मात्रा यदग्निष्टोमो यदग्निष्टोमः पूर्वमहर्भवति यज्ञस्य मात्रान्नातिक्रामत्यथोत्तरस्याह्न उक्थेभ्योऽधिरात्रिमुपयन्ति तेनोक्थान्यनन्तरितानि ॥ ८ ॥

तत्तस्य चोदितदोषस्याभिज्ञा ये ब्रह्मवादिनः परिहारमाहुः कथमिति चेत्तदुच्यते अग्निष्टोम इति यदस्ति एषा वाव यज्ञस्य मात्रा सर्व्वस्य सोमयागस्य तावत्येव स्वरूपपरिमितिः अग्निष्टोमस्य सर्व्वं सोमयागप्रकृतित्वेन सर्व्वस्वरूपस्योपपत्तेः एवं सति यद्यग्निष्टोमस्य पूर्व्वमहर्भवेत् तदानीं सर्व्वस्य यज्ञस्य मात्रां स्वरूपपरिमाणमनुष्ठाता नातिक्रामति नोल्लंघयति अथानन्तरमुत्तरस्याह्नः उक्थेभ्योऽधिरात्रिमुपयन्ति रात्रिस्तोत्राण्यनुतिष्ठन्ति तस्मादुक्थानामप्यतिक्रमो नास्ति इत्यमग्निष्टोमत्वपक्षेऽपि दोषपरिहारः ॥ ८ ॥

उत्तरेऽहनि प्रथमस्तोमं प्रशंसति।

चतुर्व्विंशं बहिष्पवमानं भवत्युत्तरस्याह्नश्चतुर्विंशत्यक्षरा गायत्री प्रजननं गायत्री प्रजात्यै ॥ ९ ॥

स्पष्टोऽर्थः ॥ ९ ॥

सर्वान् स्तोमान् प्रशंसति ।

उभये स्तोमा युग्मन्तश्चायुजश्च तन्मिथुनं तस्मा-न्मिथुनात्प्रजायते ॥ १० ॥

चतुर्विंशस्य समसंख्योपेतत्वाद्युग्मत्वं बहुवचनं पूजार्थं सद-मन्यत् ॥ १० ॥

अस्यातिरात्रस्य त्रिवृदादित्रयस्त्रिंशान्तं निखिलस्तोमयुक्तत्वं प्रशंसति ।

सर्वस्तोमोऽतिरात्रो भवति सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाप्नोति सर्वं जयति ॥ ११ ॥

अतिरात्रस्य सर्वस्तोमयुक्तत्वं यदस्ति तदेतत् सर्वस्य प्राय-णीयस्य प्राप्त्यर्थं अपरं व्याख्यातं ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणे विंशाध्यायस्य

एकादशः खण्डः ।

---

अथ द्वादशः खण्डः ।

आङ्गिरसं द्विरात्रमुक्त्वा चैत्ररथं द्विरात्रमाह ।

अथ यस्य ज्योतिरुक्थ्यः पूर्वमहर्भवत्यायुरति-रात्रउत्तरं ॥ १ ॥

पूर्वस्मिन् द्विरात्रे अग्निष्टोमः पूर्वमहः अस्मिन् द्विरात्र-

उक्थ्यसंस्थो ज्योतिष्टोम उत्तरमहर्य्यस्य द्विरात्रस्य एकमहः-कृप्तिः तं द्विरात्रमनुतिष्ठेदिति शेषः ॥ १ ॥

अस्य द्विरात्रस्य स्तोत्रीयसंख्यामुपजीव्य प्रजोत्पत्तिहेतुत्वं दर्शयति ।

**तिस्रः पूर्वस्याह्नो विराजमतिरिच्यन्ते द्वाभ्यामुत्तरमहर्विराज ऊनमूनातिरिक्तं वा अनुप्रजाः प्रजायन्ते ॥ २ ॥**

अत्र यदेतत् पूर्व्वमहरुक्थसंस्थज्योतिष्टोमरूपं तस्य सम्बन्धिनीषु स्तोत्रीयासु दशसंख्यया विच्छिद्य विराट्रूपत्वेन विद्यमानेषु तिस्रः स्तोत्रीया विराट्रूपत्वमतीत्य वर्त्तन्ते ते अग्निष्टोमभागे तावन्नवत्यधिकं शतं अत एकोनविंशतिविराजः सम्पद्यन्ते त्रिषूक्थस्तोत्रेष्वेकविंशस्तोमयुक्तेषु षष्टिस्तोत्रीयाः तासु षड्भ्यो विराड्भ्य उपरि तिस्रः स्तोत्रीया अतिरिक्ता भवन्ति तथा द्वितीयेऽहनि स्तोत्रीयाणां स्वरूपं विराजो द्वाभ्यां न्यूनं भवति तद्यथा उक्थ्यस्तोत्रपर्य्यन्त आयुष्टोमभागे स्तोत्रीयाणामेकोनषष्ट्यधिकं शतद्वयमिति पूर्व्वत्रैव व्यवस्थितं तथा सति पञ्चविंशतिसंख्याभ्यो विराड्भ्य ऊर्द्धं नवस्तोत्रीयशेषादेकोना विराड् भवति आषोडशिकोच्चैवमतिरात्रः तस्मात् षोडशस्तोत्रगता संख्या नादरणीया रात्रिपर्य्यायस्तोत्रेषु द्वादशसु पञ्चदशस्तोमयुक्तेष्वशीत्यधिकं शतं स्तोत्रीया भवन्ति तत्राष्टादशविराजः सम्पद्यन्ते सन्धिस्तोत्रस्य त्रिवृत्स्तोमः तत्र

नवसंख्याकाः स्तोत्रीयाः प्रत्येकोना विराड् भवति एवं सत्युत्तरेऽहनि द्वयोर्विराजस्वरूपे प्रथमेऽहनि विराजस्वरूपं तिसृभिरतिरिक्तं ऊनातिरिक्तात्मकं तदुभयस्वरूपमनु प्रजानामुत्पत्तिः भवति लोके हि योषितो गुह्येन्द्रियमनु * लिङ्गरहितत्वात् द्वाभ्यां न्यूनं, पुंसस्तु द्वाभ्यां लिङ्गेन वातिरिक्तं, तदुभयं यथा प्रजोत्पादकं ॥ २ ॥

तद्वेदनं प्रशंसति ।

## प्रप्रजया प्रपशुभिर्ज्जायते यएवं वेद ॥ ३ ॥

स्पष्टोऽर्थः ॥ ३ ॥

प्रकारान्तरेणातिरिक्तं सम्पाद्य प्रशंसति ।

## एका सꣳस्तुतानां विराजमतिरिच्यत एकाकिनमेवैनमन्नाद्यस्याध्यक्षं करोति ॥ ४ ॥

प्रथमेऽहनि यास्तिस्रोऽतिरिक्तास्तासां मध्ये द्वयमानीय द्वितीयेऽहनि विराजः पूरणीयाः तथा सति संस्तुतानां स्तोत्रीयाणां मध्ये विराजमेका स्तोत्रीयातिलङ्घ्य तिष्ठति तथा यजमानमेवान्नाधिपतिं करोति अयमेव सर्वेभ्यो बन्धुभृत्येभ्योऽन्नप्रदो भवतीत्यर्थः ॥ ४ ॥

अस्य द्विरात्रस्य चैत्ररथत्वं सम्पादयितुमाख्यायिकामाह ।

---

* असंस्कृतोऽनुमीयते किन्तु सर्वपुस्तकेषु पाठः समानएव दृष्टः ।

एतेन वै चित्ररथं कापेया अयाजयꣳस्तमेकाकिनमन्नाद्यस्याध्यक्षमकुर्व्वꣳस्तस्माच्चैत्ररथीनामेकः क्षत्रपतिर्ज्जायते नुलम्ब इव द्वितीयः॥ ५॥

कपिगोत्रे समुत्पन्ना महर्षयः कापेयास्ते ह्येतेनैव द्विरात्रेण चित्ररथनामकं राजानं याजयित्वा तमेवमन्नाद्यस्याध्यक्षमकुर्व्वन् तस्मात्कारणादद्यापि चित्रवंशोत्पन्नानां मध्ये एक एव राजा क्षत्रपतिर्बलाधिपतिर्भवति द्वितीयस्तु तस्माद्धेतोः नुलम्ब इव तस्यानुचर इव भवति चित्ररथेनानुष्ठितत्वादयं क्रतुश्चैत्ररथ इत्यभिप्रायः॥ ५॥

इति ताण्ड्यमहाब्राह्मणे विंशाध्यायस्य

द्वादशः खण्डः।

---

अथ त्रयोदशः खण्डः।

कापिवनं द्विरात्रमाह।

अथ यस्य त्रिवृत्पञ्चदशोऽग्निष्टोमः पूर्वमहर्भवत्यायुरतिरात्र उत्तरं॥ १॥

त्रिवृत्स्तोमसहितपञ्चदशस्तोमे यस्मिन्नग्निष्टोमोऽस्ति सोऽयं त्रिवृत्पञ्चदशः तत्र सर्व्वेषु स्तोत्रेषु त्रिवृत्पञ्चदशौ स्तोमौ पर्य्यायेण प्रयोक्तव्यौ अग्निष्टोमः पूर्व्वमहः पूर्व्ववदायुष्टोमोऽतिरात्रो द्वितीयमहः यस्यैवमहःक्लृप्तिः सोऽनुष्ठेयः॥ १॥

तत्र प्रथममहः प्रशंसति ।

मिथुनाभ्याᳪ स्तोमाभ्यामुत्तरमहः प्रजनयन्ति तत्प्रजातᳪश्व आरभन्ते चक्रे वा एते साकं इतो यत् त्रिवृत्पञ्चदशौ स्तोमौ यं कामं कामयते तमेतेनाभ्यश्नुते यत्र यत्र हि चक्रीवता कामयते तत्तदभ्यश्नुते ॥ २ ॥

प्रथमेऽहनि मिथुनवत् द्वन्द्वभूतौ द्वौ स्तोमौ ताभ्यामृत्विजः उत्तरमहरुत्पादयन्ति यथा लौकिकमिथुनात् प्रजोत्पत्तिस्तद्वदुत्पन्नं तदहः परेद्युरधिष्ठानं प्रारभन्ते किञ्च त्रिवृत्पञ्चदशौ स्तोमौ यौ विद्येते एते उभे चक्रे द्वे रथस्थानीयेन प्रथमेनाप्नोति यत्रेत्यादिर्लौकिकदृष्टान्तः चक्रयोः समाहारश्चक्री स यस्यास्तीति सोऽयं रथः चक्रीवान् लोके पुमान् यत्र स्थाने गन्तुं कामयते तत्र स्थानं चक्रीवता रथेन प्राप्नोति तद्वदपीत्यर्थः ॥ २ ॥

द्वितीयमहः प्रशंसति ।

अथ यदायुरतिरात्रो भवति प्रतिष्ठित्यै ॥ ३ ॥

योऽयमायुष्टोमोऽतिरात्रोऽस्ति सोऽयं प्राप्तेषु कामेषु प्रतिष्ठायै स्थैर्य्याय सम्पद्यते ॥ ३ ।

अस्य द्विरात्रस्य कापिवनत्वं दर्शयति ।

एतेन वै कपिवनो भौवायन इष्ट्वाकृतामगच्छत् ॥ ४ ॥

भूनामकस्य महर्षेः पुत्रोऽभीवायनः कापिवन इति तस्य नाम स एतेन द्विरात्रेण स्वयमरूक्षतामगच्छत् रूक्षः उग्रः घोषणोपलक्षितो हरिद्रो वा तद्वैपरीत्येन ध्वान्तः समृद्धो वा ऽभवत् कपिवनेनानुष्ठितत्वात् कापिवनइत्यर्थः ॥ ४ ॥

वेदनपूर्व्वकानुष्ठानस्य फलमाह ।

**अरूक्षो भवति यएवं विद्वानेतेन यजते ॥ ५ ॥**

स्पष्टोऽर्थः ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे विंशाध्यायस्य

त्रयोदशः खण्डः ।

---

अथ चतुर्द्दशः खण्डः ।

उक्तास्त्रयो द्विरात्राः अथ त्रिरात्रेषु प्रथमं गर्गत्रिरात्र-माह ।

**त्रिवृत्प्रातस्सवनं पञ्चदशम्माध्यन्दिनꣳ सवनꣳ सप्तदशं तृतीयसवनं पञ्चदशं प्रातःसवनꣳ सप्तदशं माध्यन्दिनꣳ सवनमेकविꣳशं तृतीयसवनꣳ सोक्थ-मेकविꣳशं प्रातःसवनं त्रिणवं माध्यन्दिनꣳ सवनं त्रयस्त्रिꣳश आर्भवस्तृतुस्त्रिꣳशोऽग्निष्टोम एकविꣳ-**

ग्रान्युक्थानि सषोडशिकानि षोडशं प्रथमꣳ रात्रिषाम पञ्चदशी रात्रिस्त्रिष्टत्सन्धिः॥ १ ॥

अथ त्रीण्यहानि क्रमेणाग्निष्टोमोक्थातिरात्ररूपाणि॥१॥

तमेतं त्रिरात्रं स्तोतुमन्तरिक्ष इत्येतस्याहस्त्रयस्य सृष्टिमाह ।

प्रजापतिर्वा इदमेक आसीत्तस्य वागेव स्वमासीद्वाग् द्वितीया स ऐक्षतेमामेव वाचं विसृजा इयं वा इदꣳ सर्वं विभवन्त्येष्यतीति स वाचं व्यसृजत सेदꣳ सर्वं विभवन्त्यैत् सोर्द्धोदातनोद्यथापां धारा सन्ततैवं तस्या एति तृतीयमच्छिनत्तद्भूमिरभवद्भूदिव वा इदमिति तद्भूमेर्भूमित्वं केति तृतीयमच्छिनत्तदन्तरिक्षमभवदन्तरेव वा इदमिति तदन्तरिक्षस्यान्तरिक्षत्वꣳ हो इति तृतीयमूर्द्धमुदास्यत् तत् द्यौरभवद्द्युतदिव वा अदइति तद्दिवो दिवत्वं ॥ २ ॥

इदं प्रतीयमानं जगच्छब्दरूपमर्थरूपञ्च तयोः शब्दार्थयोः सृष्टेः पुरा प्रजापतिर्वा एक आसीत् प्रजापतिशब्देनात्र चिदेकरसरूपोमायाशक्तियुक्तः परमेश्वर उच्यते स एवैकस्तदानीमासीत् स एवैक आसीत् ततः सपरमेश्वर एकः स्वामी तस्य प्रभुत्वे द्वितीयेत्येवं स्वस्याभिरूपं द्वयमासीत् तदानीं

परमेश्वर ऐचत मनसि विचारितवान् कथं विचारितवानिति चेत् तदुच्यते इमामेव मम स्वभूतां द्वितीयां वाचं विसृजे विविधत्वेन सृजामि तत इयमेव वाङ्मनःसंकल्पवशादिदं प्रतीयमानं सर्व्वञ्जगदिदं भवन्ती विशेषेण भवन्तीति सर्व्वजगदाकारेण भासमाना सती मालेष्यति प्राप्स्यतीति स इत्थं विचार्य्य शब्दसामान्यरूपां वाचं व्यसृजत त्रिविधत्वेन सृष्टवान् ततः सा शब्दसामान्यरूपा वाक इदं सर्व्वं शब्दजातं विशेषेण भवन्ती प्रजापतिमैत् प्राप्नोत् ततः सा वागूर्द्धा मायाविशिष्टादव्यक्तादुद्गता सती स्वतस्तच्छब्दविशेषेण रूपेणोदातनोत् उत्कर्षेण समन्ताद्विस्तृता भवेत् तत्र दृष्टान्तः यथा वृष्टावपां धारा मेघादुद्गता सन्तता भूमौ सर्व्वतो व्याप्ता भवति तद्वद्वेदशास्त्रलौकिकभाषारूपेण या वाक् सन्तता तस्याः सकाशादृचां गानभागमनपेक्ष्य तृतीयं भागं सप्रजापतिरच्छिनत् पृथक्कृतवान् स भाग एतीत्युच्चार्य्य प्रदर्श्यते अकार इतिशब्दपरः सन् एतीति निर्द्दिश्यते अकारस्तृतीयो भाग इत्यर्थः तदकारस्वरूपस्तात वाक्यार्थरूपा भूमिरभवत् तदानीं प्रजापतिः स्वमनस्येवं चिन्तयामास इदं पृथिवीरूपमभूदिव वै पूर्व्वमविद्यमानं सदिदानीं विद्यमानमेवासीत् इत्येवं यस्माच्चिन्तितवान् तत्तस्मात् कारणादस्या भूमेरभूदिति व्युत्पत्त्या भूमिनाम सम्पन्नं ओमित्यस्मिन् वाग्व्यवहारे योऽयमादिरकारः सोऽयं वाचकः भूमिर्वाच्याभूदिति तात्पर्य्यार्थः, स प्रजापतिर्वाचः प्रसादकरं तृतीयभागं सृष्ट्वा पुनः केत्यन्तं तृतीयभागमच्छिनत् पृथक् कृतवान् तत् कशब्द-

रूपवाचकं भूत्वा पुनर्वाच्यमन्तरिक्षमभवत् तदानीं प्रजापति-रेवं चिन्तितवान् इदं प्रतीयमानं अन्तरिक्षाख्यमन्तरा द्यावा-पृथिव्योर्मध्ये इव वै स्थितमेवेत्यर्थः यस्मादेवं चिन्तितवान् तत् तस्मादन्तरिक्षलोकस्यान्तरवस्थितमिति व्युत्पत्यान्तरिक्षनाम सम्पन्नं तस्मिन्नाम्नि पकारात् पूर्व्वं कोऽस्ति तस्मादसावन्तरिक्ष-वाचक इत्यभिप्रायः भूम्यन्तरिक्षवाचकावधारकशब्दौ निर्म्माय तदपेक्षया तृतीयं वाचो भागं हो इति शब्दमूर्द्धमुदास्यत् ऊर्द्ध-देशमुद्दिश्य तद्वाचकत्वेनोत्कर्षेण प्रक्षिप्तवान् उच्चारितवानित्यर्थः तदुच्चारणं हो इति शब्दरूपमूर्द्धदेशवाचकं भूत्वा द्यौरभवत् तदा प्रजापतिरेवं चिन्तितवान् अहो द्युलोकरूपं वस्तु अद्युतदिव चन्द्रसूर्य्यादिप्रकाशो द्योतमानमेवेति यस्मादेवं तस्मात् द्युलोकस्य दिवत्वं द्युनामकत्वं सम्पन्नं ॥ २ ॥

प्रजापतिना यान्यकहो इत्येतानि त्रीण्यक्षराणि वाचः-सकाशात् छिन्नानि तानि पुनः प्रशंसति ।

**एषा वाव प्रत्यक्षं वाग्यज्जिह्वाग्रेणैतद्वाचो वदति यदेति मध्येनैतद्वाचो वदति यत् केति सर्व्वयैतद्वाचो रसोध्यूर्द्धं उद्वदति यद्धो इति ॥ ३ ॥**

यदक्षरं एषैव त्रिरूपा वागस्माकं प्रत्यक्षा यथा भवति तथोपलभ्या इति शेषः यदेति जिह्वेत्यादिना स्पष्टीकरोति एति यदस्ति आकाररूपं यदक्षरमस्ति एतद्वाचः सम्बन्ध्यक्षरं जिह्वा-ग्रेण मातृकामन्त्रोच्चारणेन जिह्वयोः प्रथमव्यापारेण लोका

वदति, केति यत् द्वितीयमक्षरमस्ति एतदक्षरं मध्येऽत्र मातृकामन्त्रे षोड़शस्वरेभ्य ऊर्द्ध्वंगतेन मध्येन जिह्वाव्यापारेण लोको वदति, हो इति यदक्षरमस्ति तदक्षरस्वरूपं वाचः सर्व्वो रसः अतएवाध्यूर्द्ध्वः मातृकामन्त्र अधिकत्वेनोर्द्ध्वभागे मन्त्रावसाने हकारः पठितः तदिदं हो इत्यक्षरं लोकस्तद्वदति उच्चस्वरेण पठति ॥ ३ ॥

उक्तानां त्रयाणामक्षराणां सृष्टिप्रशंसाद्योक्ता त्रिरात्रक्रतुसम्बन्धमाह ।

यदेतानि रूपाण्यन्वहं व्यज्यन्ते मुखतएव तद्वाचं विसृजन्ते मुखतो यज्ञियं कर्म्म ॥ ४ ॥

एतान्यकहो इति त्रीण्यक्षररूपाणि त्रिरात्रक्रतावन्वहं प्रतिदिनं व्यज्यन्ते विशेषेणाज्यस्तोत्रेषु प्रक्षिप्यन्ते अजगतिक्षेपणयोरिति धातुः आज्यस्तोत्रेषु कथं विक्षेप इति चेत् उच्यते प्रथमेऽहन्यग्न आयाहि वीतय इत्यादावकारः पठितः द्वितीयेऽहनि कयाते अग्ने अङ्गिरस इति शब्द आदौ पठितः तृतीयेऽहनि होता देवो अमर्त्य इति हो शब्द आदौ पठितः यद्यस्मादेवं तस्मान्मुखत एव आज्यस्तोत्ररूपे यज्ञस्य मुखभाग एव वाचमक्षरत्रयरूपां विसृजन्ते विशेषेण सम्पादयन्ति किञ्च यज्ञियं यज्ञसम्बन्धि यत् प्रोक्ताक्षरसाध्यमाज्यस्तोत्ररूपं कर्म्म तन्मुखतो यज्ञमुखे सम्पादयन्ति ॥ ४ ॥

अथैतस्य त्रिरात्रस्य पुष्टिहेतुत्वं विवक्षुराह ।

प्रजापतिर्वा इदमेकाक्षरां वाचꣳ सतीं त्रेधा-
व्यकरोत्तदिमे लोका अभवन् रूक्षा अनुपजीवनाः स
ऐक्षत कथमिमे लोकास्तोम गृह्णीयुः कथमुपजीव-
नीयाः स्युरिति स एतं त्रिराचमपश्यत्तमाहरत्ते-
नेमान् लोकानन्वातनोत्ततो वा इमे लोकास्तोमा-
गृह्णꣳस्तत उपजीवनीया अभवꣳस्त्रिरात्रस्य वा इदं
पुष्टं त्रिरात्रस्योदरत्वं यदिदमेषु लोकेष्वधि ॥ ५ ॥

प्रजापतिशब्देनाचिन्त्यशक्तिः परमेश्वरः इदमित्यस्य लिङ्ग-
व्यत्ययः स ईश्वरः इमां वाचं त्रेधा भागत्रयरूपेण व्याकरोत्
विकारमापादितवान् कीदृशीं वाचं एकां अक्षरां सतीं वागि-
त्यनेन शब्देन व्यवह्रियमाणत्वात् एकाक्षरा ककारस्य हल्-
मात्रस्य पृथगक्षरत्वव्यवहाराभावाद्वागिति शब्दस्यैकाक्षरस्य
ये विकारास्ते पृथिव्यन्तरिक्षद्यूरूपा इमे त्रयो लोका अभवन्
यथा क्षीरं दधि भवति तथा विधिवाक्योपेतत्वात् एवमीश्व-
रस्याचिन्त्यशक्तिवशाच्छब्दस्य लोकत्रयरूपापत्तिर्द्रष्टव्या ते च
त्रयो लोका अनुपजीवना जीवनहेतुभोग्यद्रव्यरहिताः अतएव
रूक्षाः शुष्काः सन्तापहेतवोऽभवन् तदा स प्रजापतिरित्थं
विचारयन् इमे लोकाः कथं लोम गृह्णीयुः लोम प्रकृते व्रीहि-
यवादिभोग्यं वस्तु कथं स्वीकुर्युः स्वीकृत्यच प्राणिनामुपभोगेन
योग्याः कथं भवेयुः स प्रजापतिरित्थं विचार्य्य वेदान् पश्यी-

लोच्य व्रीहियवाद्युत्पादनसाधनमेतद्गर्गत्रिरात्रमपश्यत्तं क्रतु-माहरदन्वतिष्ठत् तेनानुष्ठितेन क्रतुना त्रीनिमान् लोकान-नुक्रमेण सर्व्वतो व्याप्तवान् पर्य्यालोच्य व्रीहियवानेषु लोकेषु चोत्पादयन् सामर्थ्यं सम्पादितवान् तदनन्तरमेव प्रथमेनाह्ना भूलोके सामर्थ्यमभूत् मध्यमेनान्तरिक्षे उत्तमेन दिवि ततो वै तदनन्तरमेवेमे लोका लोमोत्पाद्यं तं भोग्यजातमगच्छन् ओषधिवनस्पतयः पृथिव्या लोमेनेष्टा अन्तरिक्षस्य लोम चन्द्रतारकाद्या दिवो लोम ततो भोग्यसद्भावात् लोका उप-जीवनयोग्या अभवन् यदिदं भोग्यजातमेषु लोकेष्वधि वन-स्पतीन् लोकान् अधितिष्ठति तदिदं भोग्यवस्तु त्रिरात्रक्रतो-रेवं सम्बन्धि पुष्टं पुष्टिकारणं यतस्त्रिरात्रस्य सम्बन्धित्वेन उदरणं भोग्यवस्तुवदुद्गमभूत् ततस्त्रिरात्रस्य पुष्टिहेतुत्वं युक्तं ॥ ५ ॥

एतद्वेदनं प्रशंसति ।

**गच्छति पशूनां भूमानं द्विपदां चतुष्पदां य एवं वेद ॥ ६ ॥**

द्विपदो मनुष्याः पुत्रभृत्यादयो नवादिवद्भोग्यत्वात्पशवः भूमानं बाहुल्यं गच्छति प्राप्नोति ॥ ६ ॥

पूर्व्वमकहो द्रुत्यचरत्नयमुपजीव्य यथा त्रिरात्रः प्रशस्तः तथैवाचरेति शब्दमुपजीव्य त्रिरात्रं प्रशंसति ।

**प्रजापतिर्य्यद्वाचं व्यसृजत साक्षरदेवेति प्रथमं**

चेति द्वितीयं रेति तृतीयं येन येन वै रूपेण प्रजापतिर्वाचं व्यसृजत तेन तेन रूपेणाज्यानि चारभ्यन्तेऽहानि चाप्यन्ते ॥ ७ ॥

प्रजापतिः पुनरपि वाचं स्वीकृत्य विविधत्वेन सृष्टवानिति यदस्ति सा सृष्टा वाक् भिन्नभाण्डस्थितोदकवदक्षरदस्रवदेव तस्याः सृताया वाचः प्रति प्रथमं रूपं अकार इति शब्दपर एतीति निर्द्दिश्यते चेति द्वितीयं रूपं रेति तृतीयमेतदक्षरशब्दनिष्पत्तिः एवं सति प्रजापतिः येन येन रूपेण वाचं विधत्ते तेन तेन रूपेणाज्यस्तोत्रारम्भः त्र्यहफलभूतलोकत्रयप्राप्तिश्च सम्पद्यते कथमिति चेदुच्यते अकहो इत्येतत्त्रयसृष्टिमुपजीव्याज्यस्तोत्रारम्भः पूर्वमुदाहृतः अचरेत्येतत् त्रयमुपजीव्य लोकत्रयप्राप्तिमुदाह्रियते अकारो भूर्लोकः अयं लोक इति वाक्यस्यादावकारसद्भावात् चित्यन्तरिक्षलोक इत्यत्र चकारसद्भावात् द्यौरिति द्युलोक इत्यत्र रेफसद्भावात् एवञ्च सति त्रयाणामह्नां फलभूतास्त्रयो लोका अचरेति त्रिभिर्वाग्भवैः प्राप्यन्ते ॥ ७ ॥

पुनरपि तमेतं त्रिरात्रं पुरुषसादृश्यसम्पादनेन प्रशंसति ।

तदाहुर्ब्रह्मवादिनोऽक्षरेश्या वै त्रिरात्र इत्येकाक्षरा वै वाक् त्र्यक्षरमक्षरं त्र्यक्षरः पुरुषः स वा एनं वेदेत्याहुर्य्य एनं पुरुषसम्मितं वेदेति ॥ ८ ॥

कथमित्याशङ्क्य तदेवैकेत्यादिना स्पष्टीकृतं वागेकाक्षरा

वै ककारस्य पृथगक्षरत्वाभावाद्वाचो निष्पन्नमक्षरमिति पूर्व्वोक्त-नीत्या त्रिरात्रेऽयमक्षरे स्थितो भवति मन्त्ररूपया वाचा निष्पन्नत्वात् एकाक्षरायां वाचि स्थितिः एति चेति रेति त्रिरात्रफलानां लोकानामुक्तत्वादक्षरनाम्नि त्र्यक्षरे स्थितिः पुरुष इत्येतदपि नाम त्र्यक्षरं ततः पुरुषतुल्यत्वं वेद स पुमानिदं त्रिरात्रं वेद इति शब्द उक्तार्थसमाप्त्यर्थः ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे विंशाध्यायस्य
चतुर्द्दशः खण्डः।

---

अथ पञ्चदशः खण्डः।

प्रकारान्तरेण गर्गत्रिरात्रं स्तौति।

एतेन वै देवा एषु लोकेष्वार्ध्नुवन्नेतेन स्वर्गं लोकमायन् ॥ १ ॥

ये पुरुषाद्देवत्वं वाञ्छन्ति ते पुरा एतं त्रिरात्रमन्वतिष्ठन् ते एतेनैव त्रिरात्रेणेषु लोकप्रदेशेषु भोग्यवस्तुसमृद्धिं प्राप्य तत एतेन त्रिरात्रेण देहपातादूर्द्ध्वं देवा भूत्वा स्वर्गं लोकं प्राप्नुवन् ॥१॥

पूर्वखण्डोक्तमर्थमनूद्याग्निवाय्वादित्यानामक्षरादुत्पत्तिमाह।

वाग्वै त्रिरात्रो वाचो रूपेणाज्यानि चाहानि च विभज्यन्त एकाक्षरा वै वाक् त्र्यक्षरमक्षरमक्ष-

रस्य रूपेण विभज्यन्ते त्रयो गन्धर्वास्तेषामेषा भक्ति-रग्नेः पृथिवी वायोरन्तरिक्षमसावादित्यस्य द्यौस्त्र-योघर्मास उषसꣳ सचन्ते ॥ २ ॥

वाग्वै एव आज्यस्तोत्राणामप्यक्तहो इति तत् तत्र उत्पन्नो ऽक्षरशब्दस्त्र्यक्षरः तस्य शब्दस्य त्रिविधेन रूपेण त्रयो देवा अनेन वाचो रूपेण निष्पद्यन्ते त्रीण्यहानि अक्षरोत्पत्तिस्त्रिवी-चोरूपैर्लौकित्रयात्मकैर्विगमय्य सम्पाद्यन्ते एतावाननुवादः अथा-ग्न्याद्युत्पत्तिरुच्यते तत्रत्यवागेकाक्षरैः ककारस्याईमात्रस्य पृथ-गक्षरत्वाभावात् तत्र उत्पन्नोऽक्षरशब्दस्त्र्यक्षरः तस्य शब्दस्य त्रिविधेन रूपेण त्रयो देवा विभागेनोत्पद्यन्ते देवा गन्धर्वाः अथाग्न्याद्युत्पत्तिरुच्यते तस्य शब्दस्य त्रिविधेन रूपेणेमां वाचं त्रेधा रवतीति व्युत्पत्तेः यौगिक इत्यर्थः एतेषां त्रयाणां देवानां एषा वक्ष्यमाणाविभक्तिर्भजनं स्थानं अग्निवाय्वा-दित्यदेवतानां पृथिव्यादिकं स्थानमित्येतत्प्रसिद्धमेव अस्मि-न्नर्थे सम्बन्धाय कस्यचिन्मन्त्रस्य पादं पठति त्रयो घर्मास उषसं सञ्चरन्त इति घर्मासो दीप्यमानादेवास्त्रयोऽग्निवाय्वा-दित्या उषसं उषाकालरूपी तमोनिवारणेनोत्पन्ना देवाः सचन्ते सेवन्ते ॥ २ ॥

मन्त्रार्थं विविच्य दर्शयति ।

अग्निरुषसꣳ सचते वायुरुषसꣳ सचतेऽसावा-दित्य उषसꣳ सचते ॥ ३ ॥

अग्निर्द्दैवः पृथिव्यां उषो देवीं सेवते तया कृतं तमोनिवारणमनुभवतीत्यर्थः एवं वाय्वादित्यावप्यन्तरिक्षलोकयोरिति द्रष्टव्यं ॥ ३ ॥

अस्त्वेवमग्न्यादीनामुषः सेवा प्रकृते किमायातमित्याशङ्क्याह।

त्रीणि मिथुनानि तान्येष ॥ ४ ॥

अग्निवाय्वादित्यास्त्रयो गन्धर्वाः पुरुषा लोकत्रयेऽपि उषसो योषितस्तत्सम्मिलितेन त्रीणि मिथुनानि भवन्ति तानि चैषः त्रयस्त्रिरात्रस्त्रित्वसंख्यायाः समानत्वात् तस्मादयं प्रसिद्ध इत्यर्थः ॥ ४ ॥

किञ्च मिथुनावयवौ द्वौ तत्पुत्रश्चैक इत्यनेनापि प्रकारेण त्रित्वसाम्यात् प्रशस्त इत्याह।

मिथुनं द्वे सम्भवतो मिथुनाद्यत्प्रजायते तत्तृतीयं ॥ ५ ॥

द्वे स्त्रीपुरुषशरीरे सम्भवत इति यदस्ति तदेतन्मिथुनमुच्यते स्पष्टमन्यत् ॥ ५ ॥

अथास्य त्रिरात्रस्य यागे सहस्रदक्षिणास्ति तास्तोतुमाख्यायिकामाह।

इन्द्रो वृत्राय वज्रमुदयच्छत्सोऽब्रवीन्मामे प्रहार्षी-रस्ति वा इदम्मयि वीर्य्यन्तत्ते प्रदास्यामीति तदस्मै प्रायच्छत्तद्विष्णुः प्रत्यगृह्णात् स द्वितीयꣳ स तृतीय-मुदयच्छत्स एवाब्रवीन्मामे प्रहार्षीरस्ति वा इदं मयि वीर्य्यन्तत्ते प्रदास्यामीति तदस्मै प्रायच्छत्त-द्विष्णुः प्रत्यगृह्णादेतद्वाव तदभ्यनूच्यते ॥ ६ ॥

लोकत्रयमावरीतुं प्रतिक्षणं वर्द्धमानेन देहेनोपेतस्त्वष्टुः पुत्रो वृत्रनामकः कश्चिदसुर आसीत् तद्वधार्थं इन्द्रः कदाचिद्व-ज्रमुद्यम्यावस्थितः तमिन्द्रं दृष्ट्वा स वृत्र एवमब्रवीत् हे इन्द्र कदापि मे शरीरं माप्रहार्षीः मयि वृत्रे वीर्य्यं सारभूतं इदं वस्त्वस्त्येव मच्छरीरे रक्षिते सति तद्वस्तु तुभ्यं प्रदास्यामीत्युक्त्वा प्रहारादुपरतायास्मा इन्द्राय तद्वस्तु प्रायच्छत् इन्द्राय प्रदत्तं तद्वीर्य्यरूपं वस्तु अस्येन्द्रस्य सखा विष्णुस्तस्मादिन्द्रात्प्रतिगृह्य रक्षितवान् वृत्रवधार्थं प्रवृत्तस्येन्द्रस्य वज्रोद्यमे विष्णुः साहाय्यं कृतवान् तदिदं तैत्तिरीया आमनन्ति इन्द्रो वज्रमुदयच्छत् विष्णुरनुस्थित इति विष्णुः साहाय्यादनुस्थित उपविष्ट एव सन् वज्रमुद्यतवानित्यर्थः वृत्रेण दत्तं तद्वीर्य्यं इन्द्रः प्रतिगृह्य सख्ये विष्णवे प्रायच्छत् एतदपि त एवामनन्ति तद्विष्णवे प्रायच्छत्त-द्विष्णुः प्रत्यगृह्णादस्मास्विन्द्र इन्द्रियं दधात्विति तत्तस्मा इन्द्राय दत्तस्य विष्णुना प्रतिग्राह्यत्वं युक्तं स इन्द्रः पुनरपि वृत्रं हन्तुं

द्वितीयं द्वितीयवारं अस्मिन्वाक्ये पूर्व्वोक्तं वज्रमुदयच्छदित्यादिकं विष्णुः प्रतिगृह्णादित्यन्तं अनुवर्त्तते पुनरपि स इन्द्रस्तृतीय-वारं उदयच्छत् तदापि स, हतः पूर्व्ववदेव अब्रवीत् मामे प्रहार्षीरित्यादिकं पूर्व्ववद्योज्यं तद्वावं त्रिवारञ्च तद्धतमिन्द्र वीर्य्येण विष्णुना च प्रतिगृहीतं तदेतत्सर्व्वमेव कयाचिदृचाभ्य-नूच्यते ॥ ६ ॥

तामेतामृचमुदाहरति।

उभा जिग्यथुर्न पराजयेथे न पराजिग्ये कतरश्चनैनोरिन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथामिति ॥ ७ ॥

हे इन्द्रविष्णू युवामुभौ जिग्यथुः सर्व्वत्र जितवन्तौ न पराजयेथे क्वापि पराजयं न प्राप्नुथ एतयोर्मध्ये कतरश्च न एकतरोऽपि पराजिग्ये द्वितीयं प्रत्यक्षं विनापि क्वापि युद्धे पराजयं न प्राप्तवान् हे विष्णो त्वमिन्द्रश्चोभौ यदपस्पृधेथां यदा परस्परं स्पर्द्धितवन्तौ तत्र हताल्लब्धं गोसहस्ररूपं वीर्य्यं त्रेधा विभज्य इन्द्रस्य द्वौ भागौ विष्णोरेको भाग इत्येवमैरयेथां प्राप्तवन्तौ इति शब्दः समाप्त्यर्थः ॥ ७ ॥

नन्विन्द्राविष्णुभ्यां हतो वीर्य्यं प्रायच्छदिति ब्राह्मणे श्रुतं तत्संवादार्थमुदाहृतायां ऋचि सहस्रं श्रितमिति वैयधिकरण्य-माशङ्क्याह।

## एतद्वा आभ्यां तत्सहस्रं प्रायच्छत् ॥ ८ ॥

तदेतदेव गोसहस्रमभिहितं ह्यत आभ्यां विष्णिन्द्राभ्यां प्रायच्छत् तस्माद्दैयधिकरण्यं उदाहृतायामृच्यभिहिता येयमिन्द्राविष्णोः परस्परस्पर्द्धा यत्रेन्द्रस्य भागद्वयं विष्णोरेको भाग इत्येतादृशो गोसहस्रस्य त्रेधा विभागस्तदुभयं तैत्तिरीयैः विस्पष्टमाम्नायते अथ या सहस्रं तस्यासीद्यस्यामिन्द्रश्च विष्णुश्च व्यायच्छेतां स इन्द्रोऽमन्यत न वा इदं विष्णुः सहस्रं प्रार्थ्यत इति तस्यामकल्पेतां द्विभाग इन्द्रस्तृतीयो विष्णुस्तदेव एपाभ्यनूच्यत उभा जिग्यथुरितीति अस्याम्नानस्यायमर्थः पुरा कदाचित् प्रजापतिः वसूनिन्द्रादित्यांश्च ससर्ज्ज एते सर्व्वे संवत्सरं तपस्तप्त्वा गामेकामसृजत सा च गौर्व्वसूनां गवामेकोनसहस्रे सम्पन्ने सति स्वयं सहस्रसंख्यापूरणी सम्पन्ना तस्यां गवि ममैवेयं इति विष्णुरिन्द्रश्च परस्परं स्पर्द्धेतां तदानीमिन्द्र एवं विचारयन् अनया सहस्रतमया सहितं गोसहस्रं विष्णुर्म्मत्सकाशात् चर्करिष्यतीति तत इन्द्राविष्णू स्पर्द्धां परिहर्त्तुं अन्याभिर्गोभिः सहितायां तस्यां सहस्रतमं विभागं कल्पितवन्तौ तत्रेन्द्रो भागद्वयेऽवस्थितः विष्णुस्तृतीये भागेऽवस्थितः तस्मिन्नेवोक्तार्थे उभाजिग्यथुरित्यृगभ्यनूच्यते इति इत्थं अस्मिन् दक्षिणारूपेण दातव्यस्य गोसहस्रस्येन्द्रविपयोपाख्यानेन प्रशंसा कृता ॥ ८ ॥

तत्र गोसहस्रं त्रिषु दिनेषु विभज्य दातव्यं तत्र प्रथम-

दिने प्रतिग्रहीतृविशेषं दर्शयति।

तस्यैषा भक्तिर्य आर्षेयो विद्वाꣳस्तस्मै प्रथमेऽहनि देयं यथा वा इयमेवꣳ स प्रतिष्ठितेयं प्रतिष्ठितः सः॥ ९॥

तस्य दातव्यस्य द्रव्यस्य एषा वक्ष्यमाणा भक्तिर्भागः विभज्य दानप्रकारः कथ्यते ऋषेर्गोत्रप्रवर्त्तकस्य भरद्वाजकश्यपादेः सम्बन्धी पुमानार्षेयः प्रख्यातकुलगोत्र इत्यर्थः विद्वान् वेदशास्त्राभिज्ञः तादृशोयः प्रतिग्रहीता तस्मै प्रथमेऽहनि दक्षिणा दातव्या प्रथमस्याह्नः पृथिवीरूपत्वं पूर्व्वमुक्तं इयं प्रथमाहःस्वरूपा पृथिवी यादृशी तादृगेव स आर्षेयः उभयोः प्रतिष्ठासम्बन्धस्य तुल्यत्वात् प्रतिष्ठितः॥ ९॥

द्वितीयेऽहनि प्रतिग्रहीतृविशेषं दर्शयति।

योनार्षेयो विद्वाꣳस्तस्मै द्वितीयेऽहनि देयं यथा वा अन्तरिक्षमेवꣳ सोऽन्तरिक्षमित्यन्तरिक्षं विदुर्वेदं तस्य विदुः॥ १०॥

अज्ञातकुलगोत्रो वैदेशिकोनार्षेयः, द्वितीयाहःन्तरिक्षरूपत्वादन्तरिक्षद्वारेण वैदेशिकस्य साम्यलक्षेतुं शक्यं अन्तरिक्षमित्यनेन शब्देनान्तरिक्षं द्यावापृथिव्योरन्तरा क्षयति निवसति इति व्युत्पत्त्या सर्व्वे जना मध्यवर्त्तिनं लोकं विदुः वैदेशिकोऽपि ज्ञाताज्ञातयोर्म्मध्ये वर्त्तते तदीयकुलगोत्रयोरज्ञातत्वात् वेदपाठन्तु तदीयं सर्व्वे विदुः अतो द्वितीयेऽहनि प्रतिग्रहयोग्यः॥ १०॥

तृतीये प्रतिग्रहीतृयोगं दर्शयति ।

य आर्षेयोविद्वाᳯंस्तस्मै तृतीयेऽहनि देयं यथा वै द्यौरेवᳯं सद्यौरिति दिवं विदुर्बन्धु तस्य विदुः ॥ ११ ॥

तृतीयाहः स्वरूपत्वेनोक्तस्य द्युलोकस्यार्षेयेण सह जातत्वसाम्यमस्ति दीव्यति इति द्यौरित्येवं दिवं सर्वे जानन्ति तस्यार्षेयस्य बन्धुजातं भ्रातृपुत्रादिकं च जानन्ति ॥ ११ ॥

दातव्ये गोसहस्रे या संख्यान्तर्भूतास्ति तथा तस्यां शतसंख्यायामन्तर्भूता या संख्यास्ति तदुभयं क्रमेण प्रशंसति ।

शतान्यन्वहन्दीयन्त एषा वाव यज्ञस्य मात्रा यच्छतं सैव सा विच्छिन्ना दीयते दशतोऽन्वहं दीयन्ते दशाक्षरा विराड्वैराजोयज्ञः सैव सा विच्छिन्ना दीयते ॥ १२ ॥

प्रतिदिनं गवां शतानि दीयन्ते तद्विशेषस्तूत्तरत्र वच्यते शतमिति यदस्ति एषैव संख्या यज्ञस्य मात्रा सोमयागस्य दक्षिणाद्रव्यप्रमाणं प्रकृतौ हि द्वादशाधिकं शतं विहितं तस्य द्वादशशतं दक्षिणेत्याम्नातत्वात् ततः शतादर्वाचीनसंख्यायामभावाच्छतसंख्यामात्रेत्युच्यते सैव शतसंख्या सा यज्ञस्य मात्रा भूत्वा प्रतिदिनमविच्छिन्ना दीयते दशद्रत्यनेन शकारान्तशब्देन दशानां समूहोऽभिधीयते पञ्चदशतौ वर्गे वेति पाणिनिः आर्षेयादिभ्यः प्रतिग्रहीतृभ्यो दशतो दशसंख्योपेताः वर्गाः प्रतिदिनं दीयन्ते ते च वर्गाः संख्यासाम्याद्विराट्छन्दोरूपाः सोमयागश्च वैराजः प्रकृतिगतासु स्तोत्रीयास्वेकोनविंशतिविराट्

रूपस्यासहृद्दर्शितत्वात् अतः सैवं संख्या विराड्रूपा भूत्वा प्रतिदिनमविच्छिन्ना दीयते ॥ १२ ॥

एकोनसहस्रसंख्याकानां गवां दिनत्रयसाम्येन विधानं दर्शयति।

त्रयस्त्रिंशच्च त्रीणि च शतानि प्रथमेऽहनि देयास्तथा द्वितीये तथा तृतीये।१३।

स्पष्टोऽर्थः। १३।

सहस्रतम्यां गोदानप्रकारमाह।

अथैषा द्विदेवत्या त्रिरूपा ब्रह्मणो द्वे तृतीये तृतीयमग्नीधः ॥ १४ ॥

एकोनसहस्रकथनानन्तरमेषां सहस्रतमी कथ्यते सा चेन्द्रविश्वरूपदेवताद्वयोपेता शुक्लकृष्णसहितवर्णास्त्रिरूपा च तेषु त्रिरूपेषु शुक्लं रूपमितरापेक्षया तथा कृष्णमपि द्वितीयं रोहितमपि तृतीयं तत्र तृतीये ब्रह्मणो योग्ये तस्य द्विभागोपेतेन्द्रस्थानीयत्वात् अवशिष्टं तृतीयमग्नीधस्य योग्यं तस्यैकभागोपेतविष्णुस्थानीयत्वात् ॥ १४ ॥

अथ सहस्रतम्यामनुमन्त्रणे मन्त्रमाह।

काम्यासि प्रियासि हव्यासीडे रन्ते सरस्वति महि विश्रुत एतानि तेऽघ्न्ये नामानि देवेषु नः सुकृतो ब्रूयात् ॥ १५ ॥

हसस्रतमी षड्भिः पादैः सम्बोध्यते हे इड़े मननरूपे हे

रन्ते रमणीये हे सरस्वति सरणात्सरः चोरन्त्यदिति हे महि महति हे विश्रुते प्रख्याते हे अघ्न्ये हन्तुमयोग्ये त्वं काम्या कमनीयासि प्रिया प्रीतिविषयासि हव्या दानयोग्यासि एतानीडादीनि काम्यादीनि तव नामानि तादृशी त्वं नो अस्मान् सुकृतः शोभनस्य कर्त्तृ॒न् देवेषु ब्रूतात् देवसमीपे कथय ॥ १५ ॥

इति ताण्ड्यमहाब्राह्मणे विंशाध्यायस्य
पञ्चदशः खण्डः ।

---

## अथ षोड़शः खण्डः ।

पुनरपि त्रिरात्रं बहुधा तुष्टुपुरादौ तावत् त्रैलोक्यवर्त्तिपदार्थसम्बन्धिहेतून् दर्शयति ।

**इदं वाव प्रथमेनाह्ना व्यकरोद्यदिदमस्यामध्यायत्तमूलमिदं द्वितीयेन यदिदं प्राणद्वेत्यदस्तृतीयेन यदर्पति यन्नक्षत्राणि यदमुं लोकं भेजे ॥ १ ॥**

अस्यां पृथिव्यामध्युपरि यदिदं गिरिवृक्षादिकमायत्तमूलमष्ठीनमूलं वर्त्तते स्थावराणां हि मूलानि भूमौ प्रविश्य तिष्ठन्ति तदिदमेतत् स्थावरस्वरूपमयन्त्रिरात्रः प्रथमेनाह्ना व्यकरोत् विशिष्टं सम्बद्धं करोति प्रथमस्याह्नोऽनुष्ठानेन जनितमपूर्व्वं तत् सम्बद्धेः कारणमित्यर्थः यदिदं जङ्गमं मनुष्यवृक्षादिरूपं* प्राणान् श्वासं कुर्वन् एजति कम्पते भूम्यन्तरिक्षयोश्चलति

* मनुष्यपश्वादिरूपमिति पुस्तकान्तरपाठः ।

तदिदं द्वितीयेनाह्ना व्यकरोत् द्युलोकवर्त्तिवृष्टिनक्षत्रदेवताविग्रहादिकं यदस्ति तदह एवं तृतीयेनाह्ना व्यकरोत् ॥ १ ॥

अथ महाव्रतरूपतामापाद्य प्रशंसति ।

तदाहुर्ब्रह्मवादिनो महाव्रतं वा एतद्यदेष त्रिरात्र इति तस्यै तदेव मुखं यदेतेषामह्नां बहिष्पवमानं ये अभितोऽहनी तौ पक्षौ यन्मध्यममहः स आत्माग्निष्टोमसामानि पुच्छं ॥ २ ॥

अग्निचयनोपेतस्य महाव्रतक्रतोः सम्बन्धी योऽयं चित्योऽग्निस्तस्य मुखपक्षद्वयमध्यदेहपुच्छरूपाः पञ्चावयवाः तस्य सर्वस्य त्रिरात्रे सम्पादितत्वादयं त्रिरात्रो महाव्रतगतचित्याग्निभावतया कर्म्मफलसमृद्धिं ब्रुवतीत्यभिप्रायः ॥ २ ॥

प्रकारान्तरेण मुखपुच्छे निरूपयति ।

यदेवासावुदेति तन्मुखं ये अभितोऽहनी तौ पक्षौ यन्मध्यममहः स आत्माग्निः पुच्छं ॥ ३ ॥

बहिष्पवमानस्तोत्रात् प्रागेवासावादित्य उदेतीति यदस्ति तदेव मुखं आहवनीयाद्यग्निः पुच्छं ॥ ३ ॥

पुनरपि प्रकारान्तरेण पुच्छन्निरूपयति ।

यदेवासावुदेति तन्मुखं ये अभितोऽहनी तौ पक्षौ यन्मध्यममहः स आत्मा यदस्तमेति तत्पुच्छं ॥ ४ ॥

आदित्योऽस्तमितीति यदस्ति तच्च पुच्छमिति द्रष्टव्यम् त्रिरात्रस्य यदिदम्महाव्रतत्त्वसम्पादनन्तदिदमनुतिष्ठासोः प्ररोचनायोपयुक्तं अनुष्ठातुमशक्तस्य तु भावनया तत्र कश्चित्सुकृतविशेषो भवति अयमेव न्यायः सर्व्वेष्वर्थवादेष्वनुसन्धातव्यः एतदेवाभिप्रेत्य तत्र य एवं वेदेत्याम्नायते ॥ ४ ॥

अथ त्रिरात्रे प्रकारान्तरेण भावनां दर्शयति ।

**एतावान्वाव त्रिरात्रो गायत्रः प्राणस्त्रैष्टुभं चक्षुर्जागतं श्रोत्रं सर्व्वमायुरेति य एवं वेद ॥ ५ ॥**

यावान् गायत्र्यादिरस्ति एतावानेव त्रिरात्र इति भावयेत् त्रिरात्रे यानि गायत्रीत्रिष्टुब्जगतीरूपाणि सम्पद्यन्ते तत् सम्बन्धीनि पुरुषमुखवर्त्तीनि प्राणचक्षुःश्रोत्राणि तेषु छन्दःसु प्राणादीनां भावनीयत्वात् यः पुमानेवं वेद मनसा भावयति स पुमान् सर्व्वमायुरेति अस्यापमृत्युः न भवतीत्यर्थः ॥ ५ ॥

पुनरप्युत्तरोत्तराभ्यां त्रिरात्रस्य महिमानं विशदयति ।

**तदाहुर्ब्रह्मवादिनः कियतस्त्रिरात्रइतीयानिति ब्रूयादियद्धेतदभ्यथो इयानिति ब्रूयादियद्ध्येवैतदभिपरा३ङ्वा३ङित्याहुः पराङिति ब्रूयात्पराङ्हि वदति पराङ् पश्यति पराङ्प्राणित्येका३द्वा३उत्तया३इत्याहुरेक इति ब्रूयात् समानो ह्येष यत् प्राणोपानोव्यानस्तद्यथा अदोमनौ सूत्रमोतमेवमेषु लोकेषु त्रिरात्र ओतः शोभतेऽस्य मुखं य एवं वेद ॥ ६ ॥**

कियानिति पृच्छतां ब्रह्मवादिनां अयमभिप्रायः इदं वाव प्रथमेनाह्ना इत्यादिना त्रैलोक्यवर्त्तिभोग्यपदार्थसम्बद्धिहेतुस्त्रि-रात्र इत्युक्तम् किन्तावानेव त्रिरात्रोभावयितव्यः किम्वा ततो-ऽप्यधिक इति इयानेव त्रिरात्रोध्यातव्यो नत्वधिक इति ब्रह्म-वादिनां गुरुरुत्तरं ब्रूयात् तत्रोपपत्तिरियध्येति वाक्येनोच्यते यद्यस्मादयं लोकत्रयपरिमितमेतद्भोग्यजातमभिलक्ष्य त्रिरात्रः प्रवृत्तः तस्मादियानेव ध्यातव्यः अथो अपिच महाव्रतरूपत्वेन च विधानमुक्तं तत् सर्व्वत्र कियानिति प्रश्नश्चेदाशंक्य तत्तदानी-मियानित्येवोत्तरमुक्त्वोपपादयेत् वाचनिकेषु दानादिषु यथा-वचनमनुतिष्ठेत नपुनः संशयः कर्त्तव्यइत्यर्थः अयं त्रिरात्रः पराङ् चार्वाङ चेति प्रश्नस्य पराङित्युत्तरं परमुत्कर्षमञ्चति गच्छ-त्यनेनेति पराङुत्कृष्टफलप्राप्तिहेतुरिति ध्यायेत् नत्वर्व्वाङधम-इत्यर्थः हि यस्मादयमनुष्ठाता फलकाले पराङुत्कर्षप्राप्तः सन् वदनदर्शनप्राशनादिव्यवहारं करोति नतु कस्मिंश्चिदपि व्यव-हारे प्रकृष्टो भवति तस्मात्फलहेतुः त्रिरात्रः पराङिति ध्यायेत् एकोद्वौत्रयमयं त्रिरात्रात्मकः क्रतुः एकएव उत तिसृषु रात्रिषु त्रयः क्रतवइति प्रश्नः तस्यैकइत्युत्तरं हि यस्मात्प्राणोपानोव्यान इत्येवं वृत्तित्रयरूपेण वायुः स्वरूपं वर्त्तते सवायुस्तिसृष्वपि वृत्तिषु समान एकस्तद्वदयं क्रतुरित्यर्थः यथेत्यादिनान्यो दृष्टान्त उक्तः अदः कार्पासादिजनितं सूत्रं मणौ मणिसमूहे यथा ओतमनु-स्यूतं तद्वत् क्रतुफले लोकत्रयसाधनभूतः क्रतुरनुगतः य एवं वेद ध्यायति अस्य देवताशरीरं प्राप्तस्य सुखं शोभते ॥ ६ ॥

सर्व्वत्र त्रिरात्रस्य त्रैष्टुभं जागतमित्येव क्रमेण त्रीण्यहानि

न्यायतः प्राप्नोति अत्र तु मध्यममहर्जागतमित्येकदेशवैलक्षण्यं दर्शयति।

यद्वै त्रिरात्रस्य सलोम तदस्य विलोम यदस्य विलोम तदस्य सलोम तद्यदेतत्परं सदहरवरं क्रियते यजमानायैव तत्पशून् परिगृह्णाति प्रजननाय नह्यमुष्मिन् लोके पशवः प्रजायन्ते ॥ ७॥

अनुकूलमनुष्ठानं सलोमेत्युच्यते तद्विपरीतं तु विलोमेति तथा सति तस्य सर्वस्य त्रिरात्रस्य न्यायप्राप्तं यत् सलोमानुष्ठानं जागतावसानमस्ति तदस्य गर्गत्रिरात्रस्य विलोम भवति अत्रास्मिन् गर्गत्रिरात्रे जागतस्याह्नोमध्यमत्वात् यत् पुनरस्येतरं त्रिरात्रस्य विलोमरूपं जागतं मध्यमत्वमस्ति तदस्य गर्गत्रिरात्रस्य सलोम भवति तस्मिन् गर्गत्रिरात्रे परं स तृतीयप्राप्तियुक्तं सज्जागतमहरवरं मध्यमं क्रियतइति यदेतदस्ति तत्तेन मध्यमत्वकरणेन यजमानार्थमेव पशून् पशुसमूहं परिगृह्णाति पशूनां जागतत्वात् जगतीछन्दसां पशव्यतामिति श्रुत्यन्तरात् सच पशुपरिग्रहः प्रजननाय बहुपशूत्पादनाय संपद्यते जागतस्याह्नस्तृतीयत्वेतु तस्य तृतीयस्याह्नोद्युलोकरूपत्वात्पशुप्रजननं सम्भवति द्युलोके ह्यमृतं पीत्वा तृप्ता देवा गवादिपशून् सम्पादयति॥ ७॥

प्रकारान्तरेण प्रशंसति।

एते वाव छन्दसां वीर्य्यवत्तमे यद्गायत्री च त्रिष्टुप् च

यद्देते अभितो भवतो मध्ये जगतीवीर्य्यवतीभ्यामेव तच्छ-न्दोभ्यां पशून् परिगृह्णाति प्रजननाय न ह्यमुष्मिन् लोके पशवः प्रजायन्ते ॥ ८ ॥

गायत्रीत्रिष्टुप् चेति यत् छन्दोद्वयमस्ति एते छन्दसी उभे एव सर्व्वेषां छन्दसां वीर्य्यातिशयोपेते तत्र गायत्र्याः सोमाहरणेन वीर्य्यवत्त्वं द्रष्टव्यं त्रिष्टुभस्तु वीर्य्यवत्त्वं सर्व्वश्रुतिप्रसिद्धं एते गाय-त्रीत्रिष्टुभावभितस्तृतीययोरह्नोर्भवतः मध्यमेऽहनि जगतीं भवति इति यदस्ति तत्तेन त्रिविधानुष्ठानेन मध्यंदिनवर्त्तिजगती सम्पा-दितवान् पशूनुभाभ्यां वीर्य्यं तच्छन्दोभ्यां परिगृह्णाति परिपाल-यति अन्यत् पूर्व्ववत् ॥ ८ ॥

अथ त्रिरात्रस्यादित्यरूपेण ध्यानमाह ।

असौ वाव त्रिरात्रो यथोदेत्येवं प्रथममहर्यथा मध्य-न्दिन एवं द्वितीयं यथाऽस्तमेत्येवं तृतीयङ्गच्छत्यमुष्य सायु-ज्यङ्गच्छति सावेश्यं य एवं वेद ॥ ९ ॥

असौ द्युलोकवर्त्ती सूर्य्य एव त्रिरात्रस्वरूपः यथादित्यस्योद-यमध्यन्दिनास्तमयास्तथास्यापि क्रतोस्त्रीण्यहानि सन्ति क्रता-वादित्यस्य दृष्टिः कर्त्तव्या त्रिष्वहःसु उदयादिदृष्टिरित्यर्थः यः पुमानेवं वेद ध्यायति स पुनर्ध्यानेनामुष्य सूर्य्यस्य सायुज्यं गच्छति इति ॥

वेदार्थस्य प्रकाशेन तमोहार्दन्निवारयन् ।
पुमर्थांश्चतुरोदेयात् विद्यातीर्थमहेश्वरः ॥ ९ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्क-
भूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माध-
वीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे
विंशाध्यायस्य षोड़शः खण्डः।

विंशोऽध्यायः समाप्तिमगमत्॥

---

## अथैकविंशोऽध्यायः ।

### अथ प्रथमः खण्डः ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलञ्जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथैकविंशोध्याय आरभ्यते । तत्र गर्गत्रिरात्रस्य यद्दक्षिणारूपं गोसहस्रं पूर्व्वमुक्तं या चोक्ता सहस्रतमी तयोः प्रशंसार्थमाख्यायिकानाम आह ।

इन्द्रोमरुतः सहस्रमजिनात् स्वां विश्रं सोमाय राज्ञे प्रोच्य तस्माद्राज्ञे प्रोच्य विश्रं जिनन्ति तौ यमोऽपश्यणोन्मरुतोह सहस्रमिज्याहष्टामिति स आगच्छत्सोऽब्रवीदुपमास्मिन् सहस्रे कयेथामिति तमुपाकयेताꣳ सयमोऽपश्यदेकाङ्गाꣳ सहस्रे पि सहस्रस्य पयोबिभ्रतीꣳ सोऽब्रवीदियमेव ममास्तु सहस्रं युवां विकल्पयेथामिति तावब्रूतां यथावाव त्वमेतां पश्यस्येवमावमेतां पश्याव इति ॥ १ ॥

इन्द्रः पूर्वं सोमाय राज्ञे प्रोच्य गोसहस्रजयलक्षणं फलमावयोः सहास्त्विति कथयित्वा सहस्रं सहस्रसंख्याकान्मरुतः अजिनात् हीनानकरोत् ज्यावयोहानौ अत्र हानिमात्रे प्रवर्त्तते जितवानित्यर्थः तदेवाह स्वां विश्रमिति स्वीयां प्रजामित्यर्थः

एतदुक्तं भवति स्वप्रजाभूतमरुत्सहस्रं जित्वा गोसहस्रं लब्धवानित्यर्थः यद्वा मरुतः सहस्रमिति अधिकरणनिर्देशः मरुतः सकाशात् गोसहस्रमजिनादित्यर्थः यस्मादेवं तस्मादिदानीमिता अपि राज्ञे प्रोच्य विज्ञप्यैवं विशः स्वां प्रजां गवादिधनार्थं निरुन्धन्ति ताविन्द्रसोमौ यमोऽश्रृणोत् किमिति मरुतः खलु सहस्रं इज्यासृष्टामलभेतामिति स यमस्तु आगच्छत् तयोरन्तरितो यमस्तावब्रवीत् अस्मिन् गोसहस्रे मा मां उपह्वयेथामिति तौ च तमुपाह्वयेतां स उपहूतोयमः अपश्यत् किं एकाङ्गां सहस्रेपि कीदृशीं सहस्रस्य पयः गोसहस्रे यावत्पयोस्ति तावत् समृद्धिं पयोबिभ्रतीं स तां दृष्ट्वा इयमेव ममास्तु युवां सहस्रं विकल्पयेथां विभजेयामित्यब्रवीत् तावपि पुनरेवाब्रूतां तु यथा वाव त्वमेतां पश्यसि एवमेवास्मदर्थं पश्याव इति ॥ १ ॥

अथ तेषां समविभागकल्पनाप्रकारमाह ।

**तया वा इद१ँ सहस्रं विकल्पयामहा इत्यब्रुव१ँस्तामुदके प्रावेशय१ँस्तेऽब्रुवन्न१ँशानाहरामहै यस्मै न इयं प्रथमायोद्धेष्यति इति ते१ँशानाहरन्त सोमस्य प्रथम ऐदथेन्द्रस्याथ यमस्य ॥ २ ॥**

विभागम्भे इति विविधमेतास्ते समविभागप्राप्त्यर्थंतया वैतया सहस्रतस्या सह इदं गोसहस्रं विकल्पयामहै विभजामहाइत्यब्रुवन् तथोक्तां तामेकाङ्गां विभागकल्पनायोदके प्रावेशयन् तदनन्तरन्तेऽंशायैयमब्रुवन् किमिति नो अस्माकम्मध्ये यस्मै प्रथमाय

प्रथमविभागाय उदेष्यति जलादुन्नमिष्यति ते वयं गोसहस्रस्य सहस्रतम्यायांशानाहरामहै कल्पयामहाइति एवमित्थं सम्भाष्य अंशानाहरन्त तत्र प्रथमे अंशे सोमं ऐत् सोममागच्छत् अथ इन्द्रस्य अथ यमस्य ॥ २ ॥

अथ गोसहस्रस्य सहस्रतम्याश्च भागत्रयसाम्ये च सोमप्राप्तिं दर्शयति ।

तेऽब्रुवन् सोमाय राज्ञ उदेहि तृतीयेन चात्मनस्तृतीयेन च सहस्रस्य पयस इति साबभ्रुः पिङ्गाक्ष्येकवर्षोदैत्तृतीयेन चात्मनस्तृतीयेन च सहस्रस्य पयसः सा या सोमक्रयणी सैव सा ॥ ३ ॥

ते विभागक्रमकल्पनानन्तरमब्रुवन् हे सहस्रतमि सोमराज्ञे प्रथमं उदेहि जलादुन्नच्छ किं विशिष्टा सती आत्मनस्तव तृतीयेनांशेन च गोसहस्रस्य च पयसः तृतीयेनांशेन सहिता सती इति एवमुक्ता सा सहस्रतमी स्वतृतीयांशेन बभ्रुररुणवर्णा पिङ्गाक्षी एकवर्षा सती उदैत् तैर्य्यथा प्रार्थितं तथोवेत्युक्तं भवति तृतीयेन चात्मन इत्यादिना अस्याः सोमांशरूपत्वात् सोमक्रयणीत्वमाह या सा सोमक्रयणी इदानीन्तनैः सोमक्रेतृभिः तत्साधनत्वं तु कल्पते सैव सोमक्रयणी सा जलादुन्नता बभ्र्वादिलक्षणोपेतेत्यर्थः ॥ ३ ॥

अथोक्तार्थज्ञानपुरःसरं क्रयणं प्रशंसति ।

तृतीयेन चास्य तस्या आत्मनस्तृतीयेन च सहस्रस्य

पयसः सोमः क्रीतो भवति य एवं विद्वान् सोमं क्रीणाति यस्मा एवं विदुषे सोमं क्रीणन्ति ॥ ४ ॥

तस्याः बभ्र्वादिलक्षणाया अस्या आत्मनः स्वरूपस्य तृतीयेन भागेन गोसहस्रस्य पयसस्तृतीयांशेन च सोमः क्रीतो भवति इदानीन्तनैः योगवा क्रीतोपि यएवमादि स्पष्टं ॥ ४ ॥

अथेन्द्रभागप्राप्तिं दर्शयति।

तेऽब्रुवन्निन्द्रायोदेहि तृतीयेन चात्मनस्तृतीयेन च सहस्रस्य पयस इति सा शबलीपष्ठौ ह्युदैत् तृतीयेन चात्मनस्तृतीयेन च सहस्रस्य पयसः सा येन्द्रियैष्या सैव सा ॥५॥

पूर्ववद्व्याख्येयं इयांस्तु विशेषः इन्द्रियैष्या इन्द्रियं इन्द्राय हितं वा तदेताववगम्यते पिङ्गाक्ष्येकहायन्या सोमः क्रेतव्य इति तदर्थंतस्या एषणीया दातव्येत्यर्थः पष्ठौहीतु प्रसिद्धा चिवर्षा गौरिति ॥ ५ ॥

अथोक्तार्थवेदनपुरःसरमिन्द्रियैष्यादत्तं प्रशंसति।

तृतीयेन चास्य तस्या आत्मनस्तृतीयेन च सहस्रस्य पयस इन्द्रियैष्या दत्ता भवति य एवं विद्वानिन्द्रियैष्यां ददाति यस्मा एवं विदुष इन्द्रियैष्यां ददति ॥ ६ ॥

अन्यस्या अपि इन्द्रियैष्यायाः गोदानेऽपि गोसहस्रतृतीयांशपयोयुक्ता सहस्रतमी तृतीयांशभूतोक्तलक्षणैस्तैरेव दत्ता भवति ॥ ६ ॥

अथ यमस्य स्वांशप्राप्तिं दर्शयति ।

तेऽब्रुवन्यमायोदेहि तृतीयेन चात्मनस्तृतीयेन च सहस्रस्य पयस इति सा जरती कुष्टाऽशृङ्ग्युदैद्धूम्रा वादित्यौहीर्ष्मतोहसीयसी तृतीयेन च सहस्रस्य पयसः सा यानुस्तरणी सैव सा ॥७॥

पूर्ववद्व्याख्येयं जरतीति जरसा युक्ता कुष्टा कुष्टवर्णा अशृङ्गी शृङ्गरहिता उदैत् उदगच्छत् वर्णावान्तरप्रसिद्धतरं दर्शयति वा अथवा धूम्रा धूम्रवर्णादित्यौहीर्मत ईर्ष्मतो जघनप्रदेशतोहसीयसी अत्यन्तं ह्रासयुक्ता करोतीत्यर्थः ईर्ष्मन्तासः सिलिकमध्यमासइत्यादौ तथा दर्शनात् यद्वा इर्ष्मं व्रणं तत् करोतीत्यर्थः सोदैदिति सम्बन्धः अनुस्तरणीं मृतसंस्कारार्थमुपाकरणीया गौरमृतमनुहन्यत इत्यनुस्तरणीति च निवृत्तपत्नी भवति ॥ ७ ॥

उक्तार्थस्यानुस्तरणीकरणं प्रशंसति ।

तृतीयेन चास्य तस्या आत्मनस्तृतीयेन च सहस्रस्य पयसोनुस्तरणीन्तता भवति य एवं विद्वाननुस्तरणीं करोति यस्मा एवं विदुषेऽनुस्तरणीङ्कुर्व्वन्ति नाचक्रवान्मन्यते ॥८॥

यदुक्तार्थाभिज्ञोऽनुस्तरणीं ददाति अप्यस्मै वा दुक्तार्थज्ञायानुस्तरणीं कुर्वन्ति तेनोभयविधेनोपलक्षणानुस्तरण्येव कृता भवति किञ्च सोऽर्थज्ञः स्वयं आत्मानं उक्तलक्षणानुस्तरणीदान-

सहस्रत्वा चकृवानिति न मन्यते किन्तु विहितामेव कृतवानस्मीति मन्यते ॥ ८ ॥

अथ ब्रह्मवादिनः प्रश्नावतारणमुखेन गर्गत्रिरात्रस्य गोसहस्रदक्षिणादातृप्रशंसाद्वारेण त्रिरात्रगतं दानं प्रशंसति ।

तदाहुर्ब्रह्मवादिनो न वा अमुष्मिन् लोके सहस्रयाडलोकोऽस्तीति तद्व्यावदितः सहस्रास्य गौर्गवि प्रतिष्ठिता तावदस्माल्लोकादसौ लोकः सहस्रयाजी वा इमान् लोकान् व्याप्नोत्यथो यावत् सहस्रं योजनान्यथो यावत् सहस्रमाश्वीनान्यथो यावत् सहस्रमङ्गानि तद्वा गवास्पृणोति समाक्रमणाय वा एतादीयन्ते ॥ ९ ॥

तत्र गोसहस्रदक्षिणकत्रिरात्रविषये आहुः ब्रह्मवादिनः अमुष्मिन् लोके भूलोकव्यतिरिक्ते फलत्वेन प्राप्तव्येषु लोकेष्वित्यर्थः सहस्रयाट् सहस्रदक्षिणोपेतगर्गत्रिरात्रावयवा अलोकः प्राप्तव्यलोकरहित इत्यर्थः तादृशो नैवास्ति सर्वोप्यस्य च भोगोपविषयो भवति तद्य इत्युक्तं भवति तत्तस्मात् यावदिमस्मान् लोकान् सहस्रस्य सम्बन्धिनी एकैका गौः एकस्यामेकस्याङ्गवि प्रतिष्ठिता तावत्तावन्तोऽस्मात् लोकादारभ्यासौ लोक अमी गन्तव्या उपर्युपरि लोका इत्यर्थः अस्त्वेवं किं तत इत्याह सहस्रयाजी खलु इमान् गोसंख्यापरिमितान् लोकान् क्रमेण भोगाय व्याप्नोति तदेवोपपादयति अथो अपि च योजनानि सहस्रं यावत्परिमाणं भूस्वर्गयोरन्तरालमस्ति अथो अपि च आश्वीनानि

एकस्मिन्दिने एकस्य शीघ्रगामिनोऽश्वस्य सम्बन्धीनि योजना-याश्वीनानि तेषाञ्च सहस्रं यावद्भवति अथो अपि च अह्नयानि अह:सम्बन्धीनि एकस्मिन्नहनि शीघ्रगामिना पुरुषेण गन्तव्यानि योजनान्यह्वानि तेषाञ्च सहस्रं यावत्परिमाणं भवति ताव-द्योजनानि गवा गवां सहस्रमध्ये एकैकया गवा एकैकयोजन-स्याक्रमणं युक्तमित्यर्थः ॥ ९ ॥

अथ दक्षिणारूपस्य गोसहस्रस्य परि तार्य्याच्छादनं विधत्ते ।

**सहस्रं यदसृजत तस्य तार्यं योनिरासीद्यत्तार्यं प्रत्यस्य नयति सयोनित्वाय ॥ १० ॥**

यद्गोसहस्रमसृजत तद्दक्षिणार्थं सृष्टमनु तत्तस्य तार्य्यं घृता-दिकं वस्तु तार्य्यमाहुः अन्ये चाहतं वस्त्रमाहुः तद्योनिर्योनिवदा-च्छादक आसीदतस्तार्य्यं गोसहस्रस्य तर्पणभूतस्य सहस्रतमी-रूपस्य वा तार्य्यं प्रत्यस्य विधानं नयति नाग्नीध्रं प्रापयति सयो-नित्वाय अत्रापस्तम्बः तामुदीचीमाग्नीध्रं नीत्वा तस्याश्रमतार्य्य-मध्यास्यति इति ॥ १० ॥

इति ताण्ड्यमहाब्राह्मणे एकविंशाध्यायस्य
प्रथमः खण्डः ।

---

अथ द्वितीयः खण्डः ।

अथ त्रीण्याज्यदोहानि प्रशंसितुमाख्यायिकामाह ।

**प्रजापतिः प्रजा असृजत ता अस्मात् सृष्टाः पराच्य**

आयन्नत्स्यति न इति बिभ्यत्यः सोऽब्रवीदुप मावर्त्तध्वं तथा वै वोत्स्यामि यथाद्यमाना भूयस्यः प्रजनिष्यथ इति ताभ्यो-वैन ऋतं ब्रूहीत्यब्रुवꣳस्ताभ्य ऋतनिधनेनर्त्तमब्रवीदी-निधनेनावयत्त्रिणिधनेन प्राजनयदेतैर्वा इदꣳसामभि-र्मृत्युः प्रजा अत्ति च प्रजनयति ॥ १ ॥

पूर्व्वं प्रजापतिः ताः सृष्टाः प्रजाः स्वयमेव नः अस्मान् अत्स्यति संहरिष्यति इति तद्भक्षणाद्बिभ्यत्यः पराच्यः आयन् आगताः प्रजा-पतिरेवमब्रवीत् मा मामुपावर्त्तध्वमिति एवमुक्ता ताः प्रजाः ताभ्यो बिभ्यतीभ्यो नो अस्माकं वै खलु ऋतं सत्यं शपथं ब्रूहीत्यब्रुवन् ताभ्यः प्रजापति आज्यदोहे गतेन ऋतनिधनेन ऋतं सत्यं वचन-मब्रवीत् तत ई इति निधनेनावयत् पुनश्च त्रिणिधनेन प्राजनयत् उक्तनिधनवता साम्ना सहास्तृणोत् साधनत्वमिदानीन्तनप्रसिध्या-ह्वयति एतैः खल्वाज्यदोहैः सामभिर्मृत्युः प्राणिहिंसोपाधिकः प्रजापतिः प्रजामत्ति च एतैरेव प्रजनयति पुनरुत्पादयति ॥१॥

इदानीमपि उक्तार्थवेदिनं प्रशंसति ।

अद्यमानमस्य भूयो भवति य एवं वेद ॥ २ ॥

उक्तार्थज्ञेनाद्यमानमप्यसम्भूय पुनः पुनः प्रकृतमेव भवति न कदाचिदपि चीयते ॥ २ ॥

तानि पुनः प्रकारान्तरेण प्रशंसति ।

ज्येष्ठसामानि वा एतानि श्रेष्ठसामानि प्रजापतिसा-मानि ॥ ३ ॥

एतान्याज्यदोहानि साम्नाम्मध्ये ज्येष्ठानि प्रथमभूतानि खलु तथा श्रेष्ठसामानि गुणैः प्रशस्तानि तत् कथमिति तदाह आदित एतानि प्रजापतिसामानि अतः प्रजापतेर्ज्येष्ठत्वाच्च तत्सम्बन्धा-देवान्यान्यपि तथाविधानीत्यभिप्रायः ॥ ३ ॥

वेदनं प्रशंसति ।

गच्छति ज्यैष्ठ्यꣳ श्रैष्ठ्यं य एवं वेद ॥ ४ ॥

स्पष्टोऽर्थः । ४ ।

अथ निर्वचनद्वारा एतानि प्रशंसति ।

एतैर्वै सामभिः प्रजापतिरिमान् लोकान् सर्वान् कामान् दुग्ध यदाज्या दुग्ध तदाज्या दोहानामाज्या दोहत्वं ॥ ५ ॥

पूर्व्वं प्रजापतिरेतैः सामभिरिमान् लोकान् तेषां जीवनाय सर्वान् कामान् कमनीयान् भोगान् दुग्ध यद्यस्मादाज्या लौकिको दोग्धा जानुनीमाज्य दुग्धे तत् प्रजापतिरपि जानुनी चक्रे कृत्वा सोमाभ्यां दुग्ध तत् तस्मादाज्यदोहानां साम्नामाज्य-दोहत्वं सम्पन्नं ॥ ५ ॥

उक्तार्थज्ञानपूर्वकमुक्तसाम्नां प्रयोगं प्रशंसति ।

सर्वानिमान् लोकान् कामान् दुग्धे य एवं विद्वानेतः सामभिः स्तुते ॥ ६ ॥

एतावता एतैः स्तोतव्यमिति विधिरुन्नीयते ॥ ६ ॥

अथ विहितसामत्रयं लोकत्रयरूपत्वेन प्रशंसति ।

इमे वै लोका एतानि सामान्ययमेवर्त्तंनिधनमन्तरिक्षमीनिधनं द्यौस्त्रिणिधनं ॥ ७ ॥

भूलोकस्य सर्व्वैरनुभूयमानत्वेन सत्यत्वादृतो निष्पन्नसामस्थानत्वं युक्तमन्तरिक्षस्य निराश्रयत्वात् ईनिधनं स्वरैकाक्षरत्वेन कृतनिधनद्वयं वैषम्येणास्ते तत्साहश्यं द्युलोकस्य क्षित्यपेक्षया तृतीयत्वात् त्रिणिधनसाम्यम् ॥ ७ ॥

अथोक्तार्थज्ञानं प्रशंसति ।

यथा क्षेत्रज्ञः क्षेत्राण्यनुसञ्चरत्येवमिमान् लोकाननुसञ्चरति य एवं वेद ॥ ८ ॥

स्पष्टं । ८ ।

अथैतेषां गाने अग्निसान्निध्यं विवक्षुराह ।

अग्नेर्वा एतानि वैश्वानरस्य सामानि यत्र वा एतैरश्रान्तैः स्तुवन्ति तत् प्रजा देवोघातुको भवत्यग्निमुपनिधाय स्तुवते स्वाया एव तद्देवतायाः साम्येक्षाय नमस्कृत्योद्गायति श्रान्तैः स्तुवन्ति ॥ ९ ॥

एतान्याज्यदोहानि अग्नेर्वैश्वानरस्य सम्बन्धीनि खलु अतो यत्र यत्र हि यज्ञे अश्रान्तैः सामभिः स्तुवन्ति तत्र तत्र देवोऽग्निः प्रजाघातुको हि प्रजाहिंसनशीलोभवति अतस्तत्परिहारायाग्नि-

मुपनिधाय स्तुवते स्तुयुरित्यर्थः तत् किं कृतं भवति तत्राह तथा-सति स्वाया एव एतेषां साम्नां या देवता तस्या एव साम्येत्वाय समदृष्टित्वाय नमस्कृत्योद्गायति तथा सति शान्तैरेव स्तुवन्ति कस्य स्तोत्रसमये कः पुनरग्निः कथं वा तस्य निधनमिति तत्सर्वं सूत्रकार आह आज्यदोहानामग्निमुपनिधाय स्तुवते होतुर्धिष्ण्योऽग्निं धारयेयुः प्रथमेऽहनि यन्माध्यन्दिन आनयेयुः प्रातःसवन उत्तरयोरह्नोः स्तोत्रवेलायामिनं प्रज्वलयेयुरिति आज्यदोहानामित्यादेरयमर्थः गर्गत्रिरात्रमग्निमुपनिधाय स्तुवत इति यत् तदेतदाज्यदोहानान्तदङ्गत्वेनाग्निनिधानमित्यर्थः होतु-र्धिष्ण्य इति प्रथमेऽहनि अर्भवपवमाने कृतनिधनमाज्यदोहन्तस्य गानकाले होतुर्धिष्ण्ये अग्निं धारयेयुः यमग्निं माध्यन्दिन-पवमाने अग्नीनग्नीन्विहरेति प्रैषकाले होतुर्धिष्ण्ये आनयति तमग्निन्तदा प्रभृत्याज्यदोहकालं यावद्धारयेयुरित्यर्थः प्रातः-सवन उत्तरयोरिति उत्तरयोरह्नोः प्रातःसवने यमग्निं धारयन्ति तन्माध्यन्दिनं पवमानं यावद्धारयेयुः तत्र स्थानत्वादाज्यदोह-योरिति त्र्यहःसु स्तुतिकालेऽग्निं प्रज्वलयेयुरिति ॥ ९ ॥

इति ताण्ड्यमहाब्राह्मणे एकविंशाध्यायस्य
द्वितीयः खण्डः।

---

अथ तृतीयः खण्डः।

अथ शबलीहोमं विधित्सुराह।

वाग्वै शबली तस्यास्त्रिरात्रो वत्सस्त्रिरात्रो वा एतां प्रदापयति ॥ १ ॥

शबली कामधेनुः सा वाग्वै स्तुतिरूपभागाभिमानिदेवतैव तस्यायो गर्गत्रिरात्रः स एव वत्सस्थानीयः कथमिति तदुपपादयति एतां शबलीं त्रिरात्रः खलु प्रदापयति पयःस्थानीयंफलमिति शेषः तत् त्रिरात्रयाजिनायं होमः कर्त्तव्य इत्युक्तं भवति ॥ १ ॥

उक्तार्थवेदनं प्रशंसति ।

**तद्य एवं वेद तस्मा एषा प्रत्ता दुग्धे ॥ २ ॥**

यत् शबल्या वाग्रूपत्वं त्रिरात्रस्य वाग्रूपवत्सत्वं योवेद तस्मा एषा कामधुग्रूपा शबली अप्रत्ता स्वादुपायसादिप्रदाननिरपेक्षैव सती दुग्धेइति मतं फलं ॥ २ ॥

अथास्य फलमाह ।

**योऽलमन्नाद्याय सन्नथान्नन्नाद्यात् ॥ ३ ॥**

अन्नाद्यन्नाम पश्वाद्युपभोगः योविद्यातपोभ्यां सहस्रपोषार्होऽपि सहस्रं न प्राप्नोति स जुहुयादित्यर्थः । अत्र धानञ्जय्यः या वाग्वै शबली तस्यास्त्रिरात्रोवत्स इति श्रुतेः त्रिरात्रयाजिनएव सहस्रपोषका अस्यायं होम इति मन्यते, शाण्डिल्यस्तु प्रजापतिर्वा इदमेक आसीत्तस्य वागेव स्वमासीदित्यादिना त्रिरात्रस्य वत्सत्वं शबल्या मातृत्वं यत्पूर्वं दर्शितं तस्य विज्ञानप्रशंसार्थं वाग्वै शबलीतिश्रुतिः अतोऽधिकारवाक्ये विशेषाश्रवणादादिष्टत्रिरात्रस्यापि सहस्रपोषकार्योऽयं होम इत्याह, तथा च सूत्रं सहस्रपोषकामः शबलीहोमं कुर्व्वीत न त्रिरात्रयाजीति शाण्डिल्यस्त्रिरात्रो वा एतां प्रदापयतीति ह्याह यः कश्च सहस्र-

पोषकाम इति धानञ्जप्योऽयोऽलमन्नाद्याय सन्नथान्नाद्यादिति॥३॥

अथ शबलीहोमाङ्गं व्रतमाह ।

वरासीं परिधाय तप्तं पिबन् द्वादशरात्रीरधः शयीत ॥ ४ ॥

अहतं वासो वरासी तप्तं क्षीरमिति शेषः अत्र सूत्रं वसन्ते प्रथमायां पूर्वपक्षस्य केशश्मश्रूणि वापयित्वाऽहतं वसनं परिधायानन्तर्हिते स्थण्डिले द्वादशरात्रीरधः शयीत तप्तं क्षीरम्पिबन्नित्याभ्याहितोस्याग्निरावसथे स्यान्नैनमन्यसुहृदः प्रैषं कृत्वानुप्रविशेदल्पव्याहारी च स्यादिति प्रैषकृत् कर्म्मकारं सकृत् अल्पव्याहारी यावदर्थभाषी स्पष्टमन्यत् ॥ ४ ॥

अथ शबलीहोमन्तदाह्वानञ्चाह ।

या द्वादशी स्यात्तस्या उपव्यूषꣳ शबलीहोमꣳ हुत्वा पुरा वाग्भ्यः सम्प्रवदितोर्यत्र ग्राम्यस्य पशोर्न्नाशृणुयात्तदरण्यं परेत्य दर्भस्तम्बमालभ्य शबलि शबलीति त्रिराह्वयेद्यदन्यच्छुनश्च गर्द्दभाच्च प्रतिवाश्यते सा समृद्धा ॥ ५ ॥

पूर्व्वमुक्तस्य द्वादशरात्रस्य यान्त्या रात्रिः स्यादवद्यु पुरुषकाले एव शबलीहोमं हुत्वा अनन्तरमेव वाक्संप्रदानात् पूर्वं यत्र ग्राम्यस्य पशोः ध्वनिर्न्न श्रूयते तदरण्यं उच्यते तत्परेत्य दर्भस्तम्बं संस्पृश्य शबलीति त्रिराह्वयेत् यदि पुनः गर्द्दभाच्चान्यः पशुः जात्या यः प्रतिवाश्यते प्रतिशब्दं करोति साह्वानं किल समृद्धेति जानीयात् ॥ ५ ॥

अथोक्तप्रतिवासनाभावउपायमाह ॥

यदि न प्रतिवाश्येत संवत्सरे पुनराक्रयेत् ॥ ६ ॥

स्पष्टोऽर्थः । अत्र सूत्रम् द्वादश्या उपव्यूषं परिसमुह्याग्निं परिस्तीर्य्यौदुम्बरदन्तः स्यात् स्रुक्स्रुवौ च तथा चमसस्तस्मादधि-मधुसर्पिरिति स्रुवेण स्रुचि गृह्णीयाच्चतुर्गृहीतमष्टगृहीतं वा जुहुयाच्छबलि समुद्रोसीति स्वाहाकारेणोत्तरां स्रुचि यः शेषः स्यात्तं चमस आनीय प्राश्नीयात् प्रक्षाल्य स्रुक्स्रुवौ चमसञ्च निद-ध्यात्तत्रैवानुप्रहरेदिति शाण्डिल्यायनः प्राङ्वोदङ्वा ग्रामान्निष्क्रम्य ग्राम्यस्य पशोर्नाशृणुयात्तदरण्यं परेत्य दर्भस्तम्बमालभ्य शबलि-शबलीति त्रिः परमकष्टेन क्रोशेद्यदन्यच्छुनोगर्दभोवा प्रतिवाश्येत समृद्धं कर्म्मेति विद्यादेवमावृतीयं संवत्सराभ्यामप्रतिवाश्यमाने कुर्वीत प्रथमतश्चेत्तु श्वा गर्दभोवा प्रतिवाश्येत नपगूनामा-शास्तीति विद्यादावृतीयं चाप्रतिवाश्यमाने शान्तिर्व्वासदेव्य-मिति ॥ ६ ॥

अथ होममन्त्रमाह ॥

शबलि समुद्रोसि विश्वव्यचा ब्रह्म देवानां प्रथमजा ऋतस्यान्नमसि शुक्रमसि तेजोस्यमृतमसि तां त्वा विद्म शबलि दीद्यानान्तस्यास्ते पृथिवी पादोन्तरिक्षं पादोद्यौः पादः समुद्रः पाद एषासि शबलि तां त्वा विद्मसानइष-मूर्जंधुक्ष्व वसोर्धाराꣳशबलि प्रजानाꣳशचिष्ठा व्रतमनु-गेषꣳ स्वाहा ॥ ७ ॥

हे शबलि विश्वव्यचा सर्व्वत्र व्याप्ता च समुद्रोसि समुद्र-स्थानीया भवसि फलानां समुद्रवर्णसाधना भवसीत्यर्थः यद्वा वाग्वै शवलीत्युक्तत्वाद्वाग्वै समुद्रइति श्रुतेरतः समुद्ररूपत्वम् तथा ब्रह्म परिमूढ़ासि देवानाम्मध्ये ऋतस्य सत्यभूतस्य ब्रह्मणः प्रथ-मजा प्रथमोत्पन्ना भवसि हिरण्यगर्भः समवर्त्ततात्रे इत्यादिश्रुतेः ब्रह्मणऋतस्य प्रथमजत्वं तस्य स्वभूतत्वादेवापि प्रथमजा इत्यु-च्यते किञ्च त्वं अन्नमसि धेनुरूपत्वात् शुक्रं दीप्तमसि अतएव तेजोसि अमृतमसि कदाचिदपि मरणरहितासि हे शबलि दीव्यानां द्योतमानान्तामुक्तमहिमोपेतां त्वा त्वां विजानीमस्त-स्यास्तत्तरूपायास्ते पृथिव्यादिसमुद्रान्ताश्चत्वारः पादाः हे शवलि त्वं एषा निर्द्दिष्टप्रकारासीति तां तादृशीं विद्म वयं सा तादृशी त्वं नो अस्मभ्यं इषमन्नं ऊर्जञ्च धुक्ष्व किञ्च हे शवलि शचिष्ठा अतिशयेन शक्तिमती ह्यस्माकं प्रजानाञ्च सर्व्वेषु नो धारां धुक्ष्व अहं व्रतमनुगेषं अनुगच्छेयम् अस्य होमस्य कालं आपस्तंब आह उत्तमदक्षिणां नीत्वोदवंसाय वा शबलि समुद्रोसीत्युपक्रम्य शब-लिहोमञ्जुहोतीति ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे एकविंशाध्यायस्य
तृतीयः खण्डः ॥

---

## अथ चतुर्थः खण्डः।

उक्तोगर्गत्रिरात्रः अथाश्वत्रिरात्रमाह।

चतुष्टोमोग्निष्टोम एकविंशश्च उक्थः सर्व्वस्तोमोतिरात्रः ॥ १ ॥

त्रिवृदादिचतुष्टोमोग्निष्टोमः प्रथममहरेकविंशस्तोमोपेतो-द्वितीयमहः सर्व्वस्तोमकोतिरात्रः संस्थस्तृतीयमिति ॥ १ ॥

अथैतदश्वमेधत्रिरात्रं प्रजापतेरक्षिसमाधानत्वेन प्रशंसति।

**प्रजापतेर्व्वा अक्ष्यश्वयत्तत्परापतत्तदश्वोऽभवत्तदश्व-स्याश्वत्वं तद्देवा अश्वमेधेन प्रत्यदधुरेषवाव प्रजापतिꣳ सर्व्वङ्करोति योश्वमेधेन यजते ॥ २ ॥**

प्रजापतेर्लोचनमक्षि अश्वयत् तदश्वोभवत् तदधः परापतत् पतितं तदक्षि अश्वत्वेन अरोचयत् तदश्वस्याश्वत्वं सम्पन्नम् तन्न-तमक्षि देवा अश्वमेधयागेन परिणते अश्वेन यागं कृत्वा प्रत्यदधुः प्रतिसन्धानमकुर्व्वन् अश्वमेधेन यजते एष वाव प्रजापतिः सर्व्वं अन्यूनं सम्पूर्णं करोति ॥ २ ॥

पुनरप्यश्वमेधयाजिनः प्रशंसाद्वारा तत् प्रशंसति।

**एष वाव सशरीरः सम्भवत्यमुष्मै लोकाय योश्वमेधी ॥ ३॥**

योऽश्वमेधवान् अश्वमेधयाजी अस्ति एष अमुष्मै धर्म्माय लोकः सशरीरः शरीरसहितः सम्भवति ॥ ३ ॥

अथ प्रथमं चतुष्टोममहः प्रशंसति।

**सरघा वा अश्वस्य सक्थ्या वृहत्तद्देवाश्चतुष्टोमेन प्रत्य-दधुर्य्यच्चतुष्टोमो भवत्यश्वस्य सर्वत्वाय ॥ ४ ॥**

सरघा मक्षिका क्रमयः अश्वस्य सक्थिप्रदेशं आ वृहत् व्रणं चक्रिरेत्यर्थः तद्देवाश्चतुष्टोमेन समदधुः यस्मादेवं तस्मादश्वस्य सर्वत्वाय सम्पूर्णतायै चतुष्टोमः कर्त्तव्यः ॥ ४ ॥

अथ प्रथमस्याह्नो बहिष्पवमानस्य प्रतिपत्तृचचतुष्टयं गायत्रीचतुष्टयं कर्त्तव्यमिति विधाय प्रशंसति ।

यत्तिस्रोनुष्टुभश्चतस्रो गायत्रीः करोति तस्मात्त्रिभिस्तिष्ठन् प्रतितिष्ठति सर्वान् पलायमानः प्रतिदधाति ॥ ५ ॥

पवस्व वाजसातय इति योयं प्रतिपत्तृचस्तस्य यास्तिस्रोनुष्टुभः स्तोत्रीयाः सन्ति ताः पादत्रयपरिगणनया चतस्रो गायत्रीः कुर्य्यात् यस्मात् प्रकृत्या तिस्रः अतस्त्रिभिः पादैस्तिष्ठन् प्रतितिष्ठति यस्माच्चतस्रो गायत्रीः तस्मात् सर्वान् चतुरः पादान् पलायमानः सन् प्रतिदधात्यश्वः यद्यप्यत्राश्वशब्दोन श्रूयते तथापि तैत्तिरीयके स्पष्टमाम्नातं पवस्व वाजसातय इति अनुष्टुप् प्रतिपद्भवति तिस्रोनुष्टुभश्चतस्रो गायत्र्यः यत्तिस्रोनुष्टुभस्तस्मादश्वस्त्रिभिस्तिष्ठति यच्चतस्रो गायत्र्यस्तस्मात् सर्वांश्चतुरः पादाः प्रतिदधत्पलायत इति ॥ ५ ॥

अथाश्वमनूद्यानुष्टुभां वैष्णवत्वं प्रशंसति ।

अन्तो वा अश्वः पशूनामन्तो नुष्टुप्छन्दसामन्तो विष्णुर्देवतानामन्तश्चतुष्टोमस्तोमानामन्तस्त्रिरात्रो यज्ञानां यद्वैष्णव्योनुष्टुभः प्रतिपदो भवन्ति चतुष्टोमस्तोमस्त्रिरात्रो यज्ञोन्त एव तदन्तं प्रतिष्ठापयति ॥ ६ ॥

अजादिपशूनाम्मध्ये अश्वस्यैवान्तत्वं अपशवोन्ये गोश्वेभ्य इत्यादि श्रुतिषु प्रसिद्धं यद्वा प्रशस्तवीर्य्यत्वात् प्रजापतेरक्षि-

रूपत्वाद्दा परमत्वं छन्दसां मध्येऽनुष्टुभः परमत्वं असकृद्गतं देवतानाम्मध्ये विष्णोरन्तत्वं अग्निर्देवतानामवमोविष्णुः परम-इत्यादिश्रुतिषु प्रसिद्धं स्तोमानान्त्रिवृदादीनां मध्ये चतुष्टोम-एवान्तः परमः प्रकृतिभूताग्निष्टोमगतत्वात् प्रजापतेः सकाशा-दुत्पन्नत्वाच्च यज्ञानां मध्ये त्रिरात्रोन्तः ब्रह्महत्याश्वमेधाभ्यां नापरं पुण्यपापयोरितिवदन्ति यद्दा त्रयो वा एते त्रिरात्रा यद्देष द्वादशाह इति द्वादशाहस्यापि त्रिरात्रत्वेन प्रशंसा दर्श-नात्त्रिरात्रस्यान्तत्वमवगन्तव्यं एवं सति यद्यनुष्टुभस्तिस्रोवैष्णव्यः प्रतिपदो भवन्ति चतुष्टोमस्तोमस्त्रिरात्रो यज्ञश्चेोभावन्तभूतो तत् तथा सति अन्तत एव अन्तर्भूतेष्वेष्वश्वादिषु अन्तर्भूतं विष्णुं प्रतिष्ठापितवान् भवति ॥ ६ ॥

अथ मध्यममेकविंशमहरनूद्य प्रशंसति ।

एकविंशमहर्भवति यस्मिन्नश्व आलभ्यत एकविंशो वा इतोसावादित्यो द्वादशमासाः पञ्चर्त्तवस्त्रय इमे लोका असावादित्य एकविंश आदित्यस्यैवैनं मात्राङ्गमयति ॥७॥

यस्मिन् द्वितीयेहनि अश्व आलभ्यते तदहरेकविंशस्तोमकं भवति इतः पृथिवीमारभ्य द्वादशमासादिगणनया आदित्यो-प्येकविंशः तथा सति मध्यममहरेकविंशस्तोमन्तत् यज्ञं आदि-त्यस्यैव मात्रां परिमाणं गमयति ॥ ७ ॥

अथ मध्यमस्याह्नः पृष्ठमाह ।

तस्य महानाम्न्यः पृष्ठं भवन्ति ॥ ८ ॥

महानाम्न्यः शक्कर्य्यः शाक्करं पृष्ठं भवतीत्यर्थः तथाचापस्तम्बः त्रयाणामह्नां पृष्ठान्यहरन्यतरं महानाम्नो वृहदिति पृष्ठानीति ॥ ८ ॥

तत्रायं देवानां छन्दः प्रशंसति।

अन्यदन्यद्वा एताश्छन्दोन्योन्य एते पशव अलभ्यन्त एता वा एतत् समाप्नुवन्ति यन्महानाम्न्यः पृष्ठं भवन्त्यश्वस्य सर्वत्वाय ॥ ९ ॥

एताः महानाम्न्यः ऋचः अन्यदन्यच्छन्दोवै विच्छन्दस्का इत्यर्थः तथा हि अनुष्टुप् गायत्री द्विपदादिपदे नानाच्छन्दस्का प्रचेतनप्रचेतयेति निर्वहन्तीत्यर्थः अनुष्टुप् चिकित्वो अभिनोनयेति गायत्रीविदा मघवन्निति द्विपदा एवं सर्वेष्वपि द्रष्टव्यं अथात्र अन्योन्येनानाविधा एते पशव आलभ्यते तथा ह्यापस्तम्बः अश्वेन सार्द्धमुपाकरणमाह मन्त्रशाखान्तरितान् पशून् स्वपर्थ्यंग्यानाग्नेयं कृष्णग्रीवं पुरस्ताल्ललाटे पौष्णमनं च मैत्रापौष्णमुपरिष्टाग्नीवास्याग्नेयौ कृष्णग्रीवौ बाह्वोपिस्थानेपि पशुः अश्वरूपः गौरीमृग इत्यादयो नानापशुकथन शक्करीछन्दो नानार्थप्रशंसार्थं एताः खलु महानाम्न्यस्त्रिरात्रं समाप्नुवन्ति निर्वहन्तीत्यर्थः अतो महानाम्न्यः पृष्ठं भवन्तीति यत् तदश्वस्य सर्वत्वाय सम्पूर्णत्वाय भवति ॥ ९ ॥

अथास्य ब्रह्मसाम विधत्ते।

पार्थुरश्मं ब्रह्मसाम भवति ॥ १० ॥

ब्रह्मसाम ब्राह्मणाच्छंसिनः साम पार्थुरश्मं पृथुरश्मिना दृष्टं साम कार्य्यं ॥ १० ॥

एतत् सामास्याङ्गोचितमिति प्रशंसति ।

ईश्वरा वा एषो यतोधृतः परामृपरावतमेतो रश्मिना वा अश्वोधृतो यत्पार्थुरश्मं ब्रह्मसाम भवत्यश्वस्यैव यत्यै ॥११॥

यतो नियमितो यज्ञार्थं अधृतः पाशादिभिरधार्य्यमाणोऽश्वः परामृपरावत अत्यन्तदूरदेशं गन्तुं तूर्णं पलायितुमीश्वरो वै समर्थः खलु येन रश्मिना प्रग्रहेण खल्वश्वोधृतो भवति तथा सति यत्पार्थुरश्मं ब्रह्मसाम भवति तदश्वस्यैव यत्यै नियमनाय भवति पार्थुरश्मशब्देन रश्मिरूपोर्थः स्तूयते तच्छन्दसाम्येन स्तुतिरिति द्रष्टव्या ॥ ११ ॥

अथ सर्वस्तोमोतिरात्रं स्तौति ।

सर्वस्तोमोतिरात्रो भवति सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाप्नोति सर्वं जयति ॥ १२ ॥

सर्वस्तोमोतिरात्रः सर्वस्याप्त्यै प्रापणाय सर्वस्य जित्यै जयाय सर्वं एतेनाप्नोति ॥ १२ ॥

अथ यूपविषये किञ्चिदाह ।

एकयूपोवैकादशिनी वान्येषां यज्ञानां भवत्येकविंशिन्यश्वमेधस्य खादिरो वा बैल्वो वा पार्णोवान्येषां यज्ञानां

भवति नैचुदार एकविंशत्यरत्निरश्वमेधस्य नान्येषां पशू-नान्तेदन्या अवद्यन्त्यवद्यन्त्यश्वमेधस्य दक्षिणतोन्येषां पशू-नामवद्यन्त्युत्तरतोऽश्वमेधस्य प्लक्षशाखास्वन्येषां पशूनामव-द्यन्ति वेतस शाखास्वश्वमेधस्य येग्राम्यान्पशून्नियुंजन्त्यारो केस्वारण्यां धारयन्त्या ग्राम्यान्पशून् लभन्ते प्रारण्यां सृजन्ति* ॥ १३ ॥

इति ताण्ड्यमहाब्राह्मणे एकविंशाध्यायस्य
चतुर्थः खण्डः ।

---

अथ पञ्चमः खण्डः ।

अथ वैदत्रिरात्रमाह ।

त्रयस्त्रिवृतोतिरात्राः सर्व्वे षोड़शिमन्तः ॥ १ ॥

त्रीण्यहानि त्रिवृतस्तोमकानि सषोड़शिकान्यतिरात्रसंस्था-नि ॥ १ ॥

अथास्याधिकारिणमाह ।

यो राज्यआशंसेत स एतेन यजेत ॥ २ ॥

राज्ये राज्यविषये आशंसेत इच्छति स राजा एतेन यजेत स्वाराज्यफलमित्युक्तं भवति अत्रापस्तम्बः वैदत्रिरात्रेण स्वाराज्य-कामस्त्रयस्त्रिवृतोतिरात्राः षोड़शिमन्तोरथन्तरं वामदेव्यं वृहत्-पृष्ठानीति ॥ २ ॥

---

* अस्य टीका पुस्तकद्वयेपि नास्ति ।

अस्य त्रिरात्रस्य यत् त्रिवृत्स्तोमत्त्वं तत्र राज्यफलसंयुक्तं प्रशंसति ।

राजा वा एष स्तोमानाꣳराज्यमेवास्मिन्दधाति ॥ ३ ॥

एषत्त्रिवृत्स्तोमः स्तोमानाम्मध्ये राजा सर्व्वेषां प्राथम्यात् अतस्तत्प्रयोगादस्मिन् यजमाने राज्यमेवाभिलषितं दधाति ॥३॥

अथ प्रथमस्याह्न आर्भवान्ते यदाक्षारं सामास्ति तत् प्रशंसति ।

यदाक्षाराणि प्रथमम्हर्भवन्त एकाक्षरा वै वाग्वाचो- नतिवादाय ॥ ४ ॥

स्तोत्रीयापेक्षया अक्षाराणीति बहुवचनं पवतेहर्य्यतोहरि- रित्यत्राक्षार एकाक्षरणिधनं वागपि हलपरित्यागे सत्येकाक्षरा खलु स एवन्तन्निधनं सर्व्वस्यावाचोनतिवादाय साम्याय भवति यद्यपि कल्पकारेण आक्षारं साम नादिष्टं सामान्तरं प्रथमेनाह्ना- गर्गत्रिरात्रस्यातिदेशादुक्तमेव तत् ॥ ४ ॥

अथ प्रथमेऽह्नि तृतीयसवने पदनिधनमाज्यदोहमनूद्य प्रशंसति ।

अथ यत् द्व्यक्षरणिधनमाज्यदोहं भवत्युत्तरयोरह्नोरभि- सन्तत्या अन्वहमाज्यदोहानि भवन्त्यन्वहमेवैनं पशुभिः समर्द्धयन्ति ॥ ५ ॥

प्रथमं आज्यदोहे ऋतमिति द्व्यक्षरणिधनमस्ति अतस्तदुक्त-

सामप्रयोगे उत्तरयोर्द्वयोरह्नोः सन्तत्यै अविच्छिन्नाय भवति उभयत्र द्वित्वसाम्यादित्यभिप्रायः ॥ ५ ॥

अथोक्तमाज्यदोहमतियुक्त्या विष्वहःसु विधाय प्रशंसति ।

सर्व्वे षोड़शिमन्तो भवन्तीन्द्रियं वीर्य्यꣳ षोड़शीन्द्रिये-णैवैनान्वीर्य्येण समर्द्धयति ॥ ६ ॥

सर्व्वेऽतिरात्रा इति शेषः इन्द्रियमित्यस्य व्याख्यानं वीर्य्य-मिति अतिरात्राणां वीर्य्यैः समर्थनन्नाम फलजनकत्वलक्षण-सामर्थ्यसम्पादनम् अथ प्रसोमासोविपश्चित इति गायत्रमेकस्या माश्वमेकस्याञ्जराबोधीयमेकस्यां प्रसोमदेववीतय इति पौंगव-मेकस्यामित्यादिकः कल्पोद्रष्टव्यः ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे एकविंशाध्यायस्य
पञ्चमः खण्डः ।

---

अथ षष्ठः खण्डः ।

अथ छन्दोमपवमानाख्यं पशुफलसाधनं चतुर्थं त्रिरात्रमाह ।

चतुर्विꣳशाः पवमानास्त्रिवृ'त्याज्यानि पञ्चदशानि पृष्ठानि सप्तदशोऽग्निष्टोमश्चतुस्त्वारिꣳशाः पवमानाः पञ्चदशान्या-ज्यानि सप्तदशानि पृष्ठान्येकविꣳशोऽग्निष्टोमः सोक्थोष्टाच-त्वारिꣳशाः पवमानाएकविꣳशान्याज्यानि त्रिणवानि पृ-ष्ठानि त्रयस्त्रिꣳशोऽग्निष्टोमएकविꣳशान्युक्थानि सषोड़शि-कानि पञ्चदशी रात्रिस्त्रिवृत्सन्धिश्छन्दोमपवमानः ॥१॥

पृष्ठस्तोमः क्लृप्तः गायत्रीत्रिष्टुप्जगतीनामक्षरसंख्याभिर्मिलित्वा चतुर्विंशाद्यास्त्रयश्छन्दोमास्तेषु त्रयः पवमानाभवन्तीति छन्दोमपवमानोयन्त्रिरात्रः॥ १ ॥

अथास्याधिकारिणमाह ॥

पशुकामोयजेत ॥ २ ॥

स्पष्टोऽर्थः । २ ।

अथ छन्दोमपवमानान्तं पशुसाधनमिति प्रशंसति

पशवो वै छन्दोमा यच्छन्दोमाः पवमाना भवन्ति पशूनेवावरुन्धे ॥ ३ ॥

स्पष्टं ॥ ३ ॥

उभये स्तोमायुग्मन्तश्चायुजश्च तत् मिथुनं तस्मान्मिथुनात्प्रजायते ॥ ४ ॥

अहस्त्रयगतं पवमानान्तत्वात् युक्संख्यामितरस्तोत्रगतां युग्मसंख्याकास्तोमा इत्यर्थः अयुजः स्तोमाः तत्र युग्मन्तु पुंसो रूपं अयुग्मं स्त्रियाः तद्द्वयम् मिथुनं तस्मान् मिथुनाद्यजमानः प्रजायते अत्र साम्वत्सरिकस्य विषुवतोबहिष्पवमानसुभौ पर्य्यासावित्यादिकः कल्पोद्रष्टव्यः ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे एकविंशाध्यायस्य
षष्ठः खण्डः ॥

अथ सप्तमः खण्डः ।

अथ तुर्व्वंसुनामानं पशुसाधनं पञ्चमन्त्रिरात्रमाह ।

त्रिवृत्प्रातःसवनं पञ्चदशम्माध्यन्दिनᳶ सवनं सप्तदशं तृतीयसवनं चतुर्विᳶशं प्रातःसवनं चतुश्चत्वारिᳶशम्माध्यन्दिनᳶ सवनमष्टाचत्वारिᳶशं तृतीयसवनᳶ सोक्थमेकविᳶशं प्रातः सवनं त्रिणवम्माध्यन्दिनᳶ सवनं त्रयस्त्रिᳶशं तृतीयसवनᳶ सोक्थमेकविᳶशः षोड़शी पञ्चदशो रात्रिस्त्रिवृत् सन्धिरन्तर्वसुः ॥ १ ॥

अत्र त्रीण्यहानि क्रमेणाग्निष्टोमोक्थातिरात्रसंस्थानि रथंतरं वामदेव्यं बृहदिति क्रमेण पृष्ठानि स्तोमाः स्पष्टाः अष्टाचत्वारिंशं तृतीयसवनं सोक्थमिति उक्थान्यपि अष्टाचत्वारिंशस्तोमकानीत्यर्थः त्रयस्त्रिंशं तृतीयसवनं सोक्थमप्यत्राप्युक्थान्यपि त्रयस्त्रिंशस्तोमकानीत्युक्तं भवति छन्दोमानां पशुरूपत्वसाधनस्य मध्यमेऽहनि सम्भवादेवं त्रिरात्रोऽन्तर्व्वसुरित्युच्यते ॥ १ ॥

छन्दोमानां मध्यमाहर्भाक्त्वं प्रशंसितुमस्य त्रिरात्रस्य लोकत्रयात्मकत्वमाह ।

इमे लोकास्त्रिरात्रः ॥ २ ॥

इमे लोकास्त्रिरात्रात्मिकमेण त्रीण्यहानि भूरादिलोकत्रयात्मकानीत्यर्थः ॥ २ ॥

त्रिरात्रस्वरूपप्रतिपादनाय स्वरूपमाह ।

अस्तीव वा अयं लोकोस्तीवासौ छिद्रमिवान्तरिक्षं॥३॥

भूलोकस्यास्तित्वं सिद्धं स्वर्गस्यापि ग्रहनक्षत्रताराधिष्ठानत्वेन तदर्थं ज्योतिष्टोमादिभिः प्रयतमानत्वेन चास्तित्वं मध्यमं त्वन्तरिक्षं छिद्रमिव निराश्रयमिवामूर्त्तत्वात् अस्त्वेव ॥ ३ ॥

कथमेतदह्नां लोकसाम्यमित्याह ।

अस्तीव त्रिरात्रस्य प्रथममहरस्तीवोत्तमं छिद्रमिव मध्यतः ॥ ४ ॥

अह्नां त्रयाणामात्मकत्वोपन्यासान्मध्यमस्याह्नोऽन्तरिक्षस्थानीयत्वेन छिद्रत्वं ॥ ४ ॥

तस्य कः परिहार इति तत्राह ।

पशवो वै छन्दोमायच्छन्दोमा मध्यतो भवन्त्यपिहित्या एवाछिद्रतायै ॥ ५ ॥

छन्दांसि पशुष्वाजिमयुस्तात् बृहत्युदजयतीति श्रुतेर्बृहती द्वारा च्छन्दांसि पशवः स्तोमनिर्म्मितत्वात् छन्दोमा अपि पशवः पशूनां जीवनं छिद्रकमिसाधनं प्रसिद्धं अतो यच्छन्दोमा मध्यतो मध्यमेऽहनि भवन्ति तदपिहित्यै अपिधानाय तच्चापिधानं अच्छिद्रतायै सम्पूर्णत्वाय भवति ये गर्गत्रिरात्रस्य प्रथमोत्तमे अहनी ते अन्तर्व्वंसोरूपोषु जातमश्वरमित्यादिकल्पो द्रष्टव्यः ॥५॥

इति ताण्ड्यमहाब्राह्मणे एकविंशाध्यायस्य
सप्तमः खण्डः ।

---

अथ अष्टमः खण्डः।

अथ पराकाख्यं स्वर्गसाधनं षष्ठं त्रिरात्रमाह।

त्रिवृत् प्रातःसवनं पञ्चदशं माध्यन्दिनꣳ सवनꣳ सप्तदशं तृतीयसवनं एकविꣳशं प्रातःसवनं त्रिणवम्माध्यन्दिनꣳ सवनं त्रयस्त्रिꣳशं तृतीयसवनꣳ सोक्थं चतुर्विꣳशं प्रातः सवनं चतुश्चत्वारिꣳशम्माध्यन्दिनꣳ सवनमष्टाचत्वारिꣳशं तृतीयसवनꣳ सोक्थमेकविꣳशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिः पराकः ॥ १ ॥

स्तोमक्रमेण प्रागुपर्युपर्य्यारोहणादयं त्रिरात्रः पराक इत्युच्यते ॥ १ ॥

अत्राधिकारिणमाह।

पराकेण वै देवाः स्वर्गं लोकमायन् स्वर्गकामो यजेत पराङेवैतेन स्वर्गं लोकमाक्रमते ॥ २ ॥

यत् स्तोमाः पराञ्चः सन्ति एतदनुष्ठातापि पराङेव स्वर्गमाक्रमते ॥ २ ॥

अथ त्रिरात्रनामनिर्व्वचनेन प्रशंसति।

यद्दा एतस्याकन्तदस्य पराक् तत् पराकस्य पराक्त्वम् ॥ ३ ॥

यदेवतस्य भूलोकस्य तत्स्थस्य पुरुषस्य अकन्दुःखन्तदस्य स्वर्गस्य तत्प्राप्तवतः पुरुषस्य पराक्तं न्यग्भूतं भवति पराग्भूतमकन्दुःखं त्रिरात्रेण भवति परागित्युत्पत्तिः ॥ ३ ॥

न वै तत्र जग्मुषे किञ्चनाकं ॥ ४ ॥

तं स्वर्गं प्राप्तवते पुरुषाय किञ्चन अकन्दुःखं नैव खलु ॥ ४ ॥

अथोक्तार्थंवेदनफलमाह।

नास्मा अकम्भवति य एवं वेद ॥ ५ ॥

स्पष्टं। ५ ॥

अथ तस्य षोडशिन एकविंशस्तोमस्य तत्परिहारार्थं रात्रिपर्य्यायसन्धिस्तोत्राणां पञ्चदशी रात्रिस्त्रिवृत्स्तोमकत्वमिति प्रशंसति।

प्रजायास्त्वक्लृप्तः पराङ् ह्येवैतेन स्वर्गं लोकमाक्रमते तद्यदेकविंशः षोडशी भवति पञ्चदशी रात्रिस्त्रिवृत्सन्धिस्तेनास्मिन् लोके प्रतितिष्ठति ॥ ६ ॥

तत् तत्र तृतीयेऽहनि षोडशी एकविंशस्तोमकोभवति तुशब्दो विशेषोस्तीति द्योतनार्थः षोडशिनामेकविंशं कुर्वन् यजमानः प्रजायाः सकाशादक्लृप्तः सन्प्रजाभिः सहेहस्थितिं चिरकालमलभमान एव एतेन एकविंशकरणेन पराङ्ह्येवाभिमुखमेव स्वर्गमाक्रमते अतस्तत्परिहाराय यदि रात्रिः पञ्चदशी स्यात् सन्धिः सन्धिसाम त्रिवृत्स्तोमकं स्यात् तद्यथानु-

ष्ठातास्मिन् लोके प्रतितिष्ठति प्रजादिभिः सह अयमर्थः अपरावृत्तैः स्तोमैरनुष्ठानात्पराङेव स्वर्गमाप्नोति अतोन्ते परावृत्तिरूपाभ्यां वृताभ्यामेव पञ्चदशत्रिवृद्भ्यां समापनेन इहलोके चिरकालं पुत्रादिभोगमनुभूय पश्चात् स्वर्गमाप्नोतीत्यर्थः अत्र कल्पः, याव्वर्वसोः प्रथमा सास्य पराकस्य वृषासोमधुमां असीत्यादिकः कल्पोद्रष्टव्यः ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे एकविंशाध्यायस्य
अष्टमः खण्डः।

---

अथ नवमः खण्डः।

उक्ताः षट्त्रिरात्राः अथ चतूरात्रास्चत्वार उच्यते तत्र प्रथमं चतुर्व्वीराख्यं वीरोत्पत्तिसाधनं चतूरात्रमाह।

चतुर्विंꣳशाः पवमानास्त्रिवृं त्याज्यानि पञ्चदशानि पृष्ठानि सप्तदशोऽग्निष्टोमश्चतुर्विंꣳशाः पवमानाः पञ्चदशान्याज्यानि सप्तदशानि पृष्ठान्येकविंꣳशोऽग्निष्टोमः सोक्थश्चतुर्विंꣳशाः पवमानाः सप्तदशान्याज्यान्येकविंꣳशानि पृष्ठानि त्रिणवोग्निष्टोमः सोक्थश्चतुर्विंꣳशाः पवमाना एकविंꣳशान्याज्यानि त्रिणवानि पृष्ठानि त्रयस्त्रिंꣳशोऽग्निष्टोम एकविंꣳशान्युक्थानि सषोडशिकानि पञ्चदशी रात्रिस्त्रिवृत्सन्धिः ॥१॥

आद्यमग्निष्टोमसंस्थं द्वितीयं तृतीयमुक्थसंस्थं चतुर्थमतिरात्रसंस्थं सर्वत्र पवमानाश्चतुर्विंशाः त्रिष्वहःसु पवमानव्यतिरिक्तेषु त्रिवृदादिक्रमेण एकैकस्तोमपरित्यागेनाज्यादीनि कल्पनीयानि प्रथमेऽहनि त्रिवृदाद्यास्त्रय आज्यपृष्ठान्येषु द्वितीये पञ्चदशाद्यास्त्रयः तृतीये सप्तदशाद्याः उभयत्राग्निष्टोमस्तोमक उक्थोपि तत्स्तोमक एव चतुर्थः एकविंशाद्यास्त्रयः रात्रिसन्धि प्रकृतवत् पञ्चदश त्रिवृती ॥ १ ॥

अथास्य प्रयोगकृतोवीरसाधनत्वमाह ।

अत्रिरकामयत चत्वारो मे वीरा आजायेरन्निति स एतमपश्यत्तस्य चत्वारोवीरा आजायन्तास्य चत्वारोवीरा-जायन्ते य एवं वेद ॥ २ ॥

अपश्यद्दिष्टो अन्वतिष्ठदित्यर्थः ॥ २ ॥

तत् प्रशंसति ।

एकᳬस्तोममुत्सृज्यैकमभ्यारभते वीरजननं वै स्तोमो वीरमेवास्मै तत् प्रजनयति ॥ ३ ॥

स्तोमं स्तोमप्रयोगोवीरजननं वै वीरोत्पादनमेवमेतदुत्तरोत्तरादतः पूर्वस्माच्च वीरलक्षणं वीरोत्पत्त्यर्थो भवति ते च वीराः तैत्तिरीये दर्शिताः य एवं विद्वांश्चतूरात्रेण यजत अस्य चत्वारो वीराजायन्ते ॥ ३ ॥

अथ पवमानस्य चतुर्व्विंशं प्रशंसति ।

चतुर्व्विंशा: पवमाना भवन्ति चतुर्व्विंशत्यक्षरा गायत्री प्रजननं गायत्री प्रजात्यै ॥ ४ ॥

सर्व्वेष्वहःसु पवमानाश्चतुर्व्विंशाभवेयुः तेन गायत्र्यपि चतुर्व्विंशत्यक्षरा साच प्रजननसाधना अतो गायत्रीसंख्यासह स्तोमावोराणां प्रजननाय भवन्ति ॥ ४ ॥

अथास्मिन् यत्पवमानगतं युग्मस्तोमकत्वं यच्च स्तोत्रगतमयुग्मस्तोमकत्व तदुभय प्रजननसाधनमिति प्रशंसति ।

उभये स्तोमायुग्मन्तश्चायुजश्च तन्मिथुनं तस्मान्मिथुनात् प्रजायते ॥ ५ ॥

स्पष्टं ॥ ५ ॥

चतुर्णामह्नां संस्थानं विदधाति ।

अग्निष्टोमः प्रथममहरुक्थो द्वितीयं षोड़शी तृतीयमतिरात्रश्चतुर्थन्नानावीर्य्यतायै ॥ ६ ॥

पुरुषाणां नानावीर्य्यलाभाय अहान्यपि नानावीर्य्याणि कर्त्तव्याणि ॥ ६ ॥

उक्तक्रमानुष्ठानवतो यजमानस्य नानावीर्य्यतां कथं तत्राह ।

नानावीर्य्याण्यहानि करोति ॥ ७ ॥

यतोऽयं संस्थानानात्वेनाहान्यपि नानावीर्य्याणि करोति अतो नानावीर्य्यत्वमपि सिद्धमिति ॥ ७ ॥

मानान्तरप्रसिद्धा षोड़शी तृतीयमिति यदुक्तं तन्निराकर्त्तुं प्रसिद्धानामह्नां स्थितिमनुवदति ।

गायत्रं वै प्रथममहस्त्रैष्टुभं द्वितीयं जागतं तृतीयमानुष्टुभं चतुर्थं ॥ ८ ॥

स्पष्टोऽर्थः । ८ ।

इदानीं तृतीयेहनि षोड़शिनिराकरणविषयं ब्रह्मवादिनः प्रश्नमवतारयति ।

तदाहुर्यत् तृतीयेहनि षोड़शिनं गृह्णीयुस्तृतीयेनाह्नानुष्टुभमाप्नुयुरच्छन्दश्चतुर्थमहः स्यादानुष्टुभो वै षोड़शीति ॥ ९ ॥

तत्र षोड़शिविषये ब्रह्मवादिन आहुः किमिति यद्यदि तृतीयेहनि षोड़शिनं गृह्णीयुः तदानीं तृतीयेनाह्नानुष्टुभमेवाप्नुयुः प्राप्ता भवेयुः अस्तु नाम तथा किं छिद्रमिति तत्राह चतुर्थमहरच्छन्दः छन्दोविरहितं स्यात् कुर्वन्ति तत्राह यत् षोड़शिनमहस्त्रिस्रः षोड़श्यनुष्टुभोवै अनुष्टुप्छन्दःसम्बन्धी खलु षोड़शिसंस्थायां ग्रहणायोक्तस्याग्निष्टोमोक्थादिक्रमेण चतुर्थत्वात् षोड़शिसाम्नः षोड़शिग्रहाङ्गत्वात् तस्य च प्रकृतत्वात्तदेवाचिम मिति वेदितव्यम् इतिशब्दस्तेषामाक्षेपसमाप्तिद्योतनार्थः ॥ ९ ॥

अथ तत्परिहारलक्षणं सिद्धान्तमाह ।

चतुर्थेऽहनि षोड़शी ग्रहीतव्यः स्वयायतने षोड़शी गृह्यते ॥ १० ॥

यत्र हि षोड़शी गृह्यते तत्रैव षोड़शी क्रियत इत्यर्थः ॥ १० ॥

कथं मध्यमयोरङ्गीकृतत्वेन नानावीर्य्याण्यहानि क्रियते तदाह ।

छन्दोभिरहानि नानावीर्य्याणि करोति ॥ ११ ॥

यथाभिहितं उक्थसंस्थं क्व भविष्यत्यस्मिन् पक्षे तथापि छन्दसां पृथक् पृथकसम्पादनात्तैस्तानि विलक्षणवीर्य्याणि कृतवान् भवति ॥ ११ ॥

अथ चतुर्ष्वहःसु माध्यन्दिनसवने क्रमेण ब्रह्मसाम विदधाति ।

नौधसं प्रथमस्याह्नोब्रह्मसाम श्यैतं द्वितीयस्य आयन्तीयं तृतीयस्य त्रैशोकञ्चतुर्थस्य ॥ १२ ॥

स्पष्टं ॥ १२ ॥

अनुष्टुप्सम्बन्धिनः षोड़शिग्रहस्य चतुर्थेऽहनि कर्त्तव्यविधानाज्जागतं तृतीयमहरानुष्टुभं चतुर्थमहरिति स्थितं तत्र ब्रह्मवादिनामाक्षेपमवतारयति ।

तदाहुरपक्षच्छ्र इव वा एष यत् ज्यायसः छन्दोधिकनीयश्छन्दउपैतीति ॥ १३ ॥

तृतीयस्याह्नोजागतत्वाच्चतुर्थस्यानुष्टुभत्वात् ज्यायसश्छन्दसोनन्तरं कनीयश्छन्द उपक्रान्तः भवति तथापगतछन्दोनुक्रमः स्यात्॥ १३॥

तत्र परिहारमाह।

**तद्यदेषा चतुर्थेहन्यतिजगती क्रियतेऽनपभ्रंशाय॥१४॥**

त्रैलोकस्य विश्वाः पृतनाइत्येषा सावतिजगती अतः छन्दसोवरोहग्रहणादपभ्रंशदोषोनास्ति॥ १४॥

अथ चतुर्थमहःसु अच्छावाकसाम विदधाति।

**कालेयं प्रथमस्याह्नोच्छावाकसाम माधुच्छन्दसं द्वितीयस्य रौरवं तृतीयस्य समन्तं चतुर्थस्य नानावीर्यतायै नानावीर्य्याण्यहानि करोति॥ १५॥**

स्वर्गस्य विलक्षणवीर्य्यप्रत्वलाभाय प्रत्यहमच्छावाकसाम्नः पृथक्करणं तेन तदर्थान्यहान्यपि नानावीर्य्याणि कृतवान् भवति चतुर्णामह्नां ब्रह्मसामान्यच्छावाकसामानि च विहितान्यथ होतुःपृष्ठानि मैत्रावरुणसामानि विधातव्यानि तत्र प्रथमद्वितीययोर्होतूरथन्तरबृहत्पृष्ठेस्वेव एवमप्यह्नोवामदेव्यमैत्रावरुणसामस्त्वास्वेव॥ १५॥

अथोत्तरयोरह्नोर्होतुःपृष्ठं मैत्रावरुणसाम च विदधाति।

**अभित्वावृषभासुत इति तृतीयस्याह्नोरथन्तरं कस्तमिन्द्रत्वावसवितित वामदेव्यं यज्ञा यथा अपूर्व्येति चतुर्थ-**

स्याह्नो बृहद्देदुमधोर्म्मदिन्तरमिति वामदेव्यं छन्दसां नानावीर्यतायै नानावीर्य्याण्यहानि करोति ॥ १६ ॥

अभित्वावृषभासुतइति गायत्री तृतीयस्याह्नोरथन्तरं होतुः पृष्ठम् कस्तमिन्द्रेति बृहती प्रगाथेषु वामदेव्यं मैत्रावरुणपृष्ठं यज्ञायज्ञेत्यनुष्टुप् बृहत् होतुः पृष्ठम् एदुमधोरित्युष्णिक्वामदेव्यं मैत्रावरुणं साम नानावीर्य्यतायाइति पञ्चम्यर्थे चतुर्थी छन्दसां वैलक्षण्ये नानावीर्य्यत्वादहान्यपि नानावीर्य्याणि उपास्मै गायतानरोवभ्रवेनुस्वतवसे प्रयज्ञावीन भूर्णय आयुरप्रंबृहन्मत इत्यादिकल्पोद्रष्टव्यः ॥ १६ ॥

इति ताण्ड्यमहाब्राह्मणे एकविंशाध्यायस्य
नवमः खण्डः।

---

अथ दशमः खण्डः।

अथ द्वितीयं जमदग्नेश्चतूरात्रमाह तत्र प्रथमस्याह्नः क्लृप्तिमाह ॥

त्रिवृत्पञ्चदशोऽग्निष्टोमः प्रथममहः ॥ १ ॥

अग्निष्टोमसंस्थम् तस्य त्रिवृत्पञ्चदशौ स्तोमौ व्यत्यासेन स्याताम् आद्यानि स्तोत्राणि त्रिवृन्ति अन्यानि पञ्चदशानीति विभागः ॥ १ ॥

अथ द्वितीयस्याह्नआह।

अथोत्तरस्याह्नश्चतुर्विꣳशं बहिष्पवमानं पञ्चदशानि त्रीण्याज्यानि सप्तदशमच्छावाकस्यैकविꣳशो माध्यन्दिनः पवमानः सप्तदशे द्वे पृष्ठे एकविꣳशं तृतीयसवनꣳसोक्थं ॥२॥

द्वितीयस्याह्नः स्तोत्रमुखं चतुर्विंशस्तोमकं तत आज्यानि त्रीणि पञ्चदशानि चतुर्थमच्छावाकस्याज्यं सप्तदशम्माध्यन्दिनसवनैकविंशः पवमानः होतामित्रावरुणयोः पृष्ठे द्वे सप्तदशे ब्राह्मणाच्छंस्यच्छावाकयोरेकविंशे द्वे पृष्ठे उक्थसहितं तृतीयसवनं सर्वमप्येकविंशस्तोमकं ॥ २ ॥

अथ तृतीयस्याह्न आह।

तृतीयस्याह्न एकविꣳशं बहिष्पवमानं त्रीणि चाज्यानि पञ्चदशमच्छावाकस्य चतुर्विꣳशो माध्यन्दिनः पवमान एकविꣳशानि पृष्ठानि त्रिणवं तृतीयसवनं द्वे चोक्थे एव विꣳशमच्छावाकस्य ॥ ३ ॥

तृतीयस्याह्नः आज्यत्रयबहिष्पवमानत्वं च एकविंशस्तोमकं चतुर्थमाज्यं पञ्चदशं माध्यन्दिनं सवनं पवमानपृष्ठानि च क्रमेण चतुर्विंश एकविंशानि तृतीयसवनं सर्व्वमपि त्रिणवं मैत्रावरुणब्राह्मणाच्छंसिन उक्थे द्वे अपि त्रिणवे अच्छावाकीयं तूक्थमेकविंशं ॥ ३ ॥

अथ चतुर्थस्याह्न आह।

चतुर्थस्याह्नश्चतुर्विंशाः पवमानाः पञ्चदशꣳ होतुराज्यꣳ सप्तदशानि त्रीण्येकविंशानि पृष्ठानि त्रयस्त्रिंशोऽग्निष्टोम एकविंशोक्थानि स षोडशिकानि पञ्चदशी रात्रिस्त्रिवृत्सन्धिः ॥ ४ ॥

स्पष्टं । ४ ।

अथास्य पुष्टिलक्षणं फलं सप्रपञ्चमाह ।

जमदग्निः पुष्टिकाम एतमाहरत्स इमान्पोषानपुष्यत् ॥ ५ ॥

एवं जमदग्निः पुष्टिकामस्तदर्थमेतं चतूरात्रमाहरत् स इमान् लोके प्रसिद्धान् पशुपुत्रादिलक्षणान् पोषान् अपुष्यत् प्राप्नोत् ॥ ५ ॥

अथ यान् पोषानपुष्यत्तेन सम्लानमानिनः आसन्नित्याह ।

यदिदमाहुर्न्नवा ऊर्वौपलितौ सं जानाते इति ॥ ६ ॥

यदिदमाहुर्लौकिका ऊर्वौ उर्वपुत्रौ जामदग्न्यौ पलितौ सन्तौ नसंजानाते ॥ ६ ॥

इदानीं तत्प्रति तस्यार्थं तदनुष्ठातुस्तद्वाक्यं भवतीत्याह ।

तत्सर्वानेवैतेन पोषान् पुष्यति ॥ ७ ॥

एतेन चतूरात्रेण एतान् सर्वान् जमदग्नेः पोषान् पुष्यति इदानीन्तनोपि ॥ ७ ॥

अथास्मिन् चतूरात्रे विद्यमानस्तोत्रीयापरिगणनयाजगती-च्छन्दःसम्पत्तिर्भवतीत्याह ।

जगती छन्दोभिः सम्पद्यते ॥ ८॥

एतेषामङ्गां स्तोत्रीयासायाजगत्याख्यं छन्दः सम्पद्यते तथा हि प्रथममग्निष्टोममहस्तच्च द्वादशस्तोत्राणि तानि त्रिवृत्पञ्च दशाख्यां यानि षट्त्रिवृतं षट्पञ्चदशानि तेषां स्तोमगत-स्तोत्रीयापरिगणनायां चतुश्चत्वार्थ्यधिकं शतं स्तोत्रीया भवन्ति तावत्स्तोजगत्यः एवं द्वितीयेहनि अष्टाशीत्यधिकं शतद्वयं स्तोत्रीयाः स्युस्ताश्च षट्जगत्यः तृतीयेहनि षट्त्रिंशदधिक-शतानि स्तोत्रीयास्ताः सप्तजगत्यः उत्तमेऽहनि अष्टाविंशत्यधिक-पञ्चशतानि स्तोत्रीयाः स्युः ता एकादशजगत्य इति जगती-सम्पत्तिः अत्रोपशन्ये यज्ञामदग्न्यः प्रत्यहं त्रिषट्सप्तैकादश जगत्य इति एवं जगतीति सम्पत्तिः ॥ ८ ॥

किन्तत इत्याह ।

जगती वै छन्दसां परमं पोषं पुष्टा परममेवैतेन पोषं पुष्यति ॥ ९ ॥

गायत्र्यादीनां सप्तछन्दसाम्मध्ये उत्तमा जगती परमं पोषं पुष्टा-स्तत्सम्पत्तिः यदेतच्चतूरात्रं कुर्वन्नपि परममविशेषं पोषं पुष्यति प्राप्नोति यद्यदितरक्रतु गतासूपसत्सुआज्यं द्रव्यं भवति ॥९॥

अत्र पुरोडाशं द्रव्यं कर्त्तव्यमिति सप्त रोचनं विदधाति ।

पुरोडाशिन्य उपसदो भवन्ति पशवो वै पुरोडाशाः पशुष्वेव प्रतितिष्ठति ॥ १० ॥

स्पष्टं । पशुभ्यो वै मेधादुदक्रामत् सोव्रीहिश्चैव यवश्च भूता-वाजोपेतासित्यैतरेयकश्रुतेः पशवो वै पुरोडाशाः, अत्रायं विवेकः, इतरयज्ञगतासूपसत्स्वग्निसोमविष्णवस्तिस्रोदेवताः तेषां आज्यं द्रव्यं यथावचनन्तिस्रः षट् द्वादशेत्यादि संख्यया सायं प्रातर्होमः अत्रतु प्रत्यहं देवताभेदपुरोडाशोद्रव्यं कपालसंख्या प्रत्यह-मिष्टिः अन्यत्रेष्टिविकारा उपसदः अत्र तु हविर्होमा इति सूत्रं त्रयोदश्यामपरपक्षस्य दीक्षेत जामदग्न्याय तस्य विंशतिर्दीक्षा द्वादशोपसदस्तत्रोपसत्सु पृथग्घोमानध्वर्य्युर्जुहुयात्पुरोडाशास्त-उक्ताब्राह्मणेन समानदेवतौ पूर्व्वाह्णापराह्णयोरग्नेर्वेर्होत्रमित्ये-तत् प्रभृतय एषां होमा इति तत्र आग्नेय एककपाल आश्विनो द्विकपाल इत्यादिना अग्न्यादिदेवताकमेककपालादिपुरोडाशं विधास्यति ॥ १० ॥

तेषां क्रमेण सन्धानात्त ॥

अग्ने वेर्होत्रं वेरध्वरमापितरं वैश्वानरमवसेकुरिन्द्राय देवेभ्योजुहुताद्धविः स्वाहा ॥ ११ ॥

हे अग्ने होत्रं होतुः कृत्यं वेः विद्धि तथा अध्वरं यज्ञञ्च विद्धि होतारमधिष्टाय होत्रं कुरु हविःप्रापणेन यज्ञन्निवर्त्तयेत्यर्थः विरेर्हंकारस्य दग्धेति कुत्वं किञ्च पितरं सर्व्वस्य पालकं वैश्वानरं

विश्वेषां नराणां हितारं मा मामवसे अस्माकं रक्षणाय अकः अभिमुखं कुरु हे ऋत्विजो यूयमपि इन्द्राय सर्व्वदेवाधिपतये देवेभ्योन्येभ्योवस्वादिभ्यश्च हविर्ज्जुहुतः प्रयच्छतः यद्वा व्यत्ययेन जुहोमीति व्याख्येयं स्वाहेति हविस्त्यागाभिधानं इदं हविर्हुतमस्तु ॥ ११ ॥

अथाश्विनोर्द्विकपालमन्त्रमाह ॥

देवावश्विनौ मधुकशयाद्येमं यज्ञं यजमानाय मिमिक्षतमिन्द्राय देवेभ्योजुहुताद्धविः स्वाहा ॥ १२ ॥

हे देवौ द्योतमानौ अश्विनौ युवां मधुकशया वृष्ट्यर्थं मेघताड़नेनोदकवत्या कशया अद्यास्मिन्दिने इमं यज्ञं यजमानाय मिमिक्षतं सेक्तुमिच्छतं वृष्ट्यादिफलोपेतं कुरुत इत्यर्थः शिष्टं पूर्व्ववत् ॥ १२ ॥

अथ वैष्णवस्य त्रिकपालस्य मन्त्रमाह ।

देव विष्णउर्व्वद्यास्मिन्यज्ञे यजमानायाधिविक्रमस्वेन्द्राय देवेभ्यो जुहुताद्धविः स्वाहा ॥ १३ ॥

हे देव द्योतमान विष्णो अद्येदानीमस्मिन् यज्ञे यजमानाय उरु विस्तीर्णं यथा अधिगम्य विक्रमस्व स्वपादप्रक्षेपं कुरु उपविशेत्यर्थः सिद्धमन्यत् ॥ १३ ॥

अथ सौम्यस्य चतुष्कपालमन्त्रमाह ।

देव सोम रेतोधा अद्यास्मिन्यज्ञे यजमानायैधीन्द्राय देवेभ्योजुहुताद्धविः स्वाहा ॥ १४ ॥

हे सोम देव इदानीमस्मिन्यज्ञे यजमानार्थं रेतोधाता एधि भव ॥ १४ ॥

अथ सावित्रस्य पञ्चकपालस्य मन्त्रमाह ।

देव सवितः सुसावित्रमद्यास्मिन्यज्ञे यजमानायासुव-स्वेन्द्राय देवेभ्योजुहुताद्धविः स्वाहा ॥ १५ ॥

हे सवितः विश्वस्य प्रेरयितः देव सुसावित्रं शोभनं सवितुः कृत्यं इदानीमस्मिन्यज्ञे यजमानायासुवस्वानुजानीहि कुर्विंत्यर्थः ॥ १५ ॥

अथ धातुः षट्कपालस्याह ॥

देव धातः सुधातामद्यास्मिन्यज्ञे यजमानायैधीन्द्राय देवेभ्योजुहुताद्धविः स्वाहा ॥ १६ ॥

हे धातः ब्रह्मन् देव मन्त्राभिमानी बृहस्पतिरित्यर्थः ब्रह्म वै बृहस्पतिरिति श्रुतेः एवं भूतस्त्वं यजमानार्थं सुधाता सुष्ठुकामानां दाता एधि भव ॥ १६ ॥

अथ मारुतस्य सप्तकपालस्याह ।

देवा ग्रावाणो मधुमतीमद्यास्मिन्यज्ञे यजमानाय वाचं वदतेन्द्राय देवेभ्योजुहुताद्धविःस्वाहा ॥ १७ ॥

अत्र मरुतः सदा यजमाना वर्षं सृजन्तीत्यभिषवणकाले अभिषवताहत्यसि वाक्शब्दाविद्यन्त इति यत्र तच्छब्दसाम्यात् ग्राव-

रूपेण मरुतां स्तुतिः हे ग्रावाणो मरुतां विभूतिभूता देवा यूयं यजमानार्थं मधुमतीं माधुर्य्योपेतां वाचं वदता ग्रावभ्यो वाचं वदता वदन्नद्रइति हि निगमान्तरम् ॥ १७ ॥

अथ बार्हस्पत्यस्याष्टाकपालमाह।

देव्यनुमतेन्वद्येमं यज्ञं यजमानाय मन्यस्वेन्द्राय देवेभ्यो-जुह्वताद्धविः स्वाहा ॥ १८ ॥

हे देव्यनुमते अनुज्ञाकर्त्तृदेवते इमं यज्ञं यजमानायानुमन्यस्व अनुमतिं कुरु नन्वयं मन्त्रो बार्हस्पत्यस्य पुरोडाशस्य मन्त्रे त्वनु-मतिरेव प्रकाश्यते कथं वैयधिकरण्यमिति नायं दोषः ब्रह्म वै ब्रह्मणस्पतिरिति श्रुतेः बृहस्पतिमन्त्राभिमानित्वात् मन्त्रेण क्रिय-माणानां कर्म्मणां बृहस्पत्यनुज्ञाया अपेक्षितत्वादनुमत्या एव ब्रह्मणस्पतित्वात् ॥ १८ ॥

अथ मैत्रस्य नवकपालस्य मन्त्रमाह।

देव्यदितेस्वादित्यमद्यास्मिन्यज्ञे यजमानायासुवस्वेन्द्राय देवेभ्योजुह्वताद्धविः स्वाहा ॥ १९ ॥

हे अदिते देवमातः अदितिरदीना देवमातेति निरुक्तात् मित्राख्यस्यादित्यमूर्त्यन्तरस्यापि सेवमाना हे देवि सुशोभनमादि-त्यन्तव पुत्रभूतं अद्यास्मिन्यज्ञे यजमानायासुवस्व आभिमुख्येन प्रेरय ॥ १९ ॥

अथ वारुणस्य दशकपालस्य मन्त्रमाह।

देव्य आपोनन्नम्यध्वमद्यास्मिन्यज्ञे यजमानायेन्द्राय देवेभ्यो जुहुताद्धविः स्वाहा ॥ २० ॥

हे देव्य आपोनन्नम्यध्वं भृशं सस्यादिसमृद्धये प्रणता भवतः वारुणस्यापामधिपतित्वादभेदेनैवोच्यते ॥ २० ॥

अथेन्द्राग्नस्यैकादशकपालस्य मन्त्रमाह ।

सदः सदः प्रजावानभुर्जुषाण इन्द्राय देवेभ्योजुहुताद्धविः स्वाहा ॥ २१ ॥

सदः सदः तत्तद्यागगृहे प्रजावान् मरुदादि प्रजाभिस्तद्वान् ऋभुः उरुभासमान एवं महिमा जुषाणो अस्मद्यज्ञं सेवमानो भवन्तु अस्येन्द्रस्य प्राधान्येन स्तुतिः ॥ २१ ॥

अथ वैश्वदेवस्य द्वादशकपालस्य मन्त्रमाह ।

देव त्वष्ट सुरेतोधा अद्यास्मिन्यज्ञे यजमानायैधीन्द्राय देवेभ्यो जुहुताद्धविः स्वाहा ॥ २२ ॥

त्वष्टा देवशिल्पी स विश्वेषां देवानामुचितानि कर्म्माणि करोतीति स एव वैश्वदेवस्थाने स्तूयते सुरेतोधा सुष्टु रेतसो विधाता विकर्त्ता रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तवाख्या वै तत् प्रजापतिः इति श्रुतेः ॥ २२ ॥

उक्ता द्वादशमन्त्राः तेष्वेते मन्त्राः स्युः ताः पुरोडाशाः क्रमेण विदधाति ।

आग्नेय एककपाल आश्विनो द्विकपालो वैष्णवस्त्रि-
कपालः सौम्यश्चतुष्कपालः सावित्रः पञ्चकपालो धात्रः
षट्कपालो मारुतः सप्तकपालो बार्हस्पत्योऽष्टाकपालो
मैत्रो नवकपालो वारुणो दशकपाल ऐन्द्र एकादश कपा-
लो वैश्वदेवो द्वादश कपालः ॥ २३ ॥

अग्निर्देवतास्य पुरोडाशस्याग्नेय इति एकस्मिन् कपाले संस्कृतः पुरोडाशः एककपालः एकस्यैवाग्नेर्गार्हपत्यादिषु रूपे वर्त्तमानाद्वस्तुत एकत्वादेककपालोयुक्तः, अश्विभ्यां द्वित्वेन व्यपदेशात् द्विकपालः, वैष्णवस्त्रिः इदं विष्णुर्विचक्रमेतिश्रुतेः विष्णोस्त्रिकपालः सम्मतः, जरायुजाण्डजस्वेदजोद्भिज्जानाञ्चतुःप्राणिजातानामुत्पत्त्यर्थं रेतो धारकत्वाद्वाललतावीरुधावनस्पतयो वानस्पत्य इति सोमस्य चतुर्विधानां स्वामित्वाद्वा चतुःकपालो युक्तः, सवितुः सम्वत्सरस्याधिपतित्वात्पञ्चकपालः सम्वत्सरो वै धातेति श्रुत्यन्तरात् धाता सम्वत्सरात्मकः, सम्वत्सरे च षड् ऋतवः सन्तीति धातुः षट्कपालो युक्तः, सप्तगणा इति श्रुतेर्मरुतां सप्तकपालो युक्तः, तैत्तिरीयके अग्निरेकाक्षरेण वाचमुदजयदश्विनौद्व्यक्षरेण न प्राणो पानो व्युदजयतां विष्णुः त्र्यक्षरेण त्रिलोकानुदजयत इत्युक्त्वा वृहस्पतिरष्टाक्षरेण गायत्रीमुदजयन्मित्रो नवाक्षरेण त्रिवृत्स्तोममुदजयद्वरुणो दशाक्षरेण विराजमुदजयत् इन्द्र एकादशाक्षरेण त्रिष्टुभमुदजयद्विश्वे देवा द्वादशाक्षरेण जगतीमुदजयन्निति श्रुतित्वात् तत् कपालसंख्यायोगो द्रष्टव्यः अत्र

उपोषु जातमप्तुरमित्यनुरूपो नौधसं ब्रह्मसाम सुत्रानस्य लोके पौष्कलमित्यादिकः कल्पो द्रष्टव्यः ॥ २३ ॥

इति ताण्ड्यमहाब्राह्मणे एकविंशाध्यायस्य
दशमः खण्डः ॥

---

## अथ एकादशः खण्डः ।

अथ वसिष्ठस्य चतूरात्रमाह ।

त्रिवृत् प्रातःसवनं पञ्चदशं माध्यन्दिनꣳ सवनꣳ सप्तदशं तृतीयसवनं पञ्चदश प्रातःसवनꣳ सप्तदश माध्यन्दिनꣳ सवनमेकविꣳशꣳ तृतीयसवनꣳ सोक्थꣳ सप्तदशं प्रातः सवनमेकविꣳशं माध्यन्दिनꣳ सवनं त्रिणवं तृतीयसवनꣳ सोक्थमेकविꣳशं प्रातःसवनं त्रिणवं माध्यन्दिनꣳ सवनं त्रयस्त्रिꣳशं तृतीयसवनं प्रत्यवरोहीण्युक्थानि त्रिणवं प्रथमं द्वे एकविꣳशे सषोडशिके पञ्चदशी रात्रिस्त्रिवृत् सन्धिः ॥ १ ॥

आदितः पूर्वंपूर्वस्य परित्यागेनोत्तरस्तोमेनेहाभ्युपक्रान्तव्यानि तृतीयाणि त्रीण्युक्थानि प्रत्यवरोहीणि तद्यथा प्रथमतः त्रिणवस्तोमकन्ततो द्वे एकविंश इति ॥ १ ॥

अथैतच्चतूरात्रं कर्त्तुः प्रशंसनद्वारा समृद्धिफलसाधनमित्यत आह ।

वसिष्ठः पुत्रहतो हीन इवामन्यत स एतमपश्यत्सोयं पर्यैद्योहीन इव मन्येत स एतेन यजेत ॥ २ ॥

वसिष्ठः पुत्रहतः पुत्रोहीन इव कुलक्षयः पुत्राभावेन विच्छिन्नत्वादात्मानं हीन इवामन्यत सोयं मनुष्यलोकः पुत्रेणैव जय्य इति श्रुतेः पश्चादेतं चतूरात्रं हीनत्वपरिहारायापश्यत् ज्ञात्वायं पर्यैत् साकल्येनानुष्ठितत्वात्तस्माद्यः पुत्रादिभिः हीनमात्मानं मन्येत स एतेन यजेतेति ॥ २ ॥

अथायतस्तोमात् स्तोमान्तरारम्भः श्रुतस्तत् प्रशंसति ।

यत् स्तोमात् स्तोममभिसंक्रामत्यथादेवायꣳ रोहति वसिष्ठस्य जनित्रे भवतः प्रजात्यै ॥ ३ ॥

वशिष्ठो वा एतं पुत्रहतोऽपश्यत्स प्रजया पशुभिः प्रजायते त्युक्तत्वाद्वसिष्ठः पुत्रजननसाधनत्वेन वसिष्ठस्य जनित्रे इति नामतया कुत्र प्रयोग इति तत्र वहन् पञ्चानाह तेषु प्रथमं यत्रमाह सूत्रकारः वसिष्ठस्य जनित्रे भवत इति संसर्पस्य चतुर्थेहनि वृहदनुष्टुभोः पृथगनुपूर्वमनुकल्पयेत् चतुर्थं हि जनित्रस्थानमिति अस्यायमर्थः वसिष्ठस्य चतूरात्रस्य शाखान्तरप्रसिद्ध्या संसर्प इति नामधेयं तथा च कारब्राह्मणं वसिष्ठो वा अकामयत स इमान् लोकान् सर्पेयमिति स एतं चतूरात्रमपश्यत्ता इमान् लोकान् सर्प तत्संसर्पस्य संसर्पत्वमित्यर्थः तस्य चतुर्थेहनि माध्यन्दिनपवमाने वृहत्यां प्रथमञ्जनित्रं अभिसोमास इत्यत्र मध्ये अर्भवेनुष्टुभि द्वितीयन्तं चोदस्म स्तौषहमित्यत्र गायेत् यद्यपि जनित्रे भवत इति सहैव पठिते तथापि

जनित्वा जनित्रा इत्युभयोरप्यस्यैकरूपत्वाद्जामितायै पृथगेव प्रयोक्तव्ये इति विशेषेण विहितयोः जनित्रयोः कथं चतुर्थेऽहनि नियम इति अत्रोपपत्तिरुच्यते चतुर्थमहः जनित्रस्य स्थानं दृष्टं समूढे षडहे सोमः पवते जनितामतीनामिति जनित्रसन्त्वं माध्यन्दिनस्येति कल्पकारवचनात् तदत्रापि युक्तमित्यर्थः अथ द्वितीयं पक्षमाह राथन्तरबृहत्योर्वासिष्ठं प्रजननोक्तं रथन्तरमिति अस्यार्थः द्यामन्दः पक्षान्तरार्थं अथ वा राथन्तरबृहत्पृष्ठयोः प्रथमतृतीययोरह्नोः पवमाने ये बृहत्यौ तयोर्जनित्रे कुर्य्यात् पुनरनुष्टुभि च्छन्दःसाम्यात् बृहत्योर्जनित्रयोरुत्पत्तिर्हेत्वन्तरमुच्यते प्रजननत्वेन रथं संस्तुतं रथन्तरं वरिष्ठय रथन्तरं दृष्ट्वा तादृशे च जनित्रे इति सा दृश्यते तयोरह्नोः करणं तृतीयं पक्षमाह वार्हतयोरित्येके तयोर्विकल्पः स्यादार्षेयकल्पेनेति बृहत्यबृहत्योर्द्वितीयचतुर्थयोरह्नोर्ये बृहत्यौ तयोः कुर्य्यादित्यर्थः आर्षेयकल्पे एते सामनी नोक्ते इति तयोर्विकल्पः स्यादेतेनार्षेयकल्पेनेत्युक्तं प्रत्यक्षब्राह्मविहितत्वेन त्वयोगादिकल्पोऽयुक्त इत्यभिप्रायः ॥ ३ ॥

अथ चतुर्थेऽहनि प्रत्यवरोहीण्युक्थानि तानि प्रशंसति ।

**प्रत्यवरोहीण्युत्तमस्याह्न उक्थानि भवन्ति प्रतिष्ठित्यै ॥ ४ ॥**

एकविंशाहर्द्वयकर्त्तव्यत्वात् प्रतिष्ठितहेतुत्वं अत्र या जामदग्न्यस्य प्रथमा सा संतर्पस्य न वा सौपर्णे उद्धरति परितोषिञ्च तासतमिति वार्हदुक्थमित्यादि कल्पो द्रष्टव्यः ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे एकविंशाध्यायस्य
एकादशः खण्डः ।

अथ द्वादशः खण्डः ।

अथ विश्वामित्रस्य सञ्जयाख्यं चतूरात्रमाह ।

त्रिवृदग्निष्टोमः पञ्चदशउक्थ्यः सप्तदशउक्थ्य एकविंशो-तिरात्रो विश्वामित्रस्य सञ्जयः ॥ १ ॥

विश्वामित्रस्य सञ्जयसाधनत्वात् सञ्जयं नाम ॥ १ ॥

कथमेतन्नाम सम्पन्नमिति तदुपपादयति ।

जह्नु वृचीवन्तोराष्ट्र आहिंसन्त स विश्वामित्रो जाह्नवी राजैतमपश्यत् स राष्ट्रमभवदराष्ट्रमितरे ॥ २ ॥

जह्नोः पुत्रा ऋचीवन्नामकाः केचन राजानः आसन् ते च राष्ट्रे राष्ट्रविषये राज्यस्वामित्वाय अहिंसन्त परस्परं हिंसां कलहं सर्वतोऽकुर्वन् तेषां मध्ये जाह्नवः जह्नुपुत्रो विश्वामित्र एतं चतूरात्रमपश्यत् दृष्ट्वा स्थितवानित्यर्थः स तत्सामर्थ्यात् राष्ट्रमभवत् राष्ट्रं सर्वं विश्वामित्र एव पर्य्यगृह्णीदित्यर्थः इतरे ऋचीवन्त अराष्ट्रं अराष्ट्रनामका इतरराज्यस्थाः पुरुषानाङ्गी चक्रुरित्यर्थः ॥ २ ॥

एतस्याधिकारिणमाह ।

भ्रातृव्यवान्यजेत ॥ ३ ॥

यस्माद्भ्रातृव्याणां मध्ये वसिष्ठोन इतरलक्षणेन अतोजय-साधनमभूत् अतो भ्रातृव्यवानधिकारी ॥ ३ ॥

उक्तार्थवेदनं प्रशंसति ।

**भवत्यात्मना परास्य भ्रातृव्यो भवति य एवं वेद ॥ ४ ॥**

स्वयं यजनवान् भवति अस्य भ्रातृव्यः पराजितो भवतीत्यर्थः ॥ ४ ॥

अथ चतुर्णामह्नां यत्त्रिवृदादिस्तोमचतुष्टयात्मकत्वमस्ति तत् प्रशंसति ।

**ज्योतिर्वा एषविवृतः ॥ ५ ॥**

त्रिवृत्पञ्चदशसप्तदशैकविंशतानेव तानि ज्योतींषीति श्रुत्यन्तरादेष चतूरात्रविवृतो ज्योतिरेव ॥ ५ ॥

अथ वेदनं प्रशंसति ।

**ज्योतिः प्रजानां भवति य एवं वेद ॥ ६ ॥**

स्पष्टं ॥ ६ ॥

प्रकारान्तरेणैतं चतूरात्रं प्रशंसति ।

**चतुष्टोमो वा एष चतुष्पादाः पशवः पशुष्वेव प्रतितिष्ठति ॥ ७ ॥**

एष चतूरात्रश्चतुष्टोमः खलु क्रमेण त्रिवृदादीनां विधानात् ॥ ७ ॥

अथ चतुर्णामप्यह्नां यदेकविंशात् स्तोमादतिक्रमणमस्ति तत् प्रशंसति ।

एकविꣳशꣳस्तोमानातियन्ति प्रतिष्ठा वा एकविꣳशोन्तत एव यज्ञस्य प्रतितिष्ठति ॥ ८ ॥

प्रजापतेः पादत उत्पन्नत्वात्पादयोः प्रतिष्ठाहेतुत्वात् असावादित्य एकविंश इति श्रुतेः तस्य च प्रतिष्ठितत्वात्तस्य प्रतिष्ठितत्वं अत्र प्रसोमासो विपश्चित इति गायत्रमेकस्यामाख्यमेकस्यां जराबोधीयमेकस्यां प्रसोम देववीतय इति यौधाजयन्त्रिस्तृपु समानजितरं प्रथमेनाह्ना संसर्पयेत्यादिकः कल्पोद्रष्टव्यः ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे एकविंशाध्यायस्य
द्वादशः खण्डः।

---

अथ त्रयोदशः खण्डः।

अथ त्रयः पञ्चरात्राः तत्राभ्यासंख्याख्यं पञ्चरात्रमाह।

द्वे त्रिवृती सवने पञ्चदशमेकं द्वे पञ्चदशे सवने सप्तदशमेकं द्वे सप्तदशे सवने एकविꣳशमेकं द्वे एकविꣳशे सवने त्रिणवमेकं द्वे त्रिणवे सवने त्रयस्त्रिꣳशमेकं प्रत्यवरोहीण्युक्थानि त्रिणवं प्रथमं द्वे एकविꣳशे सषोडशिके पञ्चदशो रात्रिस्त्रिवृत्सन्धिः ॥ १ ॥

त्रिवृत्स्तोमके प्रातर्मध्यन्दिने सवने तृतीयं सवनं पञ्चदशस्तोमकं पुनर्द्वितीयस्मिन्नहनि द्वे पञ्चदशस्तोमके सवने तृतीयं सप्तदशस्तोमकमित्येवं क्रमेण द्रष्टव्यं अत्राप्युक्थानि त्रीण्यपि

प्रत्यवरोहस्तोमकानि तत्रायं विभागः त्रिणवं प्रथममुक्थं द्वे उक्थे एकविंशे रात्रिः सन्धिः प्रकृतिवदेव ॥ १ ॥

अस्मिन् पञ्चरात्रे यत्पञ्चरात्रत्वमस्ति तत् प्रशंसितुमाह ।

देवाश्च वा असुराश्चास्पर्द्धन्त ते न व्यजयन्त ते ब्रुवन् वाचो मिथुनेन विजयामहै यतरेनो वाचो मिथुनन्नप्रतिविन्दा᳟स्ते परा भवानिति ते देवा एक इत्यब्रुवन्नेकेत्यसुरा वाचो मिथुनं प्रत्यविन्दं द्वाविति देवा अब्रुवन् द्वे इत्यसुरा वाचो मिथुनं प्रत्यविन्द᳟स्त्रय इति देवा अब्रुव᳟स्तिस्र इत्यसुरा वाचो मिथुनं प्रत्यविन्द᳟श्चत्वार इति देवा अब्रुव᳟श्चतस्र इत्यसुरा वाचो मिथुनं प्रत्यविन्दन् पञ्चेति देवा अब्रुवन्नासुरा अविन्द᳟स्ततो देवा अभवन् परासुराः ॥२॥

पूर्वं देवाश्चासुराश्चास्पर्द्धन्त ततो अन्येषामपि जये यः अप्राप्तः तदर्थं देवा इत्यब्रुवनसुरान् वयं वाचो मिथुनेन स्त्री पुंलिगात्मकेन विजयामहै जयं प्राप्नुमः अस्माकं मध्ये वाङ्मिथुनं प्रयोक्तुं न शक्नुवन्ति ते पराभूता इति मिथुनः समयमकुर्वत एवं सति ते देवा एक इति पुंलिङ्गां वाचं अब्रुवन् तस्याः प्रतियोगित्वेन एके तिस्त्रोलिङ्गा वाचमब्रुवन् एवं द्वि त्रि चतुः संख्यावाचकं वाचो मिथुनं परस्परमब्रुवन् ततो देवाः पञ्चेत्यब्रुवन् तस्य स्त्रीलिङ्गे रूपाविशेषात् विलक्षणशब्दं कर्त्तुंनाविन्दन् नालभन्त ततो

वाचो मिथुनजया देवा अभवन् समभुवन् असुरास्तु पराभवन् एवं देवानां जयहेतुरयं पञ्चरात्र इति तस्य स्तुतिर्द्रष्टव्या ॥ २ ॥

उक्तार्थवेदनं प्रशंसति ।

भवत्यात्मना परास्य भ्रातृव्यो भवति य एवं वेद ॥ ३ ॥

स्पष्टं ॥ ३ ॥

पुनः प्रशंसति ।

संवत्सरं वा एषान्तद्वीर्यमन्नाद्यमवृञ्जत ॥ ४ ॥

तत्तदा वाग्विवादकाले एषामसुराणामन्नाद्यं वीर्यं आगिष्ठलक्षणं यदा बहुपुत्रपोषणसामर्थ्यं मध्यं संवत्सरं संवत्सरमूर्त्तिपर्य्यन्तमवृञ्जत् अवर्जयन् देवाः संवत्सरस्य पञ्चात्मकत्वात् पञ्चसंख्यायां वाचो मिथुनन्नाविन्दन् यतः अतः संवत्सरं वीर्येणावृञ्जतेत्यर्थः ॥ ४

उक्तार्थज्ञं प्रशंसति ।

संवत्सरं वीर्यमन्नाद्यं भ्रातृव्यस्य वृङ्क्ते य एवं वेद ॥ ५ ॥

स्पष्टं ॥ ५ ॥

पुनरत्र यत् पञ्चत्वं तत् प्रशंसति ।

पञ्चरात्रो वा एष पाङ्क्तः पुरुषः पाङ्क्ताः पशवस्तेन पुरुषञ्च पशूꣳश्चाप्नोति ॥ ६ ॥

एषयज्ञः पञ्चरात्रः खलु पाङ्क्तः पुरुषः द्वौ पादौ द्वौ

हस्तो मध्यदेहश्चेति पुरुषः पञ्चसंख्यायोगात्पाङ्क्तः पशवोपि पाङ्क्तास्तत्प्रयोगेन पुरुषं पुत्रभृत्यादिरूपं पशून् प्राप्नोति यजमानः ॥ ६ ॥

अथैतत्सवनत्रयस्तोमं द्वित्वसंख्याद्वारेण प्रशंसति ।

अस्थूरिर्वा एष सन्ततो यज्ञो द्वौ द्वौ हि स्तोमावहर्वहतोयं कामं कामयते तमेतेनाभ्यश्नुते ॥ ७॥

एष उक्तः पञ्चरात्रः सन्ततोऽस्थूरिर्वै यद्वा अस्थूरिः सन् सन्ततः अविच्छेदेन प्रवृत्तः अस्थूरित्वमेव दर्शयति द्वौ द्वावेव त्रिवृदादि स्तोमौ खलु एकैकमहर्वहतः स्तोमद्वयेनाहर्वहनप्रकारो द्वे त्रिवृती सवने पञ्चदशमेकमित्यादिना स्पष्टं अतोप्राप्तिसाधनविषयसंख्याया अत्राभावाद्यजमानोयं कामं कामयते तदस्थूरिणा पञ्चरात्रेणाप्नोति ॥ ७ ॥

तदेव प्रसिद्धोक्त्याह ।

यत्र यत्र ह्यस्थूरिणा कामयते तत्तदभ्यश्नुते ॥ ८ ॥

यस्मिन् देशे अस्थूरिणाभ्यश्नुत इत्युक्तं भवति ॥ ८ ॥

अथ पुनः प्रशंसति ।

अभ्यासंग्यः पञ्चाहो भवति सन्तत्यै ॥ ९ ॥

अभ्यासङ्गनप्रयुक्तेन स्तोमेन पुनरनन्तरे यत्कुर्म इत्यर्थः तद्वताञ्चाहःकर्त्तव्यः सचाङ्गः सन्तत्या अविच्छेदाय भवति ॥ ९ ॥

अथोक्थानां यः प्रत्यवरोहः प्रयोगोऽस्ति तं प्रशंसति।

प्रत्यवरोहीण्युत्तमस्याह्न उक्थानि भवन्ति प्रतिष्ठित्यै ॥१०॥

स्पष्टं। अथ वैश्वामित्रोदग्रहो जरावोधीयस्य लोकसोमसामस्याङ्गिरसामर्कस्य सोत्त्वं सौरभस्यौपगवं द्वादशाहिकं तृतीयमहरित्यादिकः कल्पोक्त द्रष्टव्यः ॥ १० ॥

इति ताण्ड्यमहाब्राह्मणे एकविंशाध्यायस्य
त्रयोदशः खण्डः।

---

अथ चतुर्दशः खण्डः।

पञ्चशारदीयाख्यं पञ्चरात्रमाह।

त्रिवृदग्निष्टोमः पञ्चदश उक्थः सप्तदश उक्थः पञ्चदश उक्थः सप्तदशोतिरात्रः पञ्चशारदीयोमरुतांᳲस्तोमः ॥ १ ॥

यः पञ्चसु शरत्स्वङ्गभूतैः पशुवन्धैरिष्ट्वा पश्चाद्य आरभ्यते स पञ्चशारदीयो नाम स एव मरुतां स्तोमः ॥ १ ॥

अस्याधिकारिणमाह।

यः कामयेत बहु स्यामिति स एतेन यजेत ॥ २ ॥

स्पष्टं ॥ २ ॥

उक्तं फलं प्रयोगद्वारा प्रशंसति।

मरुतो वै देवानां भूयिष्ठा बहुरेव भवति ॥ ३ ॥

देवानां मध्य अतिशयेन बहवः अत एतदनुष्ठातापि पुत्रा-दिभिर्बहुरेव भवति ॥ ३ ॥

अथ यत् स्तोमानां सप्तदशादनतिक्रमणमस्ति तत् प्रशंसति ।

सप्तदशꣳ स्तोमानातियन्ति प्रजापतिर्वै सप्तदशः प्रजा-पतिमेवाप्नोति ॥ ४ ॥

यः स्तोमः सप्तदशं स्तोमं नातिक्रामति प्रजापतिर्वै सप्तदशः स्तोमः अतः स्तोतारः प्रजापतिमेवाप्नुवन्ति ॥ ४ ॥

अथ विधास्यमानसप्तदशोपलक्षणस्तुत्यर्थं कयाशुभीयस्य साम्नो विधानार्थं पुरावृत्तमाह ।

अगस्त्यो वै मरुद्भ्य उक्ष्णः प्रौक्षत्तानिन्द्रायावध्नात्ते वज्रमादायाभ्यपतत्ता एतत्कयाशुभीयमपश्यत्तेनाशमयत् ॥ ५ ॥

पूर्वं अगस्त्योमरुद्भ्यो देवेभ्य उक्ष्णः प्रौक्षत् मरुद्भ्यो देवेभ्यो युष्मान् प्रोक्षानीति प्रोक्षितवान् अस्ति प्रोक्षणसमये देवतोद्देशः यथापस्तम्बः उपकरणेतियोगप्रोक्षणे वपा यदुद्धरणे इति एव-म्मरुद्भ्यः प्रोक्षितानेवेन्द्रायावध्नात् उपेत्य न्ययोजयत् नियोजनेपि देवतोद्देशः प्रदर्शितः ते मरुतः क्रुद्धा वज्रमुद्यम्यागस्त्यमभ्यपतत् अपीडयन् सो अगस्त्य एतत्कयाशुभीयं साम मरुतां शान्त्यर्थं अपश्यत् तेन तेषां कोपं अशमयत् तैत्तिरीयके अपि अगस्तेऽ-न्द्रावुभावपि मरुतां कोपमशमयतामगस्त्यश्चेन्द्रश्च कयाशुभी-येनाशमयतामिति ॥ ५ ॥

इदानीन्तद्विधत्ते ।

यत् कयाशुभीयं शस्यते शान्त्या एव ॥ ६ ॥

स्पष्टं । ६ ।

अथ पञ्च संवत्सरेषु ये पशुबन्धाः सन्ति तत्र प्रयोगसंग्रहः सप्तदशोक्षाणाः प्रोक्षणान्तं कृत्वा विसृजेत् तत् स्थाने त्रिवृत्स्तोमः आलभेत एवं पञ्च संवत्सरोपितं परित्यक्तानामनूबन्ध्यान् कुर्यादिति तत्सर्वं प्रदर्शयति ।

सप्तदश पृश्नीनुक्ष्णः पञ्चवर्षान् सप्तदश पृश्नीस्त्रिवत्सा अप्रवीतास्तान् पर्यग्निकृतान् प्रोक्षितानेतरालभन्ते प्रेतरान् सृजन्ति ॥ ७ ॥

सप्तदशसंख्यान् पञ्चवर्षीयानुक्तलक्षणान् सवनसमर्थान् ऋषभान् सप्तदशसंख्याका स्त्रिवत्सा वर्षत्रयस्का अप्रवीता वीगतिप्रजनकान्त्यशनखादनेषु धातोः अत्र प्रजननार्थः अगर्भिणीरित्यर्थः तायानीय सहैवोपाकृत्य तानुभयानपि प्रोक्षितान् पर्य्यग्निकृतान् कृत्वा इतरा वत्सतरीरालभेरन् इतरानुक्ष्णो विसृजेयुः प्रोक्षितानिति स्त्रोपुंवच्चेति पुंवद्भावः पुंलिङ्गता आधारार्थे पदविभागः आलभन्ते प्रेतरान् सृजन्तीति समन्वयः ॥ ७ ॥

अथ द्वितीयादिसंवत्सरचतुष्टयेऽप्येवमेकत्वमित्याह ।

ततः संवत्सरे नवनीतपृश्नीररुणा आनयन्ति ताꣳ शैवोक्ष्णस्तान् पर्यग्निकृतान् प्रोक्षितानेतरालभन्ते प्रेतरान्

सृजन्ति ततः संवत्सरे राजीवा आनयन्ति ताꣳ स्त्रैवोद्दण-स्तान् पर्यग्निकृतान् प्रोक्षितानेतरालभन्ते प्रेतरान् सृजन्ति ततः संवत्सरे पिशङ्गीरानयन्ति ताꣳ स्त्रैवोद्दणस्तान् पर्यग्नि-कृतान् प्रोक्षितानेतरालभन्ते प्रेतरान् सृजन्ति ततः संव-त्सरे सारङ्गीरानयन्ति ताꣳस्त्रैवोद्दणस्तान् पर्यग्निकृतान् प्रोक्षितानेतरालभन्ते प्रेतरान् सृजन्ति ॥ ८ ॥

आलभ्यानां स्त्रीपशूनां वर्णे प्रतिसंवत्सरं विशेषः तद्वर्ण-विशेषाः स्पष्टाः उक्तानेव वर्णविशेषानापस्तम्बोनुचक्राम वर्णाननु-क्रमिष्यामो राजीवानवनीतपृश्निररुणपिशङ्गी सारङ्गी उत्त-मीरालभ्य दीच्चन्त इति अत्र द्राह्यायणः पञ्चशारदीये पशुवन्धै-र्यजेत त उक्ता ब्राह्मणेन सप्तम्यामष्टम्यां वाश्वयुजोपचेतु वत्सतरी-रेवालभेरन्नुक्षो विसृजेयुस्तेषां यावन्तोभ्रेषमापद्येरंस्तावतोन्यान-यजुष्ट तानपि सृजेयुस्तथारूपां स्तावद्वर्षान् षष्ठ्यां शरदि कार्त्तिके मासि यजेत तस्य द्वादशोपसदः ॥ ८ ॥

अस्य विहितपञ्चरात्रस्य यः कालस्तन्दर्शयति ।

ततः संवत्सरे सोमाभवन्ति ॥ ९ ॥

पञ्चसु शरत्सु पशुवन्धैरिष्ट्वा ततोनन्तरं समानान्तरे स एव सोमा भवन्ति पञ्चसोमान् यागान् कुर्य्युः तत्रापि कालविशेषः षष्ठ्यां शरदि कार्त्तिकइति ॥ ९ ॥

तत्प्रदर्शितपञ्चवर्षसंपूर्त्तिपर्य्यन्ताः ये सप्तदशोक्षणः पर्य्यग्नि-

कत्य युक्ताः तेषां मध्ये प्रत्यहं कियन्त आलभ्याइति विवेके प्राप्त-
माह॥

**ब्रीं(३)स्त्रीनन्वहमालभन्ते पञ्चोत्तमेऽहनि॥१०॥**

स्पष्टं॥१०॥

सवनीयपशुवदग्नीषोमीयस्येत्युक्तश्रुतिरिति क्षयरोगाभिमानि-
नी पापदेवता प्रसक्तौ अजः कर्त्तव्य इत्याह॥

**अजोऽग्नीषोमीयः॥११॥**

स्पष्टं॥११॥

अथ उक्थपशूनां उक्तान्तपशुवन्ययोगादुत्सतरीणाञ्च देवता
माह॥

**ऐन्द्रामारुता उक्षाणो मारुत्यो वत्सतर्यः॥१२॥**

इन्द्रस्य मरुताञ्च पशुसम्बन्ध अगस्त्योवै मरुद्भ्यउक्षणः प्रौक्ष-
दित्यादिकः॥१२॥

अथालम्भात् पुरा कस्यचिदुक्ष्णो रुद्रेणातियातः तस्योपाय-
माह॥

**यदि रुद्रोऽभिमन्येताग्नये रुद्रवते पुरोडाशमष्टाकपाल-
न्निरुप्याथान्यमालभेत॥१३॥**

यद्यदि किञ्चिदुक्षणे रुद्रेण रुद्रः पशुस्वामी अभिमन्येत
रोगोत्पादनेन प्रणाशयेत् सुज्ञानमन्यत्॥१३॥

अथ प्रमादादरपतनादिना अभूमावेव कश्चित् संशीर्य्येत तदा कथमिति तत्राह।

यदि सञ्छीर्य्येत भौममेककपालं निरूप्याथान्यमालभेत ॥ १४ ॥

भौमो भूमिर्देवताकः तस्य एकत्वादेककपालोयुक्तः ॥ १४ ॥

पोषार्थं मुक्तानां मध्ये यदि कश्चिदत्यन्तकृशःस्यात्तत्राह।

यद्यवसीदेन्नैऋतञ्चरुन्निरूप्याथान्यमालभेत यद्यप्सु म्रियेतापोनप्त्रीयञ्चरुन्निरूप्याथान्यमालभेत यद्यन्धः स्यात् सौर्यं चरुन्निरूप्याथान्यमालभेत ॥ १५ ॥

सूर्य्यश्चक्षुरभिमानिदेवत्वात्तदीयोयुक्तः ॥ १५ ॥

त्वग्दोषश्रृङ्गाद्यङ्गयोरित्याह।

यदि स्रवणो वा कूटोवा स्याद्बार्हस्पत्यञ्चरुन्निरूप्याथान्यमालभेत ॥ १६ ॥

स्रवणोरक्तवर्णो विडद्वारः त्वग्दोषः कूटः श्रृङ्गहीनः ॥ १६ ॥

अथ कस्यचित्पलायमानमाह।

यदि पलायेत वायव्यं चरुन्निरूप्याथान्यमालभेत ॥१७॥

पलायनस्य वायुनुग्रहाधीनत्वाद्वायव्यश्चरुर्युक्तः ॥ १७ ॥

अथ चौर्य्यादिभिः कस्यचिद्बलादपहारे आह।

यदि प्रासह्वाजयेयुरिन्द्राय प्रसह्वन एकादशकपालन्निरूप्याथान्यमालभेत ॥ १८ ॥

बलात्कारस्येन्द्राधीनत्वादैन्द्र एकादशकपालोयुक्तः ॥ १८ ॥

अथ रुद्रस्य व्यतिरेकेण मृत्युनैव यदि कश्चित् मृतः स्यात्तन्नाह।

यद्यन्येन मृत्युना म्रियेत प्राजापत्यं द्वादशकपालन्निरूप्याथान्यमालभेत ॥ १९ ॥

मृत्योरिति प्रजापत्यधीनत्वात् प्रजापतेः संवत्सरात्मकत्वात् द्वादशमाससद्भावात् प्रजापतेस्तत्संख्याकपालः पुरोडाशो युक्तः ॥ १९ ॥

अथास्य सर्वसिद्धिसाधनत्वं प्रयोगद्वारेणोपपादयति।

एतेन वा एकया वा गान्दमो वेतस्वतीष्ट्वा सर्वामृद्धिमार्ध्नोत् ॥ २० ॥

एतेन खलु पञ्चरात्रेण एकया वा एक एव सहायः सन् मित्रयत्यमित्रानित्येकथा वा गान्दरेषां वाचं भूमिवादमयतीति गान्दमः वेतस्वति सद्भुवेतासुतीर्थविशेष इष्ट्वा सर्वांमृद्धिं कृत्स्नां भूमिं स्वामित्वलक्षणामार्ध्नोत् प्राप्तवान् ॥ २० ॥

सर्वामृद्धिमृध्नोति य एवं वेद ॥ २१ ॥

स्पष्टं ॥ २१ ॥

इति ताण्ड्यमहाब्राह्मणे एकविंशाध्यायस्य
चतुर्दशः खण्डः ॥

---

अथ पञ्चदशः खण्डः ।

अथान्तर्महाव्रतस्य पञ्चरात्रमाह ।

ज्योतिष्टोमोऽग्निष्टोमो गौरुक्थो महाव्रतं गौरुक्थ आयुरतिरात्रः ॥ १ ॥

सुगमं ॥ १ ॥

यन्महाव्रतं मध्यमहस्तत् प्रशंसितुमाह ।

संवत्सरो वै व्रतं तस्य वसन्त ऋतुर्मुखं ग्रीष्मश्च वर्षाश्च पक्षौ शरन्मध्यꣳ हेमन्तः पुच्छं २ ॥

यन्महाव्रतमस्ति तत् संवत्सरो वै संवत्सरसत्रस्य गवामयनस्योत्पत्तिमाह तस्य महाव्रतस्य संवत्सररूपत्वमुक्तं अतः संवत्सरावयवेन महाव्रतावयवे योजयति ऋतुषु वसन्तस्य प्राधान्यात् अङ्गेषु मुखस्य प्राधान्यात् वसन्तस्य मुखकल्पनं ग्रीष्मवर्षयोः परस्परप्रतियोगित्वेन पक्षद्वयकल्पना शरदः ऋतुषु मध्यमत्वात् मध्यत्वकल्पनं हेमन्तस्यान्तिमत्वात् पुच्छकल्पनं ॥ २ ॥

शरदो मध्यत्वे उपपत्तिं दर्शयति ।

तस्माच्छरदमोषधयोऽभिसंपच्यन्ते शरद्धिमध्यꣳ संवत्सरस्य ॥ ३ ॥

यस्माच्छरत् महाव्रतस्य मध्यदेशः तस्माच्छरदमभिलक्ष्य ओषधयो व्रीहियवादयः पच्यन्ते यथापलिता भवेयुस्तथा क्रियन्ते

कृषीवलैः मध्यतोऽस्यान्नं धीयते अतः शरदि अन्नसिद्धिस्तस्य मध्य-देहकल्पनमिति प्रसिद्धिदर्शनार्थं एतत् प्रासङ्गिकं ॥ ३ ॥

अथास्मिन् पञ्चरात्रे महाव्रतमनुक्रममित्याक्षिपति ।

अकृतं वा एते कुर्वन्ति ये पुरा संवत्सरात् व्रतमुपयन्ति- ॥ ४ ॥

महाव्रतस्य संवत्सरसत्र एवाभिप्रायेण सम्भवात् संवत्सरा-त्पुरा पञ्चरात्रे व्रतं महाव्रतं यदुपयन्ति अकृतकार्य्यमेव कुर्वन्ति अतो न युक्तमत महाव्रतमित्यर्थः । ४ ।

अथास्य परिहारमाह ।

एतद्वै व्रतमाप्तं यत्पञ्चरात्रे पञ्चह्यृतवः ॥ ५ ॥

अस्मिन् पञ्चरात्रे यद्व्रतमस्ति एतत् खलु आप्तं आप्तव्ययुक्तं व्रतं अतोऽकृतकरणन्न भवति अत्र ज्योतिष्टोमोग्निष्टोमो गौरूक्थो महाव्रतं गौरूक्थ आयुरतिरात्र एकाह क्रमा इति कल्पो द्रष्टव्यः कथमस्याप्तत्वमिति तद्दर्शयति पञ्चह्यृतव इति संवत्सरे हेमन्त-शिशिरयोरैकेन पञ्चऋतवः खलु अयमपि पञ्चरात्र अतः पञ्चत्व-संख्यासाम्यात् पञ्चरात्रस्य संवत्सरसत्रसदृशत्वात् आप्तमेव व्रत-मित्यर्थः ॥ ५ ॥

उक्तार्थवेदनं प्रशंसति ।

आप्तेन व्रतेन स्तुते सर्वमायुरेति य एवं वेद ॥ ६ ॥

व्रतमिति प्राधान्यं न महाव्रताहर्गतानां राजनादिपञ्च-

साम्नान्तत्सम्बन्धीनां तदाश्रयस्याङ्गोपि नामधेयं अतो यो व्रत-स्याप्तत्वयुक्तरूपेण जानाति स आप्तेनैतद्व्रतेनैव च स्तुते सर्वं सम्पूर्णं व्रतं संवत्सरलक्षणमायुश्चेति प्राप्नोति।

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥ ६॥

इति श्रीमहाराजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्क-भूपालसाम्राज्यधुरन्धरेण सायणाचा-
र्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे

ताण्ड्यमहाब्राह्मणे एकविंशाध्यायस्य
पञ्चदशः खण्डः।

एकविंशोऽध्यायः समाप्तिमगमत्।

---

# अथ द्वाविंशोऽध्यायः ।

## अथ प्रथमः खण्डः ।

यस्य निःश्वसितं वेदायोवेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ।
एकविंशे गर्गशेषस्तथा पञ्चत्रिरात्रकाः ।
चतूरात्राश्च चत्वारः पञ्चरात्रास्त्रयः क्रमात् ।
प्रोक्ता द्वाविंशकेऽध्याये षड्रात्राह्यथ वर्ण्यते ।
त्रयः षड्रात्राः तत्र प्रथमं प्रतिष्ठासाधनं ऋतूनां षड्रात्रमाह ।

पृष्ठ्यः षडहः ॥ १ ॥

ते च षडहाः कल्पकारैः पृष्ठ्यः षडहः समूढो वा व्यूढोवेत्युक्तवान् उभयोरन्यतरप्रकृतिकत्वं ॥ १ ॥

अथास्य ऋतुसम्बन्धं ब्रूवन् अधिकारिणमाह ।

ऋतवो न प्रत्यतिष्ठꣳस्त एतेन प्रत्यतिष्ठन् प्रतिष्ठाकामा यजेत प्रत्येव तिष्ठति ॥ २ ॥

स्पष्टोर्थः ॥ २ ॥

पुनः प्रकारान्तरेण प्रशंसति ।

षड्वा ऋतव ऋतुष्वेवैतेन प्रतितिष्ठति पृष्ठः षडहो भवति प्रत्यक्षमृध्यै ॥ ३ ॥

यस्मिन् षडहे रथन्तरादि रैवतान्तं पृष्ठानि क्रमेण होतुः पृष्ठानि स्युः स पृष्ठ्यः षडहः स चेतरक्रतुवदतिशयफलत्वाभावात् प्रत्यक्षसमृध्या एव भवति ॥ ३ ॥

अस्य कथं प्रत्यक्षर्द्धिहेतुत्वमिति तत्राह ।

प्रत्यक्षं ह्येतेनर्त्तव आर्ध्नुवन्नृध्या एव ॥ ४ ॥

एतेन पृष्ठषडहेन ऋतवः खलु प्रत्यक्षमिदानीं दृश्यमानप्रकारेण शाखोचितपुष्पफलादिलक्षणेनार्ध्नुवन् अतोयमृध्या एव भवति कल्पः पृष्ठ्यः षडहः समूढो वा शव्यूढो वा समूढस्त्वेव तस्योपास्मै गायतानर उपोषु जातमप्तुरः पवमानस्यते कव इति प्रथमस्याह्नोवहिष्पवमानमौदलमासितं त्वाष्ट्रीसामेत्यादिकः कल्पो द्रष्टव्यः ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे द्वाविंशाध्यायस्य
प्रथमः खण्डः ।

---

अथ द्वितीयः खण्डः ।

अथोपरिष्टात् त्रिकद्रुकाख्यं द्वितीयं षड्रात्रमाह ।

त्रिवृदग्निष्टोमः पञ्चदशउक्थः सप्तदशउक्थो ज्योतिर्गौरायुरतिरात्रः ॥ १ ॥

ज्योतिरादय एकाहिका द्रष्टव्याः ॥ १ ॥

अथास्मिन्नधिकारिणमाह ।

य: कामयेत सर्वमायुरियामिति स एतेन यजेत ॥ २ ॥

स्पष्टं ॥ २ ॥

पूर्वंत्र्यहं प्रशंसति ।

यत्त्र्यहः पुरस्ताद्भवति त्रयः प्राणापानव्यानास्त एव तत्सन्धीयन्ते ॥ ३ ॥

यद्यदि त्रिवृत्पञ्चदशसप्तदशस्तोमात्मकस्त्र्यहः षडहस्य पुरस्ताद्भवति प्राणापानव्यानात्मकाः प्राणा अपि तेन त्र्यहेन त एव प्राणादयः सन्धीयन्ते संयोजिता भवन्ति ॥ ३ ॥

उत्तरं त्र्यहं प्रशंसति ।

अथ यत् ज्योतिर्गौरायुरतिरात्रो भवति प्रतिष्ठित्यै ॥ ४ ॥

स्पष्टः तत्रैष एव त्र्यहो यद्दतूनां यथाव्यूह इत्यादिकः कल्पो द्रष्टव्यः ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे द्वाविंशाध्यायस्य
द्वितीयः खण्डः ।

---

अथ तृतीयः खण्डः ।

अथाभ्यासंग्याख्यं तृतीयं षड्रात्रमाह ।

अभ्यासंग्यः पञ्चाहोविश्वजिदतिरात्रः ॥ १ ॥

आदौ पञ्चाहो द्वे त्रिवृती सवने पञ्चदशमेकं द्वे पञ्चदशे

सवने सप्तदशमेकं द्वे सप्तदशे सवने एकविंशमेकमित्याद्यभ्यासंग्यः क्रमेनानुष्ठेयः षष्ठमहर्विश्वजिदतिरात्रः कर्त्तव्यः ॥ १॥

अथ तं षड्रात्रक्रतुं सत्रात्मना स्तोतुं सत्रपक्षयोः फलवैलक्षण्यं दर्शयति ।

## अन्यस्मै वै कामाय सत्रमन्यस्मै यज्ञो न तत्सत्रेणाप्नोति यस्मैकं यज्ञेन तद्यज्ञेनाप्नोति यस्मैकꣳ सत्रं ॥ २ ॥

अन्यस्मै कामाय खलु सत्रमनुष्ठीयते तथा यज्ञोपि तदेव स्पष्टयति यस्मैकं यस्मै फलाय स्वर्गादिलक्षणाय वै यज्ञो ज्योतिष्टोमादिरनुष्ठीयते तदेव फलं सत्रेणाप्नोति फलस्य प्रतिनियतत्वात् सत्रेण यत्तत् फलं यज्ञेनाप्नोति उभयत्र कमित्यनर्थको यस्मैकं युनेन क्षाकयमित्यादिवत् ॥२॥

अस्त्वेवमुभयोः फलवैलक्षण्यं प्रकृते किमायातमित्याह ॥

## सत्रमिव वा एतद्यदनुलोमं पृष्ठानि यदेकधा पृष्ठानि भवन्त्येकधैवास्मिꣳस्तदोजोवीर्यन्दधाति ॥ ३ ॥

अनुलोमं षड़हःसु क्रमेण रथन्तरं वृहदित्येवं पृष्ठानि यद्यदि स्युः एतत्सत्रमिववै सत्रवत्या खलु गव्यादिसत्रे क्रमेण दृष्टानां सम्भवात् एवं सति यद्यदि एकधैव पृष्ठानि षडपि भवन्ति अस्मिन् यजमानेप्येकधैव तेजोदधाति प्रयोक्ता ॥ ३ ॥

## अन्नं पृष्ठान्यन्नाद्यमेवास्मिन्दधाति ॥ ४ ॥

पृष्ठानां षट्संख्याकत्वात् अन्नस्यापि षट् सामात्मकत्वात्

षट्रात्रप्रभवत्वाच्च पृष्ठान्यन्नमित्युपचर्य्यते अतः पृष्ठप्रयोगात् तानि यजमाने अदनीयं ब्रीह्याद्यन्नमेव स्थापयति ॥ ४ ॥

अथ तानि पशुसाधनत्वेन प्रशंसति ।

पशवः पृष्ठानि पशुष्वेव प्रतितिष्ठति ॥ ५ ॥

स्पष्टं । स्पृशतेरिति निरुक्तात् पृष्ठानि यथा ऋतुषु प्रकाशितानि एवं पशूनामपि सर्वैः स्पर्शनीयत्वात् पृष्ठानि पशव इति व्यपदेशः ॥ ५ ॥

अथादितः पञ्चाहस्य यदभ्यासङ्गित्वं तत् प्रशंसति ॥

अभ्यासंग्यः पञ्चाहो भवति सन्तत्यै ॥ ६ ॥

पूर्वमहर्येन स्तोमेन समापितं तेनैव स्तोमेनाहरन्तरस्याप्युपक्रमादह्नां सान्तत्यं ॥ ६ ॥

अथान्त्यस्याह्नो विश्वजिदतिरात्रत्वं प्रशंसति ॥

विश्वजिदतिरात्रो भवति विश्वस्याभिजित्यै ॥ ७ ॥

स्पष्टं । एष एव पञ्चाहो यः ऋतूनां समूढोभ्यासङ्ग्यः इत्यादिकः कल्पो द्रष्टव्यः ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे द्वाविंशाध्यायस्य
तृतीयः खण्डः॥

---

अथ चतुर्थः खण्डः ।

अथ सप्त सप्तरात्राः तत्र प्रथमं सप्तर्षीणां सप्तरात्रं समृद्धिफलसाधनं वा यज्ञमाह ॥

पृष्ठः षडहोमहाव्रतमतिरात्रः ॥ १ ॥

स्पष्टं । महाव्रतश्चैकाह्निकः ॥ १ ॥

अथास्य सप्तर्षिसम्बन्धं समृद्धिफलसाधनं यज्ञं चाह ॥

सप्तऋषय एतेनार्ध्नुवꣳ स्तेनर्द्धिस्तस्मादेतेन यजन्त-ऋद्धया एव ॥ २ ॥

एतेन सप्तरात्रेणार्ध्नुवन् पुत्रपश्वादिभिरत्यन्तसमृद्धा अभवन् तस्मादेतेन ऋद्धया एव यजन्ते एकः द्वौ बहव इति बहूनामप्यधिकारे सम्भवाद्यजन्त इति बहुवचनं यजेरन्नित्यर्थः ॥ २ ॥

अथैतमहर्गतसप्तसंख्याद्वारेण प्रशंसति ।

सप्त शिरसि प्राणाः प्राणाइन्द्रियाणीन्द्रियाण्येवैतेनाप्नोति ॥ ३ ॥

शिरसि चक्षुरादि सप्तच्छिद्रगतानि सप्त इन्द्रियानि प्राणसंवादे प्राणस्यैव इह धारकत्वात् प्रशस्तत्वेनेन्द्रियाण्युपदेशे प्राणव्यपदेशं लभन्ते इतीन्द्रियाणि प्राणाइत्युच्यन्ते तदेवाह प्राणा इन्द्रियाणीति प्राणाः प्राणव्यपदेशात्पूर्वं स्वरूपेणेन्द्रियाणीत्यर्थः अत एतेन सप्तरात्रेण इन्द्रियाण्याप्नोति चक्षुरादिपाटवन्नयतीति ॥ ३ ॥

पुनः सप्तसंख्याद्वारेण प्रशंसति ।

सप्त ग्राम्याः पशवस्तानेतेनाप्नोति ॥ ४ ॥

ग्राम्याः पशवो गवाश्वादयः ॥ ४ ॥

सप्तमस्याङ्गीयमहाव्रतपृष्ठत्वं तत् प्रशंसति ।

व्रतꣳ सप्तमस्याह्नः पृष्ठं भवति तद्ध्यनाप्तमन्नं वै व्रत-मन्नाद्यमेवैतेनाप्नोति ॥ ५ ॥

व्रतं महाव्रतं सप्तमस्याह्नः पृष्ठं भवति तद्धि अनाप्तं सर्वेष्वेव प्राचुर्येण सम्भवात् किं च महाव्रतमन्नं वे अन्नमेव तत्साधनत्वात् अतएव तत् पृष्ठकरणेनादनीयमन्नमाप्नोति ॥ ५ ॥

अथ महाव्रतातिरात्रमतिरिक्तमहःषट्कं प्रशंसति ।

पृष्ठः षडहो भवति प्रत्यक्षमृध्यै ॥ ६ ॥

यत्र प्रयोगलक्षणं समृध्युपभ्रंशीन जायते केवलमृद्धिकामो यजेतेत्येवं स्तूयते स परोक्षसमृद्धिः ॥ ६ ॥

ऋद्धेः प्रत्यक्षत्वमेव दर्शयति ।

प्रत्यक्षꣳह्येतेन सप्त ऋषय आर्ध्नुवन्नृद्ध्याएव ॥ ७ ॥

अत्र एष एव षडहोयः ऋतूनां समूढो वा व्यूढो वा समूढस्त्वैकाहिकं महाव्रतं तस्य ज्योतिष्टोमोतिरात्रः षोडशिमानिति कल्पो द्रष्टव्यः ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे द्वाविंशाध्यायस्य चतुर्थः खण्डः ।

---

अथ पञ्चमः खण्डः ।

अथ प्रजापतेः सप्तरात्राख्यं प्रजादिफलसाधनकं द्वितीयं सप्तरात्रमाह ।

पृष्ठः षडहः सप्तदशं महाव्रतमतिरात्रः ॥ १ ॥

षडहः स्पष्टः । सप्तदशस्तोमकमतिरात्रसंस्थम्महाव्रतं प्रथमं भवति ॥ १ ॥

अथान्तिमस्याङ्गः शिर आद्यङ्गस्य स्तोमव्यवस्थामाह ।

तस्य त्रिवृच्छिरः पञ्चदशौ पक्षौ सप्तदश आत्मैकविंशं पुच्छं ॥ २ ॥

महाव्रतस्तोत्रस्य शिरसः अवयवास्त्रिवृदादिस्तोमकाः कर्त्तव्याः ॥ २ ॥

अथैतस्य प्रजापतेः सृष्टिसाधनत्वेन प्रजासृष्टिसाधनत्वमित्याह ।

एतेन वै प्रजापतिः प्रजा असृजत ॥ ३ ॥

सुगमं ॥ ३ ॥

उक्तार्थञ्च प्रशंसति ।

प्र प्रजया प्र पशुभिर्जायते य एवं वेद ॥ ४ ॥

स्पष्टोऽर्थः ॥ ४ ॥

अथास्याङ्गः आत्मभागस्य यत् सप्तदशस्तोमत्वं तदनूद्य प्रशंसति ।

सप्तदशो वै प्रजापतिर्यत् सप्तदशं व्रतं भवति प्रजापतिमेवाप्नोति ॥ ५ ॥

प्रजापतेः सप्तदशं असकृदुक्तं ॥ ५ ॥

अथ शिरोभागस्य त्रिवृत्त्वं प्रशंसति।

यत् त्रिवृच्छिरो भवति नव प्राणाः प्राणेष्वेव प्रतितिष्ठति ॥ ६ ॥

त्रिवृत्स्तोमस्तोत्रीया नवकात्मकाः प्राणा अपि शीर्षण्याः सप्त द्वाववाञ्चाविति नव अतस्त्रिवृत्करणेन प्राणेष्वेव प्रतितिष्ठति ॥ ६ ॥

अथ पक्षयोः पञ्चदशत्वं प्रशंसति।

यत्पञ्चदशौ पक्षौ सवीवधत्वाय ॥ ७ ॥

वीवधइत्युभयतो भारयुक्तः स्कन्धेनोह्यः काष्ठविशेषः स यथा समभारो भवति तद्वदुभयपक्षयोः पञ्चदशत्वे वैषम्याभावात् सवीवधता भवति ॥ ७ ॥

अथात्मभागस्य सप्तदशत्वं प्रशंसति।

सप्तदश आत्मा भवति प्रजापतिर्वै सप्तदशः प्रजापतिमेवाप्नोति ॥ ८ ॥

स्पष्टोऽर्थः ॥ ८ ॥

अथ यः पुच्छभागस्यैकविंशत्वं तत् प्रशंसति ॥

एकविंशं पुच्छं भवति प्रतिष्ठित्यै ॥ ९ ॥

प्रजापतेः पादत उत्पन्नत्वात् सप्त प्रकृतिभूतोग्निष्टोमः समा

प्तिसाधनत्वाच्च एकविंशस्तोमानां प्रतिष्ठा पुच्छभागस्य प्रतिष्ठित्यै पक्षिणां पुच्छयोः प्रतिष्ठात्वं प्रसिद्धं अत एष एव षडहोयः ऋतूनां समूढो वा व्यूढोवा समूढस्त्वेव सप्तदशं व्रतं तस्योपास्मै गायतानरः पवस्व वाचो अग्रियोद्दविद्युतत्याहचेत्यादिकः कल्पो द्रष्टव्यः ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे द्वाविंशाध्यायस्य
पञ्चमः खण्डः।

---

अथ षष्ठः खण्डः।

अथ छन्दोमपवमानाख्यं पशुफलं तृतीयं सप्तरात्रमाह।

पृष्ठः षडहश्छन्दोमपवमानं महाव्रतमतिरात्रः ॥ १ ॥

षडहः स्पष्टः। छन्दोमपवमानमिति अस्य चतुर्विंशं बहिष्पवमानं चतुश्चत्वारिंशो माध्यन्दिनः पवमानोऽष्टाचत्वारिंश आर्भवः कर्त्तव्यः तदेव महाव्रतमिति प्रथमसप्तरात्रमहाव्रतं तदेवं तदेवातिरात्रमहः अग्निष्टोमपर्यन्तान्यावृत्तिस्तोत्राणि उक्थानि पञ्चविंशस्तोत्राणि पञ्चदशोरात्रिस्त्रिवृत्सन्धिः ॥ १ ॥

अस्याधिकारिणमाह।

पशुकामोयजेत ॥ २ ॥

स्पष्टं ॥ २ ॥

कथमस्य पशुसाधनत्वं तदाह।

पशवो वै छन्दोमाः ॥ ३ ॥

छन्दोमानां चतुर्विंशादीनां गायत्र्याक्षरसंख्यासाम्यात्तेषां च छन्दांसि पशुव्याजिमयुरिति श्रुतेः छन्दोमाः पशवः ॥ ३ ॥

अस्त्वेवं किमत इति अत आह ।

यच्छन्दोमाः पवमाना महाव्रतस्य भवन्ति पशूने-वावरुन्धे ॥ ४ ॥

स्पष्टं ॥ ४ ॥

अथान्यपवमानानामन्येषां स्तोत्राणां च यत् स्तोमद्वैविध्य-मस्ति तत् प्रशंसति ।

उभये स्तोमा युग्मन्तश्चायुजश्च तन्मिथुनन्तस्मान्मिथु-नात् प्रजायते ॥ ५ ॥

गतं । अत्र एष एव षड़हीयः ऋतूनां समूढो वा व्यूढोवा समूढस्त्वेव छन्दोमपवमानं व्रतं तस्य पवमानस्य ते वयमिति चतुर्ऋचस्य लोके त्र्यचंव्यपरिवहति सत्रासाहीयजरावोधीय इत्यादिकः कल्पोद्रष्टव्यः ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे द्वाविंशाध्यायस्य
षष्ठः खण्डः ॥

---

अथ सप्तमः खण्डः ।

अथ पुष्टिसाधनं जामदग्न्यं चतुर्थसप्तरात्रमाह ।

अभ्यासंग्यः पञ्चाहोथ त्रयस्त्रिꣳशमहस्तस्य चतुस्त्रिꣳ-शोऽग्निष्टोमः सप्तदशं महाव्रतमतिरात्रस्तस्य चतुर्विꣳशं वहिष्पवमानं त्रिवृच्छिरः पञ्चदशौ पक्षौ सप्तदश आत्मैक-विꣳशं पुच्छं ॥ १ ॥

द्वे त्रिवृती सवने पञ्चदशं तृतीयसवनमित्याद्युक्तलक्षण आदा-वभ्यासंग्यः पञ्चाहः पूर्व्ववत् अथ षष्ठमहः कृत्स्नमपि त्रयस्त्रिंश-स्तोमकं तस्याग्निष्टोमश्चतुस्त्रिंशः अथ सप्तममहः सप्तदशस्तोमकं महाव्रतमतिरात्रसंस्थं चतुर्विंशं वहिष्पवमानं भवति महाव्रतस्य तस्य पृष्ठविभागः प्रजापतेः सप्तरात्रवदवगन्तव्यः ॥ १ ॥

अथास्य जमदग्निसम्बन्धद्वारेण पुष्टिसाधनमाह।

एतेन वै जमदग्निः सर्वान् पोषानपुष्यत्सर्वानेवैतेन पोषान्पुष्यति ॥ २ ॥

अनेन सर्वविषयकामोधिकारीत्युक्तं भवति ॥ २ ॥

आदितः पञ्चाहं प्रशंसति।

यदभ्यासंग्यः पञ्चाहः पुरस्ताद्भवति सन्तत्याएव ॥ ३॥

अभ्यासङ्ग्यस्याह्नः सन्ततिप्रकारः पूर्व्वमेव प्रदर्शितः ॥ ३ ॥

अथ षष्ठस्याह्नो यत् त्रयस्त्रिंशस्तोमकन्तदनूद्य प्रशंसति।

अथैतत्त्रयस्त्रिꣳशमहस्त्रयस्त्रिꣳशद्देवता देवता एवा-प्नोति ॥ ४ ॥

अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्चेति त्रयस्त्रिंशद्देवताः ॥ ४ ॥

अथ तस्यैवाह्नोऽग्निष्टोमसाम्नो यच्चतुस्त्रिंशत्त्वं तत् प्रशंसति।

तस्य चतुस्त्रिꣳशोऽग्निष्टोमः प्रजापतिश्चतुस्त्रिꣳशो देवतानां प्रजापतिमेवाप्नोति ॥ ५ ॥

यद्यपि त्रयस्त्रिंशमध्ये एकः प्रजापतिरपि गतः तथापि व्यष्टिसमष्टिभेदेन प्रजापतेस्त्रयस्त्रिंशद्देवताः समात्मकत्वाच्चतुस्त्रिंशत्त्वं अथ वा ये देवाः तदित्येकादशस्थ पृथिव्यामधीत्यादिमन्त्रवर्णात् पृथिव्यादिस्थानत्रयवासिनस्तत्त्रिंशद्देवाः तदपेक्षया प्रजापतिश्चतुस्त्रिंश इत्यवगन्तव्यं॥ ५ ॥

अथान्तिमस्याह्नो बहिष्पवमानगतां स्तोमसंख्यां प्रशंसति।

चतुर्विꣳशं बहिष्पवमानं भवति महाव्रतस्य चतुर्विꣳशत्यक्षरा गायत्री प्रजननं गायत्री प्रजात्यै ॥ ६ ॥

स्पष्टं। एते असृग्रमिति गायत्र्याः सकाशात् देवादिक्षत्स्नजगदुत्पत्तेः गायत्र्याः प्रजननसाधनत्वं यद्वा सर्व्वच्छन्दसामादिभूतत्वेनास्या एव चतुश्चतुरक्षराधिकेन पृथक्पृथगुत्तरोत्तरच्छन्दसामुत्पत्तेर्गायत्र्याः प्रजननत्वं ॥ ६ ॥

उभये स्तोमा युग्मंतश्चायुजश्च तन्मिथुनं तस्मान् मिथुनात् प्रजायते ॥ ७ ॥

स्पष्टं ॥ ७ ॥

अथान्यस्याह्नः पवमानानामितरस्तोत्राणां च यत् युग्मा-युग्मस्तोमकत्वं तत् प्रशंसति।

यत्त्रिवृच्छिरो भवति नव प्राणाः प्राणेष्वेव प्रतितिष्ठति यत् पञ्चदशौ पक्षौ सवीर्यत्वाय सप्तदश आत्मा भवति प्रजापतिर्वै सप्तदशः प्रजापतिमेवाप्नोत्येकविंश पुच्छं भवति प्रतिष्ठित्यै ॥ ८ ॥

सष्टोऽर्थः। अत्र एष एव यडहो यः ऋतूनां समूढो वा व्यूढो वा समूढस्त्वेव तस्यैवाभ्यासङ्गः पञ्चाहो यथा पृष्ठ्यावलंवस्तुर्थ-स्याह्न एवैकविंशः षोड़शी पञ्चमस्याह्नः पार्थुरश्म लोकम आक्-पारमित्यादिकः कल्पोद्रष्टव्यः ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे द्वाविंशाध्यायस्य
सप्तमः खण्डः ॥

---

अथ अष्टमः खण्डः।

अथ प्रजापतेरवधानमैन्द्रं पञ्चमं सप्तरात्रमाह।

ज्योतिष्टोमोग्निष्टोमो गौरुक्थ आयुरुक्थोभिजिदग्नि-ष्टोमोविश्वजिदग्निष्टोमः सर्वजिदग्निष्टोमः सर्व्वस्तोमोति-रात्रः ॥ १ ॥

त्रिकद्रुकाः अभिजिद्विश्वजितौ पञ्चमाहः सष्टः महाव्रत-मेकाहः सर्व्वजित् षष्ठमहः सर्व्वस्तोमातिरात्रः सप्तममहः ॥१॥

अथास्य फलं सार्थवादमाह।

एतेन वा इन्द्रोऽत्यन्या देवता अभवदत्यन्या प्रजा भवति य एवं वेद ॥ २ ॥

स्पष्टं ॥ २ ॥

आद्यमहः प्रशंसति ॥

यत् ज्योतिर्गौरायुस्त्र्यहः पुरस्ताद्भवति प्रज्ञातान् स्तोमानुपैतीमानेव लोकानेष्वेव लोकेषु प्रतितिष्ठति ॥ ३ ॥

प्रज्ञातान् स्तोमान् त्रिवृदादिकानित्यर्थः किं तदिमानेव लोकानुपैति अयं वै लोकोज्योतिरन्तरिक्षं गौरसौ लोक आयुरिति ज्योतिरादीनां भूरादिलोकात्मकत्वात् ज्योतिराद्यनुष्ठाता एषु त्रिषु लोकेष्वपि क्रमेण प्रतिष्ठितो भवति ॥ ३ ॥

अथाभिजिद्विश्वजित्सर्वजिताख्यानि त्रीण्यहानि प्रशंसति।

अथाभिजिदभिजिता वै देवा इमान् लोकानभ्यजयन्विश्वजिता विश्वमजयन् सर्वजिता सर्वमजयन् ॥ ४ ॥

अत इदानीन्तनानामप्येतान्यहानि तज्जयाय भवन्तीत्यर्थः ॥ ४ ॥

अन्त्यमहः प्रशंसति।

सर्व्वस्तोमोतिरात्रो भवति सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाप्नोति सर्वञ्जयति ॥ ५ ॥

स्पष्टोऽर्थः, अत्र कल्पः, ज्योतिष्टोमोग्निष्टोमः प्रथममितरौ द्वावुक्थौ विश्वजिन्महाव्रतं विश्वजिदग्निष्टोमः सर्वस्तोमोतिरात्र-एकाहक्रमा इति ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे द्वाविंशाध्यायस्य
अष्टमः खण्डः।

---

अथ नवमः खण्डः।

अथान्नाद्यकामं जनकसप्तरात्रं षष्ठं यज्ञमाह।

चत्वारि त्रिवृन्त्यहान्यग्निष्टोममुखानि विश्वजिन्महाव्रतं ज्योतिष्टोमोतिरात्रः ॥ १ ॥

तच्चत्वार्य्यहानि त्रिवृन्त्यग्निष्टोममुखानि अग्निष्टोमः प्रथम-मितरे त्रयउक्थ्योविश्वजिन्महाव्रतं चाग्निष्टोमोतिरात्रस्तूत्तम-मह: ॥ १ ॥

अथास्य फलं सप्रयोजनमाह।

एतेन वै प्रजापतिः पुरुषमसृजत ससर्वस्यान्नाद्यस्याधि-पत्यमगच्छत् ॥ २ ॥

प्रजापतिः सर्वस्य जनकः पुरुषं विराडाख्यं असृजत सृष्ट-मन्यत् अनेनान्नाद्यकामोधिकारीत्युक्तं भवति ॥ २ ॥

उक्तार्थवेदनं प्रशंसति ।

**सर्वस्यान्नाद्यस्याधिपत्यङ्गच्छति य एवं वेद ॥ ३ ॥**

स्पष्टं ॥ ३ ॥

अथैतत् क्रतुस्वं समरात्रं पुरुषजनकमित्युक्तं तत्राद्यचतुरहः शिरस्थानीयो विश्वजिन्मध्यस्थानीय इति प्रशंसति ।

**शिरोवा अग्रे सम्भवतः सम्भवति चतुर्द्धा विहितं वै शिरः प्राणश्चक्षुः श्रोत्रं वागात्मा वै पृष्ठानि यत्पृष्ठान्युपैति शिरएवात्मानमनुसन्दधाति ॥ ४ ॥**

सर्वे प्राणिनः प्रायेण शिरःप्रमुखा एवोत्पद्यन्ते अतः शिरसः प्रथमं सम्भवतः स्वस्य चक्षुः श्रोत्रं वाक्त्वग्भेदेन चतुर्द्धाविहितत्वादङ्गाद्य चतुष्टयस्तेषां त्रिवृत्स्तोमकत्वान्नवकपालं शिरसि यदस्य चतुरहः पुरुषशिरःस्थानीयः विश्वजिति तस्य सर्वपृष्ठाख्यस्य मध्यमत्वेनात्मस्थानीयत्वाच्चतुरहानन्तरं विश्वजित् प्रयोक्ता आत्मानमध्यदेहं शिरसानुसंयोजितवान् भवति ॥ ४ ॥

अथ महाव्रतं उत्पन्नस्य पञ्चरात्रात्मकपुरुषस्यान्नत्वेन प्रशंसति ।

**एतद्वै पुरुषमकस्तस्मा अन्नमेव व्रतमपिदधाति ॥ ५ ॥**

एतत् खलु पञ्चरात्रं पुरुषं कृतवान् तस्मात्पञ्चरात्रादनन्तरं महाव्रतप्रयोक्ता पुरुषेऽन्नमेव स्थापितवान् भवति ॥ ५ ॥

अथोत्पन्नज्योतिष्टोमातिरात्रं उत्पन्नस्य पुरुषस्यान्नव्यतिरिक्तसर्वभोगस्थानीयमिति प्रशंसति ।

अथ यत् ज्योतिष्टोमोऽतिरात्रोभवत्यकॢप्तस्य कॢप्त्यै ॥६॥

अथ कल्पः, या देवानां पञ्चरात्रस्य प्रथमा सा जनकसप्तरात्रस्यान्यभ्यासक्ता द्वितीयस्याह्नः स्तोत्रीयानुरूपौ पर्य्यासौ वृषापवस्व धारयेति गायत्रं हाविष्मतमाजिगन्त एकर्चाः पुनानः सोमधारयेति त्रिस्त्रिणिधनमयास्यमित्यादिकः कल्पोद्रष्टव्यः ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे द्वाविंशाध्यायस्य
नवमः खण्डः ।

---

अथ दशमः खण्डः ।

अथान्नाद्यफलसाधनपृष्ठस्तोमाख्यं सप्तरात्रं सप्तममाह ।

पृष्ठ्यः स्तोमः षडहोविश्वजिदतिरात्रः ॥ १ ॥

वृहद्रथन्तरपृष्ठ्यः षडहः अतिरात्रसंस्थो विश्वजित्सप्तमोऽहः ॥ १ ॥

अथैतदितरवैलक्षण्येनानुलोम्यपृष्ठत्वेन सत्रवान् भवतीति प्रशंसति ।

अन्यस्मै वै कामाय सत्रमन्यस्मै यज्ञोन तत्सत्रेणाप्नोति यस्मैकं यज्ञोन तद्यज्ञेनाप्नोति यस्मैकं सत्रꣳ सत्रमिव वा एतद्यदनुलोमं पृष्ठानि यदेकधा पृष्ठानि भवन्त्येकधैवास्मिꣳस्तदोजोवीर्य्यं दधात्यन्नं पृष्ठान्यन्नाद्यमेवास्मिन् दधाति पशवः पृष्ठानि पशुष्वेव प्रतितिष्ठति ॥ २ ॥

अथाभ्यासङ्ग्यषड्हात्वंपूर्व्वंवद्द्याख्येयं ॥ २ ॥

उक्तेषु षट्सु सप्तरात्रेषु प्रत्यक्षं महाव्रतमस्ति अन्तु विश्वजिदतिरात्र एव स एव परोक्षं महाव्रतमहरिति प्रशंसितुमाह।

**यद्वै मनुष्याणां प्रत्यक्षन्तद्देवानां परोक्षमथ यन्मनुष्याणां परोक्षन्तद्देवानां प्रत्यक्षं ॥ ३ ॥**

स्पष्टोऽर्थः ॥ ३ ॥

किमत इति चेत्तदुच्यते।

**एतद्वै परोक्षं व्रतं यद्विश्वजित् प्रत्यक्षमेवैतेनान्नाद्यमवरुन्धे ॥ ४ ॥**

अस्माकं प्रत्यक्षेण महाव्रतभूतं प्रत्यक्षं विश्वजिदतिरात्रं अहर्यदस्ति तद्देवानां व्रतं परोक्षमेव अतो यद्देवानां परोक्षं महाव्रतं तस्य महाव्रतस्य सर्व्वतानरूपेण स्तुतित्वेन प्रयोक्तापि प्रत्यक्षमन्नाद्यमवरुन्धे प्राप्नोति विश्वजिन्महाव्रतयोरुभयोरपि नानाविधानां बहूनां स्तोत्राणां सम्भवाद्विश्वजिदेव महाव्रतमित्युपचारः अथैष एव षड़हीय क्रतूनां समूढोभ्यासङ्गी बृहद्रथन्तरपृष्ठश्चतुर्थस्याङ्गः प्रत्यस्मै पिपीषत इति गौरीवितमित्यादि कल्पोद्द्रष्टव्यः ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे द्वाविंशाध्यायस्य दशमः खण्डः ॥

---

अथ एकादशः खण्डः ।

अथ देवत्वप्राप्तिसाधनमष्टरात्रमाह ।

पृष्ठः षडहोमहाव्रतं ज्योतिष्टोमोतिरात्रः ॥ १ ॥

महाव्रतमग्निष्टोमः अतिरात्रः षोड़शिमान् स्पष्टमन्यत् ॥१॥

अस्य फलं सप्रयोजनमाह ।

एतेन वै देवा देवत्वमगच्छन् ॥ २ ॥

इदानीन्तनेनापि देवत्वप्राप्तिकामेनैतत् कर्त्तव्यमित्युक्तं भवति ॥ २ ॥

उक्तार्थंज्ञं प्रशंसति ।

देवत्वं गच्छति य एवं वेद ॥ ३ ॥

स्पष्टोऽर्थः ॥ ३ ॥

अथ महाव्रतस्य यदग्निष्टोमसंस्थात्मकत्वं तत् प्रशंसति ।

एतद्वै व्रतमाप्तं यदष्टरात्रेऽग्निष्टोमोहि व्रतꣳसम्पद्यते ॥ ४ ॥

अस्मिन् अष्टरात्रे यन्महाव्रतमस्ति देवैः प्राप्तं महाव्रतं आप्तत्वमेव दर्शयति अग्निष्टोमरूपं संस्थं खलु महाव्रतरूपं सम्पद्यते एतद्वै व्रतस्याप्तत्वं स्वकीयाग्निष्टोमसंस्थानतिक्रमणात् ॥ ४ ॥

अथान्त्याज्ज्योतिरात्रसंस्थत्वं प्रशंसति ।

अथ यत् ज्योतिष्टोमोतिरात्रो भवत्यक्लृप्तस्य क्लृप्त्यै ॥५॥

अथ यत् ज्योतिष्टोमसंस्थः क्लृप्तः तमकृत्वातिरात्रसंस्थः कर्त्तव्यः तच्च करणं अक्लृप्तस्य फलविशेषस्य क्लृप्त्यै भवति ॥ ५ ॥

एवं स्तुत्वा सर्वाप्तये स्तौति ।

**अष्टरात्रेण वै देवाः सर्वमाप्नुवत ॥ ६ ॥**

स्पष्टं । यद्वा अष्टरात्रे याष्टत्वसंख्यास्ति तद्द्वारेणास्य स्तुतिर्द्रष्टव्या अश्नोतेर्हि अष्टन्निति अष्टनवत्यर्थे अष्टनशब्दस्य व्याप्तिवचनः अतस्तत्संख्येपि तेनाष्टशब्दस्य व्याप्नुतोक्तं ॥ ६ ॥

उक्तार्थज्ञं प्रशंसति ।

**सर्वमश्नुते य एवं वेद ॥ ७ ॥**

अस्य कल्पः । एष एव षडहोय ऋतूनां समूढो वा व्यूढो वा समूढस्त्वे वैकाहिकं व्रतं ज्योतिष्टोमोतिरात्रः षोडशिक इति ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे द्वाविंशाध्यायस्य
एकादशः खण्डः ।

---

अथ द्वादशः खण्डः ।

उक्तोष्टरात्रः, द्वौ नवरात्रौ, तत्र शतायुष्यसाधनं प्रथमं देवानां नवरात्रमाह ।

**पृष्ठ्यः षडहोज्योतिर्गौरायुरतिरात्रो देवा वै मृत्योर्बिभयुस्ते प्रजापतिमुपाधावंस्तेभ्य एतेन नवरात्रेणामृतत्वं प्रायच्छत् ॥ १ ॥**

अतोऽमृतत्वकाम्यधिकारीत्युक्तं भवति ॥ १ ॥

ननु सर्वत्र शक्यमेव फलं काम्यं अत्र त्वमृतकामानां फलं देवानां युक्तं न मनुष्याणामित्याशंक्य मनुष्योचितममृतत्वं दर्शयति ।

एतद्वाव मनुष्यस्यामृतत्वं यत् सर्वमायुरेति वसीयान् भवति ॥ २ ॥

यत् सर्वं शतवर्षलक्षणमायुरिति एतदेव खलु मनुष्यस्यामृतत्वं नाम न केवलं सर्वमायुःप्राप्तिरेवामृतत्वं किन्तु जीवनकालेपि वसीयस्त्वं श्रेष्ठत्वमपि सर्वश्रेष्ठो भूत्वा शतवर्षजीवनमेव मनुष्यस्यामृतत्वमित्यर्थः ॥ २ ॥

अथोक्तार्थज्ञानं प्रशंसति ।

सर्वमायुरेति वसीयान् भवति य एव वेद ॥ ३ ॥

स्पष्टोऽर्थः ॥ ३ ॥

नवरात्रो वा एष नव प्राणाः प्राणेष्वेव प्रतितिष्ठति ॥ ४ ॥

सुगमं ॥ ४ ॥

पृष्ठ्यः षडहो भवति प्रत्यक्षमृद्ध्या अथ यत् ज्योतिर्गौरायुरतिरात्रो भवति प्रतिष्ठित्यै ॥ ५ ॥

अथास्य कल्पः । एष एव षडहोय ऋतूनां समूढो वा व्यूढो वा समूढस्त्वेव ज्योतिर्गौरायुरतिरात्र एकाहक्लृप्त्या इति ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे द्वाविंशाध्यायस्य द्वादशः खण्डः ॥

---

अथ त्रयोदशः खण्डः ।

अथ पशुसाधनं द्वितीयनवरात्रमाह ।

ज्योतिष्टोमोऽग्निष्टोमो गौरुक्थ आयुरुक्थोऽभ्यासंग्यः पञ्चाहो विश्वजिदतिरात्रः पशुकामो यजेत ॥ १ ॥

प्रथमं त्रिकद्रुकाः, तत्र ज्योतिष्टोमोऽग्निष्टोमसंस्थो गौ आयुषी उक्थसंस्थे अभ्यासंग्यः पञ्चाहलक्षणं द्वे त्रिवृती सवने पञ्चदशमेक-मित्यादिकमसकृद्दर्शितं अतिरात्रसंस्थो विश्वजिन्नवममहः ॥१॥

प्रथमं त्रिरात्रं प्रशंसति ।

यत् ज्योतिर्गौरायुस्त्र्यहः पुरस्ताद्भवति प्रज्ञातान् स्तो-मानुपैतीमानेव लोकानेष्वेव लोकेषु प्रतितिष्ठति ॥ २ ॥

एतेषां प्रकृतौ क्रमस्तोमत्वात् प्रज्ञातान् स्तोमत्वं ॥२॥

अथ सवनेन्तराभाविनं पञ्चाहं प्रशंसति ।

अथ यदभ्यासंग्यः पञ्चाहो मध्यतो भवति पाङ्क्तः-पुरुषः पाङ्क्ताः पशवस्तेन पुरुषं च पशूंश्चाप्नोति ॥ ३ ॥

पुरुषस्य पशूनाञ्च पञ्चसंख्यायोगोऽभ्यासंग्यः पञ्चरात्रे दर्शितः ॥ ३ ॥

अथान्त्यमहः प्रशंसति ।

विश्वजिदतिरात्रो भवति विश्वस्याभिजित्यै ॥ ४ ॥

स्पष्टं । अस्य कल्पः, ज्योतिष्टोमोऽग्निष्टोमो गौरुक्थ्य आयुरुक्थ्यस्तस्यायुषः पुरोजितीवो अन्धस इति श्यावाश्वमेकस्यामान्धीगवमेकस्यामाकूपारमेकस्यां बृहत्तिसृषु बृहन्निधनं वा आर्क्षजम्भं पृष्ठ्यावलम्बस्य पञ्चाहो विश्वजिदतिरात्र इति ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे द्वाविंशाध्यायस्य
त्रयोदशः खण्डः ।

---

अथ चतुर्दशः खण्डः ।

अथ चत्वारो दशरात्राः । तत्र त्रिककुकाख्यं प्रथमं दशरात्रमाह ।

त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यस्त्रिवृदग्निष्टोमः सप्तदशोऽग्निष्टोम एकविंश उक्थ्यः सप्तदशोऽग्निष्टोमस्त्रिणवोऽग्निष्टोमस्त्रयस्त्रिंश उक्थ्यस्त्रिणवोऽग्निष्टोमो विश्वजिदतिरात्रः ॥ ॥ १ ॥

स्पष्टं । १ ।

अथैतत् प्रशंसति ।

इन्द्रोऽसुरान् हत्वाकार्यं चक्रवाꣳ अमन्यत तं देवा एतेन स्तोमेनायाजयन् स पाप्मनो नैर्दश्यमगच्छत् ॥२॥

इन्द्रः पूर्वं प्राजापत्यानसुरान् हत्वा भ्रातृवधादकार्य्यं कृतवानहं इत्यमन्यत तं देवा एतेन त्रिककुकाग्निष्टोमेन यज्ञेनाया-

जयन् स एतेनेष्ट्वा पाप्मनो भ्रातृवधनिमित्तस्य नैर्दृश्यन्निर्गत-दशरात्रत्वं अगच्छत् विश्वस्य हि दशरात्रादूर्द्धं वेदना निवर्त्तत इति नैर्दृश्यशब्देन दुःखनिवृत्तिर्लक्ष्यते ॥ २ ॥

इदानीमपि व्यथितस्य दशरात्रेतीते व्यथापगम.एतं निबन्धमाह ।

**तस्माद्विपुद्धतो वा दण्डहतो वा दशमीं नैर्दृश्यं गच्छति ॥ ३ ॥**

यस्मादिन्द्रो दशरात्रेण पाप्मनोनैर्दृश्यमगच्छत्तस्मादित्यर्थः ॥ ३ ॥

अथास्य संख्यायोगं प्रशंसति ।

**दश दशिनी वा एषा विराडन्नं विराडन्नाद्यमेवास्मिन् दधाति ॥ ४ ॥**

एषा विराट् इयं विराट् संख्यानिबन्धो दशरात्र इत्यर्थः विराडपेक्षया दशरात्रस्यैषेति स्त्रीलिङ्गता दशदशिनी वै दशिकानुबन्धदशकं दशदशी दशादशभ्यां विश्वजित इति दशदशिनी विराट् त्रिवृति व्यतिरिक्तेषु पञ्चदशादिस्तोमेषु दशसंख्यायोगाः सन्तीति दशदशिनीति दशरात्राभिधानं ॥ ४ ॥

अथ षट्त्वोग्निष्टोमः क्रियते मध्यतस्त्रीणि उक्थ्यानि तदिदं प्रशंसति ।

**अग्निष्टोमन वै देवा असुरान्निगृह्य मध्यत उक्थ्यैः प्रज-**

**या पशुभिः प्राजायन्ताग्निष्टोमेनैव भ्रातृव्यन्निगृह्य मध्यत उक्थैः प्रजया पशुभिः प्रजायते ॥ ५ ॥**

स्पष्टं । ५ ।

अथात्राग्निष्टोमानन्तरं यत् त्रिःक्लृप्तः उक्थ्यानुष्ठानमस्ति तत् प्रशंसति ।

**त्रिककुब्वा एष यज्ञः ॥ ६ ॥**

ककुवेव ककुप् उत्थितोपदेशस्य नाम प्रकृतिभूताग्निष्टोमा उत्थिता उक्थानां त्रयाणां उक्थ्यककुप् अत एतेन यजमानोपि समानानां प्रजानाञ्च मध्ये श्रुतशीलाचरणैस्त्रिभिः स्वयमप्युत्थितो भवतीत्यर्थः ॥ ६ ॥

उक्तार्थज्ञस्याप्येतत् फलं भवतीत्याह ।

**त्रिककुप् समानानाञ्च प्रजानाञ्च भवति य एवं वेद ॥ ७ ॥**

स्पष्टोऽर्थः । अथास्य क्लृप्तः, अग्न आयूंषि पवस इत्यनुरूप-त्र्यृचेषु शचीपत इत्यभीवर्त्तो ब्रह्मसाम प्रसुन्वानायान्धस इत्यौ-दलदैवोदासे अभिप्रियाणीति यज्ञायज्ञीयमन्त्यं नमस्ते अग्न ओजस इति जराबोधीयमग्निष्टोमसामस्वासुवा समानमितरं प्रथमेनाह्ना जनकसप्तरात्रस्येत्ययं प्रथमः क्लृप्त एवमितरेषान्नवा-नामह्नां क्लृप्तस्तत्रैव क्रमेण द्रष्टव्यः ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे द्वाविंशाध्यायस्य
चतुर्दशः खण्डः ।

---

अथ पञ्चदशः खण्डः।

अथ बहुभावफलसाधनकं द्वितीयं कुसुरुविन्ददशरात्रमाह।

त्रयस्त्रिवृतोऽग्निष्टोमास्त्रयः पञ्चदश उक्थ्यास्त्रयः सप्तदश उक्थ्या एकविंशोऽतिरात्रः कुसुरुविन्ददशरात्रः॥१॥

स्पष्टं। तथाविधानां त्रयाणामुक्थ्यानामत्र सम्भवादयं दशरात्रः त्रिककुप्। १।

अथाधिकारिणमाह।

यः कामयेत बहु स्यामिति स एतेन यजेत॥ २॥

पुत्रपौत्रद्वारा स्वयमेव बहुविधः स्यामिति यः कामयेत॥२॥ तत्राधिकृतः सम्यक् कथनं बहुत्वसाधनत्वमिति तस्योत्पत्तिं दर्शयति।

यद्गणशः स्तोमा बहुरेव भवति॥ ३॥

स्पष्टोऽर्थः॥ ३॥

अस्य गणस्तोमत्वं दर्शयति।

सह त्रिवृतः सह पञ्चदशाः सह सप्तदशाः॥ ४॥

त्रयस्त्रिवृतः आदौ सह भवन्तीति ततस्त्रयः पञ्चदशाः सहसप्तदशाः सहेति स्तोमानाङ्गणत्वं॥ ४॥

अथान्त्यस्याह्नः एकविंशत्वं प्रशंसति।

एकविंशोऽतिरात्रो भवति प्रतिष्ठित्यै॥ ५॥

सिद्धमिदं ॥ ५ ॥

अथैतत् ज्योतिष्टोमत्वेन प्रशंसति ।

ज्योतिर्वा एष विहृतः ॥ ६ ॥

त्रिवृत्पञ्चदशसप्तदशएकविंशा एतानि वाव तानि ज्योतींषीति श्रुतेः ज्योतिष्टोमे चतुर्णां सम्भवात् षट्दशरात्रो विहृतो ज्योतिष्टोम एव खलु ॥ ६ ॥

उक्तार्थज्ञं प्रशंसति ।

ज्योतिष्प्रजानां भवति य एवं वेद ॥ ७ ॥

स्पष्टं ॥ ७ ॥

अस्य चतुष्टोमत्वं प्रशंसति ।

चतुष्टोमो वा एष चतुष्पादाः पशवः पशुष्वेव प्रतितिष्ठति ॥ ८ ॥

स्पष्टं ॥ ८ ॥

अस्य चतुष्टोमत्वमेव प्रकारान्तरेण प्रशंसति ।

एकविंशं स्तोमानातियन्ति प्रतिष्ठा वा एकविंशः प्रत्येव तिष्ठति ॥ ९ ॥

सिद्धप्रायमेतत् ॥ ९ ॥

अथास्य फलं सप्रयोजनमाह ।

एतेन वै कुसुरुविन्द औद्दालकिरिष्ट्वा भूमानमाश्नुत ॥ १० ॥

उद्दालकस्यापत्यमौद्दालकिः स च कुसुरुविन्दनामकः ॥१०॥

उक्तार्थञ्च प्रशंसति।

भूमानमश्नुते यः एवं वेद ॥ ११ ॥

अस्य कल्पः। या बृहस्पतिसवस्य सा कुसुरुविन्दस्य प्रथमा तस्यैजनुषैकचौहाविषतस्य लोके यौक्ताश्वं स्वाशिरामर्कस्य हाविषतं कुसुन्नानयोरित्यादिकल्पः ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणे द्वाविंशाध्यायस्य
पञ्चदशः खण्डः।

---

अथ षोड़शः खण्डः।

अथ फलपशुसाधनं तृतीयं दशरात्रमाह।

अभ्यासंग्यः पञ्चाहस्त्वारश्छन्दोमा विश्वजिदतिरात्रः पशुकामोयजेत ॥ १ ॥

स्पष्टं। १।

प्रथमपञ्चाहं स्तौति।

यदभ्यासंग्यः पञ्चाहः पुरस्ताद्भवति पाङ्क्तः पुरुषः पाङ्क्ताः पशवस्तेन पुरुषञ्च पशूꣳश्चाप्नोति ॥ २ ॥

गतमिदं ॥ २ ॥

अथानन्तरभाविचतुरहं प्रशंसति ।

छन्दोमामध्यतो भवन्ति पशवो वै छन्दोमाः पशूनाम-वरुध्यै ॥ ३ ॥

स्पष्टं । ३ ।

अथान्यमहः प्रशंसति ।

विश्वजिदतिरात्रो भवति विश्वस्याभिजित्यै ॥ ४ ॥

अथास्य कल्पः । पृष्ठ्यावलम्बः पञ्चाहः प्रथमस्याङ्गः प्रत्नवद्बहि-ष्पवमानं पञ्चमस्याङ्गोऽस्मृचतेत्यनुरूप इत्यादिकः ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे द्वाविंशाध्यायस्य
षोडशः खण्डः ।

---

अथ सप्तदशः खण्डः ।

अथ देवपुराख्यं चतुर्थं दशरात्रमाह ।

त्रिष्टोमोऽग्निष्टोमो ज्योतिरुक्थ्य स्त्रिष्टोमोऽग्निष्टोमो गौरु-क्थ्योऽभिजिदग्निष्टोमो गौरुक्थ्यो विश्वजिदग्निष्टोम आयु-रुक्थ्यो विश्वजिदग्निष्टोमस्य सर्वस्तोमोऽतिरात्रः ॥ १ ॥

स्पष्टं । १ ।

अथैतत् प्रशंसति ।

देवा वा असुरैर्हन्यमानास्ते प्रजापतिमुपाधावंस्तेभ्य एतान्देवपुरं प्रायच्छत् तां प्राविशन् ॥२॥

पूर्वं प्रजापतिरसुरैर्हन्यमानेभ्यो देवेभ्यस्तत्कृतोपद्रवपरिहारार्थं पुरस्थानीयमेतं दशरात्रं प्रायच्छत् यथा पुरन्त्विनिर्वाराव्रतेः प्राकारपरिवारादिभिरन्यैर्दुरवगाहं भवति एवं त्रिः स्थानीयं त्रिष्टोमोग्निष्टोमोज्योतिरादिभिर्वेष्टितन्त एव पुरस्थानीयं यज्ञन्ते देवाः प्राविशन्नन्वतिष्ठन्नित्यर्थः तेन शत्रूनजयन्नित्यभिप्रायः ॥ २ ॥

अभिचार्य्यमाणं याजयेदेतामेव देवपुरं प्रविशत्य स्तित्यै ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे द्वाविंशाध्यायस्य
सप्तदशः खण्डः ।

---

अथ अष्टादशः खण्डः ।

अभ्यासंग्यः षडहस्त्रयश्छन्दोमाश्चतुष्टोमोग्निष्टोमो विश्वजिदतिरात्रः ॥ १ ॥

स्वराजोवा एष यज्ञः ॥ २ ॥

स्वाराज्यं गच्छति य एवं वेद ॥ ३ ॥

प्रजापतिर्हि स्वाराज्यं परमेष्ठी स्वाराज्यं ॥ ४ ॥

परमेष्ठितां गच्छति य एवं वेद ॥ ५ ॥

उभे बृहद्रथन्तरे भवतस्तद्धि स्वाराज्यमजुतं दक्षिणा-स्तद्धि स्वाराज्यं षड्विंशस्तोमो भवति स हि स्वाराज्यं चतु-ष्टोमस्तोमः सद्यन्तोऽन्तं श्रिया गच्छति य एवं वेद ॥ ६ ॥

एतेन वै क्षेम धृत्वा पौण्डरीक इष्ट्वा सुदामृस्तीर उत्तरे ॥ ७ ॥

सर्व्वांस्तद्धिमाह्नोत् सर्वांस्तद्धिमाह्नोति य एवं वेद* ॥ ८ ॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरो देयात् विद्यातीर्थमहेश्वरः ॥ ८ ॥

इति श्रीमहाराजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीर-
बुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते
माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे
द्वाविंशाध्यायस्य अष्टादशः खण्डः।
द्वाविंशोऽध्यायः समाप्तिमगमत्।

---

* सप्तदशखण्डस्य तृतीयमन्त्रावधि अष्टादशखण्डस्य शेषपर्य्यन्तः द्वाविंशाध्याय-समाप्तिं यावत् ग्रन्थभागः टीकापुस्तके नास्ति मूलपुस्तके तु एते मन्त्राः वर्त्तन्ते।

# अथ त्रयोविंशोऽध्यायः ।

---

## अथ प्रथमः खण्डः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

द्वादशाहप्रभृतिसत्रभेदोऽथ वर्ण्यते । द्वौ त्रयोदशरात्रौ तत्र प्रथमं आप्तद्वादशाख्यं सर्वर्द्धिसाधनं सत्रमाह ।

**अतिरात्रः पृष्ठ्यः षडहः सर्वस्तोमोतिरात्रश्चत्वारश्छन्दोमा अतिरात्रः ॥ १ ॥**

आद्यन्तावतिरात्रौ मध्येपि त्रिवृदादिसर्वस्तोमकोतिरात्रः तस्य पृष्ठ्यः षडहः पूर्वः उपरिष्टाच्च चत्वारश्छन्दोमाः अविवाक्यमहश्चतुर्थः छन्दोमं भवति ॥ १ ॥

अथैतत् प्रशंसति ।

**एष वा आप्तो द्वादशाहो यत् त्रयोदशरात्रयः ॥ २ ॥**

त्रयोदशरात्रो यदस्ति एष खलु आप्तः सम्पूर्णो द्वादशाहः यथा लोके धनादिके दिशति सति न्यूनताशङ्कापरिहाराय क्लृप्तसंख्यात ईषदधिकं संख्याकं वस्तुनो यत् तद्वत् द्वादशाहस्य यदि द्वादशैव स्युरहानि ततो द्वादशाहः सम्पूर्णान्युनोवेति सन्दिग्धे

अहानि त्रयोदश स्युरित्येत् निःशङ्कं द्वादशाहः सम्पूर्णो भवति अतो अस्य त्रयोदशरात्रत्वात् अयमाप्तो द्वादशाह उच्यते ॥ २ ॥

आद्यन्तावतिरात्राभ्यामेव तत् प्रशंसति।

समानो ह्येष यत् प्रायणीयश्चोदयनीयश्चातिरात्रौ यं कामं कामयन्ते तमेताभिरभ्यश्नुवते ॥ ३ ॥

एष त्रयोदशरात्रः समानो हि आद्यन्तयोरेकरूपः खलु तदेवोपपादयति तत् प्रायणीयश्चोदयनीयश्चेत्यादिना अस्य समानत्वोक्तो भवति तदुच्यते यं कामं कामयन्त इत्यादिना ॥ ३ ॥

अथ मध्यमस्यातिरात्रस्य सर्वस्तोमत्वं प्रशंसितुमाह।

गृहपतेस्तु वागुपदासुका भवति तद्यन्मध्ये सर्वस्तोमोऽतिरात्रो भवति तेन गृहपतेर्वागनुपदासुका भवति ॥ ४ ॥

वाग्वै द्वादशाह इति श्रुतेः द्वादशाहात्मकस्य वाचीमध्येऽतिरात्रस्य कृतत्वात् यद्यपि समानत्वात् सम्पूर्णकामसाधनोयन्तु तथापि गृहपतेर्यजमानस्य वागुपदासुका उपक्षयशीला भवति तस्य कः परिहार इत्युच्यते तन्मध्येतिरात्रः सर्वस्तोमो भवति तत्तेन तस्य वागतथाभूता भवति विच्छिन्नाया वाचः परिहाराय सर्वस्तोमस्य कारितत्वादित्यभिप्रायः ॥ ४ ॥

अथास्य रात्रीणां सर्वर्द्धिफलसाधनत्वं प्रयोगद्वारोपपादयति

एता वा अर्यम्ण गृहपतय आरुणि होतारः सुभगा सूपयन्ति ते सर्वामृद्धिमार्ध्नुवन् सर्वामृद्धिमृध्नुवन्ति य एता उपयन्ति ॥ ५ ॥

पूर्व्वमेताः खलु त्रयोदशरात्रीरर्थ्यल गृहपतयोर्यं गृहपतिं कुर्व्वाणा आरुणिं होतारः आरुणिं होतारं कुर्व्वाणाः सत्रिणः सुभगासु प्रजासु हृद्येषु जनपदेष्वित्यर्थः यद्वा कुलक्षणासु नदीषु एतारात्रीरुपयन्ति उपेयुरित्यर्थः सर्वांस्त्रिस्मित्यादि स्पष्टं अत्र दीक्षाक्रयप्रसवोत्थानानि सर्वसत्रेषु पूर्वपक्ष उपपादयेयुरित्यादिकं सत्रसामान्यविषयं सूत्रे द्रष्टव्यं अत्र पृष्ठ्यः षडहश्छन्दोमाय विद्यन्ते षडहः प्रकृतिक इति तद्विचारं वक्ष्यति छन्दोमा व्यूढा समूढकल्पिता विशेषश्रवणादिति प्राप्ते सूत्रकार आह पूर्वस्मिंस्त्रयोदशरात्रे व्यूढाश्छन्दोमाः सोमसामादेशाद्गौरीवितस्य चानादेशादिति यदि समूढाश्छन्दोमाः स्युस्तदानीं प्रथमस्य छन्दोमकणुरयन्तरस्य लोके सोमसामेति कल्पकारेन वक्ष्यते पूर्वमेव छन्दोमदशरात्रे छन्दोमानां समूहक्लृप्तौ तथैवोक्तत्वात् तथा समूढपक्षे गौरीवितलोकेसामान्तरमात्रेयादिकं पूर्वमुक्तं तदिदानीन्निर्वर्त्य गौरीवितं पुनरादेष्टव्यं सर्वसत्रेष्वार्भवे गौरीवितनियमात् नच तदादिष्टन्तदिदं व्यूढपक्षे एवोपपद्यते तदानीं यथा ब्राह्मणं गौरीवितस्य सिद्धत्वादिति भवत्येवं पृष्ठ्यस्तु कथन्तत आह गवामयनन्यायेन तु पृष्ठ्या इति यथा गवामयने प्रतिमाससमूढाः पृष्ठ्यः तद्वदिति कुत इत्याह अविच्छिन्नो हि तथा प्रवर्त्तेत इति छन्दोमैव्यवच्छिन्ने पृथक्कृतः पृष्ठ्यः समूहानेव सर्वत्र प्रवर्त्तते अत्र सर्वस्तोमेन च्यावयेत पृथक्कृत इति सिद्धान्तमाह दशरात्रचतुःछन्दोमत्वादिति यथा गवामयने दशरात्रे पृष्ठ्योव्यूढस्तद्वदत्रापि स्यात् छन्दोमसहितत्वात् छन्दोमाभावे हि केवलषडहव्यूढः स्यात् अपूर्णत्वात् समूढो भवति तथा च ब्राह्मणे निदानकारेणोदाहृत

नरर्त्तिछन्दोमेभ्यः पृष्ठ्योव्यूहं मानस इति हेत्वन्तरञ्चाह व्यूह-समाध्यव्यतिरेकादिति समाधिः साम्यव्यतिरेको व्यतिपर्य्ययः व्यूहसाम्यस्य क्वचिदपि विपर्य्ययोभावात् एतदुक्तं भवति यदिदं छन्दोमेषु व्यूहः स्यात् तदा पृष्ठ्योपि व्यूहः कार्य्यः यदि नस्यात् तदा पृष्ठ्योपि न कार्य्य इति तदिदं व्यूहसाम्यं सर्वस्तोमेन व्यवायो नादरणीय इति भाव इति, अथास्य कल्पः, त्रयोदशरात्रे प्रथमस्य छन्दोमस्य कण्वरथन्तरस्य लोके सोमसाम पुनानः सोमधारयेत्येतदिति अत्रातिरात्रानन्तरं पृष्ठ्यः षडहः सम्भवादचातिरात्रात् पृष्ठ्यमुपयन्ति प्रथमस्याह्नोऽस्य प्रत्नानुरूप इति साधारणकल्पो भवितव्यः तथापि प्रत्नवज्ञाद्यवहिष्पपमानं परेण ह्येतदस्य प्रत्नानुरूप इत्याहेत्यादि सूत्रकारेण चतुर्दशप्रभृतिषु चायं कल्प इति व्यवस्थापितत्वान्नात प्रवर्त्तते ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोविंशाध्यायस्य
प्रथमः खण्डः।

---

अथ द्वितीयः खण्डः।

अथ द्वितीयं त्रयोदशरात्रं प्रतिष्ठासाधनं सत्रमाह।

**अतिरात्रो द्वादशाहस्य दशाहानि महाव्रतं चातिरात्रश्च ॥ १ ॥**

गवामयनिकं महाव्रतं शिष्टान्यहानि स्पष्टानि ॥ १ ॥

अथ तत् पूर्ववैलक्षण्येन स्तौति।

वाग्वा एषा प्रतायते यदेष द्वादशाहस्तां विच्छिन्द्युर्यन्म-
ध्येतिरात्रं कुर्युः ॥ २ ॥

द्वादशाहस्य वाग्रूपत्वात् तस्यानुष्ठानेनैव वाक्सन्तानमेव यतो यन्मध्यं पूर्ववदतिरात्रं कुर्युः तदानीं सन्ततां वाचं विच्छिन्द्युः ॥२॥

अथातिरात्राभावे वाग्विदः तथापि तदभावे वाग्विच्छेदः तथापि तदभावेऽङ्गान जनकत्वाद्विच्छेदस्तदवस्थ एवेत्याशङ्क्य तत्परिहारमाह।

यदुपरिष्टाद् व्रतमुपयन्ति न वाचं विच्छिन्दन्त्याप्नुवन्ति
त्रयोदशम्मासं ॥ ३ ॥

अतिरात्रप्रतिनिधित्वेन द्वादशाहस्तेन महाव्रतस्य करणात् अङ्गां त्रयोदशत्वसिद्धरूपे युवासौपि त्रयोदशं मासमाप्नोति मास-त्रयोदशकोपलक्षिताान्बहून् संवत्सरान् जीवन्तीत्यर्थः ॥ ३ ॥

अथास्य फलमाह।

एता वै प्रतिष्ठितास्त्रयोदशरात्रयः प्रतितिष्ठन्ति य एता
उपयन्ति ॥ ४ ॥

प्रतिष्ठितसंवत्सरावयवभूतत्रयोदशमासा मासगतसंख्यासा-म्यादेतासां रात्रीणां प्रतिष्ठितत्वं सत्रपक्षे संवत्सरस्य त्रयोदश-मासस्य कल्पाः सांवत्सरिकं व्रतमिति ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोविंशाध्यायस्य
द्वितीयः खण्डः।

---

अथ तृतीयः खण्डः ।

अथ त्र्यश्चतुर्दशरात्रयस्तत्र प्रथमं सर्वफलसाधनं चतुर्दशरात्रमाह ।

अतिरात्रः पृष्ठ्यः षडहः पृष्ठ्यः षडहस्त्रयस्त्रिंशमारम्भणोतिरात्रः ॥ १ ॥

आवृत्तः षडह इत्यर्थः ॥ १ ॥

अथैताः प्रशंसति ।

कामसनयो वा एता रात्रयः ॥ २ ॥

स्पष्टं ॥ २ ॥

तत् कथमिति तद्विभज्य दर्शयति ।

विराड्ढिदशात्मैकादशी प्रजा द्वादशी पशवस्त्रयोदशी कामाय चतुर्दशी ॥ ३ ॥

आदित्यतः दशरात्रो विराट् खलु साक्षादन्नमित्यर्थः दशसंख्यासाम्यात् विराट् एकादशी रात्रिः सा आत्मस्थानीया द्वादशी रात्रिः प्रजास्थानीया त्रयोदशी रात्रिः पशवः चतुर्दशीरात्रिः उक्तव्यतिरिक्तसर्वफलस्थानीया ॥ ३ ॥

एवं कामसनित्वमस्योपपाद्यानुष्ठातृणामपि सर्वकामसिद्धिर्भवतीत्याह ।

सर्वानेवैताभिः कामानवरुन्धते ॥ ४ ॥

स्रष्टं ॥ ४ ॥

अथैतान्यहान्यस्य छन्दोमस्य कण्वरथन्तरस्य लोके सोम साम पुनानः सोमधारयेत्येतदिति आरोहं प्रशंसति ।

एता वाव ब्रध्नस्य विष्टपोयदेतौ त्रयस्त्रिꣳशौ मध्यतः सन्धीयेते तेन ब्रध्नस्य विष्टपꣳ रोहन्ति ॥ ५ ॥

ब्रध्नस्य यस्मिन् ब्रह्मभूत आदित्ये बद्धा लोकावर्त्तन्ते स ब्रध्नस्य विष्टपो लोकाः एता वाव एता एव रात्रयः खलु इति अस्त्वेवं किन्तत इति तदुपपादयति यद्यस्मादेतौ त्रयस्त्रिंशौ स्तोमौ मध्यतः चतुर्दशरात्रस्य मध्ये प्रथमषडहः स्यात्तत्द्वितीयषड़हस्यादौ च सन्धीयते अव्यवधानेन प्रयुज्यते तेन ब्रध्नस्यादित्यविष्टपं लोकं रोहन्ति सत्रिणः ॥ ५ ॥

अथ यत् पृष्ठानां द्विरावर्त्तनमस्ति तत् प्रशंसति ।

द्विःपृष्ठान्युपयन्त्यभिपूर्वमेवैताभिरन्नाद्यं दधते ॥ ६ ॥

अन्नं वै पृष्ठानीतिश्रुतेः तत् क्रमेण पृष्ठानि द्विरुपजन्ति तेनानु वर्त्तते तेनान्नाद्यं अन्नयोग्यं व्रीहियवादिरूपमन्नं दधते ॥ ६ ॥

अथ प्रकारान्तरेण स्तौति

पक्षिण्यो वा एता रात्रयो यङ्कामङ्कामयन्ते तमेनाभि रभ्यश्नवते ॥ ७ ॥

अतिरात्रौ अभिहितौ द्वौ पृष्ठः षड़हपक्षौ तद्वत्य एव चतुर्दशरात्रयः खलु अस्त्वेवं किं तत इत्याह अतः पक्षिणीभिरेवाहो रात्रिभिः ऐहिकं आमुष्मिकञ्च यङ्कामङ्कामयन्ते तं प्राप्नुवन्ति ॥७॥

रात्रीणां पक्षिणीत्वेन कथं कामप्राप्तिरिति तद्दर्शयति।

यत्र यत्र हि पक्षी कामयते तत्तदभ्यश्नुते ॥ ८ ॥

गतमिदं ॥ ८ ॥

आद्यन्तावतिरात्रौ प्रशंसति।

त्रिवृता प्रयन्ति त्रिवृतोद्यन्ति प्राणा वै त्रिवृत् स्तोमानां प्राणैरेव प्रयन्ति प्राणेषु प्रतितिष्ठन्ति ॥ ९ ॥

प्राणाः शीर्षण्याः सप्त द्वावर्व्वाञ्चाविति त्रिवृदपि नव स्तोत्रीयात्मक इति प्राणास्त्रिवृदित्युच्यते यद्वा त्रिवृति त्रित्वसंख्यास्ति प्राणापानोव्यान इति प्राणोपि त्रयात्मकः अतः प्राणास्त्रिवृत् साधारणः कल्पः ॥ ९ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोविंशाध्यायस्य
तृतीयः खण्डः।

---

अथ चतुर्थः खण्डः।

अथ द्वितीयं चतुर्दशरात्रमाह।

अतिरात्रो ज्योतिर्गौरायुस्त्र्यहः पृष्ठ्यः षडह आयुर्गौर्ज्योतिरतिरात्रः ॥ १ ॥

अनुलोमप्रतिलोमौ द्वौ त्रिकद्रुकौ कल्पौ पृष्ठ्यः षडह आद्यन्तयोरतिरात्र इति चतुर्दशरात्रः ॥ १ ॥

आसामधिकारिणमाह ।

याᳬंस्तल्पे वोदके वा विवाहे वा मीमाᳬंसेरᳬंस्त एता उपेयुः ॥ २ ॥

यान् पुरुषान् तल्पे शयान् वा उदके अभिषेकार्थं विवाहे वा मीमाᳬंसेरन् विवदेयुरन्ये ते मीमांसमाना एतद्रात्रीरुपेयुः तल्पाद्यर्थेनाधिकरण इत्यर्थः ॥ २ ॥

आद्यन्त्र्यहं प्रशंसति ।

यत् ज्योतिर्गौरायुस्त्र्यहः प्रज्ञाताᳬंस्तोमानुपयन्ति ॥३॥

स्पष्टं ॥ ३ ॥

कथं प्रज्ञातत्वमिति तत्राह ।

इमानेव लोकानेष्वेव लोकेषु प्रतितिष्ठन्ति ॥४॥

ज्योतिरादीनां भूरादिलोकात्मकत्वाद्भूरादीनां सर्वैः प्रज्ञातत्वात् स्तोमाअपि प्रज्ञाता इत्युच्यते ॥ ४ ॥

अनन्तरभाविनं षड़हं प्रशंसति ।

अथ यत् पृष्ठ्यः षड़होमध्यतो भवत्येष वाव देवतल्पो देवतल्पमेव तदारोहन्ति तल्प्या भवन्ति ॥ ५ ॥

यथा लोकाः तल्पमारुह्य सुखेन शेरते एवं देवा अपि षड़हमाश्रित्य तुष्यन्तीति षड़होदेवतल्पः यद्वा यथा गृहस्य मध्ये वर्त्तते एवमहोमध्ये संस्थानात्तल्प इत्युपचारः अतः षड़हं क्रमेण प्रयु-

स्नानास्तेन षड़हेन देवतल्पमेवारोहन्ति स्वयञ्च तल्प्याः शोभन-तल्पार्हा भवन्ति ॥ ५ ॥

किञ्च।

प्रवसीयसस्तल्पमाप्नुवन्ति ॥ ६ ॥

सुमत्तरस्य सुकृतिनो देवास्तल्पं प्राप्नुवन्ति कर्म्मणि षष्ठी प्रश-स्ततल्पमित्यर्थः ॥ ६ ॥

अथावृत्तं त्रिकद्रुकं प्रशंसति।

अथ यद्वायुर्गौर्ज्योतिरतिरात्रोयेनेतोयन्ति तेन पुनरा-यन्ति ॥ ७ ॥

येन ज्योतिरादिक्रमेण इतोऽस्माल्लोकात् यन्ति स्वर्गं प्राप्नुवन्ति तेनैवावरोहक्रमेण पुनरायन्त्यमूं लकं स्वर्गे चिरकालमुषित्वा पुनरागच्छन्ति सत्रिणः प्रयोगारोहावरोह एव स्वर्गारोहावरोहणं अथास्य कल्पः रात्रातिरात्रात् पृष्ठमुपयन्ति प्रथमस्याङ्गोस्य प्रत्ना-नुरूपोयत्न वा त्रिकद्रुकस्य यत्न ज्योतिर्गौरायुस्त्र्यहा ऐहिकास्ते गौरीवितस्वरा एत एवावृत्तायुर्गौर्ज्योतिरतिरात्र इत्यादिकः साधारणः कल्पोद्रष्टव्यः। ७।

इति ताण्ड्यमहाब्राह्मणे त्रयोविंशाध्यायस्य चतुर्थः खण्डः।

---

अथ पञ्चमः खण्डः।

अथ तृतीयचतुर्दशरात्रं प्रतिष्ठासाधनं सत्रमाह।

अतिरात्रो गौश्चायुश्च द्वे अहनी द्वादशाहस्य दशा-
हान्यतिरात्रः ॥ १ ॥

स्पष्टं । १ ।

द्वितीये द्वे अहनी प्रशंसति ।

यद्गौश्चायुश्च द्वे अहनी भवतो मिथुनौ स्तोमावुपयन्ति
प्रजात्यै ॥ २ ॥

गोरायुषी इति द्वौ स्तोमौ स्त्रीपुंसात्मकौ मिथुनौ अतस्तद-
नुष्ठानं प्रजात्यै पुत्रादिप्रजननाय भवति । २ ।

अथानन्तरभाविनं दशाहं प्रशंसति ।

अथ यानि द्वादशाहस्य दशाहानि वाचमविच्छिन्ना-
मुपयन्ति प्रजननाय ॥ ३ ॥

द्वादशाहस्य वागात्मकत्वात्तदन्तःपाती दशाहोपि वागात्मकः
अतस्तस्या विच्छिन्नप्रयोगेणाविच्छिन्नां वाचमुपयन्ति तत्र प्रजननाय
सन्तत्यविच्छेदाय भवतीत्यर्थः । ३ ।

अथ सर्वाश्चतुर्दशरात्रीः प्रशंसति ।

एतावै प्रतिष्ठिताश्चतुर्दशरात्रयः प्रतितिष्ठन्ति य एता
उपयन्ति ॥ ४ ॥

रात्रीणां समसंख्यासद्भावात् समसंख्याश्रयाश्च द्विपाद्यजमानः
प्रतिष्ठित्या इत्यादि प्रतिष्ठात्मकत्वाद्रात्रीणां प्रतिष्ठितत्वं यद्वा

द्वादशाहे प्रतिष्ठितानां रात्रीणां अत्रापि क्रियमाणत्वात् प्रतिष्ठितत्वं सिद्धमन्यत् अत्र ज्योतिर्गौरायुस्त्र्यह एकाहिकास्तद्रूत्युक्ता एतएव गोआयुषी इत्युक्तः साधारणः कल्पोद्रष्टव्यः । ४ ।

इति ताण्ड्यमहाब्राह्मणे त्रयोविंशाध्यायस्य
पञ्चमः खण्डः ।

---

अथ षष्ठः खण्डः ।

चत्वारः पञ्चदशरात्राः तेषु देवत्वप्राप्तिसाधनं प्रथमं पञ्चदशरात्रं सत्रमाह ।

अतिरात्रः पृष्ठ्यः षडहो महाव्रतं पृष्ठ्यः षडहस्त्र्यस्त्रिंशारम्भणोति रात्रः ॥ १ ॥

त्रयस्त्रिंशारम्भण इत्यनुवर्त्तत इत्यर्थः ॥ १ ॥

अथास्य फलं सम्परोचनमाह ।

एताभिर्वै देवा देवत्वमगच्छन् देवत्वङ्गच्छन्ति य एता उपयन्ति ॥ २ ॥

स्पष्टं ॥ २ ॥

अथैतद्देवसम्बन्धद्वारेण प्रशंसति ।

एतद्वै देवानाᳫ सत्त्रन्तदद्यापि देवाः सत्त्रमासते ॥ ३ ॥

यस्मादेतत् पूर्वं देवैरनुष्ठितं तत् तस्मादद्यापि तत् सत्रं देवा अथासते तत इदं प्रशस्त इत्यर्थः ननु देवानान्तदाभावाद्यनुपपत्या यद्यपि कर्माधिकारोनास्ति तथापि स्तुत्यत्वादिति न विरोधः ॥ ३ ॥

अथासां पञ्चदशरात्रीणां क्रमेणाहर्नियममाह ।

पौर्णमास्यतिरात्रोऽथ यानि षडहानि स पृष्ठ्यः षड़ह एकाष्टका महाव्रतमथ यानि षडहानि स पृष्ठ्यः षडहोऽमावास्यातिरात्रः ॥ ४ ॥

पौर्णमास्यां प्रायणीयातिरात्रः ततः प्रतिपदाद्यहःषट्के क्रमेण पृष्ठ्यः षडहः कर्त्तव्यः अपरपक्षाष्टम्येकाष्टका तत्र महाव्रतमहर्भवति ततोहःषट्क पृष्ठ्यः षडह आमावास्यामुदयनीयोतिरात्र इति देवैरनुष्ठितत्वादयं यागोदेवसुतएवन्मनुष्यसुत इत्यर्थः ॥ ४ ॥

तस्मात्तर्हि मनुष्याणान्नसुतो देवानां हि तर्हि सुतः प्रत्यक्षमेवै ताभिर्देवता अभ्यारोहन्ति ॥ ५ ॥

तस्मात् देवैरनुष्ठितत्वात् कृष्णपक्षे सत्रसमापनत्वाद्वा तर्हि तथा सत्ययं मनुष्याणामुचितः सोमयागो भवति किन्तु तर्हि तथा सति देवानां सुता हि अतः प्रत्यक्षमेवैताभिः रात्रीभिर्देवता अभ्यारोहन्ति सत्रिणोमनुष्याः देवैरनुष्ठितस्यैतैरपि कृतत्वाद्यद्यपि देहान्ते देवप्राप्तिः स्वर्गादेव तुल्या तथाप्यस्य देवसत्रत्वात् प्रत्यक्षमेव सशरीरमेते देवता आभिमुख्येन गच्छन्ति

अथास्य सत्रस्य सामान्यप्राप्तदीक्षोपसदो द्वादशत्वाङ्गीकारे प्रथमस्तुत्याङ्गभूतपौर्णमास्याः पूर्वं चतुर्विंशतिदिवसादर्वाक् दीक्षोपक्रमे सति कृष्णपक्षे दीक्षारम्भः स्यात् ॥ ५ ॥

तं पक्षन्निराकृत्य पूर्वपक्षे दीक्षोपक्रमं विदधाति ।

प्रतिनोदात्तु भय्यमितरमनुपक्षो दीक्षेरन्नप्रतिनोदाय ॥६॥

तुशब्दो वैलक्षण्यद्योतनार्थः सत्त्वसामान्यप्रयुक्तद्वादशदीक्षा अस्मिन् पक्षे पौर्णमासीसुत्योपक्रमापेक्षं कृष्णपक्षषष्ठ्यां योदीक्षोपक्रमस्तस्मिन् पक्षे प्रतिनोदाद्देवत्वं प्राप्तवतां सत्त्रिणां देवकर्तृकत्वात् स्वर्गान्निष्कासनाद्भयं भवति अतस्तत्परिहारायेतरमनुपक्षः इतरं पक्षमनु शुक्लपक्षे दीक्षेरन् सा च स्वर्गादप्रतिनोदाय भवति अयमर्थः सर्वोपि सूत्रेण स्पष्टो भवति अत्र सुत्यारम्भे मतभेदसिद्ध्यर्थं दीक्षारम्भे दर्शयति सूत्रकारः प्रथमे पञ्चदशरात्र एकान्नविंशतिर्दीक्षा इति धानञ्जय्य इति स्पष्टं तच्छुत इत्यत आह एकाष्टकामहाव्रतममावस्यातिरात्र इति ह्याहेति अयमर्थः अपरपक्षाष्टम्येकाष्टका तस्यां महाव्रतं अमावास्यायामुदयनीयातिरात्र इति ब्राह्मणे अतस्तदानुगुण्येन कृष्णःप्रतिपदि प्रायणीयं ततः पूर्वं द्वादशोपसदः ततः पूर्वमेकान्नविंशतिर्दीक्षा पौर्णमस्या सहेति सामर्थ्यात् सिद्धमिति अष्टादशेति गौतमः पौर्णमास्यतिरात्र इति ह्याहेति अयमर्थः पौर्णमास्यां प्रायणीयोतिरात्र इति वचनात् पञ्चदश्यामेव सुत्यारम्भेन प्रतिपदि तथा सति पौर्णमासीसिद्धः प्रतिपक्षणार्थः स्यात् तच्चायुक्तं तेन पञ्चदश्याः पूर्वन्तूपसद्व्यतिरिक्तान्यष्टादशैवेति गौतममतं नन्वेव-

मेकाष्टका यः शब्दः सप्तमीलक्षणार्थः स्यात् अमावास्याशब्दवत्-
दर्शो लक्षयेदिति पदद्वयस्य श्रौतार्थभङ्गः स्यात् सत्यं पदद्वयेपि
तावल्लक्षणा दुर्वारा सत्यं तत्र पौर्णमासीशब्दः प्रथमश्रुतत्वादस-
ञ्जातविरोधीमुख्यस्य इति गौतमस्याभिप्रायः भूयसोन्यायेन पद-
द्वयस्य मुख्यार्थलाभोयुक्त इति धानञ्जप्यस्याशयः एवं दीक्षायां
मतद्वयं प्रदर्श्यान्यं स्वमतं दर्शयति सूत्रकारः जातिकल्पो वेति
सत्रे ति सामान्यज्ञातिः तत् प्रयुक्तकल्पो जातिकल्पः तेषां द्वादश-
दीक्षा द्वादशोपसदः ता एवात्रापि स्युरित्यर्थः नन्वेवमितरमनु-
पक्षो दीक्षेरन्निति वचनविरोधः अवगतः नायं विरोधः क्षया-
पक्षे दीक्षामभ्युपगम्य दैवैः प्रतिनोदशङ्कया पक्षान्तरत्वेन विधा-
नात् तेन विकल्प एव युक्तः न च क्षयापक्षे दीक्षोपक्रमकल्पो
ब्राह्मणे निर्दिष्ट इति वाच्यं प्रतिनोदशेषस्योपन्यस्तत्वात् क्षयपक्षे
दीक्षोपक्रमाङ्गीकाराभावे प्रतिनोददोषस्यैवानुदयात् क्षयप-
क्षोपक्रमः सत्रसामान्यविहितो द्वादशदीक्षापक्षो ब्राह्मणे निर्दिष्ट-
प्रायएवेति अतः पूर्णमास्यां प्रतिपदि वा युक्तोपक्रम इति मतद्वयं
सिद्धं एतज्जातिकल्पपक्षेपि समानं अथाग्निद्वादशाहप्रभृतीनां
सत्राणां सामान्यकल्पः सत्रे षु स्यादतिरात्रात् पृष्ठ्यमुपयन्ति प्रथ-
मस्याङ्गोस्य प्रत्नानुरूपो यत्र वा त्रिकद्रुकेभ्यो यत्र ज्योतिर्गौरायु-
स्त्र्यहं ऐकाहिकास्ते गौरीवितस्वरा एत एवावृत्ता यदायुर्गौर्ज्यो-
तिरतिरात्र एते एव गो आयुषी रात्रिसत्रेष्वन्यत्रयमतिरात्राभ्यां
संवत्सरसंमिताभ्यश्चेति क्लृप्तं प्रथमं पञ्चदशरात्रमिति ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोविंशाध्यायस्य
षष्ठः खण्डः ।

अथ सप्तमः खण्डः।

अथ ब्रह्मवर्चसफलसाधनं द्वितीयं पञ्चदशरात्रं सत्रमाह।

अतिरात्रस्त्रिवृदग्निष्टुदग्निष्टोमो ज्योतिर्गौरायुस्त्र्यहः पृष्ठ्यः षडह आयुर्गौर्ज्योतिरतिरात्रः ॥ १ ॥

सर्वाग्नेये कश्चित् त्रिवृत्स्तोमक एवाहर्विशेषस्त्रिवृदग्निष्टुदग्निष्टोमः शिष्टानि स्पष्टानि ॥ १ ॥

अथैता रात्रयः प्रशंसति।

क्षत्रं वा एतारात्रयोभिनिर्वदन्ति ॥ २ ॥

एताः पञ्चदशरात्रयः क्षत्रमित्यभिनिर्वदन्त्यभिज्ञाः क्षत्रमित्यकत्वमत्राङ्गां पञ्चदशस्तोमगनां संख्यासादृश्यात्तस्य चोरसो बाहुभ्यां पञ्चदशन्निरमिमीतेत्युपक्रम्य राजन्योमनुष्याणामिति श्रुतत्वेन क्षत्रसम्बन्धात् क्षत्रमिति अङ्गां स्तुतिः ॥ २ ॥

अथ सोमाधिकारिणमाह।

ब्रह्मवर्चसकामाउपेयुः ॥ ३ ॥

स्पष्टं ॥ ३ ॥

प्रथममहस्तत्र त्रिवृद्द्वारा प्रशंसति।

यत्त्रिवृदग्निष्टुदग्निष्टोमो भवति प्रह्म तद्यशसार्द्धयति ॥४॥

त्रिवृदग्निष्टुदग्निष्टोमकरूपं यदस्ति तत्तेन ब्राह्मणजातिमेव यशसार्द्धयति समर्द्धयति ॥ ४ ॥

त्रिवृत्स्तोमब्राह्मणयोः सम्बन्ध इति तत्राह ।

ब्रह्म वै त्रिवृत् ॥ ५ ॥

प्रजापतिमुखात् त्रिवृतो ब्राह्मणस्य च सहोत्पत्तिसम्बन्धः ॥५॥

अथ त्रिकद्रुकमध्यभाजं पृष्ठ्यः षडहः आवृतं त्रिकद्रुकं च क्रमेण प्रशंसति ।

यत् ज्योतिर्गौरायुस्त्र्यहः प्रज्ञातान् स्तोमानुपयन्तीमानेव लोकानेष्वेव लोकेषु प्रतितिष्ठन्त्यथ यत् पृष्ठ्यः षडहोमध्यतो भवत्यन्नं वै पृष्ठान्यन्नमेव तन् मध्यतो धीयते तस्मान् मध्ये सदन्नन्धिनोत्यथ यदायुर्गौर्ज्योतिरतिरात्रोर्येनेतोयन्ति तेन पुनरायन्ति ॥ ६ ॥

गतोऽर्थः ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोविंशाध्यायस्य
सप्तमः खण्डः ।

---

अथ अष्टमः खण्डः ।

अथाहीनसत्रोभयफलसाधनं तृतीयं पञ्चदशरात्रमाह ।

त्रिवृदग्निष्टुदग्निष्टोमो ज्योतिर्गौरायुस्त्र्यहो द्वादशाहस्य दशाहान्यतिरात्रः ॥ १ ॥

एकतोतिरात्रत्वमहीनलिङ्गं ॥ १ ॥

अहःसङ्घातात्मकत्वं सत्रलिङ्गं तदुभयस्यापि सद्भावादेतदुभयात्मकमिति प्रशंसितुमहीनसत्रयोर्विलक्षणप्रकृतिकत्वं दर्शयति।

अन्यस्मै वै कामाय सत्रमन्यस्मै यज्ञोन तत् सत्रेणाप्नोति यस्मैकं यज्ञोन तद्यज्ञेनाप्नोति यस्मैकꣳसत्रं ॥ २ ॥

गतोर्थः ॥ २ ॥

एवं वैलक्षण्यमुपन्यस्य तदुभयलिङ्गं दर्शयति।

यदन्यतोतिरात्रास्तेन यज्ञोऽथ यानि द्वादशाहस्य दशाहानि तेन सत्रं ॥ ३ ॥

स्पष्टं ॥ ३ ॥

अस्तूभयात्मकत्वं ततः किमित्यत आह।

उभावेवैताभिः कामाववरुन्धते ॥ ४ ॥

त्रयो ज्योतिर्गौरायुस्त्र्यह इत्यादिकः साधारणः कल्पोद्रष्टव्यः ॥ ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोविंशाध्यायस्य अष्टमः खण्डः।

---

अथ नवमः खण्डः।

अथ प्रजाफलसाधनं चतुर्थं पञ्चदशरात्रमाह।

अतिरात्रो ज्योतिर्गौरायुस्त्र्यहो द्वादशाहस्य दशा-
हान्यतिरात्रः प्रजाकामा उपेयुः ॥ १ ॥

स्पष्टं ॥ १ ॥

अथास्य प्रजाफलसाधनत्वं सप्ररोचनमाह ।

एताभिर्वै प्रजापतिः प्रजा असृजत प्र प्रजया प्रपशुभि-
र्जायन्ते य एता उपयन्ति ॥ २ ॥

सुगमं ॥ २ ॥

अथादौ त्र्यहं प्रशंसति ।

यत्ज्योतिर्गौरायुस्त्र्यहः प्रज्ञातान् स्तोमानुपयन्तीमानेव
लोकानेष्वेव लोकेषु प्रतितिष्ठन्ति ॥ ३ ॥

भूरादिलोकानां प्रज्ञातत्वादादित्यं वै ज्योतिरित्यादि
श्रुतेर्ज्योतिरादीनां भूरादिलोकात्मकत्वाच्चैषां स्तोमानां प्रज्ञा-
तत्वं ॥ ३ ॥

अनन्तरभावीनि दशाहानि प्रशंसति ।

अथ यानि द्वादशाहस्य दशाहानि वाचमविच्छि-
न्नामुपयन्ति प्रजननाय ॥ ४ ॥

वाग्वै द्वादशाह इति श्रुतेः तत्रत्यानां द्वादशानामह्नामवि-
च्छेदेनानुष्ठानादविच्छिन्नामेव वाचमुपयन्तीति साचोपलब्धिः
प्रजननाय सन्तत्यविच्छेदाय फलोत्पत्तये वा भवति ॥ ४ ॥

एवमहानि विभज्याथ समुच्चित्य प्रशंसति।

**एता वै प्रतिष्ठिताः पञ्चदशरात्रयः प्रतितिष्ठन्ति य एता उपयन्ति ॥ ५॥**

विप्रकीर्णत्वाभावेनान्यत्र व्यवस्थितानामिवाह्नःसङ्घातानामत्र प्रयोगादह्नां प्रतिष्ठितत्वं यद्वा पञ्चदशवार्द्धमासस्य रात्रय इति श्रुतेः प्रतिष्ठितसंवत्सरान्तर्भूतार्द्धमासरात्रिसंख्यासाम्यादासां प्रतिष्ठितत्वं ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोविंशाध्यायस्य नवमः खण्डः।

---

अथ दशमः खण्डः।

अथ परमविजयसाधनमैन्द्रं षोडशरात्रं सत्रमाह।

**एता एव स महाव्रताः ॥ १॥**

एता एवातीतपञ्चदशरात्रगता उभयतोतिरात्रयुक्तास्त्रिककुद्धसहिता द्वादशाहरूपा एव महाव्रतोपेताः षोडशरात्रमहाव्रतमुपान्त्यं वेदितव्यं ॥ १ ॥

आसां फलं सप्ररोचनमाह।

**एताभिर्वा इन्द्रः परमां विजितिं व्यजयत परमामेवैताभिर्विजितिं विजयन्ते ॥ २॥**

सर्वलोकजयः परमोजयः विपराभ्याञ्जेरित्यात्मनेपदं ॥ २ ॥

अथ पूर्वोक्तं पञ्चाहं वज्रत्वेन प्रशस्य महाव्रतं षोडशमहर्व-ज्रस्य धारणस्थानीयत्वेन प्रशंसति ।

पञ्चदशो वै वज्रोन वा अगृहीतेन वज्रेण वीर्यङ्करोति या षोडश्यारम्भणमेव तद्गृहीतेन वज्रेण वीर्यङ्करोति ॥ ३ ॥

पूर्वोक्तः पञ्चदशरात्रः पञ्चदशस्तोमान् संख्यासामान्यात् पञ्चदशस्तोमेन सह प्रजापतेरुरसो बाहुभ्याञ्चेत्यस्योत्पत्तेस्तस्य वज्रसम्बन्धात् पञ्चदशोवज्र इत्युच्यते तस्य महाव्रतं षोडशमहरारम्भणस्थानीयं सुज्ञानमन्यत् तृतीयपञ्चदशरात्रप्रभृति षोडशरात्रपर्य्यन्तस्य क्लृप्तद्वादशरात्रादिकः कल्पः द्रष्टव्यः ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोविंशाध्यायस्य

दशमः खण्डः ।

---

अथ एकादशः खण्डः ।

अथ प्रजापतेः सप्तदशरात्रं सत्रमाह ।

अतिरात्रो ज्योतिर्गौरायुर्गौरायुः पञ्चाहो द्वादशा-हस्य दशाहान्यतिरात्रः ॥ १ ॥

स्पष्टं ॥ १ ॥

आसां फलं सप्ररोचनमाह ।

एताभिर्वै प्रजापतिरनन्ताꣳश्रियमजयदनन्ता वा एता यत् पञ्चाहविधाः ॥ २ ॥

अनन्तां श्रियञ्जयहेतुत्वोपपत्तित्वमर्थं अनन्ता वा एता इत्याद्युपन्यासः पञ्चाहविधाः पञ्चाहसङ्घाः तत्संख्याका रात्रय इत्यर्थः अनन्तश्रीकामास्तत्राप्यधिकारिण इत्यर्थः ॥ २ ॥

अथाद्यं पञ्चाहं प्रशंसति ।

यत् पञ्चाहोनन्तादेव प्रजायन्ते ॥ ३ ॥

पञ्चाहानामनन्तत्वादनन्तादैश्वर्याद्युक्ताः प्रजायन्तेऽनुष्ठातारो अपि अथ वैताभिर्वैत्यादिकः सर्वोपि पञ्चाहार्थवादपरो-द्रष्टव्यः ॥ ३ ॥

अथानन्तरभावि द्वादशाहं प्रशंसति ।

अथ यानि द्वादशाहस्य दशाहानि वाचमविच्छिन्ना-मुपयन्ति प्रजननाय ॥ ४ ॥

गतार्थोयं ॥ ४ ॥

कृत्स्नारात्रीः प्रशंसति ।

एता वै प्रतिष्ठिताः सप्तदशरात्रयः प्रतितिष्ठन्ति य एता उपयन्ति ॥ ५ ॥

सप्तदशो वै प्रजापतिरिति श्रुतेः प्रजापतेः प्रतिष्ठितत्वाच्च तत्समानसंख्याका एताः सप्तदशरात्रयोऽपि प्रतिष्ठिता इत्युच्यते एता वा इत्यादेः पञ्चाहस्तुतिपरत्वे प्रतिष्ठाकामा उपेयुरित्येतदधिकारवाक्यं द्रष्टव्यं सप्तदशरात्रे चत्वार्य्यभप्लविकान्य-

हानि श्यैतनौधसं ब्रह्मणास पौष्कलस्युष्योषिहानीत्यादिकः कल्पो-द्रष्टव्यः ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोविंशाध्यायस्य
एकादशः खण्डः ॥

---

अथ द्वादशः खण्डः ।

अथ सर्वायुर्लक्षणसाधनं देवानामष्टादशरात्रं सत्रमाह ।

अतिरात्रोभिप्लवः षडहो द्वादशाहस्य दशाहान्यति-रात्रः ॥ १ ॥

स्पष्टोऽर्थः ॥ १ ॥

अस्यामृतत्वसाधनत्वं सप्ररोचनमाह ।

देवा वै मृत्योरबिभयुस्ते प्रजापतिमुपाधावᳪस्तेभ्य एतेनाष्टादशरात्रेणामृतत्वं प्रायच्छत् ॥ २ ॥

युक्तममृतत्वप्राप्तिरनेन देवानां तेषां मरणाभावात् ॥ २ ॥

कथन्तत् मनुष्याणां फलं स्यादित्याशंक्य तदुचितममृतत्वं दर्शयति ।

एतद्वाव मनुष्यस्यामृतत्वं यत् सर्वमायुरेति वसीयान् भवति ॥ ३ ॥

स्पष्टं ॥ ३ ॥

इदानीममृतत्वकामैरेतदनुष्ठेयमित्याह ।

सर्वमायुर्यन्ति वसीयांसो भवन्ति य एता उपयन्ति ॥

॥ ४ ॥

सुगमं ॥ ४ ॥

अथासां रात्रीणां सर्वायुःसाधनत्वमुपपादयति।

द्विर्वा एता नव नव प्राणा अभिपूर्वमेवैताभिरायुर्दधते ॥ ५ ॥

एता अष्टादशरात्रयो द्विर्नव भवति खलु प्राणाश्च नव शिरोगताः सप्त द्वावर्व्वाञ्चाविति तथा सति अभिपूर्वमेव प्रथमं नवरात्रेण पूर्वं पश्चाद्गहर्षलक्षणं आयुर्योगश्च द्वितीयेन चरममायुरित्यनुक्रमेणैवं ताभीरात्रीभिः सर्वमायुर्द्धारयन्ति अथ यत्रातिरात्रादभिप्लवमुपयन्ति तत्र प्रथमस्याह्न एष प्रत्नानुरूप इत्यादिकः कल्पोद्रष्टव्यः ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोविंशाध्यायस्य
द्वादशः खण्डः।

---

अथ त्रयोदशः खण्डः।

अथ पञ्चाधिपत्यसाधनं त्रयोरेकोनविंशतिरात्रमाह।

एता एव समह्वात्रताः ॥ १ ॥

एताः पूर्वोक्ताः अष्टादशैवातिरात्रात् पूर्वभाविनैकेन महाव्रतेनाह्ना सहैकोनविंशतिरात्रयो भवन्ति ॥ १ ॥

अथासां पशुसाधनत्वं सम्प्ररोचनमाह।

**एताभिर्वै वायुरारण्यानां पशूनामाधिपत्यमाश्नुतोभ-येषां पशूनामाधिपत्यङ्गच्छन्ति य एता उपयन्ति ॥२॥**

एताभिरेकोनविंशतिरात्रीभिर्वायुरारण्यानां द्वीपिशूकर-श्वापदपक्षिसरीसृपहस्तिपर्कटादीनां सर्वानामारण्यानां पशू-नामाधिपत्यमाश्नुत प्राप्नोत् यद्यप्येताभिरुभयविधाः पशव उक्त-श्यन्ते तथापि वायोर्गोष्ठेषु गवादिषु नैरपेक्षादारण्येषु विशेष-सम्बन्धाद्वायोरारण्यपश्वाधिपत्यमुक्तं उभयेषामित्यादि स्पष्टं तत्रा-रण्याः दर्शिताः ग्राम्यास्तु गोजाविकपुरुषाश्वगर्दभोष्ट्राः एतेन पश्वर्थिनोऽधिकारिण इत्युक्तं भवति ॥ २ ॥

प्रकारान्तरेणैताः प्रशंसति।

**मृगसत्रं वा एतत् ॥ ३ ॥**

मृगार्थं वायुनानुष्ठितं सत्रं मृगसत्रं ॥ ३ ॥

तदेव समर्थयते।

**एताभिर्वा आरण्याः पशवो नाक्षताः प्रजायन्ते ॥४॥**

एताभिः खलु रात्रीभिर्वायर्थमारण्याः पशवोनाक्षताः आ ईषदर्थे क्षतमिति भावे निष्ठा नविद्यते ईषदपि क्षतं कारणं रक्षणादिप्रयत्नोयेषान्ते यथोक्ताः तादृशाः सन्तः प्रजायन्ते यद्वैवं व्याख्येयं मृगैर्वासप्रदानादपालनप्रयत्नराहित्येन प्रजननार्थमनु-ष्ठितं सत्रं अस्ति मृगादीनामपि गवादीनामिवाधिकारः गावो

त्रा एतत् सत्त्रमासतेत्यादि श्रुतेः सर्वार्थवादत्वान्न विरुध्यते एताभिर्वा इत्यादि स्तगसत्त्रसमर्थनं ॥ ४ ॥

अस्त्वस्य स्तगसत्त्रत्वं किमतोऽभिवदतीत्यत आह ।

अनाक्रतमेषां प्रजायते य एता उपयन्ति ॥ ५ ॥

अस्यानुष्ठातॄणां अपि पुत्रपश्वादिकमप्रयत्नेनैवोत्पद्यत इत्यर्थः अथाष्टादशरात्रिप्रभृतीनां साधारणः कल्पः, यत्राभिप्लवोरात्रिसत्त्रेषु श्यैतनौधसत्रह्मसामानः पौष्कलश्रुध्योग्निहोत्रसंवत्सरसमितास्यः क्लृप्तमाविंशतिरात्रादिति अयमर्थः अभिप्लवस्य प्रथमोत्पत्तौ प्रत्यहमभीवर्त्तो ब्रह्मसाम तथा प्रत्यहमुष्णिक्षु सुज्ञानं रात्रिसत्त्रेष्वभीवर्त्तस्थाने श्यैतनौधसेन व्यत्यासं कुर्यात् सुज्ञानस्थाने पौष्कलश्रुध्यौष्णिहे व्यत्यासङ्कुर्यादिति तथापि रात्रिसत्त्रेष्वभीवर्त्तस्थाने श्यैतनौधसयोरन्यतरत् साम किमभीवर्त्तस्तोत्रीये स्यात् उत स्वस्तोत्रीया इति सूत्रकारः सम्पाद्य पूर्वोत्तरौ पक्षौ दर्शयति तत्र पूर्व्वपक्षमाह अभीवर्त्तस्थाने श्यैतनौधसे तास्वेवेति तास्वभीवर्त्तस्तोत्रीयास्वेवेत्यर्थः दृष्टान्तमाह तयोष्णिहेयासु सुज्ञानमिति यथा सुज्ञानस्य स्थाने विहितपौष्कलश्रुध्येयासु सुज्ञानं तास्वेव भवतस्तद्वदत्रापि भवत इति सिद्धान्तमाह स्वासु त्वावर्त्तानि सामानि कस्यचित् स्थाने विहितानि स्वास्वेव भवन्तीत्यर्थः दृष्टान्तमाह यथा बृहतौ वषट्कारनिधनं स्वकीयास्वेव भवति बृहद्रथन्तरश्च तत् पृष्ठ्यः षडहः इति अयमर्थः इषुर्नामैकाहः कल्पकारेण श्येनसधर्म्मः क्लृप्तः तत्र श्यैनिकस्य बृहतः स्थाने वषट्कारणिधनं स्वकीयास्वेव भवति तथा बृहद्रथन्तरे पृष्ठ्यः षडह इत्युक्तं वैरूप-

वैराजादिस्थानेष्वेव बृहद्रथन्तरे भवतः तद्वदत्रापीति श्वैत-नौधसे यदि परकीयासु स्तोत्रीयासु स्यातां तदा विशेषतस्ता निर्द्दिशेदेव यथा नौधसस्यर्क्षु जनित्रं ब्रह्मसामेत्यादि निर्देशित स्तस्मात् स्वास्वेवेति सिद्धान्तः ॥ ५ ॥

इति ताण्ड्यामहाब्राह्मणे त्रयोविंशाध्यायस्य
त्रयोदशः खण्डः ।

---

अथ चतुर्दशः खण्डः ॥

अथ पुरुषफलसाधनं विंशतिरात्रं सत्रमाह ।

अतिरात्रोभिप्लवः षडहोभिजिच्च विश्वजिच्च द्वे अहनी द्वादशाहस्य दशाहान्यतिरात्रः ॥ १ ॥

स्पष्टोऽर्थः ॥ १ ॥

अथासां पुरुषफलसाधनत्वं सप्ररोचनमाह ।

पुरुषकामा उपेयुरेताभिर्वै प्रजापतिः पुरुषमसृजत ॥२॥

स्पष्टं ॥ २ ॥

अथ पुरुषस्य फले तत् साध्यन्तस्यार्थवादमाह ।

स सर्वस्यान्नाद्यस्याधिपत्यमगच्छत् सर्वस्यान्नाद्यस्याधि-पत्यं गच्छन्ति य एता उपयन्ति ॥ ३ ॥

सुगमं ॥ ३ ॥

अथैतत् सत्रं रात्रिसंख्याद्वारा प्रशंसति ।

पुरुषसत्रं वा एतत् ॥ ४ ॥

स्पष्टोऽर्थः ॥ ४ ॥

तत् कथमिति तदुपपादयति ॥

विंशो वै पुरुषो दश हि हस्त्या अङ्गुल्यो दश पाद्याः ॥ ५ ॥

स्पष्टं ॥ ५ ॥

अस्त्वेवं एतावता प्रकृते किमित्यतआह ।

यदेता विंशती रात्रयो भवन्त्येष्वेवैताभिर्लोकेषु पुरुषं प्रतिष्ठापयन्ति ॥ ६ ॥

पुरुषांगुलिसंख्यासाम्याद्विंशतिरात्रात्मकं सत्रमुपयन्ति ते पुरुषमेष्वेव लोकेषु प्रतिष्ठापयन्ति ते लोकेषु प्रतितिष्ठन्तीत्यर्थः ॥ ६ ॥

पुनरेताः रात्रीः प्रशंसति ।

एता वै प्रतिष्ठिता विंशतीरात्रयः प्रतितिष्ठन्ति य एता उपयन्ति ॥ ७ ॥

रात्रीणां पुरुषांगुलिसंख्यासाम्यात्तस्य प्रतिष्ठितत्वादासामपि प्रतिष्ठितत्वं अथात्र विंशतिरात्रे सांवत्सरिकौ विश्वजिदभिजितावित्यादिकः कल्पोद्रष्टव्यः ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोविंशाध्यायस्य
चतुर्दशः खण्डः ।

---

अथ पञ्चदशः खण्डः।

अथ द्वौ एकविंशतिरात्रौ तत्र पशुफलसाधनं प्रथमं एकविंशतिरात्रमाह।

**अतिरात्रोऽभिप्लवः षडहोऽतिरात्रोऽभिप्लवः षडहोऽभिप्लवः षडहोऽतिरात्रः पशुकामा उपेयुः॥ १॥**

स्पष्टं॥ १॥

पशुफलं सार्थवादं दर्शयति।

**एताभिर्वा आदित्याः सप्त ग्राम्यान् पशूनुदसृजन्त पशूनेवैताभिरुत्सृजन्ति॥ २॥**

उत्सृजन्ति उत्पादयन्ति लभन्त इत्यर्थः पशवो गोजाश्वादयः एकविंशतिरात्रीणां पशुसाधनत्वमुक्तं॥ २॥

एकविंशतेः समसंख्यायाश्च कथं वैषम्यं स्यादिति तत् समर्थयते।

**त्रिर्वै सप्त सप्तादित्याः॥ ३॥**

यद्यप्येता एकविंशतिस्तथापि विभागस्त्रिसप्त भवन्ति वस्तुतोऽतिरात्रः षडहश्चेति सप्तैव आदित्याश्च सप्त आरोगभ्राजादयः देवा आदित्याः सप्तेति मन्त्रवर्णोऽत्र तूभयसंख्यासाम्यं॥ ३॥

रात्रीणामादित्यसमसंख्यात्वेन कथं पशुफलकत्वमिति तदुपपादयति।

पशव आदित्याः ॥ ४ ॥

आदित्यानां पशूनाञ्च सृष्टिविभागसम्बन्धः सच प्रदर्शित एव यद्वा संख्यासाम्यसम्बन्धः ॥ ४ ॥

न केवलं रात्रीणामादित्यसंख्यासाम्यात् पशुफलसाधनत्वं किन्तु लोकद्वयसमृद्धिहेतुरिति भवतीति वक्तुमाह ।

आदित्या अस्मिंल्लोकऋद्धा आदित्या अमुष्मिन् ॥ ५ ॥

स्पष्टं ॥ ५ ॥

कथं लोकद्वयेषु तेषां समृद्धित्वमिति तदुपपादयति ।

पशवोऽस्मिन् ऋतवोऽमुष्मिन् ॥ ६ ॥

पशव आदित्या इत्युक्तत्वात् पशूनामस्मिंल्लोके समृद्धिः आदित्या अप्यत्र समृद्धा एव तथा अमुष्मिन् द्युलोके ऋतवः समृद्धाः सप्तादित्या नित्य इत्यमुष्मिन् द्युलोकेऽप्यादित्याः समृद्धाः ॥ ६ ॥

इदानीमादित्यसंख्याकैकविंशतिरात्रीरुपेयुषामपि लोकद्वयसमृद्धिर्भवतीत्याह ।

उभयोरनयोर्लोकयोर्ऋध्नुवन्ति देवलोके च मनुष्यलोके च य एता उपयन्ति ॥ ७ ॥

अथास्य कल्पः पूर्वस्यैकविंशतिरात्रस्य षोडशिकावतिरात्रावभितः षोडशिमान्मध्ये सर्वेवा षोडशिकाः तेच सर्वे तेचाषोडशिमन्तइति अत्रैकविंशतिरात्रे त्रयोऽभिप्लवाः षडहास्तत्र तृतीयः

प्रतिलोमानुलोमा वेति संशये मतद्वयं दर्शयति सूत्रकारः तथा-हि पूर्वस्मिन्नेकविंशतिरात्रे भिप्लवं तृतीयमनुलोमं व्यावृत्तिरिति कुतइत्यादि नव्यावृत्तिं विज्ञायत इति आवृतस्तृतीयोभिप्लवः कुत इति नास्ति वचन इत्यर्थः प्रतिलोमं शाण्डिल्योद्वावभिप्लवावित्येक-वचनादिति द्वितीयतृतीययोरभिप्लवयोर्व्यवधानाभावात् द्वावभि-प्लवावित्येकशेषं कृत्वा वक्तव्यं न च तथाकृतं ब्राह्मणे किंत्वभि-प्लवोभिप्लवइति पृथगेव निर्द्दिष्टाः तेन नूनं पृथग्धर्म्माः तृतीयः प्रतिलोमः यथा प्रथमे चतुर्द्दशरात्रे द्वयोः पृष्ठ्ययोः सह वक्तव्यात् प्रातिलोम्यादेव पृथङ्निर्द्दिशः तद्यथा पृष्ठ्यः षडहस्त्रयस्त्रिंशा-रंभण इति तद्वदत्रापीति युक्तं ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोविंशाध्यायस्य
पञ्चदशः खण्डः ॥

---

## अथ षोड़शः खण्डः ।

अथ द्वितीयमेकविंशतिरात्रं ब्रह्मवर्चसफलसाधनमाह ।

**अतिरात्रः पृष्ठ्यः षड़हस्त्रयः स्वरसामानो दिवाकीर्त्य-महस्त्रयः स्वरसामानः पृष्ठ्यः षड़हस्त्रयस्त्रिंशारम्भणो-तिरात्रो ब्रह्मवर्चसकामाउपेयुः ॥ १ ॥**

ब्रह्मवर्चसन्नाम तेजोविशेषः सच तमोहननमन्तरेण नोदेति ॥१॥

अतस्तद्रूपं फलं सार्थवादमस्य दर्शयितुमाह ।

**स्वर्भानुर्वा आसुरः सूर्य्यं तमसाविध्यत्तस्मै देवाः प्राय-श्चित्तिमैच्छंस्तएता अविन्दंस्ताभिरस्मात्तमोपाघ्नन् ॥ २ ॥**

पूर्व्वंमासुरः असुरसम्बधी स्वर्भानुर्नामकः सूर्य्यन्तमसा मायया अविध्यत् आवृतवान् यद्वा आसुरः असुरः स्वार्थिकस्तद्धितः तथा च मन्त्रसाधनवर्णः तस्मै तमोविद्धाय सूर्य्याय देवाः प्रायश्चित्तिन्तमोहननसाधनमैच्छत् विचारितवन्तः ते तदा एता एकविंशतिरात्रीः साधनत्वेनाविदन् लब्धवन्तः ताभिरनुष्ठिताभिरस्मात् सूर्य्यात्तमोपाघ्नन् ॥ २ ॥

तदनुष्ठातॄणामप्येतत् फलं भवतीति दर्शयति।

अपतमोऽघ्नते य एता उपयन्ति ॥ ३ ॥

प्रतिबन्धकपापरूपन्तमोपहत्य ब्रह्मवर्च्चसन्तेजोऽभजन्त इत्यर्थः अत्र राजने रुद्रदेवस्य एतासां रात्रीणामनुष्ठानेन किंलाभो भवदिति वक्ष्यमाणत्वात्तत्परिहाराय केचित् प्रयोगविशेषाः कर्त्तव्याः ॥ ३ ॥

तत्र किञ्चित् पशुविशेषमालभ्यं दर्शयति।

सौमपौषं पशुमुपालंभ्यमालभेरन् ॥ ४ ॥

सोमपूषणौ तावुभौ देवता अस्य स पशुः सौमपौषः स चोपालंभ्यः सवनीयपशोः पश्चादालम्भनीयः तं पशुमालभेरन् ॥ ४ ॥

अथ पशोरुक्तदेवतात्वं प्रशंसति।

सोमोवै ब्राह्मणः पशवः पूषा स्वामेव तद्देवतां पशुभिर्व्वर्द्धयन्ते त्वचमेवाक्रत ॥ ५ ॥

सोमोऽस्माकं ब्राह्मणानां राजा इति श्रुतेः ब्राह्मणस्वामित्वात्

स्वयमपि च ब्राह्मणएव वैराजरथन्तरप्रसिद्धिद्योतनार्थः तन्त्रे योक्तदेवतापशुकरणेन तस्यामेव देवतां सोममेव पशुभिर्वर्द्धयन्तो बहुकुर्व्वन्ति यद्वा वहेति वर्द्धनार्थः किञ्च त्वचमेव सत्त्वतिं रक्षामेव दीप्ते त्वग्यातुं वा क्षतवन्तो भवन्ति तथा च सौमपौषं पशुं प्रकृत्य श्रुत्यन्तरं सोमोवै देवता पुरुषः पौष्णाः पशवः स्वयैवात्मानं देवतया पशुभिस्त्वचं करोति न दुःखमाभजतीति ॥ ५ ॥

अथ सामिधेनीषु विशेषमाह ।

मनो ऋचः सामिधेन्यो भवन्ति ॥ ६ ॥

स्पष्टं । ६ ।

मनुसम्बन्धं प्रशंसति ।

मनुर्वै यत् किञ्चावदत्तद्भेषजम्भेषजतायै ॥ ७ ॥

रागद्वेषादिशोकापनोदकस्य मनोः परानुग्रहार्थं स यत् किञ्चापि धर्म्मविषयं वाक्यमवदत् तद्भेषजं हितं अथ यस्तदीयधर्म्मः सामिधेनीकरणं भेषजतायै सकलदोषस्यौसधाय भवति ॥ ७ ॥

अथ सत्रस्य कालविशेषमाह ।

नैदाघीय उपेयुः ॥ ८ ॥

नैदाघीये निदाघसम्बन्धिनि काले ग्रीष्मर्त्तावित्यर्थः ॥ ८ ॥

तं कालं प्रशंसति ।

तद्वेएष प्रतितेजिष्ठन्तपति ॥ ९ ॥

तत्र तस्मिन् निदाघे एषः सूर्य्यः तेजिष्ठं अत्यन्ततेजोयुक्तं खलु तपति इति ॥ ९ ॥

अस्त्वेवं ततः सत्रिणां किं स्यादित्यत आह।

किलासत्वात्तु भयमतिच्छेभ्योपद्यन्ति॥ १०॥

सुविशेषोवास्त एते तत् सत्रेण किलासः सिद्धाः किलासत्वात् दुश्चर्म्मावयवस्याधिसम्भवात् भयन्न भवति अतो यौषेनुष्ठानान्निष्टपन्नादित्य एभ्यः सत्रिभ्यः सकाशादति अत्यधिकां अपहतिं खलु भयं अतो अयं कालोचित इत्यर्थः॥ १०॥

कथमस्य किलाससाधनत्वमिति तत् समर्थयते।

एतावाउग्रदेवो राजनिरुपैत् सकिलासोभवत्॥ ११॥

एता रात्रोः खलु राजनिः रजनस्यापत्यमुग्रव उपैति उपेत्य सोग्रदेवाः किलासः किलासवानभवत्॥ ११॥

अथोक्तार्थज्ञानपुरःसरमेव सत्रानुष्ठानं प्रशंसति।

अकिलासो भवति य एवं विद्वानेता उपैति॥ १२॥

उग्रदेवस्यैकस्यैव प्रयोगप्राप्तविद्वानुवीत्येककर्त्तृकत्वविधानं तेनास्मिन् सत्रे एकोप्यधिकरोतीति वेदितव्यं यद्वा उपैतीति उभयत्र बहुवचनं कर्त्तव्यं अत्र कल्पः उत्तरस्यैकविंशतिरात्रस्य संवत्सरक्लृप्तान्यहान्यनु क्लृप्ताभीवर्त्तकाले यः पृष्ठ्यः श्वैतनौधसव्रह्मसामानः पौष्कलश्रुध्यौष्णिहोविषुवतः तस्य सामतृचस्य लोक आभोगव ग्रायन्त इव सूर्य्यमिति विकर्षं समानमितरमिति तथा यस्मादतिरात्रात् पृष्ठ्यमुपयन्ति प्रथमस्याह्नोस्य प्रत्नानुरूप इति साधारणः कल्पः॥ १२॥

इति ताण्ड्यमहाब्राह्मणे त्रयोविंशाध्यायस्य
षोड़शः खण्डः।

अथ सप्तदशः खण्डः।

अथान्नाद्यफलसाधनं द्वाविंशतिरात्रं सत्रमाह।

अतिरात्रो ज्योतिर्गौरायुस्त्र्यहोऽभिप्लवः षडहो द्वादशाहस्य दशाहानि महाव्रतमतिरात्रस्तान्नाद्यकामा उपेयुः॥ १॥

स्पष्टं।१।

आसां रात्रीणां उक्तफलसाधनत्वं प्रदर्शयन् प्रशंसति

पञ्चर्त्तवो द्वादशमासास्त्रयइमे लोका असावादित्य एकविंꣳशोऽन्नं द्वाविꣳशमेभ्यो लोकेभ्यः संवत्सरादमुष्मादादित्यादन्नाद्यमवरुन्धते य एता उपयन्ति॥ २॥

ऋतव आदित्यपर्य्यन्तादेवाः अन्नहेतवः स्तुत्यानीया एकविंशतीरात्रयः द्वाविंशमहः तत् सम्बन्ध्यन्नं अत्र एताभिरत्रावरोधोयुक्तः अत्र यत्रातिरात्रादभिप्लवमुपयन्ति प्रथमस्याङ्ग एष प्रत्नानुरूपो यत्र वा त्रिकद्रुकेभ्यो यत्राभिप्लवोरात्रिसत्रेषु स्वेतनौधसब्रह्मसामानः पौष्कलस्तुष्योष्णिहोन्यत्र संवत्सरसंमितादिति सामान्यकल्पोद्रष्टव्यः॥ २॥

इति ताण्ड्यमहाब्राह्मणे त्रयोविंशाध्यायस्य सप्तदशः खण्डः।

---

## अथ अष्टादशः खण्डः।

अथ प्रतिष्ठासाधनं त्रयोविंशतिरात्रम् सत्रमाह।

अतिरात्रो ज्योतिर्गौरायुर्गौरायुः पञ्चाहोभिप्लवः षडहोद्वादशाहस्य दशाहान्यतिरात्रः प्रतिष्ठाकामाउपेयुः ॥ १ ॥

स्पष्टं ॥ १ ॥

प्रतिष्ठासाधनत्वं सप्ररोचनमाह।

एताभिर्वै प्रजापतिरेषु लोकेषु प्रत्यतिष्ठत् ॥ २ ॥

एषु भूरादिलोकेषु ॥ २ ॥

पुनस्त्रित्वद्वारैतारात्रीः प्रतिष्ठाफलस्योचिता इति प्रशंसति।

यदेतास्त्रयोविꣳशतीरात्रयो भवन्ति त्रय इमे लोका एष्वेवैताभिर्लोकेषु प्रतितिष्ठन्ति ॥ ३ ॥

स्पष्टं ॥ ३ ॥

रात्रीणां प्रतिष्ठितत्वादपि सत्रिणामपि प्रतिष्ठाफलं भवतीत्याह।

एता वै प्रतिष्ठितास्त्रयोविꣳशतीरात्रयः प्रतितिष्ठन्ति य एता उपयन्ति ॥ ४ ॥

प्रजापतेः प्रतिष्ठासाधनत्वाद्वा प्रतिष्ठितलोकत्रयसमसंख्याकरात्रीणामाधिक्याद्वा एता अपि प्रतिष्ठिता इत्युच्यन्ते ॥४॥

इति ताण्ड्यमहाब्राह्मणे त्रयोविंशाध्यायस्य
अष्टादशः खण्डः।

---

अथ ऊनविंशः खण्डः।

द्वौ चतुर्विंशतिरात्रौ तत्र स्वर्गोत्पत्तिसाधनं प्रथमं चतुर्विंशतिरात्रं सत्रमाह।

अतिरात्रः पृष्ठ्यः स्तोमः षडहस्त्रयस्त्रिंशमहरनिरुक्तमुपहव्यस्य तन्त्रे क्लृप्तन्तस्य कण्वरथन्तरम्माध्यन्दिनेऽथ त्रयस्त्रिंशं निरुक्तं त्रिणवन्द्वे एकविंशे त्रिणवन्त्रयस्त्रिंशमहनिरुक्तं त्रयस्त्रिंशमहरनिरुक्तं पृष्ठ्यः स्तोमः षडहः प्रत्यङ्त्रिवृदहरनिरुक्तं ज्योतिष्टोमोग्निष्टोमोतिरात्रः ॥ १ ॥

पृष्ठ्यः स्तोमः षडहइति वैरूपादिपृष्ठचतुष्टयरहितोरथन्तरबृहद्भ्यामेव निर्वर्त्यः रथन्तरपृष्ठान्यनुजानि बृहत्पृष्ठानीतराणीति व्यवस्था सच द्वितीयः प्रत्यङिति त्रयस्त्रिंशारम्भण इत्यर्थः प्रथमं त्रयस्त्रिंशमहरनिरुक्तं तदोपहव्यस्य तन्त्रे क्लृप्तं उपहव्योनामैकाहतन्त्रेणैव तदतिक्लृप्तं इर्यास्ततो विशेषः माध्यन्दिनसवने पवमाने कर्णरथन्तरं पुनानस्सोमधारयेत्येतासु कर्त्तव्यं शिष्टं स्पष्टं ॥ १ ॥

अस्य स्वर्गोत्पत्तिसाधनत्वं सप्ररोचनमाह।

एताभिर्वै देवाः स्वर्गे लोके समसीदन् स्वर्गे लोके सीदामेत्येताः ॥ २ ॥

पूर्वं ह्येताभीरात्रिभिः स्वर्गे लोके सीदामेत्यभिसन्धायैता रात्रीरनुष्ठाय देवसंलक्षणे स्वर्गे समसीदन् अत एताः स्वर्ग्या इति शेषः तथा च तैत्तिरीयकं यथा वै मनुष्या एवं देवा अग्र आसन् ते कामयन्त्यवर्त्तिं पाप्मानं मृत्युमपहत्य दैवं समसीदन्नाच्छामिति त एतं चतुर्विंशतिरात्रमपश्यन्नित्यर्थः ॥ २ ॥

अथासां स्वर्गत्वं साधयति।

एता वाव ब्रध्नस्य विष्टपोयदेते त्रयस्त्रिंशा मध्यतः सन्धीयन्ते तेन ब्रध्नस्य विष्टपंरोहन्ति ॥ ३ ॥

एता वाव एता एव चतुर्विंशतोरात्रयोब्रध्नस्यादित्यस्य विष्टपोद्युलोक इत्यर्थः असौ वा आदित्योब्रध्नइति हि श्रुत्यन्तरं एवं सति ब्रध्नस्य विष्टपस्थानोयासु रात्रिषु यद्यपि एते त्रयस्त्रिंशा-स्त्रयस्त्रिंशस्तोमकान्यहानि मध्यतः सन्धीयन्ते सम्यक् प्रयुज्यन्ते तेन साधनेन ब्रध्नस्य विष्टपमेव रोहन्ति सत्रिणः ॥ ३ ॥

अथासाम्मध्ये यत् पृष्ठ्यः स्तोमः षड़हश्चयन्तत् प्रशंसति।

मध्यतः पृष्ठान्युपयन्त्यन्नं वै पृष्ठान्यन्नमेव तन्मध्यतोधी-यते तस्मान्मध्ये सदन्नन्धिनोति ॥ ४ ॥

अन्नसाधनत्वात् षट्सामात्मकान् संख्यासाम्यात पृष्टानां साम्येन स्तुतिः ॥ ४ ॥

अथातिरात्रमग्निष्टोमसुक्ता शिष्टा एकविंशतिरात्रीः सप्तधा विभज्य प्रशंसति।

**सप्ताहा वा एते ॥ ५ ॥**

स्पष्टं ॥ ५ ॥

ततः किमित्यत आह।

**अतो वै प्रजाः प्रजायन्ते ॥ ६ ॥**

अतः सप्ताहसकाशात्॥ ६ ॥

ततश्च किमित्यत आह।

**प्रप्रजया प्रपशुभिर्जायन्ते य एता उपयन्ति ॥ ७ ॥**

स्पष्टं ॥ ७ ॥

अथ पुनः सप्ताहरूपत्वमेव छन्दोमस्थानीयत्वेन प्रशंसति।

**अपशव्यं वा एतत् सत्रं यदच्छन्दोमं यत्सप्ताहास्तेन छन्दोमवत्यस्तेन पशव्याः ॥ ८ ॥**

पशवश्छन्दोमाइति श्रुतेस्तद्राहित्यादेतत्सत्रमपशव्यङ्खलु तथा सति यत्सप्ताहाभवन्ति तेन छन्दोमवत्यः अतः पशव्याः मुख्यसप्त-छन्दःसंख्यासाम्यात छन्दोमत्वस्तुतिः ॥ ८॥

अत्र त्रयस्त्रिंशविहत्योश्च यदहरन्तरा व्यवहितमस्ति तत् प्रशंसति।

**त्रयस्त्रिंशस्त्रयस्त्रिंशमन्वेति त्रिवृत्त्रिवृतमग्नादग्नं**

रोहन्ति यत्त्रयस्त्रिꣳशत्त्रयस्त्रिꣳशमन्वेति प्राणात् प्राणेषु प्रतितिष्ठन्ति ॥ ९ ॥

त्रयस्त्रिंशस्य त्रिवृदादिषट्कानामग्रत्वात्तयोरानन्तर्य्यात्मकत्वस्य स्वर्गादेरग्ररोहणं युक्तं त्रिवृच्छन्दोमस्तोत्रीयानवकात्मकत्वात् प्राणानां च नवकात्मकत्वात् प्राणेषु प्रतितिष्ठन्ति प्राणेषु प्रतिष्ठा नाम चिरकालजीवनं त्रयस्त्रिंशयोरनुगतिः स्पष्टाः ॥ ९ ॥

यत्त्रिवृत्त्रिवृतं ॥१० ॥

त्रिवृतो द्वितीयस्य पृष्ठ्यस्तोमषडहस्य प्रत्यक्त्वादन्तिमं त्रिवृदहर्भवति तत उत्तरमेकं त्रिवृदनिरुक्तमहः स्तुत एवमतस्तयोरनुगतिः ॥ १० ॥

अथान्तिममग्निष्टोममहस्तदितरसम्पत्त्यर्थमिति प्रशंसति ।

विलोमानो वा एतारात्रयो यत्ज्योतिरग्निष्टोम उत्थानीयमहर्भवत्यक्लृप्तस्य क्लृप्त्यै ॥ ११ ॥

त्रयस्त्रिंशानन्तरं त्रिणवमहस्ततः पश्चादेकविंशे द्वे इत्यादिव्युत्क्रमादेता रात्रयोविलोमानः अस्य स्त्रीलिङ्गेष्वेवं रूपं तासां यद्यदि ज्योतिष्टोमोऽग्निष्टोम उत्थानीयः सत्रोत्थानसम्बन्ध्यहर्भवति तदक्लृप्तस्य अनिर्दिष्टस्य प्रजापश्वादिव्यतिरिक्तस्य फलस्य क्लृप्त्यै पर्य्याप्त्यै ज्योतिष्टोमस्याङ्गः एष प्रत्नानुरूपो गौरीवितमनुष्टुप्स्यन्वहमविक्लृप्तस्य सर्वसाधनत्वादिति भावः अथ कल्पः, अत्र संसदामतिरात्रः पृष्ठ्यः स्तोमः षडहः प्रथमक्लृप्तं चतुर्थमहः

पञ्चमस्याह्न आकूपारस्य लोके त्वाष्ट्री साम यद्यनुतोदमित्यादि-
कल्पो द्रष्टव्यः ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोविंशाध्यायस्य
एकोनविंशः खण्डः ।

---

अथ विंशः खण्डः ।

अथ द्वितीयं चतुर्विंशतिरात्रं प्रजापश्वोरन्यतरकामानां सत्र-
माह ।

**अतिरात्रौ द्वावभिप्लवौ षडहौ द्वादशाहस्य दशाहा-
न्यतिरात्रः प्रजाकामा वा पशुकामा वोपेयुः ॥ १**

स्पष्टं । १ ।

आद्यं षडहद्वयं प्रशंसति ॥

**कृशाद्वै योनेः प्रजाः पशवः प्रजायन्ते यत् कृशौ षडहा-
वुपयन्ति कृशादेव योनेः प्रजया पशुभिः प्रजायन्ते ॥ २ ॥**

लोके खलु कृशादेवोत्पादनयोग्यादेव प्रच्छाद्यो न प्रजाः
पशवश्चोत्पद्यन्ते अस्तु तथा लोके किन्तत आह यद्यदि कृशौ
गवामयने सिद्धौ षडहावुपयन्ति सत्रिणः तर्हि कृशादेव योनेः
स्वयमपि प्रजाः पशुभिश्च प्रजायन्ते समृद्धा भवन्ति ॥ २ ॥

अथ दशाहं प्रशंसति ।

**अथ यानि द्वादशाहस्य दशाहानि वाचमविच्छिन्ना-
मुपयन्ति प्रजननाय ॥ ३ ॥**

गतार्थमिदं ॥ ३ ॥

अथ सर्वा रात्रीः प्रशंसति ।

एतावै प्रतिष्ठिताश्चतुर्विंꣳशतीरात्रयः प्रतितिष्ठन्ति य एता उपयन्ति ॥ ४ ॥

प्रतिष्ठितस्य संवत्सरस्यावयवभूतानामर्द्धमासानां समानसंख्योपेतत्वादासामपि प्रतिष्ठितत्वमिति ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोविंशाध्यायस्य विंशः खण्डः ।

---

अथ एकविंशः खण्डः ।

अथान्नाद्यफलसाधनं प्रजापतेः पञ्चविंशतिरात्रं सत्रमाह ।

एता एव स महाव्रताः ॥ १ ॥

एता एव द्वितीयचतुर्विंशतिरात्रोक्ता एव ॥ १ ॥

आसामन्नाद्यफलाय सम्प्ररोचनमाह ।

एताभिर्वै प्रजापतिः सर्वमन्नाद्यमवारुन्ध ॥ २ ॥

अत इदानीं अन्नाद्यमवरुन्धते इति ॥ २ ॥

अथादिष्टमहाव्रतस्मिल्लित्वान्नाद्यफलसाधनमिति प्रशंसति ।

चतुर्विंꣳशतिः संवत्सरस्यार्द्धमासाः संवत्सरः पञ्चविंशो न्नं व्रतं संवत्सरादेताभिरन्नाद्यमवरुन्धते य एता उपयन्ति ॥ ३ ॥

संवत्सरावयवभूताश्चतुर्विंशतिरर्द्धमासस्थानीयाश्चतुर्विंशतिरात्रयः पञ्चविंशोऽवयवी संवत्सरः तत्स्थानीयं महाव्रतमन्नं एवं सत्येताभिः सत्रिभिः संवत्सरादेवान्नाद्यमवरुन्धते संवत्सरे कृत्स्नान्ननिष्पत्तेः के अवरुन्धत इति चेत् य एता उपयन्ति ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोविंशाध्यायस्य
एकविंशः खण्डः ।

---

अथ द्वाविंशः खण्डः ।

अथ षड्विंशतीरात्रं प्रतिष्ठासाधनं सत्रमाह ।

**अतिरात्रो गौश्चायुश्च द्वे अहनी द्वावभिप्लवौ षडहौ द्वादशाहस्य दशाहान्यतिरात्रः ॥ १ ॥**

स्पष्टं ॥ १ ॥

आसां प्रतिष्ठासाधनत्वं सम्प्ररोचनमाह ।

**ऋतवोनप्रत्यतिष्ठꣳस्त एताभिः प्रत्यतिष्ठन् प्रतिष्ठाकामाउपेयुः प्रत्येव तिष्ठन्ति ॥ २ ॥**

स्पष्टं । २ ।

प्रतिष्ठामेव प्रयोक्तृगतसंख्यया प्रशंसति ।

**षड्वा ऋतव ऋतुष्वेवैताभिः प्रतितिष्ठन्ति ॥ ३ ॥**

स्पष्टं । ३ ।

आद्यौ द्वे अहनी प्रशंसति ।

यद्गौश्चायुश्च द्वे अहनी भवतो मिथुनौ स्तोमावुपयन्ति प्रजात्यै ॥ ४ ॥

गौः स्त्री आयुः पुरुष इति मिथुनौ परस्परं प्रजात्यै प्रजननाय ॥ ४ ॥

अथ षडहौ प्रशंसति ।

यत्क्लृप्तौ षडहावुपयन्ति क्लृप्ता एव ॥ ५ ॥

विप्रकीर्णत्वाभावेन गवामयनं एतत् क्लृप्तौ प्रजादिक्लृप्तौ सम्पद्यते ॥ ५ ॥

अथ दशाहं प्रशंसति ।

अथ यानि द्वादशाहस्य दशाहानि वाचमविच्छिन्नामुपयन्ति प्रजननाय ॥ ६ ॥

स्पष्टं । ६ ।

अथ सर्वांमिलित्वा प्रशंसति ।

एता वै प्रतिष्ठिता षड्विंशतीरात्रयः प्रतितिष्ठन्ति य एता उपयन्ति ॥ ७ ॥

ऋतूनां प्रतिष्ठासाधनत्वात्तेषां च संवत्सरात्मकत्वेन प्रतिष्ठितत्वादासामपि प्रतिष्ठितत्वं ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोविंशाध्यायस्य

द्वाविंशः खण्डः ।

---

अथ त्रयोविंशः खण्डः ।

अथ सिद्धसाधननक्षत्राणां सप्तविंशतिरात्रमाह ।

अतिरात्रो ज्योतिर्गौरायुस्त्र्यहो द्वावभिप्लवौ षडहौ द्वादशाहस्य दशाहान्यतिरात्र ऋद्धिकामा उपेयुः ॥ १ ॥

गतार्थमेतत् ॥ १ ॥

ऋद्धिफलं प्रयोगद्वारोपपादयति ।

एताभिर्वै नक्षत्राणि सर्वामृद्धिमार्ध्नुवन् सर्वामृद्धिमृध्नुवन्ति य एता उपयन्ति ॥ २ ॥

अत एता उपेयुसःसमृद्धा भवन्ति ॥ २ ॥

प्रयोक्तृसंख्यासाम्यादप्येताः प्रशस्ता इत्याह ।

यदेताः सप्तविंशतीरात्रयो भवन्ति सप्तविंशतिर्नक्षत्राणि नक्षत्रसम्मिता वा एता रात्रयो नक्षत्राणामेवर्द्धिमृध्नुवन्ति ॥ ३ ॥

स्पष्टं ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोविंशाध्यायस्य त्रयोविंशः खण्डः ।

---

अथ चतुर्विंशः खण्डः ।

अथ पशुफलसाधनमष्टाविंशतिरात्रं सत्रमाह ।

एता एव स महाव्रताः पशुकामा उपेयुर्यदेता अष्टा-

त्रिꣳशतीरात्रयो भवन्त्यष्टाशफाः पशवः शफशएवैताभिः पशूनवरुन्धते ॥ १ ॥

सुगमं ॥ १ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोविंशाध्यायस्य
चतुर्विंशः खण्डः ॥

---

अथ पञ्चविंशः खण्डः ।

अथानन्तकश्रीफलसाधकं प्रजापतेरेकोनत्रिंशद्रात्रं सत्र-माह ।

अतिरात्रो ज्योतिर्गौरायुर्गौरायुः पञ्चाहोद्वावभिप्लवौ षडहौ द्वादशाहस्य दशाहान्यतिरात्रः ॥ १ ॥

स्पष्टं ॥ १ ॥

आसां श्रीफलं सप्ररोचनमाह ।

एताभिर्वै प्रजापतिरनन्ताꣳश्रियमजयत् ॥ २ ॥

स्पष्टं ॥ २ ॥

कथमनन्तश्रीफलसाधकत्वं अस्येति तदुपपादयति ।

अनन्ता वा एता या एकयानत्रिꣳशन्नेति वै वाचो-नन्त ॥ ३ ॥

एता रात्रयोऽनन्ता बह्वः खलु यद्वा अनन्ताः पञ्चाहषडहाद्याः

अनन्तसङ्ख्यात्मकासु तथा ततः कीर्तिरयशइति तच्चोच्यते यदा नैकयानेति न अयत तदेव वाचोऽनन्त्यं तदभाव आनन्त्यं वा प्रतीतिः ॥ ३ ॥

अस्त्वेवं सत्रिणां किमायातमिति तदुच्यते ।

यदेता एकयानत्रिꣳशद्रात्रयोभवन्त्यनन्तामेवैताभिः श्रियं जयन्ति ॥ ४ ॥

स्पष्टं ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोविंशाध्यायस्य
पञ्चविंशः खण्डः ।

---

अथ षड्विंशः खण्डः ।

अथान्नाद्यफलसाधनं त्रिंशद्रात्रं सत्रमाह ।

अतिरात्रस्त्रयोभिप्लवाः षडहाद्वादश्याहस्य दशाहान्यतिरात्रोन्नाद्यकामाउपेयुः ॥ १ ॥

स्पष्टं ॥ १ ॥

अथैता अन्नाद्यसाधनाइति स्तौति ।

परोक्षमन्यानि सत्राणि विराजं सम्पद्यन्ते प्रत्यक्षमेता विराजꣳसम्पन्नाः ॥ २ ॥

अन्यानि सत्राणि स्तोमपरिगणनादिना विराजं संपद्यन्ते एतत् सत्रगतासु रात्रयः प्रत्यक्षं विराजं त्रिंशत्संख्योपेतत्वात् त्रिंशदक्षरा विराडिति श्रुतेः ॥ २ ॥

अस्त्वेवं किं ततः सत्रिणामित्यत आह।

प्रत्यक्षमेताभिरन्नाद्यमवरुन्धते य एता उपयन्ति ॥३॥

अन्नं विराडिति श्रुतेरेताभिरन्नावरोध इति ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोविंशाध्यायस्य
षड्विंशः खण्डः।

---

अथ सप्तविंशः खण्डः।

अथान्नाद्यसाधनं प्रजापतेरेकत्रिंशद्रात्रंसत्रमाह।

एता एव समह्वाव्रता एताभिर्वै प्रजापतिरभिपूर्वमन्ना-
द्यमवारुन्ध ॥ १ ॥

अभिपूर्वंमनुक्रमेणैव ॥ १ ॥

कथमाभिरन्नाद्यस्याभिपूर्व्वंमिति तदुपपादयति।

अन्नं विराडन्नं व्रतं ॥ २ ॥

पूर्वोक्तं त्रिंशद्रात्राख्यमेवमन्नस्य महाव्रतस्यान्नसाधनत्वं अस-
कृदुक्तं अत उभयोरप्यन्नात्मकत्वादुभयानुष्ठानक्रमेणान्नलाभः ॥ २ ॥

अथान्येषामपि एतदनुष्ठायिनामेतत् फलं भवतीत्याह।

अभिपूर्व्वमेवैताभिरन्नाद्यमवरुन्धते ॥ ३ ॥

स्पष्टं ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे त्रयोविंशाध्यायस्य
सप्तविंशः खण्डः ।

---

अथ अष्टाविंशः खण्डः ।

अथ पशुफलसाधनं द्वात्रिंशद्रात्रं सत्रमाह ।

अतिरात्रोगौश्चायुश्च द्वे अहनी त्रयोभिप्लवाः षडहा-द्वादशाहस्य दशाहान्यतिरात्रः पशुकामाउपेयुः ॥ १ ॥

स्पष्टं ॥ १ ॥

अथास्य पशुसाधनत्वं वक्तुन्तद्गतसंख्यामनुष्टुप्संपादनेन प्रशं-सति ।

अनुष्टुब्वा एतारात्रयः ॥ २ ॥

स्पष्टं ॥ २ ॥

कथमिति तदुपपादयति ।

द्वात्रिंशदक्षरानुष्टुप् ॥ ३ ॥

स्पष्टं ॥ ३ ॥

अतः किमित्याह ।

वागनुष्टुप् ॥ ४ ॥

स्पष्टं ॥ ४ ॥

वागात्मकत्वेन पश्वात्मकत्वं दर्शयति।

चतुष्पादाः पशवः ॥ ५ ॥

अनुष्टुभश्चत्वारः पादाः पशूनामपि तावन्त एव अतस्तयोः सम्बन्धः ॥ ५ ॥

अस्त्वेवं किं तत इत्याह।

वाचा पशून्दाधार ॥ ६ ॥

पूर्वं प्रजापतिः वाचानुष्टुवात्मना यान् पशून् दाधारेति अनुष्टुभोवाग्रूपत्वमसकृद्दर्शितं ॥ ६ ॥

कयावाचेति सोच्यते।

एताभीरात्रीभिः ॥ ७ ॥

रात्रीणां अनुष्टुभाञ्च संख्यासाम्याद्वाचा दाधारेत्युपचर्य्यते ॥ ७ ॥

इदानीमपि पशूनां वाचा आगमनादिव्यवहार एतत्सम्बद्ध इत्याह।

तस्मात्ते वाचा सिद्धा वाचा हूता आयन्ति ॥ ८ ॥

यस्मात् प्रजापतिः वाचा पशून् धृतवान् तस्मादिदानीमपि स्वस्वामिवाचा सिद्धा वाङ्मात्रव्यवहारा आसन् किञ्च वाचा एहीत्यादिरूपया वाचा आहूताः स्वामिसकाशमायान्ति इदानीन्तनप्रतिद्वशा प्रजापतेर्वाचा पशुधारणं सम्मतं भवति अत एवाभीरात्रीभिः पशुकामानामुचित इत्यर्थः।

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ८ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्क-
भूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माध-
वीये सामवेदार्थ-प्रकाशे ताण्ड्यमहाब्राह्मणे
त्रयोविंशाध्यायस्य अष्टाविंशः खण्डः।
त्रयोविंशाध्यायः समाप्तिगमत्।

---

# अथ चतुर्विंशोऽध्यायः ।

---

अथ प्रथमः खण्डः ।

यस्य निश्वसितं वेदायो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

त्रयोविंशत्यध्याये द्वात्रिंशद्रात्रिपर्य्यन्तानि सत्राणि निगदितानि अथास्मिंश्चतुर्विंशेऽध्याये त्रयस्त्रिंशद्रात्रमारभ्य संवत्सरपर्य्यन्तानि सत्राणि निरूप्यन्ते तत्रादौ प्रतिष्ठाकामाय त्रयस्त्रिंशद्रात्रसंज्ञकं सत्रमाह ।

अतिरात्रस्त्रयः पञ्चाहा विश्वजिदतिरात्र एकः पञ्चाहो द्वादशाहस्य दशाहान्यतिरात्रः ॥ १ ॥

स्पष्टं । १ ।

एतस्मिन् सत्रे अधिकारिणो दर्शयति ।

प्रजापतिः प्रजा असृजत तान् प्रत्यतिष्ठंस्ता एताभिः प्रत्यतिष्ठन्निमे लोकान प्रत्यतिष्ठंस्त एताभिः प्रत्यतिष्ठन् प्रतिष्ठाकामा उपेयुः प्रत्येव तिष्ठन्ति ॥ २ ॥

प्रजापतिना सृष्टा देवमनुष्याद्याः प्रजाः पृथिव्यादिलोकाश्च न प्रत्यतिष्ठन् स्थैर्य्यन्नालभन्त ततः प्रजापतिनानुष्ठिताभिरेताभिस्त्रयस्त्रिंशद्रात्रीभिः प्रतिष्ठामलभन्तः तत्तस्मात् प्रतिष्ठाकामिनामस्मिन्नधिकारः ॥ २ ॥

अत्र पञ्चाहे बृहद्रथन्तरयोः साम्नोरन्योन्यस्थानव्यत्ययेनानुष्ठानमभिप्रेत्य तत् प्रशंसति ।

अरूपेण वा एताः सरूपा अरूपेण प्रजाः सरूपा अरूपेणेमे लोकाः सरूपा यद्रथन्तरस्य लोकं बृहदापद्यते बृहतो रथन्तरमरूपेणैवैभ्यस्तत् सरूपं प्रजनयन्ति ॥ ३ ॥

सत्रावयवभूतास्त्रयस्त्रिंशद्रात्रयो याः सन्ति एता अरूपेणैव सरूपाः सम्पन्नाः इयं प्रथमा रात्रिरियं द्वितीयेत्येवं व्यत्ययं रूपमनुष्ठानात् पूर्वं नास्ति पश्चात्तु सम्पत्तेः तस्मादरूपं कारणं सरूपं कार्य्यं प्रजाश्च हस्तपादादिरूपरहितेन शुक्रशोनितात्मना वीजनियोजनोत्पादिता हस्तपादादिरूपोपेताः सम्पन्नाः पृथिव्यादिलोकाश्च रूपरहितेन परब्रह्मणोत्पादितरूपवन्तोऽभवन् तद्वत्बृहद्रथन्तरसाम्नोरपि परस्परस्थानव्यत्यये सति स्वकीयस्थानराहित्यलक्षणं कृत्वा तदरूपमस्ति तत्तेनारूपेणैवैभ्यः यजमानोपकारार्थं सामगानलक्षणा उद्गातारः प्रजनयन्ति ॥ ३ ॥

अत्र पञ्चाहप्रयुक्तं किञ्चिद्दोषमाशंक्य परिहरति ।

लुप्यते वा एतत् षष्ठमहर्य्यत् पञ्चाहानुपयन्ति नर्त्तवः

कल्पन्ते यत् पृष्ठ्यः षडहस्तेन षष्ठमहर्न्न लुप्यते तेनर्त्तवः कल्पन्ते ॥ ४ ॥

पञ्चाहानुपयन्त्यनुतिष्ठन्तीति यदस्ति एतदेतेनानुष्ठानेन षष्ठस्याह्नोलोपे सति षट्संख्याका ऋतवो न कल्पन्ते स्वस्वकालोचितफलदानसमर्थान भवन्ति सोऽयं दोषः द्वादशाहमध्ये पृष्ठ्यषडहानुष्ठानादुक्तदोषपरिहारो द्रष्टव्यः ॥ ४ ॥

षड़हानुष्ठाने पञ्चाहानुष्ठानं विच्छिद्यतेत्याशंक्य दशाहस्य पञ्चाहद्वारूपत्वान्न विच्छेद इत्यभिप्रायेणाह।

अथ यानि द्वादशाहस्य दशाहानि तेन पञ्चाहेभ्यो नयन्ति ॥ ५ ॥

अहर्ल्लोपदोषसमाधानानन्तरं पञ्चाहविच्छेददोषसमाधानं द्रष्टव्यमिति शेषः, कथमिति चेत्तदुच्यते द्वादशाहस्य यानि दशाहानि विद्यन्ते तेषां द्वौ द्वौ विभागे सति द्वौ पञ्चाहौ सम्पद्येते तेन पञ्चाहद्वयसम्पन्नेनैव सत्रानुष्ठायिनः पञ्चाहेभ्यो न यन्ति नापगच्छन्ति ॥ ५ ॥

अथास्य यत् त्रयस्त्रिंशद्रात्रसत्रस्य मध्ये योऽज्यो विश्वजिदतिरात्रस्तमेव प्रशंसितुं दृष्टान्तत्वविवक्षया लोकत्रये किञ्चिद्रूपकं परिकल्प्योपन्यस्यति।

ऊधर्वा अन्तरिक्षं स्तनावभितोनेन वा एष देवेभ्यो दुग्धेऽमुना प्रजाभ्यः ॥ ६ ॥

द्यावापृथिव्योर्म्मध्ये यदिदमन्तरिक्षमस्ति तदिदं ब्रह्माण्डरू-

पाया अजाया ऊधर्वै अजाधेनुमहिष्यादीनां प्रभूतक्षीरसन्देग्धृ-धरित्युच्यते अजासम्बन्धिन ऊधसः पार्श्वयोर्द्वौ स्तनौ भवतः एवं ब्रह्माण्डरूपस्याजाशरीरस्यान्तरिक्षमूधस्थानीयं प्रभूतवर्षो-पसंग्रहस्तनत्वात्तस्य चान्तरिक्षस्य ऊधस इति तदुपरि अध-स्ताच्च द्यावापृथिव्याख्यौ द्वौ स्तनौ भवतः तयोर्मध्ये अनेन वै द्यावापृथिवीरूपेणैव स्तनेन देवेभ्य इन्द्रादिदेवार्थमेषजगदीश्वरो दुग्धे यागसम्बन्धिहविर्लक्षणं क्षीरं सम्पादयति अमुना द्यूलोक-रूपेण स्तनेन प्रजाभ्यो मनुष्यपश्वाद्यर्थं दुग्धे वृष्ट्युदकरूपं सम्पा-दयति ॥ ६ ॥

नन्वन्तरिक्षस्य कथमूधस्त्वं कथंवा द्यावापृथिव्योस्तनद्वय-रूपत्वमित्याशंक्याह ।

इयं वा अन्तरिक्षं वियदिमौ स्तनावभितः ॥ ७ ॥

इयं वै दृश्यमानमेवान्तरिक्षं वियत् व्यगमयत् द्यावापृथिव्यौ स्तनसंश्लेषव्रहर्त्तेति तस्मादस्योधस्त्वात् देवमनुष्यापेक्षितस्य हवि-र्वृष्टिरूपस्य क्षीरद्वयस्य श्रवणादन्तरिक्षस्याभितोवर्त्तमानयोः द्या-वापृथिव्योः स्तनत्वं स्यात् एतत् द्यावापृथिव्योः स्तनद्वयत्वमुक्तं ब्राह्मणवाक्येन ॥ ७ ॥

तस्य दार्ढ्यार्थं विसंवादिनीं काञ्चिदेव ऋचमीरयति ।

तदभ्यनूक्ता ॥ ८ ॥

तदुभे द्यावापृथिव्यौ देवमनुष्यतृप्तिहेतुत्वलक्षणं स्तनत्वं य-दन्ति तदभिलक्ष्य उक्ता ॥ ८ ॥

अनुकूला काचिदृक् समाम्नाता तामेतामृचं पृच्छति ।

त्रिंशत्त्रिंशति त्रयः परो ये देवा बर्हिरासत्तव्यं नद्ध द्वितात-नेति ॥ ९ ॥

हविर्भुजो ये देवा बर्हिरासतव्यं सतरूपं यज्ञमवस्थिताः ते देवास्त्रिंशति त्रिंसत् संख्याकाः तथा त्रयः परः अपरेपि त्रिसंख्याकाः एते त्रयस्त्रिंशत्संख्याकाः देवा लोकत्रये विभज्य वर्त्तते एतच्च ये देवा दिव्येकादशस्थेत्यादिमन्त्रे स्पष्टमाम्नाताः तनशब्दो धननामसु पठितः द्वितेतिशब्दः द्वैविध्यमावष्टेहशब्द एवकारार्थः व्यतिशब्दोवीगतिप्रजननकान्त्यशनखादनेष्विति धातोरुत्पन्नः अत्र प्रजननार्थमाचष्टे तस्य वाक्यस्यायमर्थः त्रयस्त्रिंशत संख्याका देवा हविर्दृष्टिलक्षणं धनं लोकद्वयवर्त्तिनं द्विधाकृत्वा प्राजनयन्ति इतिशब्दः समाप्त्यर्थः इत्यन्तामन्त्राः अन्तरिक्षस्यौभस्त्वं द्यावापृथिव्योः स्तनद्वयत्वं च सम्पादयन्ति ॥ ९ ॥

तद्दृष्टान्तेन प्रकृतक्रतावपि तत् सर्वं सम्पादयति ।

ऊधर्वै मध्यमोतिरात्रः स्तनावभितः ॥ १० ॥

अस्मिन् क्रतावाद्यन्तयोरतिरात्रयोर्मध्यवर्त्ती योयं विश्वजिदतिरात्रः सोयं ऊधर्वै क्रतुफलाख्यस्य बहुक्षीरस्य धारणस्थानमूधस्तस्य विश्वजिदतिरात्रस्याभितः पुरस्तात्पश्चाच्च यो पश्चाहो विद्येते तो स्तनस्थानीयौ क्रतुफलदोहनहेतुत्वात् ॥ १० ॥

उक्तस्य विश्वजिदतिरात्रस्याभावे वाधमाह ।

यद्येषोनतिरात्रः स्यादूधः प्रतिहरेत् ॥ ११ ॥

यद्येष त्रयस्त्रिंशदतिरात्ररूपः क्रतुरनतिरात्रो विश्वजिदतिरात्ररहितः स्यात् तदानीमेतस्याः सत्ररूपायाः कामधेनोरूधःस्थानीयं फलदानसामर्थ्यं प्रतिहरेत् ॥ ११ ॥

अन्वयव्यतिरेकाभ्यां विश्वजिदतिरात्रं प्रोच्य कर्त्तव्यमुपसंहरति ।

तस्मादतिरात्रः कार्य्य ऊधसोऽप्रतिहाराय ॥ १२ ॥

यस्मात् कारणादयं विश्वजिदतिरात्रः ऊधःस्थानीयः तदभावे फलसामर्थ्याख्यमूधो विनश्यति तस्मात् कारणाद्विश्वजिदतिरात्रः ऊधसो विनाशायानुष्ठेयः ॥ १२ ॥

अस्य क्रतोः समृद्धिहेतुत्वं दर्शयति ।

त्रयस्त्रिंशद्देवता एताभिरार्ध्नुवंस्तेनर्द्धिस्तस्मादेताभिर्यजन्त ऋध्या एव ॥ १३ ॥

याः त्रयस्त्रिंशत्संख्याका देवता हविर्भुजः सन्ति ताः सर्व्वा एताभिः सत्रगताभिस्त्रयस्त्रिंशद्रात्रिभिरार्ध्नुवन् समृद्धिं प्राप्ताः तेनेदं सत्रं ऋद्धिसंज्ञकं भवति यस्माद्देवता आर्ध्नुवन् तस्मादन्योपि एताभिर्य्यथोक्ताभिस्त्रयस्त्रिंशद्रात्रिभिर्य्यजन्ते ॥ १३ ॥

एतत्सत्रगतासु त्रयस्त्रिंशद्रात्रिषु ब्रह्मसाम्नां नानाविधत्वं प्रशंसति ।

नाना ब्रह्मसामान्युपयन्त्यह्नां नाना वीर्यतायै नानैव वीर्य्याण्यवरुन्धते ॥ १४ ॥

अस्मिन् क्रतौ बहवः पञ्चाहाः सन्ति तेषु ब्रह्मसामानि नाना परस्परविलक्षणानि उपयन्त्यनुतिष्ठेयुः तद्यथा प्रथमं पञ्चसु दिनेषु क्रमेण बृहद्रथन्तरनौधसं श्यैतम्महावैष्टम्भमित्येतानि ब्रह्मसामानि द्वितीयपञ्चाहस्य प्रथमतो बृहत्पश्चाद्रथन्तरं ततो मानवं छन्दस्यं वाशिष्ठमिति ब्रह्मसामानि यद्यपि द्वितीयतृतीययोर्मानवमस्ति तथापि द्वितीये त्वामिदाह्योनरइत्यस्यामृचि मानवतृतीयेतु शग-ध्यूषु शचीपत इत्यस्यामृचीतिविशेषः तदेवं ब्रह्मसाम्नान्नानाविधत्व-मह्नान्नानाविधवीर्य्यतायै सम्पद्यते ततो यजमानाश्चापि नाना-विधान्येव वीर्य्याणि प्राप्नुवन्ति ॥ १४ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्विंशाध्यायस्य
प्रथमः खण्डः ।

---

अथ द्वितीयः खण्डः ।

अथापरं त्रयस्त्रिंशद्रात्रमृद्धिकामानां सत्रमाह ।

अतिरात्रोऽभिप्लवः षडहोऽतिरात्रोऽभिप्लवः षडहोऽति-रात्रोऽभिप्लवः षडहो द्वादशाहस्य दशाहानि महाव्रत-ञ्चातिरात्रश्च ॥ १ ॥

स्पष्टं । १ ।

तमेतं त्रयस्त्रिंशद्रात्रक्रतुं द्वेधा विभज्य तत्र द्वयरूपत्वं सम्पाद्य तेन सत्रद्वयेन समानं फलं दर्शयति।

आदित्याश्चाङ्गिरसश्चैतत् सत्रꣳसमदधतादित्याना-मेकविꣳशतिरङ्गिरसां द्वादशाह आदित्या अस्मिँल्लोक ऋद्धा आदित्या अमुष्मिन्नङ्गिरसोऽस्मिन्नङ्गिरसोऽमुष्मिन् द्वयꣳ सत्रं यावत्द्वयेन सत्रेणर्ध्नुवन्ति तावत्येतासामृद्धिः॥ २॥

यदिमे आदित्याः सन्ति ये चान्येऽङ्गिरसः सन्ति तदुभयेपि मिलित्वा एतत् सत्रमन्वतिष्ठन् अस्मिन् सत्रे त्रिभिरतिरात्ररूपो पेतास्त्रयोभिप्लवाः षडहामिलित्वा एकविंशतिरात्रं सत्रं सम्पद्यते स आदित्यानां भागः अतिशिष्टं द्वादशाहरूपं सत्रं सोयमङ्गिरसां भागः तत्रादित्याः स्वकीयेन भागेन लोकद्वयसमृद्धिं प्राप्ताः अङ्गिरसो अपि स्वभागेन लोकद्वयसमृद्धिं प्राप्नुवन् तदेतदादित्यानामङ्गिरसाञ्च द्विविधं सत्रं यावद्भवति तावतीय क्रतसत्रगतानामेतासां त्रयस्त्रिंशद्रात्रीणां समृद्धिद्वयं सत्रमित्यस्यार्थद्वयनेतिव्याख्यानं एकविंशतिरात्रद्वादशाहरूपेण द्विविधेन सत्रेणादित्या अङ्गिरसश्च समृद्धिं यथा प्राप्नुवन्ति तथैव त्रयस्त्रिंशद्रात्रेण लोकद्वये द्विगुणां समृद्धिं प्राप्नुवन्ति॥ २॥

इति ताण्ड्यमहाब्राह्मणे चतुर्विंशाध्यायस्य

द्वितीयः खण्डः।

---

## अथ तृतीयः खण्डः ।

अथ तृतीयं त्रयस्त्रिंशद्रात्रं सर्वकामसाधनमाह ।

**अतिरात्रस्त्रयः पञ्चाहा विश्वजिदतिरात्रस्त्रयः पञ्चाहा अतिरात्रः ॥ १ ॥**

स्पष्टं । १ ।

अस्मिन् सत्रे किञ्चिद्दोषमुद्भाव्य परिहरति ।

**अपशव्यं वा एतत् सत्रं यदच्छन्दोमं यद्विश्वजिति छन्दोमानुपर्यन्ति तेन छन्दोमवत्यस्तेन पशव्याः ॥ २ ॥**

चतुर्विंशचतुश्चत्वारिंशाष्टाचत्वारिंशनामकाः स्तोमाः गायत्रीत्रिष्टुब्जगतीछन्दोभिरक्षरसंख्याभिर्म्मानत्वाच्छन्दोमा इत्युच्यन्ते ते च पशुप्राप्तिहेतुत्वात् पशव्यास्तैः छन्दोमैर्विरलितत्वादेतत् सत्रं अपशव्यं पशुप्राप्तिसाधनन्न भवतीति दोषोद्भावनं अनुष्ठातारोत्र विश्वजिदतिरात्रे छन्दोमाननुतिष्ठन्ति तेनैतत् सत्रगतारात्रयः छन्दोमवत्यो भवन्ति तेन कारणेन पशुप्राप्तिहेतवश्च भवन्ति यद्यप्यस्मिन् विश्वजिदतिरात्रे साक्षात्छन्दोमा नसन्ति तथाप्युपायेन छन्दोमाः सम्पादयितुं शक्यन्ते कथमिति चेत् तदुच्यते त्रिवृत्पञ्चदशयोः स्तोमाश्चतुर्विंशः सम्पद्यते सप्तदशत्रिणवयोश्चतुश्चत्वारिंशः पञ्चदशत्रयस्त्रिंशयोरष्टाचत्वारिंश इति सम्पादनं ॥ २ ॥

उक्तस्य सत्रस्य पङ्क्तिरूपत्वसम्पादनेन सर्वकामप्राप्तिहेतुत्वं दर्शयति ।

पञ्चिण्यो वा एता रात्रयो यङ्कामङ्कामयन्ते तमेताभि-रभ्यश्नुवते यत्र यत्र हि पक्षी कामयते तत्तदभ्यश्नुते ॥ ३ ॥

अस्य सत्रस्य मध्ये विश्वजिदतिरात्रः पक्षिदेहं वर्द्धयते तस्याभितो द्वौ पञ्चाहौ पक्षाविव स्थितौ तस्मात् पक्षिसम्बन्धात् सत्रगताराचयः पक्षिण्य एव भवन्ति तथा सत्येतत् सत्रानुष्ठायिनोयङ्कामङ्कामयन्ते तं काममेताभिः पञ्चसमानरात्रीभिः सर्वतः प्राप्नुवन्ति लोकेऽपि हि पक्षी यत्र यत्र कामयते तत्र तत् स्थानमभितः प्राप्नोति तद्वदत्रापि कामप्राप्तिरित्यर्थः ॥ ३ ॥

अत्र विश्वजिदतिरात्रात् पूर्वपूत्तरेषु च या त्रित्वसंख्यास्ति तां प्रशंसति ।

त्रिवृता प्रयन्ति त्रिवृतोद्यन्ति प्राणावै तिवृत् स्तोमानां प्राणैरेव प्रयन्ति प्राणेषु प्रतितिष्ठन्ति ॥ ४ ॥

नात्र त्रिवृच्छब्दः स्तोमवाची किन्तु अहर्गतत्रिसंख्यामुपलक्षयति तथा च निदाने यत् त्रिवृता प्रयन्ति त्रिवृतोद्यन्तीति त्रयः पञ्चाहाः पुरस्तात् त्रय उपरिष्टादिति त्रिसंख्यायोगात् त्रिवृदित्युक्तं भवतीत्यर्थः त्रिवृत्त्वात् पूर्व्वभाविपञ्चाहगतया त्रिसंख्यया प्रयन्ति प्रारभन्ते त्रिवृत्त्वात्पश्चाद्भाविपञ्चाहगतया त्रिसंख्यायोगादुद्यन्ति समापयन्ति तस्मादिदं सत्रं प्रशस्तं ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्व्विंशाध्यायस्य तृतीयः खण्डः ।

---

अथ चतुर्थः खण्डः ।

अथ चतुस्त्रिंशद्रात्रसत्रिकाणामानां सत्रमाह ।

अतिरात्रो ज्योतिर्गौरायुस्त्रयस्त्रयोऽभिप्लवाः षडहा द्वादशाहस्य दशाहानि महाव्रतमतिरात्रस्ताश्चतुस्त्रिंशतम उपेयुः ॥ १ ॥

ज्योतिर्गौरायुरिति तेषां त्र्यहाणामह्नां समाहार एवात्र त्र्यहो द्रष्टव्यः ॥ १ ॥

अस्य सत्रस्य समृद्धिफलं कथयन्तद्विशदयति ।

एताभिर्वै प्रजापतिः सर्वामृद्धिमार्ध्नोत्सर्वामृद्धिमृध्नुवन्ति य एता उपयन्ति ॥ २ ॥

एताभिः सत्रगताभीरात्रिभिः स्पष्टमन्यत् ॥ २ ॥

रात्रिगताश्चतुस्त्रिंशत्संख्यां प्रशंसति ।

यदेताश्चतुस्त्रिꣳशद्रात्रयो भवन्ति त्रयस्त्रिꣳशद्वै देवताः प्रजापतिश्चतुस्त्रिꣳशो देवतानां प्रजापतेरेवर्द्धिमृध्नुवन्ति ॥३॥

यदेताः या एताश्चतुस्त्रिंशत्संख्याकारात्रयो भवन्ति तासु विद्यमानाः संख्या हविर्भुजो यत् त्रयस्त्रिंशद्देवतास्तदुपरि चैको प्रजापतौ च विद्यते अतः संख्यासाम्याद्देवतानां प्रजापतेश्च सम्बन्धिनी येयमृद्धिरस्ति तां सर्वामृद्धिमृध्नुवन्ति प्राप्नुवन्ति ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्विंशाध्यायस्य
चतुर्थः खण्डः ।

अथ पञ्चमः खण्डः ।

अथ पञ्चत्रिंशद्रात्रं पशुकामानां सत्रमाह ।

अतिरात्रो ज्योतिर्गौरायुर्गौरायुः पञ्चाहस्त्रयोभिप्लवाः षडहा द्वादशाहस्य दशाहान्यतिरात्रः पशुकामा उपेयुः ॥ १ ॥

द्वे अहनी तत्समाहारकूपः पञ्चाहोवगन्तव्यः स्पष्टमन्यत् ॥ १॥

रात्रिगतां पञ्चत्रिंशत्संख्यां प्रशंसति ।

यद्देताः पञ्चत्रिꣳशद्रात्रयो भवन्ति पाङ्क्ताः पशवः पशूनेवैताभिरवरुन्धते ॥ २ ॥

पाङ्क्ताः पञ्चत्रिंशत्संख्याकारात्रयः सन्ति तास्वन्तर्भूताः पञ्चसंख्याविद्यन्ते पशवश्चतुर्भिः पादैः शिरसा च पञ्चभिरवयवैरुपेतत्वात् पाङ्क्ता इत्युच्यन्ते तस्मात् पञ्चसंख्याहारकसम्बन्धसम्भवादेताभीरात्रीभिर्यजमानः पशूनवरुन्धत एव प्राप्नुवन्त्येव ॥ २ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्विंशाध्यायस्य
पञ्चमः खण्डः ।

---

अथ षष्ठः खण्डः

अथ षट्त्रिंशद्रात्रं पशुकामानां सत्रमाह ।

अतिरात्रश्चत्वारोऽभिप्लवाः षडहा द्वादशाहस्य दशाहान्यतिरात्रः पशुकामा उपेयुः॥ १॥

स्पष्टोऽर्थः॥ १॥

फलान्तरमाह।

एताभिर्वै देवा आदित्यमस्तभ्नुवन्नादित्यलोकञ्जयन्ति य एता उपयन्ति॥ २॥

पुरा देवा एतत्सत्रमनुष्ठाय एताभिः षट्त्रिंशद्रात्रीभिः आदित्यमस्तभ्नुवन् आदित्य आकाशगामी सन् भूमौ यथा नपतति तथास्तां इति समभवन्नु तस्मादेताभीरात्रीभिरनुष्ठातारो यजमाना आदित्यलोकं प्राप्नुवन्ति॥ २॥

स्वाराज्यलक्षणं फलान्तरमाह।

बृहती वा एता रात्रयः स्वाराज्यं छन्दसां बृहती यो वै पशूनां भूमानङ्गच्छति स स्वाराज्यं गच्छति प्र स्वाराज्यमाप्नुवन्ति य एता उपयन्ति॥ ३॥

एतत्सत्रगतासु रात्रीषु षट्त्रिंशत्संख्या विद्यन्ते तथाच तैत्तिरीयकाः इष्टकाचयनब्राह्मणे बृहत्या विजयं स्वाराज्यप्राप्तिं च समामनन्ति अस्मिन्नपि सामब्राह्मणे प्रश्नोत्तराभ्यां बृहत्याः श्रेष्ठत्वं पुरस्तादाम्नातं यत्त्वित्याहुरन्यानि च्छन्दांसि वर्षीयांसि क-

स्याद्बृहत्युच्यत इति प्रश्नः एषा ह्येमान् लोकान् व्याप्नोत्यन्य-च्छन्दः किञ्च नेत्युत्तरं एवं सति रात्रीणां बृहतीसाम्यात् स्वाराज्यप्राप्तिहेतुत्वं सम्भाव्यते किञ्च लोके यो वै यः कोपि पुमान् पशूनां भूमानं लक्षकोटिसंख्याकपं बाहुल्यं गच्छति स पुमानन्येषामधिपतिः सन् स्वाराज्यं प्राप्नोति तद्वदेतासां रात्रीणां अनुष्ठातारोपि बहुपशुलाभेन स्वाराज्यं प्राप्नु-वन्ति ॥ २ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्विंशाध्यायस्य
षष्ठः खण्डः ।

---

अथ सप्तमः खण्डः ।

अथ सप्तत्रिंशद्रात्रमन्नपशुरूपफलद्वयकामानां सत्रमाह ।

**एता एव सप्तमहाव्रताः ॥ १ ॥**

याः षट्त्रिंशद्रात्रयः पूर्व्वखण्डेभिहिताः एता एव महा-व्रतेनाम्ना सहिताः सप्तत्रिंशद्रात्रयो भवन्ति ॥ १ ॥

एतासां रात्रीणां फलं दर्शयति ।

**एताभिर्वै प्रजापतिरुभौ कामाववारुन्धान्नं व्रतं पशवो बृहत्युभाववैताभिः कामाववरुन्धते ॥ २ ॥**

व्रतम्महाव्रताख्यमहरन्नं बृहती पशुसाधनत्वात् एतानुभौ

अन्नपशुरूपौ कामौ प्रजापतिरेताभिरेव सप्तत्रिंशद्रात्रिभिरेवावरुन्धते प्राप्नोति तस्मादन्येपि यजमाना उभौ कामौ प्राप्नुवन्ति॥ २ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्विंशाध्यायस्य

सप्तमः खण्डः ॥

---

अथ अष्टमः खण्डः।

अथाष्टात्रिंशद्रात्रं पशुकामानां सत्रमाह।

अतिरात्रो गौश्चायुश्च द्वे अहनी चत्वारोभिप्लवाः षडहा द्वादशाहस्य दशाहान्यतिरात्रः पशुकामा उपेयुः॥१॥

स्पष्टोर्थः। १।

एतासां रात्रीणां पशुसाधनत्वं विशदयति।

यदेता अष्टात्रिंशद्रात्रयोभवन्त्यष्टाशफाः पशवः शफश एवैताभिः पशूनवरुन्धते ॥ २ ॥

या एता अष्टात्रिंशद्रात्रयः सन्ति तास्त्वष्टसंख्या विद्यन्ते गोमहिषादिपशवश्चाष्टसंख्याशफोपेताः अतः शफश एव संख्यासाम्योपेतशफद्वारेणैव एताभिरष्टात्रिंशद्रात्रिभिर्यजमानाः पशून् प्राप्नुवन्ति ॥ २ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्विंशाध्यायस्य

अष्टमः खण्डः।

---

अथ नवमः खण्डः।

एकोनचत्वारिंशद्रात्रं अनन्तश्रीजयकामानां सत्रमाह।

अतिरात्रो ज्योतिर्गौरायुरित्यहश्चत्वारोऽभिप्लवाः षड्-द्वादशाहस्य दशाहान्यतिरात्रः ॥ १ ॥

स्पष्टार्थः । १ ।

अत्रादावनन्तश्रीजयरूपं फलं वक्तुं तत्सद्भावमाह ।

एताभिर्वै प्रजापतिरनन्ताꣳ श्रियमजयदनन्ता वा एता या एकया न चत्वारिꣳशन्नेति वै वाचोनन्तं ॥ २ ॥

या रात्रय एकया रात्र्या अस्मिन् क्रतावविद्यमानया चत्वारिंशन्न भवन्ति एता एकोनचत्वारिंशद्रात्रयोऽनन्ता एव कथमिति चेत्तदुच्यते नेति वै निषेधवाचकं नेत्येतत्पदमेव वाचोनन्तं वाचः सम्बन्धिषु पादेषु अन्तरहितार्थवाचकं तथाहि याचकेनेदं याच्यमाने बहवः पुरुषा लोभयुक्ताः सन्तो नेति चोच्चार्य परिहरन्ति स चानन्तार्थवाचकोनेत्यसौ शब्दः एकयानचत्वारिंशदित्यत्र विद्यते तस्मादेताभीरात्रिभिः प्रजापतेरनन्तश्रीजयः सम्भाव्यते ॥ २ ॥

सम्भावितन्तत्फलं यजमानानां दर्शयति ।

यदेता एकया न चत्वारिꣳशद्रात्रयो भवन्त्यनन्तामेवैताभिः श्रियञ्जयन्ति ॥ ३ ॥

स्पष्टोर्थः । ३ ।

इति ताण्ड्यमहाब्राह्मणे चतुर्विंशाध्यायस्य
नवमः खण्डः ।

---

अथ दशमः खण्डः ।

अथ चत्वारिंशद्रात्रं परमराज्यप्रतिष्ठाकामानां सत्त्रमाह ।

**एता एव समह्वाव्रताः ॥ १ ॥**

एताः पूर्वखण्डोक्ता एवैकोनचत्वारिंशद्रात्रयो महाव्रतेन सहनुष्ठेयाः ॥ १ ॥

अस्य क्रतोः फलं वक्तुमत्र स्थितानां रात्रीणां विराड्रूपत्वमाह ।

**सर्व्वा वा एताविराजोदशिनी प्रथमा विंशिनी द्वितिया त्रिंशिनी तृतीयैषा वै परमा विराट् यच्चत्वारिंशद्रात्रयः पङ्क्ति वैं परमा विराट् ॥ २ ॥**

अस्मिन् क्रतौ या रात्रयः सन्ति ताः सर्वा विराज एव कथमतिचेत् तदुच्यते दशानां रात्रीणां समावेशनी प्रथमा विराट् भवति दशाक्षरा विराडिति श्रूयमाणाया दशसंख्यायास्तत्र विद्यमानत्वात् विंशतिसंख्याकानां रात्रीणां समष्टिर्विंशिनी सा द्वितीया विराट् द्विगुणीकृताया दशसंख्यायास्तत्र विद्यमानत्वात् त्रिंशत्संख्याकानां रात्रीणां समष्टिस्त्रिंशिनी त्रिगुणाया-दशसंख्यायास्तत्र सद्भावात् चत्वारिंशद्रात्रीणां समष्टिरेषैवात्र विद्यमानानां विराजां मध्ये परमोत्तमा विराट् चतुर्गुणायाः दशसंख्यायास्तत्र सद्भावात् किञ्चेयं परमा विराट् पङ्क्तिर्वै पिपीलिकापङ्क्तिं च द्वन्द्वायमानोनुष्ठीयमानत्वात् ॥ २ ॥

तादृशीं परमाविजयमनुतिष्ठतां यजमानानां वैराजप्रतिष्ठारूपं फलमाह ।

परमायामेव विराजि प्रतितिष्ठन्ति ॥ ३ ॥

अन्नं विराडिति अन्तरा विराट्शब्देन विवक्षितमत्यन्तसमृद्धेन प्रतितिष्ठन्तीत्यर्थः यद्वा परमायां विराजि उत्तमे विशिष्टराज्ये प्रतिष्ठिताभवन्ति ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे तुचर्वि शाध्यायस्य
दशमः खण्डः ।

---

अथ एकादशः खण्डः ।

अथ विधृतिसंज्ञकानामेकोनपञ्चाशद्रात्रीणां समानाम्मध्ये प्रथमं सत्रं पापव्यावृत्तिफलायाह ।

अतिरात्रस्त्रीणि त्रिवृन्त्यहान्यग्निष्टोममुखान्यतिरात्रो दश पञ्चदशा उक्थ्याः षोडश्यिमहश्शममहरतिरात्रो द्वादश सप्तदशा उक्थ्या अतिरात्रः पृष्ठ्यः षडहोतिरात्रो द्वादशैकविंशा उकुथ्याअतिरात्रः ॥ १ ॥

अत्र प्रथमं पञ्चमं षोडशं एकोनत्रिंशत् षट्त्रिंशमेकोनपञ्चाशदेतानि षट्संख्यकान्यतिरात्ररूपाणि तेषु प्रथमपञ्चमयोर्म्मध्ये त्रिवृत्स्तोमेनोक्तानि त्रीण्यहानि तानि चाग्निष्टोममुखानि अग्निष्टोममुखं रूपं प्रथममहरुक्थरूपे द्वे अहनी इत्यर्थः पञ्चमषोडशयोर्म्मध्ये पञ्चदशस्तोमयुक्ता उक्थ्याः दशसंख्याकाः प्रयोक्तव्याः तेषु यद्दशममहरस्ति तत् षोडशिस्तोत्रयुक्तं कर्त्तव्यं

षोडशैकोनत्रिंशयोर्म्मध्ये सप्तदशस्तोमयुक्ता उक्थ्या द्वादशसंख्याका अनुष्ठेयाः एकोनत्रिंशषट्त्रिंशयोर्म्मध्ये पृष्ठ्यः षडहोनुष्ठेयः षट्त्रिंशैकोनपञ्चाशयोर्म्मध्ये एकविंशस्तोमयुक्ता उक्थ्या द्वादशसंख्याकाः कर्त्तव्याः तदेकोनपञ्चाशद्रात्रं सत्रं भवति ॥ १ ॥

अत्र पापव्यावृत्तिरूपं फलं विवक्षुस्तत्सम्भावयितुमर्थवादमाह ॥

प्रजापतिः प्रजा असृजत ता अविधृता असञ्ज्ञानाना अन्योन्यामादंस्तेन प्रजापतिरशोचत्स एता अपश्यत्ततो वा इदं व्यावर्त्तत गावो गावोभवन्नश्वा अश्वाः पुरुषाः पुरुषाम्मृगाम्मृगाः ॥ २ ॥

प्रजापतिना सृष्टा गवाश्वमनुष्यादयः प्रजा अविधृताः अनियमिताः प्रजापतिना नियन्तुमशक्या असञ्ज्ञानाना ऐकमत्यरहिता अन्योन्या मादन् परस्परविरोधात् प्रबला दुर्बलानां भक्षणमकुर्वन् तेन नियन्तुमशक्यत्वेन प्रजापतिरशोचत् खिन्नोभूत् सखिन्नः प्रजापतिस्तद्व्यावृत्त्युपायं पर्य्यालोच्य एता उक्ता एकोनपञ्चाशद्रात्रीस्तदुपायत्वेन दृष्ट्वानुष्ठितवान् ततोयेप्येतदनुष्ठानादनु इदं अन्योन्यभक्षं व्यावर्त्तत व्यावृत्तमुपरतमासीत् तदनन्तरं गावः परद्रोहरहिता गावोभवन् इतरभक्षणरूपस्याभावात् स्वकीयेन गोरूपेणैव व्यवस्थिताः एवमश्वपुरुषमृगेषु योज्यं ॥ २ ॥

इदानीं यजमानानां पापव्यावृत्तिरूपं फलं दर्शयति ।

विपाप्मना वर्त्तन्ते य एता उपयन्ति ॥ ३ ॥

स्पष्टोर्थः ॥ ३ ॥

यदतिरात्रा अन्तरा विधृत्यै तस्मान्नेतर इतरस्मिन्रेतो दधाति ॥ ४ ॥

अत्राहर्गणानाम्मध्ये अन्तरालेष्वनुष्ठिता अतिरात्रा विधृत्यै विभज्य धारणाय गणद्वयसाङ्कर्य्यपरिहाराय सम्पद्यन्ते तस्मात् कारणादितरो गोजातीयपशुरितरस्मिन् महिषादिजातीयपशौ रेतो न दधाति गर्भधारणन्न करोति तथा महिषादिरपि जात्यन्तरे ॥ ४ ॥

अतिरात्रान् प्रशस्य पृष्ठ्यषडहं प्रशंसति।

यत् पृष्ठ्याः स्तोमाः सꣳसृष्टास्तस्मादजावयः पशूनाꣳ सह चरन्ति तस्मादु गर्दभोवडवायाꣳरेतोदधाति ॥ ५ ॥

पृष्ठ्यषडहस्य प्रथमेहनि त्रिवृदाद्यास्त्रयस्त्रिंशत्पर्य्यन्ताः स्तोमाः क्रमेणानुष्ठीयन्ते एवं द्वितीयादिष्वहःसु पञ्चदशादि तथा सति यद्यस्मात् कारणात् पृष्ठ्यषडहगताः स्तोमाः संसृष्टाः सर्वेष्वहःस्वेकविधा अनविलक्षणाः तस्मात् कारणात् फलभूतानां पशूनामपि केचित् पशवोऽजाश्चावयश्च सहचरन्ति न तु परस्परं विरुध्यन्ते तस्मादु तस्मादेव पृष्ठ्यस्तोमसंसर्गकारणाद्गर्दभोजात्यन्तरयुक्तः पुमान् वडवायां अश्वयोषिति रेतोऽवस्थापयति ॥ ५ ॥

अस्मिन् सत्रे किञ्चिद्दोषमुद्भाव्य परिहरति।

अपशव्यं वा एतत्सत्रं यदच्छन्दोमं यत्सन्धिषामसु छन्दाꣳस्युपयन्ति तेन छन्दोमवत्यस्तेन पशव्याः ॥ ६ ॥

अतीते तृतीये खण्डे छन्दोमराहित्यादपशव्यत्वात् दोषो यथोद्भावितः तथात्राप्युद्भाव्यते तस्य परिहारः यद्यस्मात् कारणा-दतिरात्राणामन्येषु सन्धिः सन्धिस्तोत्रेषु यानि सामानि सन्ति तेषु सामसु गायत्र्यादीनि बृहत्यन्तानि सप्त छन्दांस्युपयन्ति यजमाना अनुतिष्ठन्ति तेन कारणेनैतत् सत्रगतारात्रयः छन्दो-मवत्योभवन्ति छन्दोमशब्दस्य मुख्यार्थानां चतुर्विंशचतुश्चत्वारिं-शाष्टाचत्वारिंशद्रूपाणां स्तोमानामभावेपि तत्समानाक्षरसंख्या-नाङ्गायत्रीत्रिष्टुब्जगतीनामनुष्ठितत्वात् छन्दोमशब्देन तानि त्रीणि छन्दांसि उपलक्ष्यन्ते तथा सत्यस्य सत्रस्य छन्दोमवत्त्वं सिध्यति तेन छन्दोमवत्त्वेनैतारात्रयः पशव्याभवन्ति ॥ ६ ॥

नन्वसन्धिसामसु किं सामास्मिंश्छन्दसि प्रयुज्यते इत्याशङ्क्याह।

**गायत्रीषु जरावोधीयमुष्णिक्षु श्रुध्यमनुष्टुप्सु नानद-म्बृहतीषु रथन्तरं पङ्क्तिषु रायोवाजीयं त्रिष्टुप्सु्वौशनञ्ज-गतीषु काव्वं ॥ ७ ॥**

स्पष्टोर्थः। यद्यपि षट्स्वतिरात्रेषु नानदव्यतिरिक्तानि जरा-वोधीयादीनि काव्वपर्य्यन्तानि षडेव सन्धिसामानि तथा दश-सूत्रेषु दशमेऽहनि सूर्य्यास्तमयवेलायां षोड़शिस्तोत्रं नानदं प्रयुज्यते तदपि सन्धिसामत्वेनोपचर्य्यते ॥ ७ ॥

गायत्र्यादीनां जगत्यन्तानां क्रमेणानुष्ठानं प्रशंसति।

**ऊर्द्ध्वानि छन्दांस्युपयन्त्यनपभ्रंशाय ॥ ८ ॥**

गायत्र्या ऊर्द्ध्वमुष्णिक् चतुर्भिरक्षरैरधिका अत ऊर्द्ध्वमनुष्टुप् एव-

मुत्तराणि तेन क्रमेणैतान्यूर्द्ध्वानीत्युच्यन्ते तेषां क्रमानुष्ठाने सति तस्यापि छन्दोमानपश्चं शोभवति श्रौशनकावयोः साम्नोः स्वर-शब्दो निधनभागो भवति ॥ ८ ॥

तमेतं प्रशंसति ।

प्राणो वै स्वरोयत् स्वरावन्ततो भवतस्तस्मात् द्वावन्ततः प्राणौ ॥ ९ ॥

निधनरूपः स्वरशब्दोगमनक्रियामाचष्टे स्वरति गच्छतीति व्युत्पत्तेः प्राणोपि गतिमान् साम्नस्वरशब्दरूपन्निधनं प्राण एव भवति यद्यस्मात् स्वरशब्दरूपौ निधनविशेषौ अन्ततो भवतः अनयोरौशनकावयोः साम्नोर्य्यन्त्रियते तस्माल्लोकेप्यन्ततो मरण-काले द्वौ प्राणौ उच्छ्वासनिश्वासौ तीव्रौ भवतः ॥ ९ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्व्विंशाध्यायस्य
एकादशः खण्डः ।

---

अथ द्वादशः खण्डः ।

अथ द्वितीयमेकोनपञ्चाशद्रात्रं श्रीकामानां सत्रमाह ।

अतिरात्रौ द्वावभिप्लवौ षडहौ गौश्चायुश्चातिरात्रौ द्वावभिप्लवौ षडहावभिजिच्च विश्वजिच्चातिरात्रावेकोऽभि-प्लवः षडहः सर्वस्तोमश्च नव सप्तदशश्चातिरात्रौ द्वादशा-हस्य दशाहानि महाव्रतश्चातिरात्रश्च ॥ १ ॥

अत्र द्विवचनान्तमतिरात्राविति पदन्द्विःप्रयुक्तं तत्राद्यं गौश्चा-युश्चेत्यनयोर्व्विशेषणं द्वितीयं अभिजिद्विश्वजितोरनयोर्व्विशेषणं तृतीयन्तु सर्व्वस्तोमश्च नवसप्तदशश्चेत्यनयोर्व्विशेषणं स्पष्टम-न्यत् ॥ १ ॥

एतत्सत्रगतानां रात्रीणां फलविशेषं कथयितुं तदनुकूलं संज्ञाविशेषमाह ॥

आदित्यानां यमातिरात्राः ॥ २ ॥

आदित्यैर्दृष्टत्वादेतारात्रयः आदित्यानां संबन्धिन्यः ॥ २ ॥

तासां यमातिरात्रा इति संज्ञानुकूलं फलमाह ॥

यमेवैषाᳫ्श्रीर्भवति यएता उपयन्ति ॥ ३ ॥

ये यजमाना एतारात्रीरनुतिष्ठन्ति तेषां यजमानानां यमेव श्रीर्भवति यमशब्दः सहोत्पन्नयोर्द्वयोः पुरुषयोर्लोके प्रसिद्धः सचात्र द्वैगुण्यमुपलक्षयति इवशब्द एवकारार्थः यमा द्विगुणा-श्रीर्भवतीत्यर्थः ॥ ३ ॥

फलान्तरमाह ।

एताभिर्व्वा आदित्या इदमार्द्धुवन्मित्रश्च वरुणश्च धाता चार्य्यमा चाᳫ्शश्च भगश्चेन्द्रश्च विवस्वाᳫ्श्चैतासामेव देव-तानामृद्धिमृध्नुवन्ति य एताउपयन्ति ॥ ४ ॥

मित्राद्या विवस्वदन्ता अष्टावदितेः पुत्रा आदित्याः ते च द्वन्द्वं यथाभवति तथार्द्धुवन् द्वौद्वौ मिलित्वा सर्व्वं समृद्धिं प्राप्ताः तान्येव

चत्वार्य्यादित्यानां इंद्वानि मित्रश्चेत्यादिना स्रष्टौक्रियन्ते ये यजमाना एतारात्रीरनुतिष्ठन्ति ते यजमाना एतासामेव मित्रादीनां देवतानां सर्व्वां समृद्धिं प्राप्नुवन्ति ॥ ४ ॥

नन्वष्टौ वसव एकादश रुद्रा द्वादशादित्या इत्यादिश्रुत्यादित्यानां द्वादशसंख्या प्रसिद्धा इहतु मित्रश्चेत्यादिना कथमष्टावादित्या उच्यन्ते इत्याशंक्य द्वादशानां मध्ये मुख्यानामष्टानां श्रुतिप्रसिद्धिं दर्शयितुं काञ्चिदृचमवतारयति ।

तदभ्यनूक्ता ॥ ५ ॥

तत् पूर्व्वोक्तमादित्यानामष्टसंख्योपेतत्वमभिलक्ष्यानूक्तेति काचिदृक् समाम्नाता ॥ ५ ॥

तामेव ऋचं पठति ।

अष्टौ पुत्रासो अदितेर्य्ये जातास्तन्वं परिदेवाᳬउपप्रैत् सप्तभिः परामार्त्तण्डमास्यदिति ॥ ६ ॥

अदितेर्देवतायाः पुत्राः पुत्रासः अष्टौ सन्ति ये पुत्राः जाताः सन्तस्तन्वं परि अदितिशरीरं परितोव्याप्य स्तनपानाद्यर्थमास्थिताः तेषाम्मध्ये मित्राद्यैरिन्द्रान्तैः सप्तभिः पुत्रैः सहेदिति देवानुपसेवितुं प्रैत् प्रागछत् विवस्वत्संज्ञकमष्टममार्त्तण्डं सूर्य्यं परास्यत् परिचिक्षिप्तवती अस्य देवसेवाप्रयासोमाभूदिति क्वचिद्गोपितवतीत्यर्थः इतिशब्दोऋक्समाप्तर्थः ॥ ६ ॥

आदित्यवद्यजमानानां लोकद्वये समृद्धिरूपं फलं दर्शयति ।

आदित्या अस्मिँल्लोक ऋद्ध्वा आदित्या अमुष्मिन्-भयोरनयोर्ल्लोकयोर्ऋध्नुवन्ति देवलोके च मनुष्यलोके च य एता उपयन्ति ॥ ७ ॥

मित्राद्या अष्टावादित्या अतः सत्रानुष्ठानेन द्वयोर्ल्लोकयोः ऋद्धा यजमाना अपि ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्विंशाध्यायस्य
द्वादशः खण्डः ॥

---

अथः त्रयोदशः खण्डः ।

अथ तृतीयमेकोनपञ्चाशद्रात्रं सुरभिद्रव्याभ्यञ्जनकामानां सत्रमाह ।

अतिरात्रश्चत्वारोभिप्लवाः षडहाः सर्व्वस्तोमोतिरात्रो द्वावभिप्लवौ षड्हौ द्वादशाहस्य दशाहान्यतिरात्रः ॥ १ ॥

अत्र मध्यपठितातिरात्रपदं सर्व्वस्तोमपदस्य विशेषणं स्पष्ट-मन्यत् । १ ।

अत्राञ्जनाभ्यञ्जने विधातुन्तयोस्तावकमर्थवादमाह ।

प्रजापतिः प्रजा असृजत सरूक्षोभवत्तंरूक्षन्नाजानन् स आचाङ्क्ताभिचाङ्क्त ॥ २ ॥

पुरा कदाचित् प्रजापतिः प्रजाः सृष्ट्वा रूक्षः शुष्कोऽभवत

सर्गप्रयासेन शरीरगतपुष्टिकान्तिरहितोऽभूदित्यर्थः तं प्रजापतिरूपं पुष्टिकान्तिहीनं नाजानन् प्रजापतिरयमिति प्रजाः सर्व्वा नज्ञातवत्यः ततः स प्रजापतिः प्रजानां स्वप्रज्ञातार्थमाचाङ्क्त च स्वकीययोरक्ष्णो रञ्जनमपि प्रक्षिप्तवान् अभ्यङ्क्ता च स्वशरीरे सुगन्धिद्रव्यैरभ्यङ्गमपि कृतवान् ॥ २ ॥

इत्थं प्रशस्य एतत्सत्राधिकारिणां मन्त्रवर्ज्जनाभ्यञ्जनं विधत्ते।

य आत्मानन्नेव जानीरँस्तएता उपेयुर्यदा चाञ्जतेऽभिचांजते शुभमेवात्मन्दधते जानन्त्येनान् ॥ ३ ॥

ये पुरुषा आत्मानन्नैव जानीरन् इवशब्द एवकारार्थः अन्नाभिधातुरन्ते वा वितरणार्थः तज्ज्ञापयेयुरेव ये पुरुषाः सभामध्ये स्वात्मानं न प्रख्यापयितुं शक्ताइत्यर्थः ते पुरुषा एता एकोनपञ्चाशद्रात्रीरनुतिष्ठेयुः तासु रात्रिषु अञ्जने चाभ्यञ्जनेच अक्ष्णो रञ्जणं शरीराभ्यञ्जञ्च सम्पादितवन्तः यद्यवसरादेवं कृतं तस्मात्ते यजमानाः शुभमेवात्मन् धत्ते शोभनं स्वस्थापनचिह्नमेव स्वशरीरे धारयन्ति तेन चिह्नेन समागताः प्रजाएतान्यजमानान् जानन्ति विद्याधनादिसम्पन्ना इत्यवगच्छन्ति ॥ ३ ॥

अञ्जनाभ्यञ्जनसाधनद्रव्याणि विधत्ते।

गौग्गुलवेन प्रातःसवने सौगन्धिकेन माध्यन्दिने सवने पैतुदारवेण तृतीयसवने ॥ ४ ॥

धूपसाधनविवासहेतोः गुग्गुलः प्रसिद्धः तदीयेन विलेपना-

ञ्जनमभ्यञ्जनञ्च प्रातःसवने कुर्य्युः सुगन्धिशब्दः तृणविशेषवाची तद्व-सयुक्तेन विलेपेन माध्यन्दिनसवने तदुभयङ्कुर्य्युः पैतुदारव उदु-म्बरइति केचिद्देवदारुरन्ये तदीयतैलेन तृतीयसवने तदुभयं कार्य्यं ॥ ४ ॥

विहितानिगुग्गुल्वादीनि उत्पत्तिप्रदर्शनञ्च प्रशंसति ।

**अग्निर्वै देवानाꣳ होत्रमुपैष्यञ्छरीरमधूनुत तस्य यन्माꣳ-समासीत्तद्गुग्गुल्वभवद्यत् स्नाव तत्सुगन्धि तेजनं यदस्थि तत् पीतुदार्वेतानि वै देवसुरभीणि देवसुरभिभिरेव तद-भ्यञ्जते ॥ ५ ॥**

पूर्वमग्निर्देवानां यज्ञे होत्रं होतृकर्म्म उपैष्यन् स्वशरीरमधूनु-ताकम्पयत तथा कुर्वतस्तस्य यन्मांसं सोमांसलत्त्वणः तत्क्षणात् शरीरावयवोधूत आसीत् एतत् गुग्गुल्वभवत् एवं स्नायुस्थिनौ प्रक्षिपतोः सुगन्धितेजनम्पीतुदारुणी चाभूतां अतो देवस्याग्नेः शरीरसम्बन्धादेतानि खलु देवसुरभीणि अस्त्वेवं किं तत इत्याह ततो गुग्गुल्वादिभ्यंजनेन देवसुरभिरेवाभ्यञ्जने सन्निणः अत्र सूत्रं आञ्जनाभ्यञ्जनासु गार्हपत्य उपसत्सु सर्पींषि फाणयेयुः पृथग्देव-सुरभिभिर्य्यान्युक्तानि ब्राह्मणेन तैस्तुल्यासूपाकरणवेलायां सव-नानां पूर्व्वेण हविर्द्धाने आसीना आञ्जीरन्नभ्यञ्जीरंश्च भुङ्क्ता-म्नोभ्रीय एवेति गौतमः उक्तमानुपूर्व्वं ब्राह्मणेनाहरहरेतत् कुर्य्यु-रिति धानञ्जप्यशाण्डिल्यौ सर्व्वस्तोमएवेति गौतमः पृष्ठ्य इत्येक इति ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्व्विंशाध्यायस्य
त्रयोदशः खण्डः ।

अथ चतुर्दशः खण्डः ।

अथ चतुर्थमेकोनपञ्चाशद्रात्रं सम्वत्सरसम्मिताख्यं ऋद्धिकामानां सत्रमाह ।

अतिरात्रश्चतुर्व्विंशः प्रायणीयमहस्त्रयोऽभिप्लवाः षडहा अभिजित्त्रयः स्वरसामानोदिवाकीर्त्त्यमहस्त्रयः स्वरसामानो विश्वजिदेकोऽभिप्लवः षडह आयुश्च गौश्च द्वे अहनी द्वादशाहस्य दशाहानि महाव्रतं चातिरात्रश्च संवत्सरसम्मिता यावती संवत्सरस्यर्द्धिस्तावत्येतासामृद्धिः ॥ १ ॥

कल्पनं स्पष्टं । अहःसंघसाध्यं सत्रं संवत्सरसम्मिता गवामयनसंवत्सरसत्रेण समः तत्रत्यानामह्नामत्र सद्भावादित्यभिप्रायः तदेवोच्यते यावती संवत्सरस्यर्द्धिः संवत्सरस्यर्द्धिरहःक्लृप्तिः तावती वै आसां रात्रीणामस्यर्द्धिः क्लृप्तिरित्यर्थः संवत्सरसत्रे त्वाहृत्त्य अहान्यभ्यधिकानि स्युः तथापि प्राधान्येन यानि सन्ति तान्येवात्राप्येत्यर्थः ॥ १ ॥

प्रायणीयमहश्चतुर्व्विंशं कार्य्यमित्युक्तं तन्निरस्य त्रिवृत्कार्य्यमिति सप्ररोचनमाह ।

तदाहुर्य्यच्चतुर्व्विंशमहः प्रायणीयं कुर्य्युः संवत्सरमारभ्य न समापयेयुरिति त्रिवृदेव कार्य्यं प्राणा वै त्रिवृत् प्राणां नेवोपयन्ति ॥ २ ॥

तत्र प्रायणीयविषये प्राहुर्ब्रह्मवादिनः यद्यदि प्रायणीयमहश्चतुर्व्विंशं कुर्य्युः तदा तेन संवत्सरमारभ्योपक्रम्य न समापयेयुः यथा गवामयने चतुर्व्विंशमारभ्य द्वादशमासान् समाप्नुयुः न तथात्रेत्यर्थः अतस्तत्परित्यज्य त्रिवृदेव कार्य्यः अत्र त्रिवृच्छन्दः केचिद्दशरात्रस्य प्रथमं पृष्ठ्यमहस्त्रिवृत्स्तोमकमस्ति तदेवात्र कार्यं तस्यापि प्रायणीयत्वादिति व्याचक्षते, अपरे सांवत्सरिकं चतुर्व्विंशमहर्न्नामातिदेशतः प्राप्तं तत्र चतुर्व्विंशत्वमपोह्य त्रिवृत्स्तोमकं कर्त्तव्यमिति दशान्यन्तरेण केवलस्यैकस्याङ्गोतिदेशायोगादिति प्राणइत्यादि स्पष्टं ॥ २ ॥

अथोक्तं पक्षन्निरस्य पूर्व्वोक्तमेव पक्षं पुनः सिद्धान्तयति।

**अथो खल्वाहुश्चतुर्व्विंᳪशमेव कार्य्यᳪसम्रद्धै ॥ ३ ॥**

अस्यायमभिप्रायः संवत्सरे गवामयने प्राधान्येन पञ्चविंशतिरेवाहानि विद्यन्ते इति तेषां सर्व्वेषामत्र प्रयोगात् संवत्सरसमापितः स्यात् अतः सत्रासमाप्तिलक्षणदोषाभावादुक्तसमृद्ध्यर्थं चतुर्व्विंशमेव कार्य्यं त्रिवृत्करणे चतुर्व्विंशस्यैवाभावात् संवत्सरो न समाप्यते ॥ ३ ॥

अत्र यद्दिवाकीर्त्याहस्तदुभयस्वरसामत्वं तत् प्रशंसति।

**अथैते स्वरसामानः शिरोवै दिवाकीर्त्यं प्राणाः स्वरसामानोयद्दिवाकीर्त्यमभितः स्वरसामानो भवन्ति शिरस्येव तत् प्राणाधीयन्ते ॥ ४ ॥**

अथाभिजिदनन्तरं एते वक्ष्यमाणाः स्वरसामानो भवन्ति

तदनन्तरं दिवाकीर्त्यमहरस्ति तच्छिरो वै शिरो वै प्रथममहः खलु सत्त्रेषु तस्य मध्यमत्वेन प्रधानत्वात् तथा सति प्राणरूपाः स्वरसामानः शिरःस्थानीयस्य दिवाकीर्त्यस्याभितो भवन्ति तत्तेन शिरस्यवस्थानत्वात् समङ्क्त्वा प्राणाश्चक्षुरादयः धीयन्ते स्थापिता भवन्ति एकत्वात् प्राधान्यपरिवारकत्वात्तस्य शिरस्त्वकल्पनं बहुत्वसंख्यायोगादन्याश्रयत्वेनोपसर्जनत्वाच्च स्वरसाम्नां प्राणत्वकल्पनं ॥ ४ ॥

अथैतेषां स्वरसाम्नामभितोयौ विश्वजिदतिरात्रौ खलु अभिप्लवः षड़हानन्तरं ये गो आयुषी अहनी ते प्रशंसति।

अथ यावन्त्यौ प्राणौ तौ विश्वजिदभिजितावथैते गो आयुषी मिथुनौ स्तोमावुपयन्ति प्रजात्यै॥ ५ ॥

गोनामकं यदहस्तत्स्त्रियाः रूपं आयुस्तु पुरुषस्थानीयन्तयोः साम्तत्वं प्रजात्यै भवति ॥ ५ ॥

अथोत्तमाहःसमनन्तरभावीनि दशाहानि प्रशंसति।

अथैतानि द्वादशाहस्य दशाहानि वाचमविच्छिन्नामुपयन्ति प्रजननाय ॥ ६ ॥

वाचा स्तोत्रशस्त्रलक्षणया निष्पाद्यत्वाद्दशाहान्यपि वाग्रूपाणि तान्यनुक्रमेण यदुपयन्ति तेनाविच्छिन्नां वाचमेवोपयन्ति प्रजननार्थं ॥ ६ ॥

अथानन्तरभाविमहाव्रतं प्रशंसति।

अथैतद्व्रतमन्नं वै व्रतमन्नं वा अन्यत्र मुखादन्नन्धिनोति यदुपरिष्टाद्व्रतमुपयन्ति मुखत एव तदन्नाद्यन्धीयते तस्मान् मुखे सदन्नन्धिनोति ॥ ७ ॥

अथ वाग्रूपदशाहानन्तरं एतद्व्रतम्महाव्रतमुपयन्ति तदन्नं वै अन्नरूपं खलु लोकमुखादन्यत मुखाद्यतिरिक्ताऽवयवान्तरेन वा धिनोति नैव प्रीणयत्यात्मानं अत एतदुपरिष्टाद्दशाहानामनन्तरं व्रतमुपयन्ति शिष्टं स्पष्टं ॥ ७ ॥

अथाद्यन्ते अहनी प्रशंसति ।

अथैतौ प्रायणीयोदयनीयावतिरात्रौ येनैव प्राणेन प्रयन्ति तमभ्युद्यन्ति ॥ ८ ॥

यद्येतौ प्रायणीयोदयनीयावुभावप्यतिरात्रौ भवतः प्रायेन प्राणेन प्रयन्तुमुपक्रमते सत्रं तमेव प्राणमभिलक्ष्याभ्युद्यन्ति अर्द्धं प्रापयन्ति ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्व्विंशाध्यायस्य
चतुर्दशः खण्डः ।

---

अथ पञ्चदशः खण्डः ।

अथ सवितुः ककुभ इति संज्ञं पञ्चममेकोनपचाशद्रात्रं प्रजाप्रसक्तात्वकामानां सत्रमाह ।

अतिरात्रोनव त्रिवृन्त्यहान्यग्निष्टोममुखःषडहोथ यानि

त्रीण्यहान्यग्निष्टोमावभित उक्थ्यम्मध्यतोनवपञ्चदशान्यग्निष्टोममुखः षडहोऽथ यानि त्रीण्यहान्यग्निष्टोमावभित उक्थ्यं मध्यतोनवसप्तदशान्यग्निष्टोममुखः षडहोऽथ यानि त्रीण्यहान्यग्निष्टोमावभित उक्थ्यम्मध्यतोनवैकविंशान्यहान्यग्निष्टोममुखः षडहोथ यानि त्रीण्यहान्यग्निष्टोमावभित उक्थ्यम्मध्यतो द्वादशाहस्य दशाहानि महाव्रतञ्चातिरात्रश्च ॥ १ ॥

अत्र क्रमेण चत्वारोनवाहाः त्रिवृदादिस्तोमकाः तेषु सर्वेषु सामानि आदितः षट्सु अहःसु प्रथमोग्निष्टोमसंस्था अन्ये पञ्चाहा उक्थसंस्थाः अवशिष्टेषु त्रिष्वहःसु आद्यन्ते अग्निष्टोमसंस्थे मध्यममहरुक्थ्यमित्यहर्नवकसङ्घचतुष्टयेषु षट्त्रिंशदहानि भवन्ति द्वादशाहानि महाव्रताद्यन्तावतिरात्रौ च मिलित्वा एकोनपञ्चाशदहःक्लृप्तिः ॥ १ ॥

अथ विहितारात्रीः प्रशंसति ।

एताभिर्वै सविता सर्वस्य प्रसवमगच्छत् ॥ २ ॥

प्रसवं प्रेरणं सर्व्वकामस्वभ्यनुज्ञा ॥ २ ॥

अत्राधिकारिणमाह ।

सर्वस्य प्रसवं गच्छन्ति य एता उपयन्ति ॥ ३ ॥

एतेन सर्वत्र सर्व्वार्थिनोत्राधिकारिण इत्युक्तं भवति ॥ ३ ॥

अवत्यन्त्रिवृदादिस्तोमसंघलं प्रशंसति।

यद्गणाः स्तोमा बहव एव भवन्ति सह त्रिवृतः सह पञ्चदशाः सह सप्तदशाः सहैकविंशाः सवितुर्वा एताः ककुभः॥ ४॥

यद्गणाः सङ्घशः स्तोमास्त्रिवृदादयो बहव एव क्रतुसंख्याका भवन्ति उक्तार्थमेवोपपादयति सह त्रिवृत इत्यादिना ये-स्तोमसङ्घा एता वै सवितुः प्रेरकस्यादित्यस्य ककुभ उच्यन्ते ककुबित्युच्छ्रितप्रदेश उच्यते॥ ४॥

स्तोमसंघलप्रयुक्तं फलमाह।

ककुभः समानानां च प्रजानां च भवन्ति य एता उपयन्ति॥ ५॥

समानानां समानविधैश्वर्य्योपेतानाञ्च प्रजानां च पुत्रभृत्यादीनां च ककुभः समुन्नताः श्रेष्ठा भवन्ति॥ ५॥

इति ताण्ड्यमहाब्राह्मणे चतुर्विंशाध्यायस्य पञ्चदशः खण्डः।

---

अथ षोडशः खण्डः।

अथ षष्ठमेकोनपञ्चाशद्रात्रं प्रतिष्ठाकामानां सत्रमाह।

अतिरात्रश्चत्वारोऽभिप्लवाः षड़हा महाव्रतं द्वावभिप्लवौ षड़हौ द्वादशाहस्य दशाहान्यतिरात्रः॥ १॥

स्पष्टं ॥ १ ॥

अत्राधिकारिणो दर्शयति ।

ऋतवो न प्रत्यतिष्ठꣳस्त एताभिः प्रत्यतिष्ठन् प्रतिष्ठा-कामा उपेयुः ॥ २ ॥

ऋतूनां प्रतिष्ठासाधनत्वादेतासां प्रतिष्ठार्थिनः साधिकारिणः ॥ २ ॥

अत्र षड़हचतुष्टयं विद्यते तत्र षट्संख्याद्वारैताः रात्रीः प्रशंसति ।

प्रत्येव तिष्ठन्ति षड्वा ऋतव ऋतुष्वेवैताभिः प्रतितिष्ठन्ति यत् कृत्स्नान् षडहानुपयन्ति कृत्स्ना एव ॥ ३ ॥

स्पष्टं ॥ ३ ॥

अथ महाव्रतस्य मध्यमस्थानत्वं प्रशंसति ।

अथैतद्व्रतमन्नं वै व्रतं नवा अन्यच मध्यादन्नन्धिनोति यद्व्रतम्मध्यत उपयन्ति मध्यत एव तदन्नाद्यन्धीयते तस्मान् मध्ये सदन्नन्धिनोति ॥ ४ ॥

स्पष्टं ॥ ४ ॥

अथ महाव्रतान्तरभाविषड़हद्वयं प्रशंसति ।

यत् कृत्स्नौ षड़हावुपयन्ति कृत्स्ना एव ॥ ५ ॥

स्पष्टं ॥ ५ ॥

अथ द्वादशाहस्य दशान्यतिरात्रौ च क्रमेण प्रशंसति।

**अथैतानि द्वादशाहस्य दशाहानि वाचमविच्छिन्नामु-पयन्ति प्रजननायाथैतौ प्रायणीयोदयनीयावतिरात्रौ ये-नैव प्राणेन प्रयन्ति तमभ्युद्यंति ॥ ६ ॥**

उक्तार्थं ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्विंशाध्यायस्य
षोडशः खण्डः।

---

अथ सप्तदशः खण्डः।

अथ सप्तममेकोनपञ्चाशद्रात्रमन्यं प्रजाभिभवकामानां सत्र-माह।

**अतिरात्रः षडभिप्लवाः षडहा द्वादशाहस्य दशाहानि महाव्रतं चातिरात्रश्च ॥ १ ॥**

स्पष्टं ॥ १ ॥

अथासां प्रजातिक्रमणसाधनत्वं प्रदर्शयन्नधिकारिणमाह।

**एताभिर्वा इन्द्राग्नी अत्यन्यादेवता अभवतामत्यन्याः प्रजा भवन्ति य एताउपयन्ति ॥ २ ॥**

इन्द्राग्नी पूर्वं एताभीरात्रीभिः अन्यादेवता अभिभवतां देवानां श्रेष्ठावभूतामित्यर्थः अत इदानीमथैता अभूता अपि अन्याः प्रजाश्च भवन्ति अभिक्रामन्त्यधिकाभवन्तीत्यर्थः ॥ २ ॥

एताश्चोजोद्वारा प्रशंसति।

इन्द्राग्नी वै देवानामोजिष्ठावोजिष्ठाभवन्ति य एता उपयन्ति ॥ ३ ॥

स्पष्टं ॥ ३ ॥

अथ षड़हादीन् क्रमेण प्रशंसति।

यत् क्लृप्तान् षडहानुपयन्ति क्लृप्ता एवाथैतानि द्वादशाहस्य दशाहानि वाचमविच्छिन्नामुपयन्ति प्रजननायाथैतद्व्रतमथैतौ प्रायणीयोदयनीयावतिरात्रौ येनैव प्राणेन प्रयंति तमभ्युद्यंति ॥ ४ ॥

उक्तप्रायमेतत् ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्विंशाध्यायस्य

सप्तदशः खण्डः।

---

अथ अष्टादशः खण्डः।

अथ त्रिविंशामनायामेकषष्टिरात्रं सत्रमाह।

अतिरात्रश्चतुर्विंशं प्रायणीयमहस्त्रयोभिपूवाः षडहाः पृष्ठ्यः षडहोभिजित् त्रयः स्वरसामानोदिवाकीर्त्यमहस्त्रयः स्वरसामानोविश्वजित्पृष्ठ्यः षडहस्त्रयस्त्रिंशमारम्भण एकोभिप्लवः षडहश्चायुश्च गौश्च द्वे अहनी द्वादशाहस्य

दशाहानि महाव्रतञ्चातिरात्रश्च तदेतदेकषष्टिरात्रं दैवानां व्रात्यानां ॥ १ ॥

मध्येऽभिजित्प्रभृतीनि नवरात्राणि ततः पूर्वं पृष्ठ्यः षडहः ततः पूर्वं त्रय अभिप्लवाः षडहाः ततः पूर्वं आद्यो प्रायणीयचतुर्विंशो नवरात्रात्परस्तादावृत्तः षडहः ततस्त्रयस्त्रिंशस्तोमप्रमुखः एकोऽभिप्लवः षडहस्ततः आयुश्च गौश्च द्वे अहनी ततो द्वादशाहस्य दशाहानि ततोऽन्त्योपान्त्यौ व्रतोदयनीयाविति क्लृप्तिः एतदेकषष्टिरात्रं व्रात्यानां सङ्घात्मकानां वरुणादीनां सत्रं दैवानामिति स्वार्थिकस्तद्धितः ॥ १ ।

देववरुणेति मन्त्रेण देवयजनाध्यवसानानन्तरं होमः कर्त्तव्य इति विधास्यति तदर्थमाख्यायिकामाह ।

दैवा वै व्रात्याः सत्रमासत बुधेन स्थपतिना ते ह वा अनिर्याच्य वरुणꣳ राजानं देवयजनन्दिदीक्षुस्तान् ह वरुणो राजाऽनुव्याजहाराऽन्तरेमि वोयज्ञियाद्भागधेयान्न देवयानं पन्थानं प्रज्ञास्यथेति तस्मात्तेभ्योन हविर्गृह्णन्ति न ग्रहं ॥ २ ॥

पूर्वं व्रात्या देवाः बुधेन स्थपतिना यजमानेन उक्ताः सत्रमासत ततो यद्वरुणं देवराजानमयाचयित्वैव दिदीक्षुर्दीक्षयमानान् देवान् वरुणो व्याजहारोक्तवान् हे देवाः यतीयूयन्देवयजनमयाचित्वैव दीक्षिताः स्थितास्ततो वोयुष्मान् यज्ञियाद्भागधेयात् सोम-

चर्वादिरूपादिकं भागं अन्तरेमि वियोजयामि किञ्च देवयानं पन्थानं देवैर्गन्तव्यं यज्ञमार्गान्न प्रज्ञास्यथ इति व्याजहार तस्मात्तेभ्योन हविर्गृह्णन्ति तथा सोमग्रहं न गृह्णन्ति तस्माद्देवयजनायाचनेन देवान्वरुणः प्रापाप अतः सन्निभिर्वक्ष्यमाणमन्त्रेण होतव्यमित्यर्थः ॥ २ ॥

अथैतत्सत्रं सर्व्वनिधिसाधनमिति विवक्षुराह ।

अथं ह वै तर्हि नौषधीषु पय आसीन्न क्षीरे सर्पिर्न्न माꣳसे मेदोन त्वचि लोमानि न वनस्पतिषु पलाशानि तद्यत एतदेकषष्टिरात्रं देवाब्रात्या उपायꣳस्ततो वै तानि तान्येतैर्व्वीर्य्यैः समसृज्यन्त तेजस्वन्त्येवासन् पयस्वन्ति ॥ ३ ॥

अथ ह वै एवं सति पूर्वं वरुणायाचितदेवयजने सत्रेऽनुष्ठिते सति तर्हि तदानीं ओषधीः पयः सारभूतारसानासीत् नक्षीर इत्यादि स्पष्टं मेदोमांसरस. तथा सति यद्युवा यतो यस्मादुक्त एकषष्टिरात्रं ब्रात्यादेवानुपायन् ततस्तस्मात् स खलु तानि भूतकार्य्याण्योषध्यादीनि एतैर्व्वीर्यैः पयआदिलक्षणैः स्वसामर्थैः सहिता असृज्यन्त सृष्टा अभूवन् तदेव तेजस्वन्त्यासन् तेजोयुक्तान्यभवन् पयस्वन्ति च प्रकृष्टपयोयुक्तानि च ॥ ३ ॥

उक्तार्थविश्वासाय पूर्वसिद्धं श्लोकबद्धं ब्राह्मणमुदाहरति ।

तदेष श्लोकोऽभ्यनूच्यते ॥ ४ ॥

श्लोक इति जात्येकवचनं व्यत्ययेन चाश्लोको अभ्यनूच्यतेत्यर्थः ॥ ४ ॥

तत्र प्रथमं श्लोकमाह ।

किमकर्त्तेति यत्पुत्रान् मुहुर्देवा अपृच्छत महीबुधस्यासीद्दीक्षा सचीरे सर्पिराहरत् ॥ ५ ॥

देवा यद्यदा पुत्रान् गणदेवान् किमकर्त्तकं कृतवन्तोयूयमिति मुहुरभीक्ष्णमोषध्यादीनाम्मय आदिप्राप्तिविषयं पृच्छतः पृच्छन्तेति वचनव्यत्ययः यद्वा हे देवाः यूयं पुरा पृच्छतेत्यृषेर्वाक्यं तत् यदा अपृच्छन्त अत्र ब्रात्यादेवास्तत्प्रश्नादुत्तरमब्रुवन्निति शेषः बुधस्य महीमता दीक्षा आसीत् वरुणतोदेवयजनयाथनपूर्विकाऽभूत् बुधः चीरे अपगतं सर्पिराहरत् स्थापितवान् इति ॥ ५ ॥

अथ द्वितीयमाह ।

महीन्दीक्षां सौमायनोबुधोयदुदयच्छदनन्दत्सर्वमाप्नोन्मन्मांसे मेदोधा इति ॥ ६ ॥

सोमायनः सोमपुत्रः महतीन्दीक्षां उदयच्छत् कृतवान् तदा सर्वं जगदनन्दत् तत्संव्याख्यानमाप्नोत् पय आदि किञ्च मन्मांसे मदीयमांसे मेदः पूर्वमपगतं अधाः अधत्त स्थापितवान् पुरुषव्यत्ययः एवं यद्यतोऽब्रुवन्निति देवानुत्तरन्ददुः ॥ ६ ॥

अथ तृतीयमाह ॥

दरिद्रा आसन् पशवः क्षुधाः सन्तोव्यस्थकाः सौमायनस्य दीक्षायाꣳसमसृज्यन्त मेदसेति ॥ ७॥

व्यस्थका अस्थिभीरहिताः शिष्टं स्पष्टं स वरुणप्रार्थनं सञ्जुषित्वा पश्व आदीनि पुनर्भ्यवन्तः तस्मै इत्युत्तरं भवति ॥ ७ ॥

एवमर्थवादेन वरुणतोदेवयजनप्रार्थनं प्रशस्येदानीं समन्त्रकं देवयजनाध्यवसायाङ्गहोमं विधत्ते ॥

तद्यएतदेकषष्टिरात्रमुपेयुस्ते देवयजनमध्यवसाय गार्हपत्यआहुतिञ्जुहुयुर्देव वरुण देवयजनन्नोदेहि स्वाहेति ते इत्ते देवयजनेन यजन्ते ॥ ८ ॥

तत्तस्माद्ये यजमाना एतत् निर्दिष्टमेकषष्टिरात्रमुपेयुः ते देवयजनमिदं भविष्यतीत्यध्यवसाय निश्चित्य गार्हपत्येग्नौ देववरुणेति मन्त्रेणाहुतिञ्जुहुयुः प्रथमन्ते इति पदं ये इति वाक्यादिभूतस्य सम्बन्धार्थं तत्तदा होमः देवयजने वरुणानुज्ञाते यजन्ते ॥ ८ ॥

उक्तार्थोपसंहारपूर्व्वकमधिकारिणो दर्शयति ।

ते सर्व्वामृद्धिमार्ध्नुवन् सर्वामृद्धिमृध्नुवन्ति य एतदुपयन्ति ॥ ९ ॥

ते व्रात्यादेवा उत्तैकषष्टिरात्रं नापत्य सर्व्वांस्तिस्रमाभुवन् अतः समृद्धार्थिनो अत्राधिकारिण इत्युक्तं भवति ॥ ९ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्विंशाध्यायस्य
अष्टादशः खण्डः ।

---

अथ एकोनविंशः खण्डः ॥

अथामृतत्वसाधनं शतरात्रं सत्रमाह ।

अतिरात्रोज्योतिर्गौरायुरत्र्यहश्चतुर्द्दशाभिप्लवाः षड्-हा द्वादशाहस्य दशाहानि महाव्रतञ्चातिरात्रश्च ॥ १ ॥

स्पष्टं ॥ १ ॥

अस्य फलं सार्थवादमाह ।

देवा वै मृत्योरबिभयुस्ते प्रजापतिमुपाधावꣳस्तेभ्य एतेन शतरात्रेणामृतत्वं प्रायच्छदेतद्वाव मनुष्यस्यामृतत्वं यत् सर्व्वमायुरेति वसीयान् भवति सर्वमायुर्य्यन्ति वसी-याꣳसोभवन्ति य एतदुपयन्ति ॥ २ ॥

मृत्योर्भीतेभ्योदेवेभ्यः प्रजापतिरेतेन शतरात्रसत्रेणामृतत्वं प्रा-यच्छत् अमृतत्वायैतत् साधनमिति प्रायच्छदित्यर्थः अमृतत्वमना-शलक्षणं देवानां मनुष्याणान्तु किममृतत्वमिति तत्राह सर्व्वं प्रजापतिना क्लृप्तं शतमायुरेति वसीयान् भवति जीवनकाले एतद्वाव एतदेव मनुष्यस्यामृतत्वं एतदुपयन्तीत्यादि स्पष्टं ॥ २ ॥

अस्यानुष्ठाने किञ्चिन्नियममाह ।

अभिप्रयायमभिषुण्वन्त्यभिक्रान्त्यै समानत्राभिषुण्वन्ति प्रतिष्ठित्यै ॥ ३ ॥

अभिप्रयायं सारस्वतसत्तादभिगत्याभिगत्य प्रतिदिनमभिषुण्वन्ति उत्तरोत्तरमभिक्रान्त्यै अभिवृद्ध्यै भवति समानत्रवेति विकल्पः स्यात् अत्र सूत्रं यत्रावेभिप्रयायमभिषुण्वन्त्यभिक्रान्त्यै समानत्राभिषुण्वन्ति प्रतिष्ठित्याइति स विकल्पः स्याद्यान्तःसुनुयुर्य्यथा सारस्वतेषु यत्र तु क्वच समानदेशे वा यथान्येषामयान्त एव चक्रीवन्ति सहोहविर्धानानि कारयित्वाहःसंस्थासु चक्राणि विपरिवर्त्तयेयुरित्याचार्य्यास्तदभिप्रयातरूपमप्रयाणाच्च समानत्राभिषवोऽहरहरेतत् कुर्य्युरिति धानञ्जप्यशाण्डिल्यावभिप्लवेष्वेवेति गौतमस्त्रिकद्रुकेष्वित्येक इति अभिप्रयायमभिषुण्वन्त्यस्मिन् पक्षेऽहरहरेतत् कुर्य्युरित्यादि द्रष्टव्यम् ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे चतुर्विंशाध्यायस्य
एकोनविंशः खण्डः ॥

---

अथ विंशः खण्डः ॥

अथ सर्वकामसाधनं गवामयनाख्यं संवत्सरं सर्व्वप्रकृतिभूतं सत्रमाह ।

अतिरात्रश्चतुर्विंꣳशं प्रायणीयमहश्चत्वारोऽभिप्लवाः षडहाः पृष्ठ्यः षडहः स मासः स द्वितीयः स तृतीयः स चतुर्थः स पञ्चमस्त्रयोऽभिप्लवाः षडहाः पृष्ठ्यः षडहोऽभिजित् त्रयः

स्वरसामानोदिवाकीर्त्यमहस्त्र्यः स्वरसामानो विश्वजित् पृष्ठ्यः षडहस्त्र्यस्त्रिंश्चारम्भणास्त्रयोभिप्लवाः षडहाः पृष्ठ्यः षडहस्त्रयस्त्रिंश्चारम्भणश्चत्वारोभिप्लवाः स मासः स द्वितीयः स तृतीयः स चतुर्थस्त्रयोभिप्लवाः षडहा आयुश्च गौश्च द्वे अहनी द्वादशाहस्य दशाहानि महाव्रतञ्चाति-रात्रश्च ॥ १ ॥

स्पष्टं ॥ १ ॥

अथ पूर्वविहितं गवामयनिकं ब्राह्मणमत्रादिशति ।

संवत्सरब्राह्मणं ब्राह्मणमिति ॥ २ ॥

यत् संवत्सरब्राह्मणं गावो वा एतत् सत्रमासत इत्यारभ्य प्रथमपञ्चिकायां चतुर्थपञ्चमाध्यायाभ्यामुक्तं तदेवात्रापि ब्राह्मण-मिति द्रष्टव्यं ननु किमथमत्र विधानं पूर्वमेव विहितत्वात् न अत्र प्रसङ्गः संवत्सरप्रकृत्यर्थं विधातव्यत्वात् तर्हि पूर्वत्र वा किमर्थं विधानं तत् सर्वं प्रकृतिभूतान्यहानि गवामयने विद्यन्ते अतोऽग्निष्टोमादीनां तदपेक्षत्वात् पूर्वं वक्तव्यमेव तर्ह्यत्राति-देशमात्रेणैवालं किमहःकल्पनया सत्यमेवं तथापि सुखबोधनार्थं सहस्रेण प्रदर्शितमित्यदोषः ॥ २ ॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीर-
बुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते
माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे
चतुर्व्विंशाध्यायस्य विंशःखण्डः।
चतुर्विंशोध्यायः सम्पूर्णः।

---

## पञ्चविंशोऽध्यायः।

---

अथ प्रथमः खण्डः।

यस्य निश्वसितं वेदा योवेदेभ्योऽखिलं जगत्।
निर्म्ममे तमहं बन्दे विद्यातीर्थमहेश्वरं॥

अथ स्वर्गसाधनमादित्यानां मध्ये पृष्ठ्यमयनमाह।

अतिरात्रश्चतुर्विंशं प्रायणीयमहर्द्वौ त्रिवृत्पञ्चदशौ षडहौ पृष्ठ्यः षडहोद्वौ त्रिवृत्पञ्चदशौ षडहौ स मासः स द्वितीयः स तृतीयः स चतुर्थः स पञ्चमस्त्रयस्त्रिवृत्पञ्चदशाः षडहाः पृष्ठ्यः षडहस्त्रिवृद्बृहस्पतिस्तोमस्त्रयः स्वरसामा-

नोदिवाकीर्त्यमहस्त्रयः स्वरसामानः पञ्चदश इन्द्रस्तोम उक्थ्यः पृष्ठ्यः षडहस्त्रयस्त्रिꣳशारम्भण एकः पञ्चदशस्त्रिवृत् षडहो द्वादशाहस्य दशाहानि व्यूढा अग्निष्टोमास्त्रिवृत उद्भिच्च बलभिच्च द्वे अहनी द्वौ पञ्चदशत्रिवृतौ षडहौ पृष्ठ्यः षडहो द्वौ पञ्चदशत्रिवृतौ षडहौ स मासः स द्वितीयः स तृतीयः स चतुर्थः पञ्चदशत्रिवृत्षडहः पृष्ठ्यः षडहः पञ्चदशत्रिवृत्षडहोगौश्चायुश्च द्वे अहनी छन्दोमदशाहोऽष्टाचत्वारिꣳशं प्रथममहरथ चतुश्चत्वारिꣳशं चत्वारिꣳशम् षट्त्रिꣳशं द्वात्रिꣳशं त्रिꣳशं द्वे अष्टाविꣳशे पञ्चविꣳशं चतुर्विꣳशमन्नाद्यमन्नाद्यातिरात्रश्च ॥ १ ॥

अत्रादितो द्वे अहनी षष्ठमासस्यान्त्योपान्त्ये भवतः द्वौ त्रिवृदित्यादिना पञ्चमासाः पूरणीयाः तत्रायुग्मान्यहानि त्रिवृन्ति युग्मानि तु पञ्चदशानीति षडहेषु त्रिवृत्पञ्चदशयोर्विवेकः त्रयस्त्रिवृत्पञ्चदश इत्यादि स्वरसामान इत्यन्तेन षष्ठमासस्याष्टाविंशत्यहानि आद्ये द्वे इति तत्पूर्त्तिः तत्राभिजित्स्थानीयस्त्रिवृद्बृहस्पतिस्तोमः दिवाकीर्त्यन्तु मध्यममहर्न मासान्तर्भावि अयं प्रथमः पक्षः सप्तमे मासि त्रयः स्वरसामानः अतो विश्वजित्स्थानीयः पञ्चदशस्तोम उक्थ्यसंस्थ इन्द्रस्तोमः । तत आवृत्तः पृष्ठ्यः षडहः एकः पञ्चदशत्रिवृत्षडहः अत्रपूर्वंव्यपरीत्येनायुग्मानि अहानि

पञ्चदशानि युग्मानि तु त्रिवृन्ति ततो द्वादशाहस्य दशाहानि तानि च व्यूढच्छन्दस्य त्रिवृत्स्तोमकान्यग्निष्टोमसंस्थानि तत उद्भिद्वलभिदौ ततोन्ते महाव्रतोदयनीये अत्र मिलित्वैकोमासः ततो द्वौ द्वौ पञ्चदशत्रिवृताविल्यादिसंख्याया अष्टमनवमदशमैकादशमासाः पूरणीयाः ततः पञ्चदशत्रिवृत्षडहौ प्रथमतृतीयौ द्वितीयः पृष्ठ्यः षडह इत्यष्टादशाहानि ततो गोष्टोम आयुष्टोमाविति विंशत्यहानि ततश्छन्दोमदशाह इति द्वादशमासपूर्त्तिः छन्दोमदशाह इत्थं अष्टाचत्वारिंशं जागतं प्रथममहश्चतुश्चत्वारिंशं त्रैष्टुभं द्वितीयश्चत्वारिंशं पाङ्क्तं तृतीयं षड्विंशं बार्हतञ्चतुर्थं द्वात्रिंशमानुष्टुभं पञ्चमन्त्रिंशं वैराजं षष्ठं अष्टाविंशे औष्णिहे सप्तमाष्टमे पञ्चविंशं पाङ्क्तं नवमं पूर्वन्तु पाङ्क्तं अष्टाक्षरपादपञ्चकापेक्षया द्वितीयपञ्चाक्षरपादपञ्चकापेक्षयेति चतुर्विंशं गायत्रं दशममिति ॥ १ ॥

अथास्य नाम दर्शयति ।

आदित्यानाम्मध्ये पृष्ठ्यं ॥ २ ॥

स्पष्टं ॥ २ ॥

अस्य फलमाह ।

मध्ये पृष्ठेन वा आदित्याः स्वर्गं लोकमाक्रमन्त यन्मध्ये पृष्ठान्युपयन्ति स्वर्गस्य लोकस्याक्रान्त्यै ॥ ३ ॥

स्पष्टोर्थः ॥ ३ ॥

अथ पृष्ठानि प्रशंसति।

अन्नं वै पृष्ठान्यन्नमेव तन्मध्यतोधीयते तस्मान्मध्ये सदन्नमश्निनोति ॥ ४ ॥

पृष्ठानां प्रयोगेणान्नस्य सिद्धेः पृष्ठान्यन्नमित्युपचर्य्यते तेषां मध्ये प्रयोगेण अन्नमेव मध्यदेशे स्थापितं भवति ॥ ४ ॥

अथ तानि पुनः पशुरूपेण प्रशंसति।

पशवः पृष्ठानि पशुष्वेव प्रतितिष्ठन्ति ॥ ५ ॥

स्पष्टं ॥ ५ ॥

अथ पृष्ठगतं त्रिवृत्पञ्चदशस्तोमत्वं प्रशंसति।

चक्रे वा एते साकं वृतीयत् त्रिवृत्पञ्चदशौ स्तोमौ यं कामं कामयन्ते तमेतेनाभ्यश्नुवते यत्र हि चक्रीवता कामयते तत्तदभ्यश्नुते ॥ ६ ॥

त्रिवृत्पञ्चदशौ स्तोमाविति यत् यौ स्तः ते एते कामं वृतीयत् सहैव वर्त्तमाने द्वे चक्रे खलु यथा रथस्य चक्रे परिभ्रमतः एवं सर्वेष्वहःसु एतौ प्रायेण परिभ्रमतः एतेन स्तोमद्वयेनेत्यर्थः चक्रीवता चक्रस्थानीयोक्तस्तोमद्वयवता पृष्ठे यत्र यत्र यद्यत्सु कामयते तत्र तत्र तत्काम्यमश्नुते ॥ ६ ॥

अथ बृहस्पतिस्तोमं स्तौति।

अथैष त्रिवृद्बृहस्पतिस्तोम एतेन वै बृहस्पतिर्देवानां पुरोधामगच्छत पुरोधाकामा ह्युपेयुर्गच्छन्ति पुरोधाम्पुर एनान्दधते ॥ ७ ॥

स्पष्टार्थः ॥ ७ ॥

अथ स्वरसामानो दिवाकीर्त्यञ्च सह प्रशंसति ।

अथैते स्वरसामानः शिरो वै दिवाकीर्त्यं प्राणाः स्वरसामानो यद्दिवाकीर्त्यमभितः स्वरसामानो भवन्ति शिरस्येव तत् प्राणान्धीयन्ते ॥ ८ ॥

उक्तार्थमिदं ॥ ८ ॥

अथेन्द्रस्तोमं प्रशंसति ।

अथैष पञ्चदश इन्द्रस्तोम उक्थ्य एतेन वा इन्द्रोऽत्यन्या देवता अभवदत्यन्याः प्रजा भवन्ति य एतदुपयन्ति ॥ ९ ॥

अथ स्वरसामानन्तरं पञ्चदशस्तोमक उक्थ्यसंस्थ इन्द्रस्तोमः कर्त्तव्यः ॥ ९ ॥

अथ द्वादशाहस्य दशाहानि स्तोमसंख्याविकृतीनि प्रशंसति ।

अथैतानि द्वादशाहस्य दशाहानि व्यूढा अग्निष्टोमास्त्रिवृतोमध्यतः पाप्मनोमुच्यन्त एष वाव देवतल्पो देवत-

त्यमेव तद्दारोहन्ति तल्पग्राभवन्ति प्रवसीयमस्तल्पमाप्नु-
वन्ति ॥ १० ॥

अग्निष्टोमत्वात् त्रिवृत्त्वाच्च दशाहानि तेजोरूपाणि अत एत-
दनुष्ठानात्तमोरूपात् पाप्मनोमुच्यन्त इत्युक्तं किञ्च एष दशरात्रः
समग्रान्तर्वर्त्तित्वात्तल्प इत्युपचर्य्यते यथा लौकिकस्तल्पो गृहस्यान्तः
यद्वा देवानां निवासयोग्यत्वात्तल्पत्वं अतस्तदेतदनुष्ठातारोपि
देवतल्पमेव रोहन्ति अस्त्वेवं किन्तत इत्याह तल्पग्रातल्पार्हाभवन्ति
तस्यैव विवरणमुत्तरं वाक्यं ॥ १० ॥

अथोद्भिद्वलभिदौ स्तूयेते।

अथैतावुद्भिद्वलभिदावेताभ्यां वै वृहस्पतिर्द्देवेभ्य पशूनु-
दसृजत्पशूनेवैताभ्यामुत्सृजन्तः ॥ ११ ॥

उद्भिद्यते गवादिलक्षणं फलमिति उद्भित् तथा बलेन भिद्यते
उत्पाद्यते फलमिति बलभित् अथवा बलनामानमसुरन्देवा-
गवार्थं वृहस्पतिः भिन्नवानननेनेति वलभिदेतावेकाहौ शिष्टं
स्पष्टं ॥ ११ ॥

अथ गौआयुषी प्रशंसति।

अथैते गौ आयुषी मिथुनौ स्तोमावुपयन्ति प्रजात्यै ॥१२॥

एकया गौरतिरिक्तः एकया आयुरूनः अतिरिक्तः पुमान्
पुनः स्त्रिया इत्यनयोर्म्मिथुनत्वं ॥ १२ ॥

अथ छन्दोमदशाहः स्तूयते।

अथैष छन्दोमदशाहश्छन्दसान्दोहोऽर्वाञ्चि छन्दांऽ-स्युपयन्ति तस्मादर्वाञ्चोभुञ्जन्तः पशव उपतिष्ठन्ते ॥१३॥

छन्दोम: छन्दोभिर्निर्म्मितोदशाह एष एव छन्दसां दोह: एवं सति अष्टाचत्वारिंशं जागतं प्रथमसहरित्यादिक्रमेण छन्द-सामवरोहेणोपयन्ति सन्निगस्तस्माद्भुञ्जते पयसादिना पालयन्तोग-वादिपशव: अर्व्वाञ्चोऽधोमुखा: सायं स्वामिगृहमुपतिष्ठन्ति ॥१३॥

अथ महाव्रतं प्रशंसति ।

अथैतद्व्रतमन्नं वै व्रतन्नं वा अन्यत्र मुखादन्नन्धिनोति यदुपरिष्टाद्व्रतमुपयन्ति मुखत एव तदन्नाद्यन्धीयते तस्मा-न्मुखे सदन्नन्धिनोति ॥ १४ ॥

गतमिदं ॥ १४ ॥

अथाद्यन्ते अहनी प्रशंसति ।

अथैतौ प्रायणीयोदयनीयावतिरात्रौ येनैव प्राणेन प्रयन्ति तमभ्युद्यन्ति ॥ १५ ॥

एतदपि गतं अथादित्यानामयनस्य कल्पोमध्ये पृष्ठस्य क्लृप्तो-तिरात्र: क्लृप्तं चतुर्विंशमहराभिप्लविकस्य प्रथमस्याङ्ग: प्रसोमा-सोविपश्चित इत्यादिकं द्रष्टव्यं ॥ १५ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चविंशाध्यायस्य
प्रथमः खण्डः ।

---

## अथ द्वितीयः खण्डः।

अथ पुरस्तात् पृष्ठ्याख्यमङ्गिरसामयनमाह।

अतिरात्रश्चतुर्विꣳशं प्रायणीयमहः पृष्ठ्यः षडहस्त्वारस्त्रिवृतोभिप्लवाः षडहाः स मासः स द्वितीयः स तृतीयः स चतुर्थः स पञ्चमस्त्र्यस्त्रिवृतोभिप्लवाः षडहाः पृष्ठ्यः षडहस्त्रिवृद्बृहस्पतिस्तोमस्त्रयः स्वरसामानोदिवाकीर्त्यमहस्त्रयः स्वरसामानः पञ्चदश इन्द्रस्तोम उक्थ्यः पृष्ठ्यः षडहस्त्रयस्त्रिꣳशारम्भण एकस्त्रिवृदभिप्लवः षडहो द्वादशाहस्य दशाहानि व्यूढा अग्निष्टोमास्त्रिवृत उद्भिच्च वलभिच्च द्वे अहनी चत्वारस्त्रिवृतोभिप्लवाः षडहाः पृष्ठ्यः षडहः समासः स द्वितीयः स तृतीयः स चतुर्थौ द्वौ त्रिवृतावभिप्लवौ षडहौ पृष्ठ्यः षडह आयुश्च गौश्च द्वे अहनी छन्दोमदशाहश्चतुर्विꣳशं प्रथममहर्द्वे अष्टाविꣳशे त्रिꣳशं द्वात्रिꣳशꣳ षट्त्रिꣳशञ्चत्वारिꣳशञ्चतुश्चत्वारिꣳशमष्टाचत्वारिꣳशञ्चतुर्विꣳशम्महाव्रतञ्चातिरात्रश्चाङ्गिरसां पुरस्तात् पृष्ठ्यं ॥ १ ॥

आद्ये अहनी पूर्ववत् षष्ठमासान्त्येभवतः पृष्ठ्यः षडहमुखैश्चतुर्भिरभिप्लवषडहैरेकोमास इत्येवमादितः पञ्चमासाः स्युः ते चा-

भिप्लवाः सर्वेऽपि त्रिवृत्स्तोमकाः षष्ठे मासि त्रयस्त्रिवृदभिप्लवाः पृष्ठ्यः षडहोऽभिजित्स्थानीयको बृहस्पतिस्तोमस्ततस्त्रयः स्वरसामानः आद्ये अहनी इति षष्ठोमासः ततोऽदिवाकीर्त्यमहः पूर्ववदेव सप्तमोमासस्त्रयः स्वरसामान इन्द्रस्तोमश्च तत आवृत्तः पृष्ठ्यः षडहस्त्रिवृदभिप्लव एकस्ततो द्वादशाहस्य दशाहानि व्यूढादीनि पूर्ववद्दशाहविशेषणानि तत उद्भिद्बलभिदौ ततोऽन्ये महाव्रतोदयनीये द्वे अहनी इति त्रिंशदहानि अथाष्टमादिचत्वारोमासाश्चतुर्भिरावृत्तैरभिप्लवैरेकेन पृष्ठ्येन चैकैकमासकल्पनया आप्तव्यः द्वादशस्तु मासः द्वाभ्यां त्रिवृदभिप्लवाभ्यां आवृत्तेनैकेन पृष्ठ्यषडहेन सायुर्गोभिश्छन्दोमदशाहैः पूर्यते छन्दोमदशाहेषु चतुर्विंशप्रभृतीनामष्टाचत्वारिंशत्पर्यन्तान्यनुक्रमेणैव पञ्चविंशं नविद्यते तत् स्थाने चतुर्विंशं तस्मात्ततोदशमं भवति एतत्तदङ्गिरसां पुरस्तात् पृष्ठ्यमित्युच्यते प्रथमत एव पृष्ठ्यषड्हस्य प्रयोज्यत्वात् ॥ १ ॥

अथास्य फलं सप्ररोचनमाह ।

**पुरस्तात् पृष्ठेन वा अङ्गिरसः स्वर्गं लोकमाक्रमन्त यत् पुरस्तात् पृष्ठान्युपयन्ति स्वर्गस्य लोकस्याक्रान्त्यै ॥२॥**

स्पष्टं ॥ २ ॥

अथ पशुत्वात् पृष्ठान्यन्नपशुत्वेन प्रशंसति ।

**अन्नं वै पृष्ठान्यन्नमेव तन्मुखतोधीयते तस्मान् मुखे सदन्नन्धिनोति पशवः पृष्ठानि पशुष्वेव प्रतितिष्ठन्ति ॥ ३॥**

स्पष्टं ॥ ३ ॥

अथ छन्दोमदशाहपर्य्यन्तस्याहर्व्वृन्दं सम्पाद्य पूर्वसत्रस्यादित्यानामयनस्यार्थवादमतिदिशति ।

यदन्यच्चक्राभ्याᳬ साकं वृद्ध्यान्तत्समानमाछन्दोमदशाहात् ॥ ४ ॥

अत्राभिप्लवे पञ्चदशस्याभावात् पूर्ववैषम्याच्चक्रे वा एते साकं वृतीयत् त्रिवृत्पञ्चदशौ स्तोमावित्युक्तादन्यच्छन्दोमदशाहपर्य्यन्तं ब्राह्मणमत्रापि समानमित्यर्थः यद्यप्यत्रायुर्गौरिति क्रमः तथापि मिथुनत्वादर्थवादः समानएव ॥ ४ ॥

अथ छन्दोमदशाहं प्रशंसति ।

अथैष छन्दोमदशाहश्छन्दसान्दोह ऊर्द्ध्वानि छन्दाᳬस्युपयन्त्यनपभ्रᳬशायैष वाव देवयानः पन्थाः प्रदेवयानं पन्थानमाप्नुवन्ति य एतदुपयन्त्यथैतद्व्रतं ॥ ५ ॥

छन्दसामवरोहक्रमेणानुत्थाने क्रमेण कस्यचिच्छन्दसोनपभ्रंशः स्यात् अतस्तदभावाय मवत्यूर्द्ध्वमुखछन्दसामवाप्तिः एष एव छन्दोनुक्रमो देवलोकगमनमार्गः देवयजनमार्गः अथैतद्व्रतमित्यत्र प्रतीकग्रहणं पूर्वोक्तार्थवादानुकर्षणार्थं ॥ ५ ॥

आद्यन्ते अहनी प्रशंसति ।

अथैतौ प्रायणीयोदयनीयावतिरात्रौ येनैव प्राणेन प्रयन्ति तमभ्युद्यन्ति॥ ६॥

गतमिदं। अस्यायनस्य पुरस्तात् पृष्ठ्यस्य क्लृप्तोतिरात्रः क्लृप्त-श्चतुर्विंशमहः क्लृप्तः पृष्ठ्यः क्लृप्तं प्रथममहरभिप्लवस्य यथा मध्ये पृष्ठ्य इत्यादिकल्पोद्रष्टव्यः॥ ६॥

इति ताण्ड्यमहाब्राह्मणे पञ्चविंशाध्यायस्य
द्वितीयः खण्डः।

---

अथ तृतीयः खण्डः।

अथ दृतिवातवतोरयनमाह।

अतिरात्रस्त्रिवृता मासं पञ्चदशेन मासꣳ सप्तदशेन मा-समेकविꣳशेन मासन्त्रिणवेन मासन्त्रयस्त्रिꣳशेन मास-म्महाव्रतं त्रयस्त्रिꣳशेन मासं त्रिणवेन मासमेकविꣳशेन मासꣳ सप्तदशेन मासं पञ्चदशेन मासं त्रिवृता मासमति-रात्रः॥ १॥

प्रथमं प्रायणीयोतिरात्रस्ततस्त्रिवृदादित्रयस्त्रिंशान्ताः आदितः षण्मासा आप्तव्याः विषुवतः स्थाने महाव्रतं भवति तएव त्रिवृ-दादिमासा उत्तरस्मिन् पक्षसि द्वादशादिसप्तमासान्ताः षण्मा-

सा: स्यु: ततउदयनीयमह: एतानि त्रिषष्युत्तरशततयमहानि स्युः अधिकयोर्द्वयोरह्नोर्व्यवस्थाविषये सूत्रकार: इतिवातवतो-रयने द्वावेकोनौ मासौ सुनुयुस्त्रिवृताविति गौतमस्त्रयस्त्रिं-शाविति धानञ्जप्यः उभौ वा लिङ्गिनौ स्यातां यथैतद्ब्राह्मणमि-ति त्रयस्त्रिंशावेकोनाविति कल्पकारस्य मतं ॥ १ ॥

अथास्य फलं सप्ररोचनमाह ।

ऋतवोन प्रत्यतिष्ठꣳस्त एतेन प्रत्यतिष्ठन् प्रतिष्ठाकामा उपेयु: प्रत्येव तिष्ठन्ति षड्वा ऋतव ऋतुष्वेवैतेन प्रतिति-ष्ठन्ति ॥ २ ॥

स्पष्टं । ऋतुषु प्रतिष्ठानं नाम तत्तदृतुचितभोगास्पदत्वं ॥२॥

अथ मध्यमं महाव्रतमह: प्रशंसति ।

यद्व्रतम्मध्यत उपयन्ति मध्यत एव तदन्नाद्यन्धीयते तस्मान्मध्ये सदन्नन्धिनोति ॥ ३ ॥

गतमेतत् ॥ ३ ॥

अथ कृत्स्नमयनं पक्षित्वेन प्रशंसति ।

पक्षि वा एतत्सत्रायणं यङ्कामं कामयन्ते तमेतेनाभ्य-श्नुवते यत्र यत्र हि पक्षी कामयते तत्तदभ्यश्नुते ॥ ४ ॥

पूर्वोत्तरमासषट्करूपपक्षद्वययुक्तमेतत्सत्रायणं अस्त्वेवं कि-न्तत इत्याह यङ्कामं कामयन्ते इत्यादिना अथ सर्वकामसाधनमि-

वोपपादयति यत्र यत्र हि पञ्चो इत्यादिना यद्वा पञ्चिवेत्यादि महाव्रतस्यैव स्तुतिः तच्च मध्यमाहस्त्वेन प्रधानत्वात् पञ्चपि भवति अत एव सत्रनिर्व्वाहकत्वात् सत्रायणमित्युच्यते ॥ ४ ॥

आद्यन्तयोर्म्मासयोर्य्यत् त्रिवृत्त्वन्तत् प्रशंसति ।

**त्रिवृता प्रयन्ति त्रिवृतोद्यन्ति प्राणा वै त्रिवृत् स्तोमानां प्राणैरेव प्रयन्ति प्राणेषु प्रतितिष्ठन्ति ॥ ५ ॥**

त्रिवृतः प्राणत्वमसकृदुक्तम् ॥ ५ ॥

अथैतदयनं कर्त्तृद्वारा प्रशंसति ।

**एतद्वै दृतिवातवन्तौ खाण्डव उपेतोविषुवति वातवानुत्तिष्ठति समापयति दृतिस्तस्मात्तनीयाꣳसोवातवता भूयाꣳसोदार्त्तेयाः ॥ ६ ॥**

एतत्सत्रायणन्दृतिश्च वातवांश्चेत्युभौ यजमानौ खाण्डवे वने उपेतः अन्वतिष्ठतामित्यर्थः भूतकाले व्यत्ययेन वर्त्तमानप्रत्ययः एवमुत्तरयोरप्याख्यातयोर्द्रष्टव्यं तयोरनुष्ठानप्रयुक्तं किञ्चित् फलवैषम्यं वक्तुमाह वातवान् विषुवति महाव्रते सम्पूर्णे उत्तिष्ठति उदतिष्ठत् सत्रं समापितवान् दृतिस्तु द्वादशापि मासानास्थाय समापयन् यस्मादेवं तस्माद्वातवता वातवती वंश्यास्तनीयांसः अत्यर्थं तनवः कृशा अभवन् दार्त्तेया इतरवंश्यास्तु भूयांसो बहुतराः प्रवृद्धा अभवन् अत उभयस्यानुष्ठानसद्भावे-

पि क्रतूनामनुष्ठानं प्रशस्तफलवदित्युक्तं भवति अत्र विधृतिभिः क्लृप्तं इति वातवतोरयनमात्रिगवेभ्यस्त्रिवृद्धा उद्धरन्त्युक्थानि पञ्चदशिभ्यः षोडशिनमित्यादिकं द्रष्टव्यं ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चविंशाध्यायस्य
तृतीयः खण्डः ।

——

अथ चतुर्थः खण्डः ।

अथ सर्व्वर्द्धिसाधनं कुण्डपायिनामयनमाह ।

मासन्दीक्षिताभवन्ति ते मासि सोमं क्रीणन्ति तेषां द्वादशोपसद उपसद्भिश्चरित्वा सोममुपनह्य मासमग्निहोत्रञ्जुह्वति मासं दर्शपूर्णमासाभ्यां यजन्ते मासं वैश्वदेवेन मासं वरुणप्रघासैर्म्मासꣳ साकमेधैर्म्मासꣳ शुनाशीर्य्येण त्रिवृता मासꣳ पञ्चदशेन मासꣳ सप्तदशेन मासमेकविꣳशेन मासं त्रिणवेन मासमष्टादश त्रयस्त्रिꣳशान्यहानि द्वादशाहस्य दशाहानि महाव्रतञ्चातिरात्रश्च ॥ १ ॥

मासं मासपूर्त्तिर्दीक्षिताभवन्ति दीक्षितधर्म्माननुतिष्ठेयुः तएव मासि दीक्षासम्बन्धिनि सम्पूर्णे प्रायणीयायां कृतायां प्रथमप्रवर्ग्योपसद्दिवसे सोमं क्रीणन्ति क्रीणीयुः तेषां द्वादशोपसदो

भवन्ति ततः क्रतोपसदः पूर्वक्रीतं सोममुपनह्य उपरि देशे संरक्ष्य ततः मासमग्निहोत्रमित्यारभ्य त्रिणवेन मासमित्यन्तनि-गदसिद्धं आदितः षण्मासाहविर्भ्यश्चक्रादुत्तरेऽनुसौमिकाः द्वाद-शस्य मासस्य त्रयस्त्रिंशकान्यष्टादशान्यहानि ततो द्वादशाहस्य दशाहानि ततो महाव्रतं चातिरात्रश्चेति त्रिंशदहानीति द्वादशः ॥ १ ॥

अथ क्रमेणानुष्ठेयं अग्निहोत्रादिचतुष्टयं प्रशंसति।

**अग्निहोत्रं दशहोता दर्शपूर्णमासौ चतुर्होता चातु-र्मास्यानि पञ्चहोता सौम्योध्वरः सप्तहोता ॥ २ ॥**

यदेतत् प्रथमे मास्यनुष्ठेयमग्निहोत्रमस्ति तच्च वित्तस्ये-त्यनुवाकोक्तोदशहोता तेन यो होमोस्ति सोमेन क्रतो भवतीत्यर्थः एवमुत्तरवाक्येष्वपि द्रष्टव्यं दर्शपूर्णमासौ द्वितीयमास्यनुष्ठेयावेव चतुर्होता तथा मासचतुष्टये क्रमेणानुष्ठेयानि चातुर्मास्यान्येवं पञ्चहोता यः सौम्योध्वरः उत्तरमासषट्कसम्बन्धी सएव सप्तहोता अग्निहोत्रादि चतुष्टयमध्वर्युब्राह्मणे समाम्नातं पृथिवी होता अग्निर्होता महाहविर्होतेति तानि क्रमेण चतुर्होतृपञ्चहोतृसप्त-होतृणां प्रतीकाः दशहोतुः प्रतीकस्तु प्रदर्शित एव ॥ २ ॥

अथैतेषां फलमाह ॥

**एते वाव सर्वेण यज्ञेन यजन्ते यएतदुपयन्ति सर्वएव भवन्ति ॥ ३ ॥**

ये सत्रिण एतदुपयन्ति एते वाव एतएव सर्व्वे अग्निहोत्रादि-भेदेन प्रकृतिविकृत्यात्मना च यो यज्ञोऽस्ति तेन कृत्स्नेनाभीष्टा भवन्ति अत एव पशुपुत्रधनस्वर्गादिफलैः सम्बद्धाभवन्ति ॥ ३ ॥

अथैषां शेषभक्षणे किञ्चिद्विशेषमाह ।

ते सर्वे कुण्डपायिनोत्सरुकैश्चमसैर्भक्षयन्ति ॥ ४ ॥

सर्वे सत्रिणः कुण्डैः पातारो भवन्ति अत एवास्यैतन्नाम सम्पन्नम् अत्सरुकैः अत्सरुर्नामदण्डरहितो मध्येत्यन्तमवनतः स्थूलः पात्रविशेषस्तादृशैश्चमसैर्भक्षयन्ति कुतः शिष्टसोमं ॥ ४ ॥

अथर्त्विज्यसमानतां विधत्ते ।

योहोता सोऽध्वर्युः सपोता य उद्गाता सनेष्टा सो-च्छावाकोयोमैत्रावरुणः सब्रह्मा सप्रतिहर्त्ता यः प्रस्तोता सब्राह्मणाच्छंसी सग्रावस्तुद्यः प्रतिप्रस्थाता सोऽग्नीत्स उन्ने-ता गृहपतिर्गृहपतिः सुब्रह्मण्यः सुब्रह्मण्यः ॥ ५ ॥

सुगमं ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चविंशाध्यायस्य
चतुर्थः खण्डः ।

---

अथ पञ्चमः खण्डः ।

अथ सर्व्वसमृद्धिसाधनं तपश्चितामयनं सत्रमाह ।

संवत्सरन्दीक्षिताभवन्ति संवत्सरमुपसद्भिश्चरन्ति संवत्सरं प्रसुतोभवति ॥ १ ॥

संवत्सरं प्रसुतो भवति संवत्सरं प्रसुनुयुरित्यर्थः सिद्धमन्यत् अत्राङ्गां विशेषकल्पनामात्रा सत्रप्रकृतिभूता गवामयनाहःक्लृप्तिः यद्वा सर्वप्रकृतिभूतज्योतिष्टोमेनाङ्गां क्लृप्तिर्द्रष्टव्या तथा चापेव-कल्पः गवामयनेन क्लृप्तं तपश्चितामयनं ज्योतिष्टोमेन वा विक्लृप्तेनेति ॥ १ ॥

तत्संवत्सरन्दीक्षिताभवन्ति तप एव तेन तप्यन्ते यत्संवत्सरमुपसद्भिश्चरन्ति पुनत एव तेन यत्संवत्सरं प्रसुतोभवति देवलोकमेव तेनापियन्ति ॥ २ ॥

दीक्षायां पयोव्रतादिनियमसद्भावात् दीक्षा संवत्सरेण तप एव तप्तं भवति ततः संवत्सर पसदनुष्ठानेन देवत्वप्राप्तये सत्कृता भवन्त्येव ततः संवत्सरसोमयागेन पूताः देवलोकं देवनिवासस्थानं प्राप्नुवन्ति ॥ २ ॥

अस्य फलं सम्परीचनमाह।

एतेन वै तपश्चितोदेवाः सर्व्वामृद्धिमार्ध्नुवन् सर्व्वामृद्धिमृध्नुवन्ति य एतदुपयन्ति ॥ ३ ॥

स्पष्टोर्थः ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चविंशाध्यायस्य

पञ्चमः खण्डः।

अथ षष्ठः खण्डः।

अथ सर्व्वर्द्धिसाधनं प्रजापतेर्द्वादशसंवत्सराख्यं सत्रमाह।

त्रयस्त्रिवृतः संवत्सरास्त्रयः पञ्चदशास्त्रयः सप्तदशास्त्रय एकविंशाः प्रजापतेर्द्वादशसंवत्सरं ॥ १ ॥

सुज्ञानमिदं ॥ १ ॥

अथास्य फलं सप्ररोचनमाह।

एतेन वै प्रजापतिः सर्व्वस्य प्रसवमगच्छत्सर्वस्य प्रसवं गच्छन्ति य एतदुपयन्ति ॥ २ ॥

सर्व्वस्य प्रसवं प्रेरणं तत्सर्व्वसमृद्धस्यैव नान्यस्येति सर्व्वर्द्धिकामा अत्राधिकारिणः ॥ २ ॥

अथ विहितसंवत्सरत्रयचतुष्टयं क्रमेण प्रशंसति।

यत् त्रयस्त्रिवृतः संवत्सराभवन्ति तेजोब्रह्मवर्च्चसन्त्रिवृत्तेज एव ब्रह्मवर्च्चसमवरुन्धते यत् त्रयः पञ्चदशा ओजोवीर्यं पञ्चदशओज एव वीर्यमवरुन्धते यत् त्रयः सप्तदशा अन्नं वै सप्तदशोन्नाद्यमेवावरुन्धते यत् त्रय एकविंशाः प्रतिष्ठा वा एकविंशोन्तत एव यज्ञस्य प्रतितिष्ठन्ति ॥ ३ ॥

अग्निना सह त्रिवृतः प्रजापतिमुखादुत्पन्नस्तस्यच गायत्रीसंबन्धाद्गायत्र्या ब्रह्मवर्च्चससाधनत्वाद् ब्रह्मवर्चसन्तेज एव त्रिवृत् अतस्तदनुष्ठातारोपि तावदेवावरुन्धते एवं पञ्चदशादिष्वपि द्रष्टव्यं॥३॥

अथास्य प्रयोक्तृप्रशंसाद्वारेण सर्व्वसिद्धिलक्षणं फलं दर्शयति ।

एतेन वै नैमिशीयाः सर्व्वामृद्धिमार्ध्नुवन् सर्व्वामृद्धिमृध्नुवन्ति य एतदुपयन्ति ॥ ४ ॥

नैमिशीया नैमिशारण्यवासिनः ॥ ४ ॥

अथास्य सत्रस्य नववार्षिकप्रयोगोपि विद्यत इत्याह ।

ते ह सप्तदशेभ्य एवाध्युत्तस्थुस्त उ होचुर्यो न प्रजायाम ध्याते स एतत्सत्रꣳ समापयादिति तद्धेतत्समीप्सन्तो ब्राह्मणाः सत्रमासते ॥ ५ ॥

ते नैमिशीयाः सप्तदशेभ्य एव सप्तदशस्तोमकेभ्यस्त्रिभ्यः संवत्सरेभ्यः सप्तदशं समाप्यैवाध्युत्तस्थुः सत्रादुत्थिता आसन् तउ ह त एव खलु तदैवमूचुः योदीक्षितोनोस्माकं प्रजायां पुत्रपौत्रादिलक्षणायां ऋद्ध्यातैः यज्ञाङ्गैः समृद्धः स्यात् स एतत् सत्रं एकविंशवर्षनयमप्यननुष्ठाय समापयेदिति एतावतास्य नवसंवत्सरानुष्ठानं विद्यते तथापि साधनसम्भावप्यनापदि सप्तदशेभ्य उत्थापनं कुर्य्यादित्युक्तं भवति यस्माद्योनः प्रजायामृद्धात इति नैमिशीयैरुक्तं तस्मादित्यर्थः तत्सत्रं समीप्सन्तः समापयितुमिच्छन्तो ब्राह्मणा द्वादशसंवत्सरमेव सत्रमासते ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चविंशाध्यायस्य षष्ठः खण्डः ।

---

अथ सप्तमः खण्डः।

अथ सर्व्वर्द्धिसाधनं षट्त्रिंशत्संवत्राख्यं शाक्त्यानां सत्र-
माह।

नव त्रिवृतः संवत्सरा नव पञ्चदशा नव सप्तदशा नवै-
कविꣳशाः शाक्त्यानाꣳ षड्विꣳशत्संवत्सरं ॥ १॥

शाक्त्या शक्तिगोत्रोत्पन्ना ऋषयः ॥ १ ॥

अथास्यानुष्ठाने किञ्चिद्विशेषसमृद्धिसाधनं दर्शयति।

एतेन वै गौरीवितिः शाक्त्यस्तरसपुरोडाशो यव्यावत्याꣳ
सर्व्वामृद्धिमार्ध्नोत् सर्व्वामृद्धिमृध्नुवन्ति य एतदुपयन्ति॥ २॥

गौरीवितिर्नामऋषिः तरसं मांसन्तदेव सवनीयं पुरोडाशं
यस्यासौ तरसपुरोडाशः यव्यावतीनाम नदी सिद्धन्यत्॥ २ ॥

अथैतत् संवत्सरगतसंख्याद्वारा प्रशंसति।

बृहती वा एतत्सत्रायणꣳ स्वाराज्यञ्छन्दसां बृहती
प्रस्वाराज्यमाप्नुवन्ति य एतदुपयन्ति ॥ ३ ॥

सत्रञ्च तदयनञ्च सत्रायणं एतत् सत्रायणं बृहती वै बृहत्यपि
षट्त्रिंशदक्षरा अस्यापि संवत्सरगता षट्त्रिꣳशत्संख्यास्ति
अतस्तत्द्वारा एतत् बृहती अस्त्वेवं किन्ततइत्यतआह बृहती
छन्दसां मध्येस्वाराज्यमित्युक्तं अत एतदनुष्ठातारोपि स्वाराज्यमा-
प्नुवन्ति ॥ ३ ॥

अथैतद्बहुपुत्रसाधनत्वेन प्रशंसति ॥

तदेतच्छात्त्यानां दशवीरमेषां दशवीराजायन्ते य एत-
दुपयन्ति ॥ ४ ॥

तदेतदुक्तं सत्रं शात्त्यानां दशवीरं वीरयन्त्यमित्रानिति वीराः पुत्रास्तेषां दशसंख्यानां साधकं अतोये दीक्षिता एतदुपयन्ति तेषामपि दशवीराः पुत्राजायन्ते ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चविंशाध्यायस्य
सप्तमः खण्डः ॥

---

अथ अष्टमः खण्डः

अथ स्वर्गसाधनं साध्यानां शतसंवत्सरं सत्रमाह ।

पञ्चविꣳशतिस्त्रिवृतः संवत्सराः पञ्चविꣳशतिः पञ्च-
दशाः पञ्चविꣳशतिः सप्तदशाः पञ्चविꣳशतिरेकविꣳशाः
साध्यानाꣳ शतसंवत्सरम् ॥ १ ॥

स्पष्टं ॥ १ ॥

अथैतस्य प्रयोक्तृप्रशंसनद्वारा स्वर्गसाधनत्वमाह ।

साध्या वै नाम देवेभ्यो देवाः पूर्व आसꣳस्त एतत्सत्रा-यणमुपायꣳस्तेनार्ध्नुवꣳस्ते सगवः सपुरुषाः सर्व्वएव सह स्वर्गं लोकमायन्नेवं वाव ते सह स्वर्गंलोकं यन्ति य एतदु-पयन्ति ॥ २ ॥

पूर्व्वं साध्याख्यादेवाः वस्वादयोदेवेभ्यः इदानीं ज्योतिष्टोमा-दिकर्म्मकत्त्वात् देवतात्वं प्राप्नुवन्तः पूर्व्वा आसन् ते स्वदेवत्व प्रा-प्त्यर्थं एतच्छतसंवत्सरं सत्रायणमुपेत्य समृद्धा अभवन्निह लोका-त्प्राप्तैः सपुरुषाः सपरिचारकाः सर्व्वएव कात्स्न्र्यै न स्वर्गं लो-कमायन्नेवमेवेदानीमपि ते स्वर्गमित्यादिस्पष्टं अतएव साध्यानां सम्बन्धात् साध्यानां शतसंवत्सरमिति नाम सम्पन्नं ॥ २ ॥

अथैतच्छतसंवत्सरगतसंख्याद्वारेण प्रशंसति ।

आयुर्व्वा एतत्सत्रायणꣳ शतायुः पुरुषोयावदेवायुस्त-दवरुन्ध ते नह्यत्यायुषꣳसत्रमस्ति ॥ ३ ॥

यतः शतायुः पुरुषो अतस्तत्संख्याकः संवत्सरसद्भावादे-तत्सत्रायणमायुरित्युच्यते अतोयावदेवायुः पुरुषस्य प्रजापतिना शतमिति क्लृप्तं तत्कात्स्न्येऽनावरुन्धते नमध्येम्रियते तद्यत्यायुषं आयुरतिक्रान्तं आयुषोमध्ये मरणसाधनं सत्रं नास्ति अतः शत-मायूंषि पुरुषस्यावेच्छितानि ॥ ३ ॥

उक्तार्थे ऋचमुदाहरति ।

तदस्यचनूक्ता तानीदहानि बहुलान्यासन्या प्राचीन-मुदिता सूर्य्यस्य यतः परिजार इवाचरन्त्यूपा ददृशे न पुन-र्यतीवेति ॥ ४ ॥

अस्यामृचि बह्वपेचितमित्येतावदेव निदर्शनं क्रियते उषसः स्तुतिरेषातानीत्तानि तेजांस्येवाहनि बहुलान्यासन् अह्नामपे-चितत्वादासन्नित्याशीरर्थं अतोऽस्माकं सन्त्वित्यर्थः तानीत्युक्तं या यानि तेजांसि प्राचीनं पूर्व्वस्मिन् काले सूर्य्यस्य उदिता उदिते उदये सति उत्पन्नानीग्रः एकस्तपनः परिस्पन्दजनितं तेजःस-मूहः एवैकमहः खलु अतस्तथाविधानि बह्वनि सन्त्वित्यभिप्रायः अतोयेभ्यस्तेजोभ्यस्तदर्थं जारे पत्यौ परित आचरन्ती पत्युः समीपं सञ्चरन्ती नारी जोषा जारे रात्रेर्जरयितरि आदित्ये पर्य्याचरन्ती सती ददृशे सर्व्वैः किन्तु नपुनर्य्यती पुरुषान्तरं प्रति गच्छन्ती पुंश्चलीव नददृशे तानीति सम्बन्धः ॥ ४ ॥

अथैतत् ज्योतिष्टोमस्य साहश्येन प्रशंसति ।

ज्योतिष्टोमस्यायनेन यन्ति ज्योतिरेव भवन्ति ॥ ५ ॥

ज्योतिष्टोमस्य यदयनं प्रायणं त्रिवृदादिस्तोमचतुष्टयरूप-मस्ति तेनैवैतं यत्र यन्ति अतस्तेपि ज्योतिरेव तेजोरूपा एव भवन्ति ॥ ५ ॥

अथैतदंत्यद्वारेण प्रशंसति ।

एकविꣳशोन्तत: स्तोमानां भवति प्रतिष्ठा वा एकविꣳशोन्तत एव यज्ञस्य प्रतितिष्ठन्ति ॥ ६ ॥

स्तोमानां त्रिवृदादीनां मध्ये अन्ततः सत्रान्ते एकविंशस्तोमो भवति सिद्धमन्यत् ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चविंशाध्यायस्य
अष्टमः खण्डः ।

---

अथ नवमः खण्डः ।

अथाग्नेः सहस्रसाव्यं सहस्रराचं सर्वानाद्यफलस.धनं सत्रमाह ।

अतिरात्रः सहस्रमहान्यतिरात्रोऽग्नेः सहस्रसाव्यं ॥ १ ॥

सहस्राण्यहानि कार्त्स्न्येन सूयते अभिषूयते सोम इति सहस्रसाव्यं एतदग्नेः सम्बन्धि सहस्रसाव्यं सत्रं अस्यादावन्ते चातिरात्रौ भवत इति केचित् अस्यैवाद्यन्ते अहनी अतिरात्रा इत्यपरे तथा च सूत्रं सहस्रसाव्ये सहातिरात्राभ्यां सहस्रमहनीत्याचार्य्याः सहस्रसाव्यमिति ह्याहेत्यन्तरेणेति शौचिवृक्षिरिति ॥ १ ॥

अथास्य फलं सम्प्ररोचनमाह ।

एतेन वा अग्निः सर्व्वस्य प्रसवमगच्छत् सर्व्वस्य प्रसवं गच्छन्ति य एतदुपयन्ति ॥ २ ॥

स्पष्टं ॥ २ ॥

अथास्य कर्त्तुर्द्वारा फलान्तरं दर्शयति ।

अग्नेर्वै सर्वमाद्यꣳ सर्व्वमेषामाद्यं भवति य एतदुपयन्ति ॥ ३ ॥

एतत्पूर्व्वमनुष्ठितवतोऽग्नेः खलु एतदनुष्ठानसामर्थ्यात् सर्व्वमपि आद्यं अदनीयमासीत् अतः सर्व्वमित्यादिस्पष्टं ॥ ३ ॥

अस्याहर्गतसंख्याद्वारेणैतत्प्रशंसति ।

अथ यत् सहस्रसाव्यं भवति सहस्राक्षरा वै परमा-विराट् परमायामेव विराजि प्रतितिष्ठन्ति ॥ ४ ॥

परमा विराट् संख्यानाम्मध्ये शतं हि परमं अतस्तावत् संख्या वा विराट्परमेत्युच्यते सहस्राक्षराविराडिति श्रुतेरेकैकस्यादश संख्यात्वात् सहस्राक्षरा भवति सिद्धमन्यत् ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चविंशाध्यायस्य
नवमः खण्डः ।

---

अथ दशमः खण्डः ।

अथ त्रीणि सारस्वतानि सत्राणि, मित्रावरुणयोः प्रथममि-न्द्राग्न्योर्द्वितीयमर्य्यम्णस्तृतीयं, तत्र मित्रावरुणयोः प्रथमं सत्रमाह ।

सरस्वत्या विनशने दीक्षन्ते ॥ १ ॥

सरस्वती नाम नदी प्रत्यक्स्रोता प्रवहति तस्याः प्रागपर-भागौ सर्व्वलोकप्रत्यक्षौ मध्यमस्तु भागो भूम्यामन्तर्निमग्नः प्रव-हति नासौ केनचिद्दृश्यते तद्विनशनमित्युच्यते तस्योपक्रमे दक्षिणे तीरे दीक्षन्ते ॥ १ ॥

सत्रस्य सारस्वतीयस्य दीक्षोपसदोरियत्तामाह ।

तेषां द्वादश दीक्षा द्वादशोपसदः ॥ २ ॥

अथ कस्मिन् दिवसे दीक्षारम्भ इति जिज्ञासायां सूत्रकारो मतभेदमाह षष्ठ्यां पञ्चम्येति गौतमोमावास्यायामतिरात्रः स्यादिति पूर्व्वपक्षस्य षष्ठ्यामित्यर्थः तत्रोपपत्तिं स्वपक्षे चाह एवं स्वस्थानमामावास्यं प्रयुज्यत इति अस्यायमर्थः एवं सति शुक्लपक्ष-स्य प्रथमायां सान्नाय्यब्राह्मणविहितं प्रयुक्तं स्यात्पक्षान्तरमाह सप्तम्यां वा दीक्षित्वामावास्यायां यजनीयेऽह्न्यतिरात्रः स्यादिति धानञ्जय्यसमाधय उत्तराभ्यां सुत्याभ्यामिति अस्यायमर्थः अमा-वास्यायामुत्तरेद्युर्य्यजनीये शुक्लप्रथमायामेवातिरात्रः कुतः उत्त-राभ्यां गोष्टोमायुष्टोमाभ्यां ब्राह्मणोक्ताभ्यां साम्यसिद्ध्यर्थं प्रथमा-यामेव हि तयोरनुष्ठानमिति नन्वेवं सति द्वितीयायां कर-णात् सान्नाय्यस्य स्थानभ्रंशः स्यादित्याशंक्य स्वयमेव परिहर-

ति स्वस्थानं चैवामावास्यं प्रयुज्यत इति अतः कारणात् न सान्नाय्यस्यापभ्रंश इत्यर्थः तदपि कुत इति तत्राह पूर्व्वपक्षो-ह्यामावास्यस्थानमिति अयमभिप्रायः पूर्व्वपक्षोहि कार्त्स्न्येन सान्नाय्यस्य स्थानं न केवलं प्रथमैवेति दीक्षोपसदोर्म्मध्ये अथ प्रयोगक्रमः पूर्व्वोक्तदीक्षोपक्रमयोरन्यतरं परिगृह्य द्वादशदिवस-दीक्षान्ते प्रायणीयया प्रचर्य्य राजानं क्रीत्वोपनह्य निधाय पश्चात् द्वादशोपसद इति ॥ २ ॥

अथोपसदनन्तरमतिरात्रमनुष्ठाय तस्मिन् दिवसे सान्ना-य्यार्थं वत्सानपाकृत्य श्वोभूते तेन यष्टव्यमित्याह ।

**यदहरतिरात्रो भवति तदहर्व्वत्सानपाकुर्व्वन्ति सꣳ-स्थितेतिरात्रे सान्नाय्येन यजन्ते ॥ ३ ॥**

यदहर्यस्मिन्नहनि प्रायणीयोतिरात्रो भवति तस्मिन्नहनि सान्नाय्यार्थं वत्सानपाकुर्य्युः पश्चादस्तमयात् पूर्व्वं स्वकाले दोहये-युर्द्दध्यर्थं पुनश्च रात्रौ वत्सानपाकृत्य श्वः संस्थितेतिरात्रे इध्मान्तं प्रक्रम्य पात्रासादनप्रोक्षणानन्तरं प्रातर्दोहं दोहयेयुरित्यर्थः प्रकृतौ तु दर्शे पुरोडाशसद्भावात् कपालोपधानानन्तरं प्रात-र्दोहः अत्र द्राह्यायणः पुरा रात्रेः सायं दोहं दोहयेरन् संस्थि-तेतिरात्रे प्रातर्दोहमिति अतिरात्रसमाप्त्यनन्तरं तत्रैव देशे सान्नाय्येन यजेरन् ॥ ३ ॥

अथ सान्नाय्यानुष्ठानानन्तरमुपरिभूतानुष्ठानाय गार्हपत्या-हवनीययोर्निर्म्माणप्रकारमाह ।

**सान्नाय्येनेष्ट्वाध्वर्य्युः शम्यां परास्यति सा यत्र निपतति**

तद्गार्हपत्यस्ततः षट्त्रिंशतं प्रक्रमान् प्रक्रामति तदाहवनीयः ॥ ४ ॥

साम्नाय्ययागानन्तरं तस्मिन्नेवाहनि आहवनीयसमीपेऽध्वर्युस्तिः प्राङ्मुखः शम्यां परास्यति स्वशक्त्या सा शम्या यत्र निपतति तत्र गार्हपत्यः कर्त्तव्यः ततोऽध्वर्युः षट्त्रिंशत् प्रक्रमान् प्रक्रामति तत्राहवनीय औत्तरवेदिकः अत्र द्राह्यायणः साम्नाय्येनेष्ट्वाध्वर्युः शम्या परास्यतीत्याहवनीयन्यन्तेन तिष्ठन् प्राङ्मुखो नित्यमिष्टिसंस्थासु प्रास्येदिति आहवनीयन्यन्तेनेत्यतः पूर्वं ब्राह्मणप्रतीकोपादानं न्यन्तेन समीप इत्यर्थः ॥ ४ ॥

अथ सदः प्रभृतीनां निर्म्माणप्रकारमाह।

चक्रीवत् सदश्चक्रीवद्धविर्द्धानं चक्रीवदाग्नीध्रमुलूखलबुध्नोयूपः प्रक्षय्य उपोप्त एव नोपरवान् खनन्ति ॥ ५ ॥

चक्रीवत् चक्री चक्रं अचुन्नचक्रोरित्यादौ तथा दर्शनात् सद आदिकं चक्रं चतुःफलकादिनिर्म्मितं कार्य्यमिति केचित् अपरे तु चक्री रथः शकटी वा तद्युक्तं सद आदि आदिकार्य्यमिति प्रथमनिर्म्मितैरेव सदःप्रभृतिभिरचोत्थानमनुष्ठानादुपर्य्यतिदेशप्रायणाय सदआदिषु पृथक् पृथक् रथोवा नोवा सम्पादयेयुरित्यर्थः अत्रानुक्तयोरपि पत्नीशालाशामित्रयोश्चक्रीवतोर्निर्म्माणमाह सूत्रकारः तथापि पत्नीशाला स्याच्छामित्रञ्चेति एतेषां प्रायणे विशेषं सूत्रकारश्चाह समश्चेद्भूमिभागः स्यादनुपूर्व्वं विषमे वेदेः पांसून् हरेयुस्तश्चोत्तरवेदेर्द्धिष्णोरभ्यश्च तान्निविश्य यथायतनं नित्र-

पेयुरिति पुरोदेशोयदि समः स्यात्तदा सद आदिकं यथा संस्थान-मेवोपेयुर्व्विषमदेशश्चेत् तदानीं शकटगमनयोग्येन प्रदेशेन पृष्ठतः पृष्ठतोनयेयुरित्यर्थः ततः सदः प्रभृतिषु स्थापितेषु यथायतनं पूर्व्व-मानीतान् पांशून् निवपेयुः न तत्र मन्त्रपूर्वकं वेद्यादेः करण-मस्ति तथा यूपोपि उलूखलबुध्नः उलूखलस्य मूलभागो यथास्य-विष्ठस्तथैव कर्त्तव्यः सएव प्रक्षप्य पुरोदेशं प्रति भूम्यामेवाकर्ष-णीयः नतूपरि धारणीयः सच वेदिदेशे उपोप्तएव पांशुभिः परितः प्रच्छाद्य एव नतु खातयीत तथा उपरवान् अधिषवण-फलकयोरधस्तात् न खनेयुः किन्तु रेखाएव कुर्य्युः अत्र सूत्रं उलूखलबुध्नोयूप इति पृथुबुध्नः स्यात् प्रक्षप्य इति तं पूर्व्वं कर्षेयुरेवानुद्यच्छन्त उपोप्तएवेत्यनिखातस्तिष्ठेत् पांसुभिः पर्य्युप्तो-नोपरवान् खनन्तीत्यधिषवणफलकयोरधस्तादुपरवानमन्त्रस्त्रा-स्तेषां प्रतिषेध आलिखेयुरिति ॥ ५ ॥

अथ सान्नाय्येनैव स शुक्लपक्षे समापनीय इत्याह ।

ते तमापूर्य्यमाणमामावास्ये नयन्ति ॥ ६ ॥

ऐन्द्रेण माहेन्द्रेण वा प्रत्यहं यजमानाः सान्नाय्येन यजन्ती-त्यर्थः ॥ ६ ॥

अथ तदनन्तरभाविपूर्णिमायामनुष्ठेयं विदधाति ।

तेषां पौर्णमास्यां गोष्टोमस्तोमो भवत्युक्थ्यो बृहत् साम ॥ ७ ॥

तेषां सान्नाय्येन यजतां पौर्णमास्यां गोष्टोमेन स्तोमसुक्थ-

संस्थो बृहत्साम बृहत्पृष्ठः ऐकाहिकः कर्त्तव्य इति क्वचिदाचख्यन्ते कुतोलक्षणस्वीकरणमिति तदाहुः यस्मात् संस्थिते गोष्टोमे पौर्णमासमिति हि संस्थानान्ताद्विदधाति गोष्टोमसमाप्तिदिवस एव पौर्णमासं कर्त्तव्यतां विदधाति तच्च आमावास्यं कर्म कृत्वा पूर्य्यमाणपक्षस्यनुष्ठितः स्यात् पौर्णमास्यं तदनुष्ठानमिति सूत्रकारस्तु पौर्णमास्यामेव गोष्टोमः कर्त्तव्यः कुतस्तेषां पौर्णमास्यां गोष्टोमस्तोमो भवतीति मुख्यपौर्णमासीश्रवणात् अतःसंस्थित गोष्टोम इति वचनेन पौर्व्वापर्य्यत्वं चोद्यते नतु तस्मिन्नेवाहनि कर्त्तव्यतां ब्रूते तच्च पौर्व्वापर्य्यं पौर्णमास्यां गोष्टोमे प्रतिपदि पौर्णमासोपक्रमोपि नविरुध्यते तथापूर्य्यमाणमिति वचनमपि भूयोभिप्रायिकमिति अयज्ञायस्तेषाममावास्यायामायुष्टोममित्यत्रापि समानः अत्र तेषां पौर्णमास्यां गोष्टोमस्तोमो भवतीति यजनीये हनि स्यादित्याचार्य्या इत्यादिकं सूत्रं द्रष्टव्यं ॥ ७ ॥

अथ गोष्टोमानन्तरं यदनुष्ठेयन्तद्विदधाति ।

सꣳस्थिते गोष्टोमे पौर्णमासन्निर्व्वपन्ते तमपक्षीयमाणं पौर्णमासेन यन्ति तेषाममावास्यायामायुष्टोमः स्तोमो भवत्युक्थ्योरथन्तरसामा ॥ ८ ॥

आयुष्टोमे यथैकाहिका सिद्धमन्यत् । अन्ते व्ययनेषु विनान्वाधानं पत्नीसंयाजान्तं तन्त्रं ॥ ८ ॥

उक्त्वाहःसाध्यस्यास्य सत्रस्य नाम प्रदर्शयति ।

## मित्रावरुणयोरयनं ॥ ९ ॥

स्पष्टं ॥ ९ ॥

एतत् सत्रम्मित्रावरुणसम्बन्धप्रदर्शनद्वारा प्रदर्शयति।

एतेन वै मित्रावरुणाविमान् लोकानाजयतामहोरात्रौ वै मित्रावरुणावहर्म्मित्रोरात्रिर्व्वरुणोऽर्द्धमासौ वै मित्रावरुणौ य आपूर्य्यते समित्रो योपक्षीयते सवरुणः सएष मित्रो वरुणोरेतः सिञ्चति ॥ १० ॥

मित्रोहःशुक्लपक्षयोः अभिमानी देवोरात्रिः कृष्णपक्षयोरभिमानीवरुणे रेतः स्वसामर्थ्यं सिञ्चति शिष्टमुक्तप्रायं ॥ १० ॥

अथ बृहतीप्रशंसनद्वारेण सरस्वत्याः नुब्जत्वं प्रशंसति।

सरस्वत्या वै देवा आदित्यमस्तम्भवन् सा नायच्छत् साभ्यव्लीयत तस्मात् सा नुब्जिमती वतं बृहत्यास्तम्भुवन् सायच्छत्तस्माद्बृहती छन्दसां वीर्य्यवत्तमादित्यंह्येतयास्तम्भुवन् ॥ ११ ॥

पूर्वं भूम्यां वर्त्तमानमादित्यं द्युलोके निधाय सरस्वत्या अस्तम्भुवन् स्तम्भितुमैच्छत् सा नायच्छत् नियन्तुं नाशक्नोत् किन्तु अभ्यव्लीयत शिथिलाभूत् तस्मात्सारस्वती नुब्जिका वक्रोपेताभूत् तं बृहत्या स्तुम्भुवन्नित्यादिस्पष्टं ॥ ११ ॥

अथान्यं विशेषमाह।

प्रतीपं यन्ति नद्यन्वीपमष्ट वै पूर्व्वेण पचसा यन्ति ॥ १२ ॥

प्रत्यङ्मुखी खलु सरस्वती प्रवहति अतस्तद्दक्षिणे कूले प्रतीपं प्रतिलोमं प्राञ्चोयन्ति ॥ १२ ॥

तदेव व्यतिरेकासम्भवेन द्रढयति।

तद्धि प्रत्येकाप्येति ॥ १३ ॥

तद्धि पूर्वं पचं प्रति तस्यान्ते एका नदी सरस्वतीमप्येति एकेत्युक्तं ॥ १३ ॥

सा विशेष्यते।

दृषद्वत्येव ॥ १४ ॥

सरस्वत्या विनशनादारभ्य प्लक्षः प्रास्रवणपर्य्यन्तोनुष्ठानोदेशः तस्याङ्गप्रदेशदेशेपि दृषद्वत्या अप्यय: तावत्पर्य्यन्तं पूर्व्वेण पचसा, यन्त्यानुतिष्ठन् गच्छेयुरित्यर्थः ॥ १४ ॥

तदप्यये कर्त्तव्यमाह।

दृषद्वत्या अप्ययेऽपोनप्त्रीयञ्चरुन्निरूप्याथातियन्ति ॥ १५ ॥

तत्सङ्गमप्रदेशे अपोदेवताकं चरुं जलातिक्रमदोषपरिहारार्थं निरूप्य पश्चादतिक्रम्य यन्ति अत्र सूत्रं दृषद्वत्या अप्यये-

पोनप्त्रीयामिष्टिन्निर्वपेरन्यदि सोदका स्यादप्यनुदकायामिति धा-
नञ्जप्य: ॥ १५ ॥

अथ विनशनादारभ्य प्लक्षं प्रास्रवणपर्यन्तस्यानुष्ठानं प्रशंसति ।

**चतुश्चत्वारिꣳशदाश्वीनानि सरस्वत्या विनशनात् प्लक्षः प्रास्रवणस्तावदितः स्वर्गो लोकः सरस्वती सम्मितेनाध्वना स्वर्गं लोकं यन्ति ॥ १६ ॥**

सरस्वतीविनशनप्रदेशादारभ्य गतां चतुश्चत्वारिंशदाश्वीनः प्रमाणप्लक्षः प्रास्रवणः एकोप्यश्व एकेनाहोरात्रेण यावन्तमध्वानं गच्छति तावानेकाश्वीनः तथाविधचत्वारिंशदाश्वीनैर्यावान-ध्वा भवति प्लक्षप्रस्रवणो भवति आश्वीन इत्यस्यैकाहगताश्वीने-धाइतः स्वर्गोलोक इत्युक्तं नैष दोषः सहस्राश्विनोस्यान्त-र्भावात् ॥ १६ ॥

अथास्मात् शत्रादुत्थानं चतुर्विधन्तत्रैकमुत्थानं विवक्षुराह ।

**एतेन वै नमी साप्योवैदेहोराजाञ्जसा स्वर्गं लोक-मैदञ्जसागामेति तदञ्जस्कीयानामञ्जस्कीयत्वं ॥ १७ ॥**

पूर्वमेतेन सत्रेण सप्यपुत्रोवैदेहोविदेहदेशाधिपतिर्नमीनाम राजा अञ्जसा शीघ्रं स्वर्गं लोकमैत् तस्मादयमपि स्वर्गमञ्जसा आगमेमेति ब्रूवन् तत् तस्मादञ्जस्कीयानां सारस्वतसत्रावय-वभूतानामञ्जस्कीयत्वं ॥ १७ ॥

अथ साप्यस्य सत्रोत्थानविधिं दर्शयति ।

स एतदवभृथमभ्यवैद्य एष उत्तरेण स्थूलार्म्मं ह्रद-स्तद्वास्य शतङ्गावः सहस्रं सम्पेदुः ॥ १८ ॥

स नमो एतत् एतस्मादवभृथमभ्यवैदेवागच्छत् एतच्छब्दो-क्तं विवृणोति य एष प्रसिद्धः सरस्वत्या उत्तरेण स्थूलार्म्मन्देश-मतुल्लो ह्रदोवर्त्तते तस्मिन्नित्यर्थः कुतस्तस्मिन्नेव नमो प्राप्तवा-निति तदुच्यते तद्वा अस्मिन् हि शतसंख्याकागावो ब्राह्मणभो-जनाद्यर्थमानीताः अपत्योत्पादनद्वारा सहस्रं सम्पेदुः सम्पन्ना अभवन् ॥ १८ ॥

तदुत्थानमाह ।

शते गोष्वृषभमप्युत्सृजन्ति ता यदा सहस्रं सम्पद्यन्तेथो-त्थानं ॥ १९ ॥

ये शते गोषु शतं वत्सतरीषु गवां प्रजननार्थं वृषभमप्युत्सृ-जन्ति अतिसृजन्ति स्पष्टमन्यत् अत्रोत्थाने सूत्रकारः किञ्चिद्विशे-षमाह शते गोष्वृषभमप्युत्सृजन्तीति वत्सतरीशते गर्भिणीषु ता यत्र गव्यमभयं स्यात्तत्र रक्षेयुः पुङ्गवैस्तासां भुञ्जीरन् सर्पिषा च तासु सहस्रं सम्पन्नासु पूर्व्वपक्षे गामतिरात्रं हुत्वा दत्वैता उत्तिष्ठेयुरिति पुङ्गवैर्भोगः स्वोपकरणवाहनादिद्वारकं ॥ १९ ॥

अथ द्वितीयमुत्थानं दर्शयति ।

यदा सर्व्वज्यानिं जीयन्तेथोत्थानं यदा गृहपतिर्म्रियते-थोत्थानं ॥ २० ॥

सव्वज्यानिः सर्वहानिः ॥ २० ॥

अथ तृतीयमुत्थानं दर्शयति ।

यदा प्लक्षं प्रास्रवणमागच्छन्त्यथोत्थानं ॥ २१ ॥

यत्र प्लक्षं प्रास्रवणं तद्धि सरस्वत्या उत्पत्तिस्थानन्तदागत्य पूर्व्वोक्तनिमित्ताभावेपि सत्रादुत्तिष्ठेयुः ॥ २१ ॥

अस्मिन्नुत्थानेनुष्ठेये विशेषमाह ।

प्लक्षं प्रास्रवणमागम्याग्नये कामायेष्टिं निर्व्वपन्ते तस्या-मश्वाञ्च पुरुषीञ्च धेनुके दत्वा ॥ २२ ॥

तं समागम्यातिरात्रात् पूर्व्वमग्नये कामायेष्टिः कर्त्तव्येत्येके अतिरात्रात्परमन्ये पुरुषी दासी धेनुके नवप्रसूतिके सवत्से इत्यर्थः तथा च सूत्रं यदा प्लक्षं प्रास्रवणमागच्छन्त्यथोत्थानमिति तदा प्रा-स्येयुरिति धानञ्जप्यः प्लक्षं प्रास्रवणं प्राप्य पुरस्तादतिरात्रस्या-ग्नये कामायेष्टिः स्यादिति शाण्डिल्यः उपरिष्टादिति धानञ्जप्य-स्तस्या मश्वाञ्च पुरुषीञ्च धेनुके यज्ञोपकरणशेषांश्चाभिरूपायान्यस्मै दद्युः स्वामिनो हि सर्व्वे सत्रेषु तेषां प्रतिग्रहणन्न विद्यत उक्तो-वभृथो ब्राह्मणेनापृष्ठशमनीयमेतदिति ॥ २२ ॥

अथावभृथे शेषमाह ।

कारपचवं प्रति यमुनामवभृथमभ्यवयन्ति ॥ २३ ॥

कारपचवोजनपदविशेषः तन्मध्ये यमुना गच्छति तां प्राप्य

तत्रावभृथन्न कुर्य्युः कदाचिदपि सरस्वत्यामवभृथोन कर्त्तव्यः तथा च सूत्रकारः न सकच्चन सरस्वत्यामवभृथमभ्यवेयुर्द्दैवयजनभूता ह्येषा भवत्यविद्यमाने सरस्वत्या एवोद्धारं पार्श्वतस्त्विति अविद्यमाने सरस्वतीप्रान्ते नद्यान्तरसम्भवे सरस्वत्या एव जलमुद्धृत्यावभृथार्थं उद्धृत्यापि जलं पार्श्वत एवावभृथः कर्त्तव्यः न तत्रेत्यर्थः ॥ २३ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चविंशाध्यायस्य
दशमः खण्डः।

---

अथ एकादशः खण्डः।

अथेन्द्राग्न्योरयनाख्यं प्रजापतिभवनसाधनं सारस्वतं द्वितीयं सत्रमाह।

अतिरात्रस्त्रिवृत्पञ्चदशमिन्द्राग्न्योरयनं गोआयुषी इन्द्रकुक्षी अतिरात्रः ॥ १ ॥

प्रायणीयोतिरात्रः प्रथममहः अथ त्रिवृत् पञ्चदशौ व्यत्यासेन पञ्चहयेप्यनुष्ठातव्यौ तदिन्द्राग्न्योरयनं अत्र गोआयौ पञ्चयोरन्ते इत्यङ्गा क्रमइति केचित् अपरे तु पञ्चयोस्त्रिवृत्पञ्चदशयोः व्यत्यासः त्रिवृत्पञ्चान्ते गोष्टोमः पञ्चदशपञ्चान्ते आयुष्टोम इत्याहुः चतुर्व्विधोत्थानमप्यत्रापि पूर्ववदेव ॥ १ ॥

अथास्य फलं सप्ररोचनमाह।

एतेन वा इन्द्राग्नी अत्यन्याद्देवता अभवतामत्यन्या प्रजा-भवन्ति य एतदुपयन्ति॥ २॥

सिद्धमिदं॥ २॥

अथ कर्त्तृद्वारा प्रशंसति।

इन्द्राग्नी वै देवानामोजिष्ठा ओजिष्ठा भवन्ति यएत-दुपयन्ति॥ ३॥

गतमिदं॥ ३॥

अथ विहितक्रमेणैवानुष्ठेयं प्रशंसति।

अथ यत् त्रिवृत्पञ्चदशमिन्द्राग्नयोरयनं गोआयुषी इन्द्रकुक्षी भवतोसंव्याथाय॥ ४॥

असंव्याथाय दार्ढ्यायेत्यर्थः केवलं त्रिवृत्पञ्चदशाभ्यामेव सत्र-समापने अदार्ढ्यः स्यात् अतस्तत्परिहाराय गोआयुषी भवतः ताभ्यां वै कथं दृढ़त्वमिति तदुच्यते गोआयुषी ऐकाहिके गौरी-वितस्वरे इति कल्पकारेणोक्तत्वादैकाहिके अतस्तत्र त्रिवृदादीना-ञ्चतुर्णामनुष्ठानसम्भवादसम्बाधत्वं अत्र सत्रान्तविषये सूत्रं एते-नैवोत्तरे व्याख्याते तत्राग्नये कामायेष्टिरपोनप्त्रीयञ्च स्रुवहोमौ स्यातामिष्टिरेवाग्नये कामायोपरिष्टाच्चेदतिरात्रस्येति शाण्डिल्यः अनयोः सारस्वतयोः पूर्व्ववदित्ययनाभावादन्तिमातिरात्रमध्य-

एवोक्तेष्टिविधानमिति सूत्रकारमते अग्नये कामाय स्वाहा अपाद-
म्ने स्वाहेति स्रुवेणैवापरहोमा नत्विष्टितन्त्रमस्ति अन्यथा सुत्या-
व्यवधानां स्यादतिरात्रात्परमिति शाण्डिल्यपक्षे इष्टिरेव कर्त्तव्या
पुनः सुत्याभावादिति सूत्रार्थः त्रिवृत्पञ्चदशयोः पक्षयोर्व्यत्यासव-
तोरेवमङ्गः व्यत्यास इति पक्षावुक्तौ तत्र सूत्रकारः पर्वणोरि-
न्द्रकुक्षौ पूर्वस्याग्निष्टोमौ त्रिवृतौ राथन्तरबार्हते पूर्वपक्ष उक्थ्ये
पञ्चदशे राथन्तरबार्हते अपरपक्ष इति गौतमस्तेन पक्षयोः
सञ्चारयेत्सर्वत्र त्वेव त्रिवृत्पञ्चदशे व्यत्यासं स्यातां तयोर्यस्मिन्ननु-
पेते पर्व्वा गच्छेत्तेनोत्तरं पक्षमुपक्रमेतैतेनोक्तमुत्तरस्य त्रिकद्रुके-
ष्विति गोआयुषोविश्वजिदभिजितोर्येन्द्रस्य कुक्षिस्थानीयत्वादिन्द्र-
कुक्षौ इति नामधेयं तावनयोः सारस्वतयोः क्रमेण पर्वणोर्भवतः
उत्तरस्मिन् सारस्वते तु व्यत्यासे पौर्णमास्यामभिजिदमावास्यायां
विश्वजिदिति क्रमः अथ गौतमस्य पक्षव्यत्यासं दर्शयति द्वयोः
पूर्व्वस्य सत्रस्य पूर्व्वपक्षे सर्व्वत्र त्रिवृदग्निष्टोमएव कार्य्यः अपरपक्षे
पञ्चदश उक्थ्य इति ब्राह्मणार्थः तत्र राथन्तरं प्रथममहः द्विती-
यन्तमिति व्यत्यासमजामितार्थं तेन पक्षयोः सञ्चारयेदित्यस्याय-
मर्थः त्रिवृत्पञ्चदशेन कदाचिदपि पक्षयोः सञ्चारयेत् तत्र नियता-
वेव भवतामित्यर्थः अथ पूर्वस्मिन् पक्षे दर्शपौर्णमासञ्च निपतेत्
तद्वदत्रापि त्रिवृतं पञ्चदशाविति गौतमः अथ स्वमतमाह सर्वत्र
त्वित्यादिना तस्यायमर्थः यथा पूर्वपक्षमुभावपि साम्येन व्यत्यसे-
दिति यदा द्विचयवत् स्यादेकस्मिन् पक्षे समप्रयोगोन सिध्यति
तदा कथमित्याह तयोर्यस्मिन्ननुपेते इत्यादिनानयोरेव व्यत्यास-
करणे यस्मिन्ननुष्ठिते पर्वागच्छेत् तत्रेन्द्रकुक्षिं कृत्वा तदनन्तरं

पूर्वमहः तमुपक्रमेत न पुनः प्रथमप्रवृत्तेरिति अयं न्याय्यः उत्तर-त्रिकद्रुकेष्वपि समानः अथ द्वितीयस्य सारस्वतस्य षोड़शिमन्ता-वतिरात्रौ द्रुतिवातवतोरयनेन क्लृप्ते त्रिवृतं पञ्चदशे अग्निष्टोम-स्त्रिवृदुक्थ्यं पञ्चदशं राथन्तरं .त्रिवृदाहतं पञ्चदशं ऐकाहिके गो-आयुषी इत्यादि मशककल्पोद्रष्टव्यः॥ ४॥

इति ताण्ड्यमहाब्राह्मणे पञ्चविंशाध्यायस्य
एकादशः खण्डः।

---

अथ द्वादशः खण्डः।

अथार्य्यम्णोरयनाख्यं स्वर्गसाधनं तृतीयं सारस्वतं सत्रमाह।

**अतिरात्रोज्योतिर्गौरायुस्त्र्यहोविश्वजिदभिजिताविन्द्रक्रतू अतिरात्रः॥ १॥**

अमावास्यायामुपक्रम्य आपरिसमाप्तेः ज्योतिर्गौरायुरिति त्र्यहः एवानुष्ठेयः पश्चाद्विश्वजिदभिजितातिरात्र इति केचित् सूत्रकारमतन्तु पर्वणोरेवाभिजित्पश्चाद्विश्वजिदस्मिन्नक्षपे ते पर्वाग-च्छेदित्यादिकं पूर्वमेव प्रदर्शितं अत्र तृतीयस्य सारस्वतस्य षोड-शिमन्तावतिरात्रावैकाहिकास्त्रिकद्रुकाः विश्वजिदभिजितौ वा गौरीवितः स्वरा इत्यादिकः कल्पोद्रष्टव्यः॥ १॥

अथ विहितसत्त्रस्य स्वर्गसाधनत्वं वक्तुमर्य्यम्णोऽनेन स्वर्गप्राप्तिं दर्शयति ।

एतेन वार्य्यमैतं लोकमजयत् ॥ २ ॥

स्पष्टं ॥ २ ॥

एतेनेत्युक्तं विवृणोति ॥

यस्माद्धुरर्य्यम्णः पन्था इत्येषवाव देवयानः पन्थाः ॥ ३ ॥

यदि अर्य्यम्ण आदित्यमूर्त्तिभेदस्य पन्था अयमित्याहुः सएष-एव खलु देवयानः पन्थाः ॥ ३ ॥

अस्त्वेवं किन्ततो भवतीत्याह ।

प्रदेवयानं पन्थानमाप्नुवन्ति य एतदुपयन्ति ॥ ४ ॥

पष्टं ॥ ४ ॥

अनेन देवयानप्राप्तिं प्रत्यक्षदर्शनेन साधयति ।

तस्मादेषोरुणतम इव दिव उपदृशेरुणतमइव ह्वि पन्थाः ॥ ५ ॥

देवयानमार्गस्यार्च्चिरादिरूपत्वात्तेन गतोप्यर्य्यमा अरुण-तमोदिवि दृश्यते प्रातःकालीनआदित्योर्य्यमा सोरुणतमो भवति ॥ ५ ॥

अत्र विहितान्यहान्यनूद्य प्रशंसति ।

अथ यत् ज्योतिर्गौरायुस्त्र्यहो विश्वजिदभिजिताविन्द्रकुक्षी भवतोसंख्याथाय ॥ ६ ॥

सिद्धमिदं ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चविंशाध्यायस्य
द्वादशः खण्डः।

---

अथ त्रयोदशः खण्डः।

उक्तानि त्रीणि सारस्वतानि अथ दार्षद्वतमिष्ट्ययनमेकयजमानकं विवक्षुराह।

संवत्सरं ब्राह्मणस्य गारक्षेत् संवत्सरं व्यर्णैतन्ध्वेग्निमिन्धीत संवत्सरे परीणह्यग्नीनादधीत ॥ १ ॥

अस्योत्तरस्य चेष्टयनयोः साधारणं नियममाह सूत्रकारः दार्षद्वततौरयोः व्रतानि तिष्ठेद्दिवासीत नक्तं हविरुच्छिष्टभोजी स्यादधः सम्बिश्य मांसाम्ललवणाशी न स्त्रियमुपेयाद्यथा प्रकृत्याहिताग्निवृत्तिं वर्त्तयेदिति एवं सामान्य नियमोपेतः संवत्सरं ब्राह्मणस्य श्रुताध्ययनसम्पन्नस्य ऋत्विजः आचार्य्यस्य वा प्रायश्चित्तार्थं गारक्षेत् दार्षद्वते संवत्सरं ब्राह्मणस्य गारक्षेत् ऋत्विज आचार्य्यस्य वेति द्राह्यायणः तदनन्तरमेकसंवत्सरं स-

रस्वत्यास्तीरे नेतव्यत्वे नानापुराणि ग्रामाः सन्ततेषु मध्ये व्यग्नीं नैतव्यत्वे एकाग्नेरीपासनस्य परिचर्य्यया संवत्सरमग्निं परिचरेत् पूर्व्वमाहिताग्निश्चेत् अग्निहोत्रेण परिचरेत् ततः संवत्सरादूर्द्ध्वं परीणं नाम स्थली कुरुक्षेत्रे तस्यामग्नीनादध्यात् आधाय च यथाकालमन्वारम्भणीयेष्ट्वा दर्शपूर्णमासावक्लृत्वैव दार्षद्वतं कर्त्तुं तत् स्थानं विसृजेदिति केचिद्दर्शपूर्णमासाभ्यामिष्ट्वेत्यपरे दार्षद्वतानङ्गत्वेपि तयाग्नित्वत्वादिति तेषामभिप्रायः पक्षद्वयेपि दार्षद्वतार्थगमनमाहितानग्नीन् परिगृह्यैव कुर्य्यात् पूर्व्वमेवाहिताग्निश्चेत्तदुक्तपक्षत्रानुतिष्ठेत् किन्तु तदानीं तानेवाग्नीन् इष्ट्यर्थं परिगृह्यानीयाग्निहोत्रमेव गृहीत्वा गच्छेत् ॥ १ ॥

इदानीमिष्ट्ययनोपक्रमं दर्शयति ।

**स दक्षिणेन तीरेण दृषद्वत्या आग्नेयेनाष्टाकपालेन गम्यापरासीयात् ॥ २ ॥**

सरस्वतीदृषद्वत्योः संभेदं दृषद्वतीदक्षिणेन तीरेणोपक्रम्याष्टाकपालद्रव्येणाग्निदेवताकेनेष्ट्वा तत्प्रभृति षट्त्रिंशत् प्रक्रमवर्ज्जं गम्यापरासे प्रासन् तत्र तत्रेष्टिं कुर्व्वन्नेव सारस्वतवद्गच्छेत् ॥ २ ॥

कुरुक्षेत्रस्य देवयजनत्वं प्रतिपादयितुमाख्यायिकामाह ।

**इन्द्रश्च रुशमा चाऽशं प्रास्येतां यतरोनौ पूर्वो भूमिं पर्य्येति स जयतीति भूमिमिन्द्रः पर्य्यैत् कुरुक्षेत्रऽ रुशमा साब्रवीदजैषन्त्वेत्यहमेव त्वामजैषमितीन्द्रोऽब्रवीत्तौ देवेषु-**

पृच्छेतां ते देवा अब्रुवन्नेतावती वाव प्रजापतेर्व्वेदिर्य्या-
वत् कुरुक्षेत्रमिति तौ न व्यजयेतां ॥ ३ ॥

पूर्व्वं इन्द्रश्च रुशमा च ब्रह्मवादिनौ कृत्स्नाभूमिपरिभ्रमणस्य शीघ्रकरणार्थमेवं पणं प्रास्येतां प्रक्षिपतां जयप्रकारमुच्यते तावा-वयोर्म्मध्ये यतरः पूर्व्वभावी सन् भूमिं परिगच्छति स जयतीत्येवं समयमाभाष्येन्द्रो भूमिं पर्य्यैत् रुशमा तु कुरुक्षेत्रं तौ तथा कृत्वा पुनरागत्य परस्परस्ममेव जयोऽममैव जय इत्यब्रूतां तौ विवदमानौ देवेष्वपृच्छेतां तौ देवा इदमब्रवीत् कुरुक्षेत्रमेव प्रजापतेर्व्वेदिः तत्रैव सर्व्वा भूमिः वसिता एतावती वै पृथीवी यावती वेदि-रिति श्रुतेरित्यभिप्रायः अतउभाभ्यामपि भूपरिगमनस्य समत्वा-दुभयोरपि जयः समान एवेति अतस्तौ नव्यजयेतां एतावता कुरुक्षेत्रमेव भूमेः प्रशस्ततरोदेवयजनप्रदेश इत्युक्तं भवति तस्मा-दुत्थानकालः ॥ ३ ॥

अवभृथस्नानमाह ।

स य आग्नेयेनाष्टाकपालेन दक्षिणेन तीरेण दृषद्वत्याः
शम्यापरास्येति त्रिप्लक्षान् प्रति यमुनामवभृथमभ्यवैति
तद्देव मनुष्येभ्यस्तिरोभवति ॥ ४ ॥

यदुक्तप्रकारेणेति सः त्रिः प्लक्षात् जनपदं प्राप्य तत्रैव यमु-नायामभ्यवैति तत्रैव हि देशे दृषद्वती मनुष्येभ्यस्तिरोभूता बहुद-कापि सती तत्रैवान्तर्हिता भवतीत्यर्थः अत्र सूत्रं तत्र शम्याप्रासनं यथा सारस्वतेषु नतु प्रक्रमान् प्रक्रामेत् कासिष्टिमेकैकेनाह्ना

संस्थापयेत् दृषद्वत्या दक्षिणेन तीरेणेयात्तस्याः प्रभव्यमश्वं प्राप्यैतयेष्ट्वा निःप्रक्षावहरणं प्रति यमुनामवभृथमभ्यवेयाद्यत्र क्वच ततोदूरे यमुना स्यात्तत्रैतयेष्ट्वा स्वयं सामगायन्नवभृथमभ्यवेयादगायन्वा प्रव्रजिष्यतोयनमिदमन्य इति धानञ्जप्यस्तदेव मनुष्येभ्यस्तिरोभवतीति नग्रामं पुनरेयादितीव स्वर्गल्लोकमाक्रमते व्यावर्त्तते श्रेयान् भवतीति चोदकान्तर्द्धानाद्वा यथासरजसइतीति ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चविंशाध्यायस्य
त्रयोदशः खण्डः ॥

---

अथ चतुर्दशः खण्डः ।

अथ तुरायणन्नामिव्ययनं सर्व्वर्द्धिसाधनं सत्रमाह ।

आग्नेयोष्टाकापाल ऐन्द्र एकादशकपालो वैश्वदेवश्चरुः ॥ १ ॥

आग्नेयोष्टाकपाल इत्यादयस्तिस्र इष्टयोऽनुसवनं क्रमेण संवत्सरपर्य्यन्तमहरहः कर्त्तव्यः एका च हविष्केष्टिरियं दर्शपूर्णमासवत् तथाच सूत्रं तत्र तिस्र इष्टयः पूर्व्वाह्ण एका पृथक्च मध्यन्दिनापराह्णयोस्तासु पृथगनुपूर्व्वं हवींषि यान्युक्तानि ब्राह्मणेनैका

वैव स्यात्तस्यां तानि सर्व्वाणि स्युः संवत्सरादूर्द्ध्वमवश्यमभ्यवेयात्तत्र सामगानमिति तएवं सतः स्वयमेव कृष्णाजिनं प्रतिमुञ्चते ॥ १ ॥

तद्विधाय स्तौति ।

**अदीक्षितः कृष्णाजिनं प्रतिमुञ्चते यददीक्षितः कृष्णाजिनं प्रतिमुञ्चते या मानुष्यृद्धिस्तान्तेनर्द्धोति ॥ २ ॥**

दीक्षानाम हि देवविशेषभावजन्मस्वीकारः अतस्तद्राहित्येन कृष्णाजिनप्रतिमोक्षात् मानुषीं वृद्धिमाप्नोति तिष्ठेद्दिवारात्रावासीतेत्यादीक्षयनद्वयसाधारणं यत्तत्परः सूत्रकारेणोक्तं अस्माभिः पूर्व्वायणादावुदाहृतं ॥ २ ॥

तत्सिद्धवदनूद्य प्रशंसति ।

**अथ यत्तपस्तप्यते या दैवी तां तेन ॥ ३ ॥**

तपसा देवभावप्रतिबन्धकपापक्षयाद्दैवीसमृद्धियुक्ता ॥ ३ ॥

अथ विहिता इष्टी क्रमेणानूद्य प्रशंसति ।

**यदाग्नेयोष्टाकपालो भवत्यग्निमुखा वै देवता मुखत एव तद्देवताऋघ्नोत्यथो प्रातःसवनमेव तेनाप्नोत्यथ यदैन्द्रएकादशकपालो भवत्यैन्द्रं वै माध्यन्दिनꣳसवनम्माध्यन्दिनमेव सवनं तेनाप्नोत्यथ यद्वैश्वदेवश्चरुर्भवति वैश्वदेवं वै तृतीयसवनं तृतीयसवनमेव तेनाप्नोति ॥ ४ ॥**

निगदसिद्धमेतत् ॥ ४ ॥

अथैतस्य प्रयोक्तृसम्बन्धप्रदर्शनद्वारेण फलं दर्शयति ।

एतेन वै तुरोदेवमुनिः सर्व्वामृद्धिमार्ध्नोत्सर्व्वामृद्धि-मृध्नोति य एतदुपैति ॥ ५ ॥

स्पष्टं । चत्वस्त्रं संवत्सरमहरहस्तौरेण यजेत पश्चाद्वैत्रीपचस्य पञ्चम्यामिति गौतमो व्रतोपायनीयमोदनमभिलाकेशश्मश्रूणि वापयित्वाहतं वसनं परिधाय परिसमुह्याग्नीन् परिस्तीर्य्येत्यादि द्रष्टव्यं ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चविंशाध्यायस्य
चतुर्दशः खण्डः ।

---

अथ पञ्चदशः खण्डः ।

अथ प्रतिष्ठासाधनं सर्पाणां सत्रमाह ।

अतिरात्रावभितोऽग्निष्टोमामध्ये सर्व्वे दशदशो संवत्स-रीद्वादशोविषुवान्सर्पसामानि विषुवति क्रियन्ते ॥ १ ॥

प्रायणीयोदयनीयौ सषोडशिकावतिरात्रावुभयतो भवतः मध्ये सर्व्वाण्यहानि अग्निष्टोमसंस्थानि अतिरात्रद्वयसहितः सर्व्वोऽपि

संवत्सरोदगस्तोमको भवति मध्यमन्तु विषुवदहोद्वादशस्तोमकः तत्र सर्पसामानि क्रियन्ते व्रतानि कल्पे निर्द्दिष्टानि अत्र द्वादशी विषुवानिति विषुवत्संकीर्त्तनादभिगरापगरयोश्च गवामयनं महाव्रतएव वर्त्तमानयोरिह विधानाद्गवामयनिकान्यहान्यग्निष्टोममात्रविकृतीनि दशस्तोममात्रविकृतीनि च लिङ्गादत्र भवितव्यानि तथाहि तवत्यं ब्राह्मणं अभिगरापगरौ भवतो निन्दत्येनानन्यः प्रान्यः शंसतीति नैवं सूत्रकारेणैवमाशङ्क्य कल्पानुसारेणैव परिहृतत्वादाह सूत्रकारः सर्पसत्रङ्गवामयनं स्तोमसंख्याविकृतं स्यादित्येके षण्डकुषण्डावभिगरापगराविति ह्याहेति प्रत्यक्षविहितं त्वार्षेयकल्पेन तत्रानुमानन्न विद्यतेऽभिगरापगरावेवोपोत्तमेऽहनि स्यातामिति अतः कल्पकारेणैकेनैव विराजा छन्देन पुनः पुनः अभ्यासेन सर्पसत्रस्य कल्पितत्वादभिगरापगरावप्युत्तमेहन्येव सर्व्वाण्यहानि तु विराजछन्देन सर्व्वोदशीति कल्पवचनात्तथैवानुष्ठेयानि अत्राश्वलायनः सर्पाणामयनङ्गो आयुषोदशीस्तोममनुलोमेन षण्मासान् प्रतिलोमेन षट्ज्योतिः द्वादशस्तोमोविसुवतस्थाने प्रकाशमापेयुरिति ॥ १ ॥

अथैतस्य फलं सम्प्ररोचनमाह।

**एतेन वै सर्पाएषु लोकेषु प्रत्यतिष्ठन्नेषु लोकेषु प्रतितिष्ठन्ति यएतदुपयन्ति ॥ २ ॥**

स्पष्टं ॥ २ ॥

अथास्य सर्पायणत्वमुपपादयितुं पूर्व्ववृत्तं सर्पाणां गृहपत्यादिविभागं तन्नामनिर्द्देशपुरःसरं दर्शयति।

जर्व्वरो गृहपतिर्धृतराष्ट्र ऐरावतो ब्रह्मा पृथुश्रवा-दौरे श्रवसउद्गातामृलावस्त्वाजगावश्च प्रस्तोतृप्रतिहर्त्तारौ दत्तस्तापसोहोता शितिपृष्ठो मैत्रावरुणस्तक्षको वै शालेयो ब्राह्मणाच्छंसी शिखानुशिखौ नेष्टा पोतारावरुण आग्नी-ध्रावाकस्तिमिर्घौदौरे श्रुतोग्नीत् कौतस्तावध्वर्यु अरिमेज-यश्च जनमेजयश्चार्व्वुदो ग्रावस्तुदजिरः सुब्रह्मण्यस्य कपि-शंगावुन्नेतारौ षण्डकुषण्डावभिगरापगरौ ॥ ३ ॥

कौ तु तौ कुतस्तस्य पुत्रौ अध्वर्य्युप्रतिप्रस्थातारौ इत्यर्थः चक्रपिशङ्गावपि लिलित्वा उन्नेतृकार्य्यकर्त्तारौ अभिगरस्तुतिरप-गरो निन्दिता तौ महाव्रते ब्राह्मणशूद्राभ्यां कर्त्तव्यौ तद्वदत्राप्य-पोत्तमेहनि अभिगरापगरयोः कर्त्तारौ षण्डकुषण्डौ भवतः सुज्ञा-नमन्यत् । ३ ॥

अथ सप्ररोचनानि फलान्तराण्याह ।

एतेन वै सर्पा अपमृत्युमजयन्नपमृत्युञ्जयन्ति यएतदुप-यन्ति तस्मात्ते हित्वा जीर्णान्त्वचमतिसर्पन्त्यपहित मृत्युम-जयन् सर्प्पा वा आदित्या आदित्यानामिवैषां प्रकाशो भवति य एतदुपयन्ति ॥ ४ ॥

स्पष्टोर्थः अत्र सर्पसत्रस्य षोड़शिमतावतिरात्रौ जनुषैकर्च्चयोः

सफपौष्कले श्यावाश्वस्तस्य वै लोके गौरीवितं समानमितरं विराजा छन्देन सर्व्वोद्गीत्येवमादिकः कल्पोद्रष्टव्यः॥ ४॥

इति ताण्ड्यमहाब्राह्मणे पञ्चविंशाध्यायस्य
पञ्चदशः खण्डः।

---

अथ षोड़शः खण्डः।

अथ प्रजातिसाधनन्त्रिसंवत्सरं सत्रमाह।

गवामयनं प्रथमः संवत्सरोऽथादित्यानामथाङ्गिरसां ॥१॥

स्पष्टं॥ १ ॥

अथ क्रमेण विहितसंवत्सरत्रयं प्रशंसति।

एतेन वै गावः प्रजातिं भूमानमगच्छन्प्रजायन्ते बह्वो भवन्ति य एतदुपयन्त्येतेन वा आदित्या एषु लोकेषु प्रतितिष्ठन्ति य एतदुपयन्त्येतेनवा अङ्गिरसः स्वर्गं लोकमायन् स्वर्गं लोकं यन्ति य एतदुपयन्ति॥२॥

सर्व्वं त्वेतेनेत्येतच्छब्देन त्रयसंवत्सरसत्रं परिगृह्यते तथानुष्ठायिनां फलत्रयसंकीर्त्तनमववुद्वानुवादः॥ २ ॥

अथ मुख्यं फलं सप्रशंसनमाह।

परआह्लारस्त्रसदस्युः पौरुकुत्सो वीतहव्यः आयसः कक्षीवानौशिजस्त एतत्प्रजातिकामाः सत्रायणमुपायꣳस्ते सहस्रꣳ सहस्रं पुत्रानपुष्यन्नेवं वाव ते सहस्रꣳ सहस्रं पुत्रान् पुष्यन्ति य एतदुपयन्ति ॥ ३ ॥

अह्लारस्य ऋषेरपत्यमाह्लारः स च परनामकः अयसः पुत्रः आयसः देविकाशिंशपेत्यादिना आत्वं उशिक्पुत्रः कक्षीवान् शिष्टं निगदसिद्धं अत्र कल्पः त्रिसंवत्सरस्य गवामयनेन न लृप्तः प्रथमः संवत्सरः आदित्यानामयनेन द्वितीयोऽङ्गिरसामयनेन तृतीय इति अत्र सूत्रकारः प्रथमोत्तमसंवत्सरयोर्व्यत्यासमाह पौर्णमासी प्रसवं त्रिसंवत्सरन्तस्य याथाकामी दीक्षाणां षष्टिरिति शाण्डिल्यः प्रथमोत्तमौ संवत्सरौ व्यतिहरेदिति धानञ्जय्योऽभिप्लवस्तोमपृष्ठप्रदेशरोहार्थमिति दीक्षाणां याथाकाम्यं द्वादशदीक्षाप्रभृतिष्वित्यर्थः अभिप्लवः स्तोमः पृष्ठ्यप्रदेशरोहार्थ इति व्यत्यासे प्रमाणद्वयोपन्यासः अभिप्लवस्य स्तोमोभिप्लवस्तोमः पृष्ठ्यस्य स्थानं पृष्ठ्यप्रदेशः तयोरुभयोरपि रोहासिद्धार्थमित्यर्थः तथा हि रोहो नाम कनीयसः स्तोमस्य प्रथमकरणं ज्यायसः पश्चात्करणं तद्विपरीतश्च प्रत्यवरोहः सच निन्दितः तथा हि तैत्तिरीयकं जामि वा एते कुर्वन्ति यज्ज्यायांसं स्तोममुपेत्य कनीयांसमुपयन्तीति अत्र व्यवहारे सति प्रथमेऽङ्गिरसामयने त्रिवृतोऽभिप्लवाः मध्यमे आदित्यानामयने त्रिवृत् पञ्चदशाः उत्तमे गवामयने सप्तदशादयोऽप्यभिप्लवेषु क्रियन्त-

इत्येवं स्तोमरोहसिद्धिः तथा प्रथमेऽङ्गिरसामयने पुरस्तात् पृष्ठाः सामा भवन्ति आदित्यानामयने मध्यतः पृष्ठाः गवामयने उपरिष्टात् पृष्ठाइति पृष्ठदेशरोहः सिध्यति तथा निदानमपि अत्रैके गवामयनमन्तः कुर्वन्ति प्रजापतिसत्रत्वादेतेन वै गावः प्रजातिं भूमानमगच्छत् प्रजायन्ते बहवो भवन्तीति स्तोमतश्चैवमयनानां रोहो भविष्यतीति ॥ २ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चविंशाध्यायस्य षोड़शः खण्डः ॥

---

अथ सप्तदशः खण्डः ।

अथ सर्व्वर्द्धिसाधनं प्रजापतेः सहस्रसंवत्सरसत्रमाह ।

अतिरात्रः सहस्रं त्रिवृतः संवत्सरा अतिरात्रः प्रजापतेः सहस्रसंवत्सरं ॥ १ ॥

स्पष्टं ॥ १ ॥

अथैतत् प्रसवसाधनत्वेन प्रशंसति ।

एतेन वै प्रजापतिः सर्व्वस्य प्रसवमगच्छत्सर्व्वस्य प्रसवं गच्छन्ति य एतदुपयन्ति ॥ २ ॥

स्पष्टं ॥ २ ॥

पुनरपि जरानिवृत्तिसाधनत्वेन प्रशंसति।

एतद्वै प्रजापतिर्जीर्य्या मूरउपैत्तेन जरामपाहतापजरां घ्नते य एतदुपयन्ति ॥ ३ ॥

जीर्य्या जरया मूरोमूढः प्रजापतिरेतत् सत्रमनुष्ठाय जरामपहतवान् जरामपघ्नत इत्येतत्सम्बन्धः ॥ ३ ॥

पुनरनूद्यैतस्य सर्वसमृद्धिसाधनं दर्शयति।

तदेतत्प्रजापतेः सहस्रसंवत्सरमेतेन वै प्रजापतिः सर्व्वामृद्धिमार्ध्नोत् सर्व्वामृद्धिमृध्नुवन्ति य एतदुपयन्ति ॥ ४ ॥

स्पष्ट ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे पञ्चविंशाध्यायस्य
सप्तदशः खण्डः।

---

अथ अष्टादशः खण्डः।

अथ विश्वाधिक्यसाधनं विश्वसृजामयनाख्यं सहस्रसंवत्सरं सत्रमाह।

पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः पञ्चपञ्चाशतः पञ्चदशाः पञ्चपञ्चाशतः सप्तदशाः पञ्चपञ्चाशत एकविंशा विश्वसृजाꣳ सहस्रसंवत्सरं ॥१॥

पञ्चसंख्याकाः पञ्चाशतः सपञ्चाशद्द्विशतसंवत्सरास्त्रिवृत्स्तोमकाः भवेयुः एवं पञ्चदशादिष्वपि द्रष्टव्यं मिलित्वैतद्विश्वसृजान्देवानां सहस्रसंवत्सरं सत्रं ॥ १ ॥

अथास्याधिकारिसिद्धये विश्वसृजसम्बन्धं दर्शयति ।

एतेन वै विश्वसृजइदं विश्वमसृजन्त यद्विश्वमसृजन्त तस्माद्विश्वसृजः ॥ २ ॥

पूर्व्वं सृष्ट्यादौ सृष्टिकामा देवा एतत् सत्रमनुष्ठाय सत्यसंकल्पाः सन्तः इदं विश्वमसृजन्त एतेषां विश्वसृजइति संज्ञाप्येतन्निमित्ता ॥ २ ॥

इदानीन्तनानामप्येतत्सत्रयाजिनां फलं दर्शयति ।

विश्वमेनाननु प्रजायते यएतदुपयन्ति ॥ ३ ॥

एतदुपेयुषः एनान्विश्वञ्जगत् अनुप्रजायते एतदनुष्ठातृभ्योहीनमुपचीयं जायते विश्वमपि एते विश्वस्य स्वामिनोभवन्तीत्यर्थः हीनइत्येनोः कर्म्मप्रवचनीयत्वं अत एनानिति द्वितीया एतेन वै विश्वसृज इत्युक्तं ॥ ३ ॥

के ते विश्वसृजः कथमेतदुपायन्निति तदुभयं दर्शयति ।

तपो गृहपतिर्ब्रह्म ब्रह्मेरापत्न्यमृतमुद्गाता भूतं प्रस्तोता भविष्यत्प्रतिहर्त्तार्त्तव उपगातार आर्त्तवाः सदस्याः सत्यꣳ होतर्त्तम्मैत्रावरुण उजोब्राह्मणाच्छꣳसी त्विषिश्चापचितिश्च नेष्टापोतारौ यशोऽच्छावाकोऽग्निरेवाग्नीध्रगो ग्रावस्तुद्‌गूर्गुन्नेता वाक्सुब्रह्मण्यः प्राणोऽध्वर्युरपानः प्रतिप्रस्थाता दिष्टिर्व्विशास्तावलं ध्रुवगोपमाशाहविष्येध्यहोरात्राविद्मवाहौ मृत्युः शमितैतेदीच्चन्ते ॥ ४ ॥

तपःप्रभृतिषु याः प्रसिद्धा देवतास्तास्तथैव गृह्यन्ते अप्रसिद्धास्तु तदभिमानिन्यो देवताः परिग्राह्याः एतासां विभज्य सत्रे विनियोगोऽस्माभिस्तैत्तिरीयब्राह्मणात् ऋचां प्राचीत्यस्मिन्ननुवाके प्रपञ्चितः आर्त्तवास्तदनुसम्बन्धिनः शीतोष्णवर्षाभिमानिन इत्यर्थः दिष्टिर्ब्रह्मण आज्ञा शिष्टं निगदसिद्धं ॥ ४ ॥

उक्तसर्व्वाधिक्यफलसाधनत्वसमर्थनाय पूर्वं विश्वसृष्ट्यर्थं सत्रमुपेयुषां देवानां स्वयम्भूः ब्रह्माविरभूदित्यस्मिन्नर्थे पूर्वतनं श्लोकमुदाहरति।

तदेषश्लोको विश्वसृजः प्रथमे सत्रमासत सहस्रसमं प्रसुतेन यन्तस्ते ह जज्ञे भुवनस्य गोपा हिरण्मयः शकुनो ब्रह्मनामेति ॥ ५ ॥

विश्वसृजो विश्वसृष्टिकर्त्तारस्तदर्थं प्रथमे सृष्टेः पूर्वंभूताः सत्रमासत कथमिति तदुच्यते सहस्रसमं सहस्रसंवत्सरं प्रसुतेन

सोमाभिषवेण यन्तः सन्त आसत ते ह त एव हेति विनिग्रहार्थीयः एवकारसमानार्थः भुवनस्य गोपा कृत्स्नस्य भूतजातस्य पालयिता एतत् सृष्टिप्रलयस्याप्युपलक्षणं अनेन स्वरूपं लक्षितं भवति हिरण्मयः हिरण्यमयः शरीरः हिरण्मयः पुरुषोदृश्यते हिरण्यश्मश्रुर्हिरण्यकेश इति हि श्रुत्यन्तरं शकुनः पक्षिरूपः अस्ति पक्षित्वेन श्रुतिषु सर्व्वत्र व्यपदेशः एकः सुपर्णः ससमुद्रं सुपर्णं विप्राः कवयः पुरः सपक्षीभूत्वेत्यादिषु ब्रह्मनाम ब्रह्मेति प्रसिद्धं यज्ञे प्रादुरभूदिति सम्बन्धः ॥ ५ ॥

एतत् सत्रफलभूतं ब्रह्मणः साक्षात्कारं प्रतिपाद्येदानीन्तनानुष्ठायिनामपि ब्रह्मणः सालोक्यादिफलं दर्शयति ।

**ब्रह्मणः सलोकताꣳ सार्ष्टिताꣳ सायुज्यं गच्छन्ति य एतदुपयन्ति ॥ ६ ॥**

सार्ष्टिः साम्यप्राप्तिः समानैश्वर्य्ययोग इत्यर्थः शिष्टं स्पष्टं अनेन प्रसङ्गात् अध्ययनादिप्रवर्त्तकानां श्रेयोनिमित्तं परदेवतास्मरणमपि कृतं भवति ॥ ६ ॥

अथ सर्व्वाधिकलक्षणं फलं दर्शयति ।

**तदेतद्विश्वसृजाꣳ सहस्रसंवत्सरमेतेन वै विश्वसृजः सर्व्वमिदमसृजन्त यदिदं किञ्च विश्वमसृजन्त तस्माद्विश्वसृजः विश्वमेनाननु प्रजायते य एतदुपयन्ति ॥ ७ ॥**

एतन्निगदसिद्धं दृतिवातवतोरयनेन क्लृप्तं विश्वसृजामयनं ज्योतिष्टोमेन वा विक्लृप्तेन ज्योतिष्टोमेन वा यथा स्तोमक्लृप्तेनेति कल्पो द्रष्टव्य इति अत्र विश्वसृजामपरिमितायुःसद्भावादधिकारः

इदानीन्तनानामपि कथमत्राधिकार इत्ययं विचारः षष्ठस्य सप्तमपादान्ते चिन्तितः सोऽत्र विरच्यते।

सहस्रवत्सरं सत्रं गन्धर्व्वादिनृणामुत।
रसायनेन सिद्धानां कुलकल्पोऽथ वोक्तितः॥
तदायुर्वाऽथ सार्द्धद्विशतनामुत मासगाः।
वत्सरोक्तिरुत द्वादशरात्रिषु दिनेषु वा॥
आद्योदीर्घायुषः सत्वान् नृणामेवाग्निसम्भवे।
द्वितीयोस्तु रसस्यायुर्हेतुत्वे तृतीयकः॥
कृत्स्नकर्त्तुः फलित्वेस्तु तूर्य्योऽर्थासम्भवे सति।
पञ्चमोस्तु चतुर्व्विंशत्युत्तमाः सन्निणोयदि॥
षष्ठोस्तु योमासएष संवत्सरइतीरणात्।
सहस्रमासानाधानादूर्द्ध्वं वेदस्तु सप्तमः॥
वत्सरप्रतिमा द्वादशरात्रय इति श्रुतेः।
न रात्रिष्वब्दशब्दोत्र प्रतिमायाविशेषणात्॥
स्वारस्यात्त्रिवृदा युक्तेरष्टमः पक्षइष्यते।
त्रिवृदादिपदैः स्तोमविशिष्टमहरुच्यते॥
नाहःसङ्घस्ततोऽहःसु गौणी संवत्सराभिधा।
तस्माद्विश्वसृजां सत्रे सहस्रदिनमिष्यते॥

इदमाम्नायते पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः पञ्चपञ्चाशतः पञ्चदशाः पञ्चपञ्चाशतः सप्तदशाः पञ्चपञ्चाशत एकविंशाविश्वसृजां सहस्रसंवत्सरसत्रे गन्धर्व्वादीनामेवाधिकारः तेषां दीर्घायुषः सद्भावादित्याद्यः पक्षः वसन्ते ब्राह्मणोग्निमादधीतेत्यादिविधानान्मनुष्याणामेवाहवनीयाद्यग्नयः सम्भवन्ति नान्येषां गन्धर्व्वादीना-

मिति चेत्तर्हि रसायनेन सिद्धानां दीर्घायुषां मनुष्याणामधिकार इत्यस्तु द्वितीयःपक्षः रसस्यारोग्यपुष्ट्यादिजनकत्वमेव नत्वायुष्यहेतुत्वमितिचेत् तर्ह्येकस्मिन् कुले समुत्पन्नानां पितृपुत्रपौत्रादीनां बहूनां सहस्रायुःसम्भवात् कुलाधिकार इति तृतीयः पक्षोस्तु क्रतुस्तत्कर्तुः फलं भवति न च पितृपुत्रपौत्रादिष्वेकोपि कृत्स्नं करोति तस्मान्नास्ति फलमिति चेत् तर्हि सत्रविधायकवचनबलादेव सत्रिणां दीर्घायुर्भविष्यतीति चतुर्थः पक्षोस्तु नह्यस्य वचनस्य सोऽर्थः सम्भवति तद्वाचकपदाभावात् नच कल्पयितुं शक्यते सम्भाविताऽयुष्काणामपि सत्रान्तरेषु प्रवृत्तानां दैवान्म्रियमाणानां तत्सत्रविधिबलादायुर्वृद्ध्यदर्शनादिति चेत् तर्हि पञ्चपञ्चाशतइत्यस्य शब्दस्यपुरुषपरत्वमङ्गीकृत्य सार्द्धद्विशतानां पुरुषाणामधिकारेऽभिहिते वत्सरचतुष्टयेन सत्रस्य सहस्रसंवत्सरत्वं सम्पद्यत इति पञ्चमः पक्षोस्तु चतुर्विंशति परमाः सत्रमासीरन्निति वचनादभ्यधिकानां न तत्राधिकार इति चेत् तर्हि योमासः ससंवत्सर इति वचनात् संवत्सरशब्दस्य मासपरत्वे सति सहस्रमासं सत्रमित्येष षष्ठः पक्षोस्तु अष्टमे वत्सरे उपनीतो द्वादशवर्षाणि वेदमधीत्य विंशतिवर्षवयस्को विवाहं कृत्वा जातपुत्रोग्निमादधीत तस्मादाधानादूर्ध्वमस्यायुषि न सन्ति सहस्रमासा इति चेत्तर्हि संवत्सरस्य प्रतिमा वै द्वादशरात्रय इति वचनात् संवत्सरशब्दो द्वादशरात्रिपरः तथा सति रात्रीणां द्वादशसहस्राणि सम्पद्यन्ते तासु च रात्रिषु षष्ट्युत्तरशतत्रयदिवसरूपसंवत्सरत्वेन गण्यमानासु त्रयस्त्रिंशत् संवत्सरेभ्य ऊर्द्ध्वं मासचतुष्टयं भवति तावत्परिमितश्चायुराधानादूर्द्ध्वमपि सम्भवन्तीति सप्तमः पक्षोस्तु संवत्सरप्रतिमा वै

द्वादशरात्रय इत्यस्मिन्वाक्ये संवत्सरशब्दो न रात्रिपरः किन्तु तेन शब्देन प्रतिमा विशिष्यते तस्मान्न सप्तमः पक्षोयुक्त इति चेत् एवन्तर्हि संवत्सरशब्दोदिनपरइत्यष्टमः पक्षोस्तु तथा सति त्रिवृतः संवत्सरा इत्यादिवाक्यानां स्वारस्यं भवति त्रिवृत् पञ्चदशसप्तदशएकविंश इत्येते शब्दाः स्तोमवाचकाः सन्तः स्तोमयुक्तएकैकस्मिन्नहनि यागरूपे लक्षणया वर्त्तंते सत्रेषु तथाविधप्रयोगबाहुल्यान्न त्वहःसङ्घे क्वचिदपि त्रिवृदादिशब्दाः प्रयुक्ताः तैश्च शब्दैः सामानाधिकरण्यात् संवत्सरशब्दः स्वावयवभूतेहनि अवयवलक्षणया वर्त्तते त्रिवृतः संवत्सराइत्युक्ते त्रिवृत्स्तोमकयागयुक्तान्यहानीत्युक्तं भवति तस्माद्विश्वसृजामयणामिदं सहस्रदिनमिति सिद्धान्तः।

मध्ये पृष्ठं पूर्व्वमुक्तं पञ्चविंशे ततः परं।
उक्तमङ्गिरसां सत्रं दृतिवातवतोस्ततः॥
तृतीयमयनं प्रोक्तञ्चतुर्थं कुण्डपायिनां।
तापश्चितं ततः प्रोक्तं ततो द्वादशवत्सरं॥
षट्त्रिंशद्वत्सरं प्रोक्तं शाक्यानामिह सप्तमं।
अष्टमं त्विह साध्यानां शतसंवत्सरं ततः॥
अग्नेः सहस्रसाव्यन्तु परं सारस्वतन्त्वयं।
दार्षद्वतं ततः प्रोक्तान्तुरायणमतः परं॥
एकैकोयजमानोऽत्र स्यादिष्टायनयोस्तयोः।
सर्पसत्रन्ततः प्रोक्तं ततस्त्र्यब्दं प्रकीर्त्तितं॥
द्वे सहस्रसमे पूर्व्वं तयोरुक्तं प्रजापतेः।
ततोविश्वसृजामुक्तमुक्तान्यष्टादशत्विह॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ७ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीर-
बुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते
माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे
पञ्चविंशाध्यायस्य अष्टादशः खण्डः।
पञ्चविंशोऽध्यायः सम्पूर्णः।
सम्पूर्णश्च ग्रन्थः।

## त्रयोदशाध्याये ।

खण्डः १—१२ स्तोमक्लृप्तिविधानम् ।

---

### अथ प्रथमः खण्डः ।



इति प्रथमः खण्डः ।

---

### अथ द्वितीयः खण्डः ।



इति द्वितीयः खण्डः ।

---

### अथ तृतीयः खण्डः ।

इति पञ्चमः खण्डः ।

---

अथ षष्ठः खण्डः ।



इति षष्ठः खण्डः ।

---

अथ सप्तमः खण्डः ।

इति सप्तमः खण्डः ।

---

अथ अष्टमः खण्ड ।



इति अष्टमः खण्डः ।

---

अथ नवमः खण्डः ।

इति एकादशः खण्डः।

---

अथ द्वादशः खण्डः।



इति द्वादशः खण्डः।

इति त्रयोदशाध्यायः।

---

चतुर्दशाध्याये।



---

अथ प्रथमः खण्डः।

१३ पञ्च पञ्च रहित कथनं।
१४ प्रत्यक्ष चतुर्व्विंशः।

इति प्रथमः खण्डः।

---

अथ द्वितीयः खण्डः।

१ सप्तमाहः प्रथमाज्य स्तोत्रं।
२।३ तृच सङ्गतिः।
४ द्वितीयाज्यस्तोत्रं।
५ तृतीयस्य स्तुतिः।
६ चतुर्थाज्यस्तोत्रविधानं।

इति द्वितीयः खण्डः।

---

अथ तृतीयः खण्डः।

१ माध्यन्दिन पवमान प्रथमतृचः।
२ तृचसङ्गतिः।
३।४ तृचान्तरं।
५ जागततृच सङ्गतिः।
६ ब्राह्मणातिदेशः।
७ सामान्तर विधानं।
८ दृष्टान्त प्रदर्शनं।
९।१०।११।१२।१३ अपरसाम विधानं।
१४ द्वादशाहः सङ्गतिः।
१५ अन्यसाम विधानं।
१६।१७। तत्स्तुतिः।
१८।१९।२० तृचसामान्तरं।
२१।२२ अन्यतृसाम विधानं।
२३।२४। अन्तिम सामान्तरं।
२५ स्तोत्रोपसंहारः।

इति तृतीयः खण्डः।

---

अथ चतुर्थः खण्डः।

१ पृष्ठस्तोत्र तृतीय तृचः।
२ स्तोत्रीय तृचः।
३ जगती सम्पादन लाभः।
४ पृष्ठस्तोत्रनिवर्त्तक साम।
५ भ्रातृव्यहननहेतुता।
६ अच्छावाकनिवर्त्तक साम।
७ सर्व्वकामप्राप्ति साधनं।

इति चतुर्थः खण्डः।

---

अथ पञ्चमः खण्डः।

१।२ आर्भवपवमान प्रतिपत्तृचः।
३।४।५।६ त्रिष्टुप् सम्पादनं।

इति पञ्चमः खण्डः।

---

अथ षष्ठः खण्डः।



इति षष्ठः खण्डः।

---

अथ सप्तमः खण्डः।



इति सप्तमः खण्डः।

---

अथ अष्टमः खण्डः।

१। २ अष्टमेऽहनि प्रथमाज्यस्तोत्रं
३ द्वितीयाज्यस्तोत्रं।
४ विनियुक्तादिदोषः।
५।६ तृतीयमाज्यस्तोत्रं।
७ चतुर्थाज्यस्तोत्रं।
८ दोषसमाधानं।

इति अष्टमः खण्डः।

---

अथ नवमः खण्डः।

१ स्तोत्रीय ऋच विधानं।
२ गायत्र सङ्गतिः।
३।४ अपर तृचविधानं।
५ धृतिधारणा सङ्गतिः।
६ ब्राह्मणातिदेशः।
७ सामान्तरविधानं।
८ वैरूप साम प्रशंसनं।
९।११।१२ तृच सामान्तर विधानं।
१० सामनिर्वचनं।
१३।१९ सामान्तर प्रदर्शनं।
१४।१५।१६ स्तावक सामान्तरं।
१७ ब्राह्मनातिदेशः।
१८।२०।२१ प्रकारान्तर स्तुतिः।
२२ तृचान्तरे सामान्तर विधानं।
२३ अष्टसंख्यापूरकसम्बन्धः।
२४ पशुसमृद्धिहेतुता।
२५।२८।२९ अन्यसामविधिः।
२६ तत् विधानस्तुतिः।
२७ तद्व्याख्यानं।
३० सामगानरूपं।
३१।३३।३५ सामान्तरं।
३२ द्विविध फलप्राप्तिहेतुता।
३४ सामस्तुति विधानं।
३६ अच्छिद्र संज्ञा।
३७ अथास्यायां गेयं साम।
३८ गेयसाम स्तुतिः।
३९ अन्तिमतृचगेयसाम।
४० प्रवह्लार्गव संहतिः।
४१ पवमानस्तोत्रोपसंहारः।

इति नवमः खण्डः।

---

अथ दशमः खण्डः।

१ ब्रह्म पृष्ठ साम।
२ सतोबृहतीविधानं।
३ सिद्धान्त कथनं।
४ गातव्यं ब्रह्मसाम।

५ स्वर्ग हेतुता ।
६ चतुर्थ पृष्ठ स्तोत्रीयतृचः ।
७ सन्तान हेतुता ।
८ गातव्यसाम प्रदर्शनं ।
९ अच्छावाक साम कार्थ्यं ।

इति दशमः खण्डः ।

---

अथ एकादशः खण्डः ।

१ प्रतिपत्तृच सवन सङ्गतिः ।
२।३।६ तृचान्तर विधानं ।
४ अहमाहः सङ्गतिः ।
५ अक्षर पंक्तिच्छन्दोविधानं ।
७ गायत्र साम ब्राह्मणातिदेशः ।
८ विहिततृच सामान्तरं ।
९ सामसाध्यं फलं ।
१०।१२।१६।१८।२०।२१।२४।२५ सामान्तर विधानं ।
११।१७।१९।२।२६ सामान्तरस्तुतिः ।
१३।२२ अहः सङ्गतिः ।
१४ संज्ञानिर्व्वचनं ।
१५ तत्फलकथनं ।
२७ आवृत्त सामान्तरं ।
२८ शुद्धाशुद्धीय निर्व्वचनं ।
२९ ब्राह्मणातिदेशः ।
३० । ३२।३४।३६ सामान्तरकथनं ।
३१।३३।३५।३७।३८ तद्विधानं स्तोत्रं ।
३९ स्तोत्रोपसंहारः ।

इति एकादशः खण्डः ।

---

अथ द्वादशः खण्डः ।

१ उक्थ प्रथम स्तोत्रीय तृचः ।
२ द्वितीयोक्थ स्तोत्रीय तृचः ।
३ तृतीयोक्थ स्तोत्रीय तृचः ।
४ प्रथमोक्थ साम ।
५।६ तस्य स्तुतिः ।
६ द्वितीयोक्थ साम ।
७ पापक्षयहेतुता ।
८ तृतीयोक्थ साम ।
१० स्तोम विधानं ।

इति द्वादशः खण्डः ।

चतुर्द्दशाध्यायः समाप्तः ।

---

पञ्चदशाध्याये ।

खण्डः १—१२ अष्टाचत्वारिंश स्तोम क्लृप्तिः ।

---

अथ प्रथमः खण्डः ।

१ वहिष्पवमान प्रतिपत्तृचः ।

२ नवमाह्नः सङ्गतिः ।

३।४ द्वितीयानुवाद स्तुतिः ।

५ दशस्तोत्रीयविधानं ।

६ तस्य स्तुतिः ।

७ अष्टचत्वारिंशस्तोत्रीय विधानं ।

८ अष्ट संख्यास्तवनं ।

९ चतुः षड्‌ऋच विधानं ।

१०।११।१२ चतुः संख्या स्तुतिः ।

१३ वहिष्पवमान स्तोम विधानं ।

इति प्रथमः खण्डः ।

---

अथ द्वितीयः खण्डः ।

१ नवमाह्नः प्रथमाज्यस्तोत्रं ।

२ नवमाह्नः सङ्गतिः ।

३ सङ्गति प्रदर्शनं ।

४ लिङ्गं प्रदर्श्य स्तौति ।

५ द्वितीयाज्य स्तोत्रं ।

६ राथन्तर प्रयोग कार्य्यं ।

७ तृतीयाज्यस्तोत्रं ।

८ चतुर्थाज्य स्तोत्रं ।

९ दोषोपपादनं ।

इति द्वितीयः खण्डः ।

---

अथ तृतीयः खण्डः ।

१ माध्यन्दिन पवमान प्रथम तृचः ।

२ ऋचः स्तुतिः ।

३।४ स्तोत्रीय विधानं ।

५।६ गायत्र साम विधानं ।

७ संज्ञानिर्व्वचनं ।

८।९।११।१२।१४।१६ सामान्तर विधानं ।

१०।१५ सामान्तर स्तुतिः ।

१३ स्वर्ग साधनता ।

१७ पशुजन्मता ।

१८।२०।२२।२४ अन्यत् साम विधानं ।

१९।२१।२३।२६ तस्य स्तुतिः ।

२५ ऋचिगेयं साम ।

२७।३३ ब्राह्मणातिदेशः ।

२८।३२ सामद्वय विधानं

२९ उभयं संयुज्य स्तौति ।

३० ज्येष्ठ हेतुता ।

३१ तद्वेदन फलं ।

३४।३५ अन्यत् साम विधानं ।

इति तृतीयः खण्डः ।

---

अथ चतुर्थः खण्डः ।



इति चतुर्थः खण्डः ।

---

अथ पञ्चमः खण्डः ।



इति पञ्चमः खण्डः ।

---

अथ षष्ठः खण्डः ।

६ ब्राह्मणातिदेशः ।
७ स्तोत्रीय स्तुतिः ।

इति षष्ठः खण्डः ।

---

अथ सप्तमः खण्डः ।

१ छन्दः प्रसक्तिः ।
२ दोष सद्भावः ।
३।४।५ विस्मृति प्रबोधनं ।
६ बहिष्पवमान स्तोत्रीया ।
७ नवर्च लिङ्गानुवादः ।
८ स्तोम विधानं ।

इति सप्तमः खण्डः ।

---

अथ अष्टमः खण्डः ।

१ प्रथमाज्य स्तोत्रं ।
२।३ आप्री संज्ञा निर्वचनं ।
४ चतुर्थाज्य स्तोत्रं ।

इति अष्टमः खण्डः ।

---

अथ नवमः खण्डः ।

१।२ दशमाहः स्तोत्रीय तृचः ।
३ अन्य तृचः ।
४।५।६।८ प्रथमे गायत्र साम ।
७ तदाख्यानं ।
९ शोकोपशमनं ।
१० तृचान्तर विधानं ।
११ तस्य स्तुतिः ।
१२ सामान्तर गानं ।
१३ कारणा स्तुतिः ।
१४ स्वर्ग साधनता ।
१५ परोक्ष सिद्धिः ।
१६ गेयसाम प्रदर्शनं ।
१७ माध्यन्दिन कारणं ।

इति नवमः खण्डः ।

---

अथ दशमः खण्डः ।

१ प्रथम पृष्ठ स्तोत्रीय तृचः ।
२ द्वितीय पृष्ठ स्तोत्रीय तृचः ।
३ तृतीय पृष्ठ स्तोत्रीय तृचः ।
४ चतुर्थ पृष्ठ स्तोत्रीय तृचः ।
५ प्रथमस्तोत्र निवर्त्तकं ।
६ समुदाय प्रशंसा ।
७।८ अनुवाद स्तुतिः ।
९ ऋद्धि साधनता ।
१० मैत्रावरुण पृष्ठं ।

इति दशमः खण्डः ।

---

अथ एकादशः खण्डः ।



इति एकादशः खण्डः ।

---

अथ द्वादशः खण्डः ।



इति द्वादशः खण्डः ।

पञ्च दशाध्यायः समाप्तः ।

---

षोड़शाध्याये ।



---

अथ प्रथमः खण्डः ।



इति प्रथमः खण्डः ।

---

इति पञ्चमः खण्डः ।

---

अथ षष्ठः खण्डः ।



इति षष्ठः खण्डः ।

---

अथ सप्तमः खण्डः ।



इति सप्तमः खण्डः ।

---

अथ अष्टमः खण्डः ।



इति अष्टमः खण्डः ।

---

अथ नवमः खण्डः ।



इति नवमः खण्डः ।

---

अथ दशमः खण्डः ।

४ सवनानां उत्तरोत्तराधिक्यं ।
५ द्वौ द्वौ स्तोमौ ।
६ सहस्र दानं ।
७।८ समुच्चय विधानं ।
९।१०।११।१२ अन्यसाम विधानं ।

इति दशमः खण्डः ।

---

अथ एकादशः खण्डः ।

१ चतुर्थं साहस्रैकाहः ।
२ प्रतिपत् कर्त्तव्यता ।
३ पृष्ठसाम निरूपणं ।
४ संघात करणं ।
५।६ तृतीय सवन प्रयोगः ।
७ कर्णेभिगेयं साम ।
८।९ स्तोत्रीया विधानं ।
१०।११ सर्व्वं पशु साधनता ।
१२।१३ ब्रह्मसाम विधानं ।
१४।१५।१६।१७ सहस्र प्रतिस्तुतिः ।

इति एकादशः खण्डः ।

---

अथ द्वादशः खण्डः ।

१ साद्यःक्राणां सद्योनुष्ठेयता ।
२ अधिकारि निरूपणं ।
३ तद्धेतुः पक्षं ।
४ दक्षिणा विधानं ।
५ आयास्य प्रयोगः ।
६ अधिकारि विशेषः ।
७ स्वर्गसाधनत्वोपपादनं ।
८ अधिकारि विशेषेपि विधिः ।
९ पशु साधनता ।

इति द्वादशः खण्डः ।

---

अथ त्रयोदशः खण्डः ।

१ द्वितीय साद्यःक्रैकाहः ।
२ व्याधिनिर्हरण हेतुता ।
३ आमयाव्यधिकारः ।
४ आमयाविनः प्रतिष्ठाहेतुता ।
५ अपराधिकारिणौ ।
६ वेदि विधानं ।
७ उत्तर वेदिस्थानं ।
८ यूपविधानं ।
९ सोमक्रय साधन द्रव्यविधानं ।
१०।११।१२।१३ सोमप्रवाकानांगमनं ।

इति त्रयोदशः खण्डः ।

---

अथ चतुर्दशः खण्डः ।

१ अन्यसाद्यःक्रैकाहः ।
२ अधिकारि निर्णयः ।
३।४।५। स्तोमक्लृप्तिः
६।७।८। प्रजासाधनता ।

इति चतुर्दशः खण्डः ।

---

अथ पञ्चदशः खण्डः ।

१ चतुर्थ साद्यःक्रैकाहः ।
२ वेदितुः फलं ।
३।४ स्तोम विधानं ।
५ अधिकारि निरूपणं ।
६ स्वर्गफल साधनता ।
७।८ सर्व्व एस्तता स्तुतिः ।
९ स्तोम विधानं ।
१० दोषपरिहारः ।
११ तस्य स्तुतिः ।

इति पञ्चदशः खण्डः ।

---

अथ षोडशः खण्डः ।

१ षष्ठ साद्यःक्रः ।
२।३।४।५।६।७। प्रजापतेश्चक्षित्वं ।
८ स्तोमीया विधानं ।
९।१०। तस्याः स्तुतिः ।

इति षोडशः खण्डः ।

इति षोडशाध्यायः ।

---

सप्तदशाध्याये

खण्डः १—१४ व्रात्य यज्ञा-
द्यग्निष्टोत्र समाप्तिः ।

---

अथ प्रथमः खण्डः ।

१ साधारण स्तोम विधानं ।
२।३।४ प्रकृते तद्योजनं ।
५ ब्रह्मसाम्नः स्तोमीया विधानं ।
६ गातव्य सामविधानं ।
७ समृद्धि हेतुता ।
८ निधन कार्यत्रं ।
९।१० षोडशस्तोम प्रशंसा ।
११ शाखान्तरीय मतोपन्यासः ।
१२ स्वपक्ष निगमनं ।
१३ दोष वैलक्षण्यं ।
१४।१५ दक्षिणाद्रव्यं ।
१६ व्रात्यता निर्हरण हेतुता ।
१७ गावोपि दक्षिणार्थाः ।

इति प्रथमः खण्डः ।

---

अथ अष्टम: खण्ड: ।

१।२।३।४ ज्योतिष्टोमाग्निष्टुत् ।

इति अष्टमः खण्डः ।

---

अथ नवम: खण्ड: ।

१ अन्याग्निष्टुत् ।
२ अन्न साधनत्वं ।
३ वेदितुः फलं ।
४ स्तोमानुवाद स्तुतिः ।

इति नवमः खण्डः ।

---

अथ दशम: खण्ड: ।

१ वृहस्पति सवः ।
२ अनियत्त स्तुतिः ।
३ अधिकारि निर्णयः ।
४ वेदितुः फलं ।

इति दशमः खण्डः ।

---

अथ एकादश: खण्ड: ।

१ वृहस्पति सवैकाहः ।
२ दक्षिणाविभागः ।
३ संहृत्य स्तुतिः ।
४ संज्ञानिर्व्वचनं ।
५ वेदन फलं ।
६ प्राप्त स्थापत्यानुष्ठेयः ।
७ तद्वेदन प्रशंसा ।
८ यजमानाभिषेकः ।
९ अभिषेक द्रव्याणि ।

इति एकादशः खण्डः ।

---

अथ द्वादश: खण्ड: ।

१ त्रिवृदग्निष्टुतैकाहः ।
२ उत्पत्ति फलानुगुण्यं ।
३ स्तोम स्वरस्तुतिः ।
४ स्तोत्रीया विधान स्तुतिः ।
५ मरणार्थं सम्वेशनं ।
६ यागनाम प्रदर्शनं ।

इति द्वादशः खण्डः ।

---

अथ त्रयोदश: खण्ड: ।

१ वैश्वदेवपर्व्वीय सोमयागः ।
२ पशुदेवता विशेषः ।
३ प्राप्त प्रतिषेधः ।

---

अथ द्वितीयः खण्डः ।

१ अन्यैकाहः ।
२ दीक्षोपसदोर्विशेषः ।
३ अधिकारि निरूपणं ।
४ स्वर्गार्थिनः सम्बन्धः ।
५ व्रत विशेषः ।
६ घृत व्रत प्रशंसा ।
७ घृत प्राशनं ।
८ बृहत् साम विधानं ।
९ सदः प्रसर्पणे विशेषः ।
१० ऋतपेय दक्षिणा विशेषः ।
११ चमसस्यौदुम्बरत्वं ।
१२ चमस दान विधिः ।
१३।१४ सोम नियमः ।

इति द्वितीयः खण्डः ।

---

अथ तृतीयः खण्डः ।

१ अग्निष्टोम संस्थैकाहः ।
२ दक्षिणा नियमः ।
३।४ अनुष्ठानवतः फलं ।

इति तृतीयः खण्डः ।

---

अथ चतुर्थः खण्डः ।

१ वैश्य स्तोमाग्नि ष्टोमैकाहः ।
२ सोम क्रयणं ।
३ अधिकारि निर्णयः ।
४ क्रयण द्रव्य व्यवस्था ।
५।६ वैश्याधिकारः ।
७ होतुः पृष्ठे विशेषः ।
८ ब्राह्मणाच्छंसि पृष्ठे विशेषः ।
९ तदुभय योगः ।
१०।११ सप्तदश स्तोमत्वं ।

इति चतुर्थः खण्डः ।

---

अथ पञ्चमः खण्डः ।

१ तीव्रसोमैकाहः ।
२।३।४।५।७ सोमातिपविताधिकारः ।
६ अतिपवनयोजनं ।
८।९।१०।११ अधिकारि विशेषः ।
१२।१४।१५ सोम तीव्र प्रकारः ।
१३ दक्षिणा नियमः ।
१६ भक्षणदृढीकरणं ।
१७ होतुः पृष्ठस्य रथन्तरत्वं ।
१८ रथन्तरयोगः ।
१९ ब्राह्मणाच्छंसि पृष्ठः ।

२०।२१ यज्ञायज्ञीयापकर्षः।
२२ सामान्तर विधानं।
२३ उद्गीय प्रशंसा।
२३ तीव्रसोमोक्थसंस्थता।

इति पञ्चमः खण्डः।

---

अथ षष्ठः खण्डः।

१ वाजपेयैकाहः।
२ स्तोत्राणां साप्तदश्यं।
३।४ आयाम विस्तारः।
५ प्राजापत्य स्तोमः।
६ वैचित्र्य प्रशंसा।
७।८ नाना वीर्यत्वं।
९ अनिरुक्त प्रशंसा।
१०।११ होतुः पृष्ठस्य रथन्तरत्वं।
१२।१३ वाजपेययाजि व्रतं।
१४ ब्राह्मणाच्छंसिपृष्ठे विशेषः।
१५ आर्भवेपकर्षणं।
१६।१७ अग्निष्टोमे साम प्रदर्शनं।
१८।१९ षोडशिसाम।
२०।२१।२२।२३ जामित्वाशङ्का परिहारः।
२४।२५।२६।२७ दोषाशङ्का परिहारः।

इति षष्ठः खण्डः।

---

अथ सप्तमः खण्डः।

१ वाजपेय शब्द निर्व्वचनं।
२ शुक्रवत्यत्वानुवादः।
३।४ वाजत्वानुवादः।
५ सप्तदशस्तोमानुवादः।
६।७।८ ऋत्विजां हिरण्यमालित्वं।
९ यजमानस्य लोकजयः।
१०।११ यजमानारोहणं।
१२ ब्रह्मणो वाजिसाम गानं।
१३ बृहद् गान प्रशंसा।

इति सप्तमः खण्डः।

---

अथ अष्टमः खण्डः।

१ पवित्राग्निष्टोम विधानं।
२ द्वितीय सोमयागः।
३ सोम विशेष विधानं।
४ ब्रह्मवादि दर्शित दोषः।
५ दोष समाधानं।

इति अष्टमः खण्डः ।

---

अथ नवमः खण्डः ।



इति नवमः खण्डः ।

---

अथ दशमः खण्डः ।



इति दशमः खण्डः ।

---

इति चतुर्थः खण्डः ।

---

अथ पञ्चमः खण्डः ।



इति पञ्चमः खण्डः ।

---

अथ षष्ठः खण्डः ।



इति षष्ठः खण्डः ।

---

अथ सप्तमः खण्डः ।



इति सप्तमः खण्डः ।

---

अथ अष्टमः खण्डः ।



इति अष्टमः खण्डः ।

---

अथ नवमः खण्डः ।

इति नवमः खण्डः।

---

अथ दशमः खण्डः।



इति दशमः खण्डः।

---

अथ एकादशः खण्डः।



इति एकादशः खण्डः।

---

अथ द्वादशः खण्डः।



इति द्वादशः खण्डः।

---

अथ त्रयोदशः खण्डः।

---

अथ अष्टादशः खण्डः ।

१ निधनक्रतु विधानं ।
२ साम निमित्तं ।
३ स्तोम प्रशंसा ।
४ अधिकारि निरूपणं ।
५ पशुप्राप्तिः ।

इति अष्टादशः खण्डः ।

---

अथ जनविंशः खण्डः ।

१ द्वितीय निधनक्रतुः ।
२।३ यजमान फलं ।

इति जनविंशः खण्डः ।

इति जनविंशाध्यायः समाप्तः ।

---

विंशाध्याये

खण्डः १—१६।अहीनादि

कल्पनं ।

---

अथ प्रथमः खण्डः ।

१ अतिरात्रस्तोम क्लृप्तिः ।
२ अतिरात्र विधानं ।
३ प्रकार त्रय कथनं ।
४ सन्धिस्तोत्रं ।
५ स्तोत्रीया संख्या ।
६ सन्धिस्तोत्रगत स्तोमः ।

इति प्रथमः खण्डः ।

---

अथ द्वितीयः खण्डः ।

१ सर्व्व स्तोमातिरात्रः ।
२ अधिकारि निरूपणं ।
३ स्तोमच्छन्दोमौ ।
४ पञ्चैकादशिनी ।
५ अनुष्ठायि वेदिनोः फलं ।

इति द्वितीयः खण्डः ।

---

अथ तृतीयः खण्डः ।

१ आप्तोर्य्याम क्रतुस्तोमः ।
२ आप्तोर्याम नाम निर्व्वचनं ।
३ अधिकारि निरूपणं ।
४ सर्व्वकाम प्राप्ति हेतुता ।

---

अथ एकादशः खण्डः ।



इति एकादशः खण्डः ।

---

अथ द्वादशः खण्डः ।



इति द्वादशः खण्डः ।

---

अथ त्रयोदशः खण्डः ।



इति त्रयोदशः खण्डः ।

---

अथ चतुर्दशः खण्डः ।



इति चतुर्दशः खण्डः ।

---

अथ पञ्चदशः खण्डः ।

इति पञ्चदशः खण्डः ।

---

अथ षोडशः खण्डः ।



इति षोडशः खण्डः ।

इति विंशोऽध्यायः समाप्तः ।

---

## एकविंशाध्याये

खण्डः १—१५ गर्गत्रिरात्रशेष चतूरात्र पञ्चरात्र वर्णनं ।

---

अथ प्रथमः खण्डः ।



इति प्रथमः खण्डः ।

---

अथ द्वितीयः खण्डः ।

---

अथ सप्तमः खण्डः ।

१ तुर्व्वस्य त्रिरात्रः ।
२ लोकत्रयात्मकत्वं ।
३ त्रिरात्र स्वरूपं ।
४ अङ्गानां लोक साम्यता ।
५ उक्त दोष परिहारः ।

इति सप्तमः खण्डः ।

---

अथ अष्टमः खण्डः ।

१ पराक त्रिरात्रः ।
२ अधिकारि निरूपणं ।
३।४ त्रिरात्र नाम निर्व्वचनं ।
५ उक्तार्थ वेदन फलं ।
६ त्रिवृत् स्तोमकत्वं ।

इति अष्टमः खण्डः ।

---

अथ नवमः खण्डः ।

१ चतुर्व्वीराख्य चतूरात्रः ।
२।३ प्रयोग द्वतो वीरसाधनत्वं ।
४ पवमान चतुर्व्विंशत्वं ।
५ प्रजनन साधनता ।
६ अहः संस्थान विधानं ।
७ नाना वीर्यत्वं ।
८ प्रसिद्धाहस्स्वित्यनुवादः ।
९।१० पूर्व्वपक्षसिद्धान्तौ ।
११ नानावीर्यत्वाह्न करणं ।
१२ ब्रह्म साम विधानं ।
१३।१४ आक्षेपसमाधाने ।
१५ अच्छावाक साम विधानं ।
१६ मैत्रावरुण साम ।

इति नवमः खण्डः ।

---

अथ दशमः खण्डः ।

१ यमदग्नेश्चतूरात्रः ।
२।३।४ अह्न क्लृप्तिः ।
५ पुष्टि लक्षण फलं ।
६ सन्तान मानिनो भवितव्यता ।
७ अनुष्ठातुर्व्वाक्यं ।
८।९ छन्दःसम्पत्तिः ।
१० सप्त रोचन विधानं ।
११ रोचन विधान मन्त्रः ।
१२ अश्विनोर्द्विकपाल मन्त्रः ।
१३ वैश्वानरैकादशकपाल मन्त्रः ।
१४ सौम्यचतुष्कपाल मन्त्रः ।

८ संवत्सर चतुष्टयैकत्वं ।
९ पञ्चरात्र कामः ।
१० समदश्य्या ह्नया आलभ्यः ।
११ पापदेवताया अजः ।
१२ वत्सतरी देवता ।
१३ यज्ञेयातिगमनोपायः ।
१४ प्रीर्णे पशौ विशेषः ।
१५ अत्यन्त क्षये पशौ कर्त्तव्यता ।
१६ लकुच्छङ्क दोषादौ विशेषः ।
१७ पलायमाने पशौ विशेषः ।
१८ बलादपहारे विशेषः ।
१९ हते पशौ विशेषः ।
२० सर्व्वसिद्धि साधनं ।
२१ वेदन महं ।

इति चतुर्दशः खण्डः ।

---

अथ पञ्चदशः खण्डः ।

१ अन्तर्महाव्रत पञ्चरात्रः ।
२ महाव्रत मध्यमाहः ।
३ प्रस्मध्यलोपपादनं ।
४।५ महाव्रताक्षेप समाधाने ।
६ वेदन प्रशंसा ।

इति पञ्चदशः खण्डः ।

इति एकविंशोऽध्यायः ।

---

द्वाविंशाध्याये

खण्डः १—१८ । षड्रात्रादि एकादशरात्रपर्य्यन्त वर्णनं ।

---

अथ प्रथमः खण्डः ।

१ ऋतूनां षड्रात्रः ।
२ अधिकारि निरूपणं ।
३ तत्प्रशंसनं ।
४ प्रत्यक्षर्द्धिहेतुता ।

इति प्रथमः खण्डः ।

---

अथ द्वितीयः खण्डः ।

१ त्रिककुभ षड्रात्रः ।
२ अधिकारिनिर्णयः ।
३।४ फलवैलक्षण्ये विशेषः ।
५ पशुसाधनता ।
६ अभ्यासङ्गित्वं ।
७ विश्वजिदतिरात्रः ।

इति द्वितीयः खण्डः ।

---

अथ तृतीयः खण्डः ।

१ अभ्यासङ्ग्य षड्रात्रः ।

२।३।४ पशवैलक्षण्य प्रदर्शनं ।
५ पशुसाधनता ।
६ अभ्यासक्लृप्तं ।
७ विश्वजिदतिरात्रत्वं ।

इति तृतीयः खण्डः ।

---

अथ चतुर्थः खण्डः ।

१ सप्तर्षि सप्तरात्रः ।
२ सप्तर्षिसम्बन्धः ।
३ अन्तर्गत सप्तसंख्या ।
४ सप्तसंख्याद्वारा प्रशंसा ।
५ महाव्रत पृष्ठत्वं ।
६ महाव्रतातिरिक्ताहः ।
७ छन्दः प्रत्यक्षत्वं ।

इति चतुर्थः खण्डः ।

---

अथ पञ्चमः खण्डः ।

१ प्रजापति सप्तरात्रः ।
२ अङ्ग स्तोम व्यवस्था ।
३ प्रजावृद्धि साधनता ।
४ उक्तार्थ प्रशंसा ।
५ सप्तदश स्तोमः ।
६ प्रजापतेः सप्तदशत्वं ।
७ पञ्च पञ्चदशत्वं ।
८ आत्मभाग सप्तदशत्वं ।
९ पुच्छस्यैकविंशत्वं ।

इति पञ्चमः खण्डः ।

---

अथ षष्ठः खण्डः ।

१ छन्दोम पवमान सप्तरात्रः ।
२ अधिकारि निर्णयः ।
३।४ पशुसाधनता ।
५ स्तोमवैविध्यं ।

इति षष्ठः खण्डः ।

---

अथ सप्तमः खण्डः ।

१ यामदग्न्य सप्त रात्रः ।
२ पुष्टिसाधनत्वं ।
३ त्रयस्त्रिंश स्तोमः ।
४ पञ्चाहः प्रशंसा ।
५ चतुस्त्रिंशता ।
६।७ स्तोमसंख्या ।
८ युग्मायुग्मस्तोमता ।

इति सप्तमः खण्डः ।

---

अथ अष्टमः खण्डः ।

१ ऐन्द्र सम्पातः ।
२ तत्फल कथनं ।
३ आद्याहः प्रशंसा ।
४ त्र्यहः प्रशंसा ।
५ अन्तिमाहः प्रशंसा ।

इति अष्टमः खण्डः ।

---

अथ नवमः खण्डः ।

१ जनक सम्पातः ।
२ फल प्रयोजने ।
३ वेदन प्रशंसा ।
४ स्थानीयत्व निर्णयः ।
५ महाव्रतान्नत्वं ।
६ सर्व्वभोगस्थानीयत्वं ।

इति नवमः खण्डः ।

---

अथ दशमः खण्डः ।

१ एकस्तोम सम्पातः ।
२ ऋतुवतः प्रशंसा ।
३।४ महाव्रत परीक्षत्वं ।

इति दशमः खण्डः ।

---

अथ एकादशः खण्डः ।

१ देवत्व साधनाह्नरात्रः ।
२ सप्रयोजन फलं ।
३ अर्थज्ञान प्रशंसा ।
४ अग्निष्टोम संस्थात्मकत्वं ।
५ अतिरात्र संस्थात्वं ।
६ सर्व्वाप्ति फलं ।
७ उक्तार्थस्य प्रशंसा ।

इति एकादशः खण्डः ।

---

अथ द्वादशः खण्डः ।

१ देव नवरात्रः ।
२ मनुष्योचिताभ्रतत्वं ।
३ उक्तार्थ ज्ञान प्रशंसा ।
४ प्रतिष्ठाफलं ।

इति द्वादशः खण्डः ।

---

अथ त्रयोदशः खण्डः ।

१ पशुसाधन नवरात्रः ।
२ त्रिरात्र प्रशंसा ।
३ पञ्चाहः प्रशंसा ।

५।६ तदेदितुः फलं ।
७ स्थान निर्णयः ।
८ फल कथनं ।

इति अष्टादशः खण्डः ।

इति द्वाविंशाध्यायः ।

---

त्रयोविंशाध्याये

खण्डः । १—१८ द्वादशरात्रादि द्वात्रिंशद्रात्र सत्रं ।

---

अथ प्रथमः खण्डः ।

१ आप्तद्वादश रात्रश्चः ।
२ तत् प्रशंसा ।
३ आद्यन्तेऽतिरात्रः ।
४ मध्यमस्य सर्व्व स्तोमत्वं ।
५ सर्व्वर्द्धि फल साधनत्वं ।

इति प्रथमः खण्डः ।

---

अथ द्वितीयः खण्डः ।

१ प्रतिष्ठासाधन त्रयोदशरात्रः ।
२ पूर्व्ववैलक्षण्यं ।
३ आशङ्कापरिहारः ।
४ फल कथनं ।

इति द्वितीयः खण्डः ।

---

अथ तृतीयः खण्डः ।

१ सर्व्वफल साधन चतुर्दशरात्रः ।
२ तत् प्रशंसा ।
३ विभागेन प्रदर्शनं ।
४ सर्व्वकामसिद्धिः ।
५ आरोह प्रशंसा ।
६।७ द्विरावर्त्तन प्रशंसा ।
८ आद्यन्तावतिरात्रौ ।

इति तृतीयः खण्डः ।

---

अथ चतुर्थः खण्डः ।

१ द्वितीय चतुर्दशरात्रः ।
२ अधिकारि निर्णयः ।
३ आद्यत्र्यहः प्रशंसा ।
४ प्रज्ञातत्वोपपत्तिः ।
५।६ अनन्तर भाविषडहः ।
७ त्रिकद्रुक प्रशंसा ।

इति चतुर्थः खण्डः ।

---

३ वज्रधारया स्थानीयता ।

इति दशमः खण्डः ।

---

अथ एकादशः खण्डः ।

१ प्रजापति सप्तदशरात्रः ।

२ फल कथनं ।

३ आद्यपश्चाहः प्रशंसा ।

४ द्वादशाहः प्रशंसा ।

५ चतुश्चरात्रि प्रशंसा ।

इति एकादशः खण्डः ।

---

अथ द्वादशः खण्डः ।

१ देवाष्टादश रात्रः ।

२ ब्रह्मत्व साधनता ।

३ मनुष्योचिताब्रह्मत्वं ।

४ ब्रह्मत्वकामैरनुष्ठेयता ।

५ सर्व्वायुः साधनत्वं ।

इति द्वादशः खण्डः ।

---

अथ त्रयोदशः खण्डः ।

१ वायोरेकोनविंशति रात्रः ।

२ पशुसाधनता ।

३।४ तत्प्रशंसा ।

५ स्वर्गसाधनत्वं ।

इति त्रयोदशः खण्डः ।

---

अथ चतुर्दशः खण्डः ।

१ विंशति रात्रः ।

२ पुरुषफल साधनत्वं ।

३ अर्थवाद करणं ।

४।५।६ रात्रिसंख्या कथनं ।

७ रात्रि प्रशंसा ।

इति चतुर्दशः खण्डः ।

---

अथ पञ्चदशः खण्डः ।

१ प्रथमैकविंशति रात्रः ।

२ पशुसाधनता ।

३ सप्तसंख्यासमर्थनं ।

४ पशुफलत्व करणं ।

५।६।७ लोकद्वय समृद्धिः ।

इति पञ्चदशः खण्डः ।

---

अथ षोडशः खण्डः ।



इति षोडशः खण्डः ।

---

अथ सप्तदशः खण्डः ।



इति सप्तदशः खण्डः ।

---

अथ अष्टादशः खण्डः ।



इति अष्टादशः खण्डः ।

---

अथ जनविंशः खण्डः ।



इति जनविंशः खण्डः ।

---

अथ विंशः खण्डः ।



इति विंशः खण्डः ।

---

अथ एकविंशः खण्डः ।

१ पञ्चविंशति रात्रः ।
२।३ अन्नाद्य फलं ।

इति एकविंशः खण्डः ।

---

अथ द्वाविंशः खण्डः ।

१ षड्विंशति रात्रः ।
२।३ प्रतिष्ठा साधनता ।
४ अहर्देय प्रशंसा ।
५ षडहः प्रशंसा ।
६ दशाहः प्रशंसा ।
७ सर्व्वेषां प्रशंसा ।

इति द्वाविंशः खण्डः ।

---

अथ त्रयोविंशः खण्डः ।

१ सप्तविंशति रात्रः ।
२ समृद्धि फलसाधनता ।
३ प्रयोक्तृसंख्या प्राशस्त्यं ।

इति त्रयोविंशः खण्डः ।

---

अथ चतुर्विंशः खण्डः ।

१ अष्टाविंशति रात्रः ।

इति चतुर्व्विंशः खण्डः ।

---

अथ पञ्चविंशः खण्डः ।

१ एकोनत्रिंश रात्रः ।
२।३ श्रीफल साधनता ।
४ प्रतिष्ठां फलं ।

इति पञ्चविंशः खण्डः ।

---

अथ षड्विंशः खण्डः ।

१ त्रिंशद्रात्रः क्रतुः ।
२ अन्नाद्य साधनता ।
३ प्रतिष्ठां फलं ।

इति षड्विंशः खण्डः ।

---

अथ सप्तविंशः खण्डः ।

१ एकत्रिंशद्रात्रः ।
२ अन्नाद्यस्याभिपूर्व्वता ।

३ अनुष्ठायिनां फलं ।

इति सप्तविंशः खण्डः ।

---

अथ अष्टाविंशः खण्डः ।

१ द्वात्रिंशद्रात्रः ।

२।३।४ अनुष्टुप सम्पादनं ।

५।६।७ पश्वात्मकत्वं ।

८ वाचाद्यागमनादि व्यवहारः ।

इति अष्टाविंशः खण्डः ।

इति त्रयोविंशाध्यायः ।

---

चतुर्विंशाध्याये

खण्डः १—२० । त्रयस्त्रिंशद्रात्र-मारभ्य संवत्सर पर्य्यन्तानि शतानि ।

---

अथ प्रथमः खण्डः ।

१ त्रयस्त्रिंशद्रात्रः ।

२ अधिकारि प्रदर्शनं ।

३ स्थानव्यत्ययेनानुष्ठानं ।

४ दोष परिहारः ।

५ पश्चाद्दविच्छेदाभावः ।

६ रूपकल्पनोपन्यासः ।

७ ऊधस्त्वादि कल्पनं ।

८ विसम्वादिनी ऋक् ।

९ अनुकूला ऋक् ।

१० सर्व्वसम्पादनं ।

११ विश्वजिदभावेवाधः ।

१२ कर्त्तव्योपसंहारः ।

१३ सर्व्वर्द्धि हेतुता ।

१४ ब्रह्मसाम्नां नानाविधत्वं ।

इति प्रथमः खण्डः ।

---

अथ द्वितीयः खण्डः ।

१ अपरत्रयस्त्रिंशद्रात्रः ।

२ समान फल प्रशंसनं ।

इति द्वितीयः खण्डः ।

---

अथ तृतीयः खण्डः ।

१ तृतीय त्रयस्त्रिंशद्रात्रः ।

२ दोष परिहारः ।

३ सर्व्वकाम प्राप्ति हेतुता ।

---

अथ एकादशः खण्डः ।



इति एकादशः खण्डः ।

---

अथ द्वादशः खण्डः ।



इति द्वादशः खण्डः ।

---

अथ त्रयोदशः खण्डः ।



इति त्रयोदशः खण्डः ।

---

अथ चतुर्दशः खण्डः ।



इति चतुर्दशः खण्डः ।

---

अथ पञ्चदशः खण्डः ।

इति पञ्चदशः खण्डः ।

---

अथ षोडशः खण्डः ।



इति षोडशः खण्डः ।

---

अथ सप्तदशः खण्डः ।



इति सप्तदशः खण्डः ।

---

अथ अष्टादशः खण्डः ।



इति अष्टादशः खण्डः ।

---

अथ ऊनविंशः खण्डः ।



इति ऊनविंशः खण्डः ।

---

अथ विंशः खण्डः ।

६ अयन प्रशंसा ।

इति तृतीयः खण्डः ।

---

अथ चतुर्थः खण्डः ।

१ कुण्डपायिनामयनं ।
२ अग्निहोत्राादि चतुष्टयं ।
३ तत् फल कथनं ।
४ शेषभक्षणविशेषः ।
५ आर्त्तस्य समानता विधानं ।

इति चतुर्थः खण्डः ।

---

अथ पञ्चमः खण्डः ।

१।२ तपश्चितामयनं ।
३ तत् फल कथनं ।

इति पञ्चमः खण्डः ।

---

अथ षष्ठः खण्डः ।

१ द्वादश संवत्सर सत्रं ।
२ तत् फल कथनं ।
३ संवत्सर प्रशंसा ।
४ सर्व्वसिद्धि फलं ।
५ नववार्षिक प्रयोगः ।

इति षष्ठः खण्डः ।

---

अथ सप्तमः खण्डः ।

१ षट्त्रिंशत् सम्वत्सर सत्रं ।
२ विशेष समृद्धि साधनं ।
३ संवत्सर संख्या ।
४ बहु पुत्र साधनता ।

इति सप्तमः खण्डः ।

---

अथ अष्टमः खण्डः ।

१ साध्यानां सम्वत्सरः ।
२ स्वर्गसाधनता ।
३ संख्याद्वारा प्रशंसा ।
४ ऋगुदाहरणं ।
५ ज्योतिष्टोम सादृश्यं ।
६ अन्तरद्वारा प्रशंसा ।

इति अष्टमः खण्डः ।

---

---

अथ अष्टादशः खण्डः ।



इति अष्टादशः खण्डः ।

इति पञ्चविंशाध्यायः समाप्तः ।

---

इति ताण्ड्यब्राह्मणसूची समाप्ता ।

